काव्यमाला ( पुनर्मुद्रिता ) ९२

श्रीवेङ्कटरङ्गनाथदेशिकप्रणीतं

# पादुकासहस्रम्

श्रीनिवासविरचितया परीक्षाभिधया टीकया समुद्भासितम्




चौखम्भा संस्कृत संस्थान

पोस्ट बाक्स नं० ११३९

वाराणसी ( भारत )

काव्यमाला ( पुनर्मुद्रिता ) ९२

श्रीवेङ्कटरङ्गनाथदेशिकप्रणीतं

# पादुकासहस्रम्

श्रीनिवासविरचितया परीक्षाभिधया टीकया समुट्टङ्कितम्

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितदुर्गाप्रसादतनयेन
पण्डितकेदारनाथेन, मुम्बापुरवासिपणशीकरोपाह्व-
लक्ष्मणात्मजवासुदेवशर्मणा च संशोधितम् ।

चौखम्भा संस्कृत संस्थान
भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक
पो० आ० चौखम्भा, पो० बा० नं० ११३९
वाराणसी ( भारत )

प्रकाशक

चौखम्भा संस्कृत संस्थान

पो० आ० चौखम्भा, पो० बाक्स नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी—२२१००१ ( भारत )

दूरभाष : ६५८८९ तार : सोनोत्सव, वाराणसी

भारतसर्वकारीयशिक्षामन्त्रालयस्य
द्रव्यसाहाय्येन प्रकाशितम्

मूल्यम् रू० २६—०० ( षड्विंशति रूप्यकाणि )

मुम्बयीस्थनिर्णयसागरयन्त्रालयप्रकाशनम् १९११

पुनर्मुद्रणम् १९८४

मुद्रक—श्रीगोकुल मुद्रणालय, वाराणसी

KĀVYAMĀLA ( REPRINT ) 92

THE

# PĀDUKĀSAHASRAM

BY

ŚRĪ VEṄKAṬANĀTHA DEŚIKA

*With the Commentary of Śrīniwasa*

Edited by
PAṆḌITA KEDĀRANĀTHA
AND
WĀSUDEVA LAKṢMAṆA ŚĀSTRĪ PAṆASHĪKAR

**CHAUKHAMBHA SANSKRIT SANSTHAN**
*Publishers and Distributors of Oriental Cultural Literature*
P. O. Chaukhambha, Post Box No. 1139
VARANASI ( INDIA )

*Publishers*
**CHAUKHAMBHA SANSKRIT SANSTHAN**
P. O. Chaukhambha, Post Box No. 1139
Jadau Bhawan, K. 37/116, Gopal Mandir Lane
VARANASI–221001 ( INDIA )

*Published with the financial assistance from the Ministry of Education and Culture, Government of India*

Price : Rs. 26–00 ( Rupees Twenty Six only )

Nirnaya Sagar Press, Bombay 1911
Reprinted 1984

श्रीः ।

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# पादुकासहस्रस्य भूमिका ।

स्तोत्ररत्नमेतत् पादुकासहस्रं नाम । "जातौ जातौ यदुत्कृष्टं रत्नमित्यभिधीयते" इति किल लक्षणकारा वदन्ति । स्तोत्रं नाम गुणकीर्तनेन वर्ण्यस्य चेतस्समुल्लासनम् । तेषु च रत्नं नाम यथावस्थितगुणकीर्तनेन प्राप्तस्य महागुणस्य महनीयस्य प्रशस्यतमफलप्रदानदीक्षितस्य वर्ण्यस्योपश्लोकनम् । तदेव च फलप्रार्थनाविरहितं भक्तिपारवश्यकृतं षोडशवर्णसुवर्णसदृक्षं भवतीति सांप्रदायिकाः ।

विद्यमानस्य गुणस्य कीर्तनमिवाविद्यमानस्य गुणस्य कीर्तनमपि स्तोत्रमेवेति हि मीमांसकानां मर्यादा । तथाहि, नवमेऽध्याये प्रथमे पादे हरिवदादिपदानूहाधिकरणे–"इन्द्र आगच्छ हरिव आगच्छ" इति वाक्येनेन्द्रस्येव लोहिताश्वस्याप्यग्नेः "अग्न आगच्छ लोहिताश्वागच्छ" इत्यनूहेन ॥ "अग्न आगच्छ हरिव आगच्छ" इत्येव स्तोतव्यता व्यवास्थापि । अतश्च यथावस्थितगुणकीर्तनस्य स्तोत्ररत्नत्वं युक्तमेव पश्यामः।

तथा स्तोत्ररत्नमेतत् गुणतो विमृष्टं काव्यरत्नकोटीमाटीकते । आचार्यदण्डिना काव्यलक्षणं विस्तरशोऽभिधाय "न्यूनमप्यत्र यैः कैश्चिदङ्गैः काव्यं न दुष्यति । यदुपात्तेषु संपत्तिराराधयति तद्विदः ॥" इति सहृदयहृदयावर्जनचणस्य कतिपयवर्णनस्यैव काव्यतासंपादकत्वस्य कीर्तनेन निबन्धेत्रान्तमनुवाच्यमाने तादृशस्य बहोर्वर्णनस्य स्फुटतरमुपलम्भाच्चास्य स्तोत्रस्य काव्यता पूर्वप्रतिपादितया दिशास्य तत्र रत्नत्वं चाक्षतमेवेति पश्यामः ।

सामान्याच्च काव्यमात्रस्य शास्त्रत्वं प्रतिपद्यमाना वयमस्य शास्त्ररत्नतामक्षतामुत्पश्यामः । तत्किल शास्त्रं, यत् शास्ति, शासनीयं हितमहितं च, तच्च प्रभुसुहृत्सम्मिततयेव, कान्तासम्मिततया च भवति । शासनप्रणालिका सैव सुखमयीति बहु मन्यते काव्यं महामतिभिरुपवर्ण्यते च । तथाहुः "अन्या हि गतिरश्वस्य गतिरन्या खरोष्ट्रयोः । मदक्लिन्नकपोलस्य गतिरन्या हि दन्तिनः ॥ वेदशास्त्रपुराणानां रीतयो हि पृथक् पृथक् । रीतिरन्यैव काव्यानां लोकोत्तरपदस्पृशाम् ॥" इति । शास्त्रतया व्यवहृतानामन्येषामपि काव्यमुखप्रेक्षितयैव कार्यकरत्वं विबुधा वर्णयन्ति "स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते । प्रथमं लीढमधवः पिबन्ति कटु भेषजम् ॥" इति, एवमेतैः सुनिरूपितैः प्रकारैः सर्वेश एवाभ्यर्हितो बहुमाननीयो महार्थगर्भितः सरलः सुखेन सर्वार्थबोधकश्चात्युत्तमो निबन्धोयं सर्वदेशप्रचारिभिर्देवनागराक्षरैः सुन्दरया चेतोहारिण्या परिपाट्या काव्यमालायाममुद्यतेति सर्वपण्डितपामरजनहृदयङ्गमात्यन्तसंमाननीया च नूनं सेयं फलना ।

'वेङ्कटेश्वरगुरुग्रथितं ये पादुकास्तुतिसहस्रमजस्रम् । सार्थबोधमनुसंदधते ते संयमीन्द्रमतसारविदः स्युः" इति किलेदमुपश्लोक्यते प्रतिवादिभयङ्कराचार्यैः सप्ततिरत्नमालिकायाम् । श्रीमच्चण्डमारुतकर्तृभिर्दोड्डयाचार्यापरनामधेयैर्महाचार्यैरपि श्रीमद्वेदान्तदेशिकवैभवप्रकाशिकायाम्—"संप्रार्थितः संसदि सूरिवर्यैः पादावनिं रङ्गपतेर्निशायाम् । योऽस्तौत्सहस्रेण गुरुः सुपद्यैस्तं भावयेऽहं करिवादिसिंहम् ।" इति ।

अथैतत्प्रणेतुर्गुरूत्तमस्यावतारकालकुलचरितादिकं संक्षेपात्प्रदर्शयामः—

भगवद्वेदव्यासप्रणीतस्य ब्रह्मसूत्रस्य भाष्यकारेषु सुगृहीतनामधेयैः, विशिष्टाद्वैतसिद्धान्तप्रतिपादकैः, भगवद्रामानुजमुनिवर्यैरराचार्यपीठमास्थापितेषु चतुस्सप्ततिसिंहासनाधिपतिष्वन्यतमः श्रीमान्विश्वामित्रकुलीनः अनन्तसोमयाजी नाम महामतिः काञ्चीपुरीमध्यवसद् दीपप्रकाशाख्यस्य भगवतो दिव्यालयसमीपे । विश्वामित्रकुलीनवासमहितो दिव्याग्रहारोऽयं तूप्पुल् इत्येव चाख्यामभजत् । तूशब्दः परिशुद्धवाची, पुल्शब्दः तृणवाची, द्रविडभाषायाम् । परिशुद्धं तृणं दर्भं इति स च विश्वामित्रनाम्ना वैष्णववैर्व्यवह्रियत इति तद्वंश्यानां तदावासस्थलस्य च सा समाख्या समपद्यत । एनमधिकृत्य घण्टावतारचरिते पद्यमिदम्—"समवसदधिकाञ्चि सूकराजीविमथितवैरिमतो वरो विराजी । शुचितरचरितो विशुद्धयाजी शुभगुणराशिरनन्तसोमयाजी" ॥ इति । तदात्मजः पुण्डरीकाक्षसोमयाजी । तदात्मसंभवः अनन्तसूरिः । भगवद्रामानुजमुनिभिः वेदान्तोदयनपदेन संभावितानां किडाम्बियाच्चानाख्यानां प्रणतार्तिहराचार्याणां नप्त्रीं रामानुजाचार्याणां पौत्रीं रङ्गराजप्पिल्लानाख्यानां पद्मनाभाचार्याणां पुत्रीं वादिहंसाम्बुवहपदभूषितानां अप्पुल्लारुसमाख्यानां रामानुजाचार्याणां सहोदरीं तोताद्यम्बाह्वयामयमनन्तसूरिरुदूह्य यथापूर्वाचारं क्रतूनखिलानाहरन् चिरमपुत्र एव काञ्चीमध्यवसत् ।

अथ कदाचित् श्रीवेङ्कटाचलाधीश्वरोऽस्य स्वप्ने प्रादुर्भूय "वत्सौ, भवद्भिरचितैर्विभवातिभारविख्यापितैः स्तवशतैर्विवरीकृतोऽस्मि । वात्सल्यतोऽस्मि वितरामि वरं तनूजमेतद्गिरिम्मम विलम्बलवं विनैव ॥" इतिसन्दिश्यान्तरधात् । सद्यः प्रतिबुध्य वेलादिविचिन्तनमन्तरेणैव सहजायया सहैवान्तरङ्गैः परिमितैः परिवारैः प्रस्थाय वेङ्कटाचलं क्लृप्ते कालेऽध्यगच्छदयम् । अथ च भगवदाज्ञया शेषपर्यङ्कमिव गिरिवरं तमारुह्य यथासमुदाचारं संसेव्य वेङ्कटाचलाधीश्वरं समासीदत्समुचितमावसथम् । अथ तस्यां रात्रौ स्वप्ने दम्पत्योः घटनेयमभवत् । येयं तत्रोपवर्णिता—"देवः स्वं प्रकटीचकार कृपया रूपं तयोर्वत्सलस्तत्संप्रत्यपि मृग्यते दमघनैश्शान्तैश्च यद्योगिभिः । पुत्रोयं प्रतिगृह्यतामिति वदन्घण्टां च दिव्यां ददौ पत्न्यै स प्रददौ जगाल च तदा सा तां विनैव श्रमम् ॥"इति ।

प्रातश्चालयाभ्यन्तरे सौवर्णी घण्टा नावलोक्यत । ततः सुमहति कोलाहले समुद्भूते देवालयपरिचारकेषु चोरापराधेनाभियुज्यमानेषु देवादेशादालयपतिना स्वप्नवृत्तान्तो न्यवेदि । तदात्वे सन्निहिताभ्यां दम्पतिभ्यामपि स्वप्नमेनमावेदयद्भ्यां सत्यापितोयं लीलारसः । तत आरभ्य देवी सान्तर्वत्नी समभवत् । अक्रूरमातेव गान्दिनी घण्टा सा द्वादश-

वर्षान् गर्भवासमधत्त । अथ च कलेः ४३७० तमे शालिवहिनशकस्य ११९१ तमे (A. D. 1268.) विभववत्सरे कन्यामासे श्रवणनक्षत्रे तोताद्यम्बा सा पुत्ररत्नं प्रासूत । पराशरब्रह्मऋषिरिव द्वादशवत्सरगर्भवासात्प्रसूतोऽयं श्रीमान् यथाविधि जातकर्मादिकं संस्कारमलम्भि । श्रीवेङ्कटाचलाधीश्वरतीर्थोत्सवदिनेऽवतीर्णस्यास्य मातुलेन वादिहंसाम्बुवाहगुरुणा श्रीवैष्णवसमयाचारानुरोधि चक्राङ्कनं श्रीमद्वेङ्कटनाथशर्मेति नाम चाधायि ।

अथ वत्सरपूर्तिदिने महादेवीसेवनपूर्वकं श्रीहस्तिगिरिनाथसेवनायानीतो बालगुरुरयं वरदेन "वत्स, शुद्धान्तसिद्धान्तं शुद्धं लक्ष्मणयोगिवत् । परपक्षप्रतिक्षेपैः पायास्त्वं शरदश्शतम् ॥" इत्यनुगृह्य सभाजितोऽभवत् । यथाकालं कृतचौलः पञ्चमे वत्सरेऽक्षराण्यभ्यास्यत । श्रीमद्यामुनगुरुवरवत् श्रीपराशरभट्टारकवच्च अपुनरुच्चारणेनाधीयानोऽयं मातुलात् वादिहंसाम्बुवाहगुरोर्विंशत्या वत्सराणां सर्वाणि शास्त्राणि साङ्गांश्च वेदानधिजगौ ।

अष्टमे च वयसि कदापि सह मातुलेन वात्स्यश्रीवरदगुरोः श्रीभाष्यप्रवचनगोष्ठीमास्थितो बालगुरुरयं तत्तेजोविसरविस्मितैरखिलैराचार्योपासनपरैरनुदृष्टः 'दीव्यत् दीप्तिभरः क एषः' इति कृष्णनाम्नानुयुक्तैः वरदगुरुभिः "वादिहंसाम्बुवाहार्यभागिनेयो महानयम् । वेदान्तपालकत्वेन वरदेनान्वगृह्यत ॥ समये यतीन्द्रस्य स्थानमास्थास्यते" । इत्याख्यायत आन्यपर्ये एतस्मिन् उपन्यासविच्छेदस्थले सर्वैः विस्मृते 'इदं' इति सूचयतिस्मेति परितुष्टेन गुरुणा "प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मदः । भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम्" ॥ इत्यनुजगृहे । "वत्साहं स्थविरतरोऽभवं प्रकामं नैवासीन्मम खलु भागधेयमत्र । अस्मै त्वं वितर यतीन्द्रसंप्रदायं विद्याभिःसह विविधाभिरद्भुताभिः ॥" इति स्वान्तेवासिनं वादिहंसाम्बुवाहार्यमनुशिष्य गुरुवरस्यास्य शिरसि करकमलं विन्यस्य 'स्यादसौ' इत्यनुगृह्य गृहाणेममिति ददौ वादिहंसाम्बुवाहार्याय ।

स्नातश्च विधिना समुचितसम्बन्धे कुले शीलवतीं कामपि परिणायितो गृहस्थाश्रममाश्रयत् अहीन्द्रपुरं नाम स्थलं गरुडनदीपावितपरिसरमोषयाद्रिसनाथमधिगत्य गुरोर्मातुलाल्लब्धं गरुडपञ्चाक्षरीमन्त्रं यथाविध्यावर्तयन् प्रसन्नेन वैनतेयेन प्रत्यक्षतां गत्वा हयग्रीवानुष्टुभमन्त्रमृकारादिकमुपदिष्टः तत्रैव हेमसवनसदक्षस्याश्वत्थस्याधस्तात् देवदेवमुखविकासमात्रमाशंसमानः समावर्तयामास तं मनुम् । नचिरादेव प्रसन्नो हयवदनो भगवान् प्रत्यक्षीभूय निजं लालामृतमेनमपाययत् । प्रत्यक्षीकृतं रूपमेवमुपाश्लोकि घण्टावतरचरिते "श्रीकोशाश्रितवामपाणिरशनासन्दानिताम्राम्बरां श्लिष्यन्तं दयितां निजाङ्कनिलयामालिङ्गनानन्दिनीम् । व्याख्यामुद्रितमक्षसूत्ररुचिरं बिभ्राणमन्यं करं द्वावन्यौ च सुदर्शनानललितौ प्रत्यक्षमैक्षिष्ट सः" ॥ इति । अनुग्रहश्च—"हेषाघोषानन्दितकर्णद्वयमेनं वेदामोदिश्वासवितीर्णादरनासम् । रूपालोकप्रोल्लसिताक्षं करपद्मस्पर्शोत्फुल्लं पाययति स्माथ स लालामिति ।"

ततश्चावतारवैभवेन गुरोरनुग्रहेण देवाधिराजाशिषा देवताप्रत्यक्षेण चानवधिकम-

नुपमं वैदुष्यमधिगतो गुरूत्तमोऽयं अष्टोत्तरं शतं दिव्यस्थानानि भगवतो लक्ष्मीपतेः काले काले संसेवमानः काञ्च्यां अहीन्द्रनगरे श्रीरङ्गे च वसन् कालकलामखिलामतियापयामास।

गुरूत्तमस्यास्य श्रीरङ्गगमनोपोद्धातश्चैवं समजायत। यथा—गौडदेशीयैर्मिश्रैः श्रीरङ्गनगरमासन्नैः तत्राध्ययनोत्सवः प्रत्यवध्यतेति विशिष्टाद्वैतसिद्धान्तपद्धतेः वादे स्थापनं यावन्न तत्संप्रदायानुसारी सोऽयमुत्सवः प्रवर्तनीय इति तदनुरोधेन राज्ञा निर्दिष्टे तत्रत्येषु तद्वैदुष्यात् भीतेषु, वेदव्यासा( सुदर्शना )चार्येषु च वृद्धभावं गतेषु वादाहवादुद्विजमानेषु सर्वे संभूयालोच्य श्रीरामानुजयोगिवद् वरदप्रेषितेनैव दर्शनं निर्वाह्यमिति निर्धार्य काञ्चीमधिवसन्तं श्रीमद्वेङ्कटनाथदेशिकमेनं पत्रमुखेनानाययामासुः। पत्रे "तत्र एतत्त्रैलोक्यसंहारत्राणनिर्माणकारणम्। श्रीमतो रङ्गनाथस्य विष्वक्सेनस्य शासनम्" इत्यङ्कयित्वा 'झडित्युपस्थाय शुद्धान्तसिद्धान्तप्रतिष्ठापनपूर्वकं अध्ययनोत्सवोपरोधः संमोचयितव्य' इति निर्दिष्टमासीदिति गुरुरयं सद्य एव प्रस्थित आहारनिद्रादिकमपि विहायातित्वरितगतिः श्रीरङ्गमासाद्य वादायारभत। बहून् दिवसान्वादोऽभवत्। अन्ते च ते पराजिता अभवन्। अथ च राज्ञा गौडैश्च सभाजितो गुरूत्तमः 'इतः परं पण्डितानामागमने वादः केवलमारच्यतां, मा कदाप्युत्सवप्रतिरोधः' इति राजानं समदिशन्। अथ च श्रीमान् श्रीरङ्गनाथोऽतीव प्रहृष्टान्तरङ्गो निजं 'वेदान्ताचार्य' पदमस्मै सबहुमानमार्पयत्। तत्सहधर्मचारिणी 'सर्वतन्त्रस्वतन्त्रपदं, तत्सदस्याः 'कवितार्किकसिंह'पदं च व्यतरन्। सैव वादशैली गुरोरस्यान्तेवासिना संगृहिता गुरुणा परिष्कृता शतदूषणीनाम्ना व्यवहारमासाद्यतेति संप्रदायः।

श्रीमद्वेदान्ताचार्यवेङ्कटनाथगुरूत्तमोयं कदाचित् अहीन्द्रनगरे वसन् तत्र परपक्षीयैर्विपश्चिद्भिर्वादमारचयन् वादकथां तां संक्षिप्य परमतभङ्गनामानं संस्कृतद्रामिडवचस्सन्दर्भानुबद्धं कमपि निबन्धमारचयत्। द्रमिडभाषामयान् गाथारूपान्बहून्प्रबन्धान् अकलयत्।

श्रीरङ्गस्थलमधिवसति गुरूत्तमेऽस्मिन् कलिकालसुलभयासूयया सन्धुक्षिताः केचन सयूथ्या वादाय तमेनमाह्वासत। गुरुस्तु सपक्षैर्वादात्संकुचन् भागवतापचारादुद्विजमानश्च नानुमेने। ततस्ते पराजितोयमिति प्रथयितुकामाः गृहद्वारासन्ने पादरक्षामयीं तोरणमालामाबबन्धुः गुरुरयं बहिरागत्य पादरक्षास्तास्समालोक्य सबहुमानं ताश्शिरसा वहन् "कर्मावलम्बकाः केचित् केचित् ज्ञानावलम्बकाः। वयं तु हरिदासानां पादरक्षावलम्बकाः॥" इति पद्यमत्युच्चैराघोषयत्। अथ ते सविस्मयमनुतपन्तो गुरुमेनं प्रसादयामासुः।

महता समादरेण चिरं श्रीरङ्ग एव वसतोऽस्य गुरूत्तमस्य तत्परित्यागो द्विरगत्या समपद्यत। तत्रादावेषा घटना—यथा वाधूललक्ष्मणाचार्यनामा श्रीरङ्गस्थलीयाचार्यपुरुषेष्वन्यतमो महतो विभवतः परिवारेणातिविपुलेनान्तेवासिसमुच्चयेन शिबिकया कदाचित्

श्रीदेशिकावासवीथ्या समचरत । देशिकेन्द्रास्तदात्वे गृहदेहल्यामवस्थाय ग्रन्थपारायणपरा आसन् । तत्रासक्त्यतिशयेन वा श्रीवैष्णवो वीथ्या गच्छन् शिबिकया यातीत्युपर्यंयं वयं देहलीमधितिष्ठाम इत्यधश्च शिबिकाप्रावरणेनाच्छादितोयं न दृश्यत इति पारायणमध्ये नोत्थानमावश्यकमिति मत्वा वा नोदतिष्ठन् । तदन्तेवासिषु कोऽपि दीर्घरोषश्चतुर्थवर्णजः "पीडाकरनाथ" नामा स्वगुरोरभ्युत्थानमयं न करोति किलेतीर्ष्यया पादावाकृष्य गुरुवरानेतान् आद्वारबहिर्देशमाकृष्यापातयत् । विदिततदभिप्राया एते प्रकृतिसंबन्धसुलभामुद्भवतीमहन्तां "अहन्ते नाहन्ते विहरणपदं देशिकगिरः स्वदन्ते नः स्वान्ते सपदि गतसन्देहविषयाः । अनायासा यासामहिपतिशया सा भगवती धराधारा धाराधरनिकरसाधारणरुचिः ॥" इत्यनुशिष्य 'घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथार्हाम् । स पापकृद्ब्रह्मदवाग्निदग्धो वध्यश्च दण्ड्यश्च न चास्मदीयः ॥" इति भगवद्वचनमनुसृत्य तस्य क्षमापणमावश्यकं मन्यमाना अपि तस्य सुदूरमतिपाताद् भगवति क्षमामभ्यर्थ्य व्यतिकरेऽस्मिन् तदीयेन प्रभावेण श्रीरङ्गनाथसेवाया अप्युपरोधमवश्यंभाविनमाकलय्य सद्य एव सहस्रैरन्तरङ्गैः परित्यज्य श्रीरङ्गस्थलं कोयंपुत्तूरीमण्डलीयं ( Coimbatore District. ) सत्याकालमध्यगच्छन् ।

अथ गतेषु कतिपयेष्वहस्सु लक्ष्मणाचार्यो रोगेणाकस्मिकेन पर्यभूयत । सुशीला तस्य धर्मपत्नी परीक्ष्य पत्युश्शरीरस्थितिमात्मनश्च गर्भधारणाभावं रहसि सविनयं व्यजिज्ञपत्, 'आर्यपुत्र, कुतोऽयमाकस्मिको रोगोद्गमः शरीरं विकरोति द्विजराजमिव राजयक्ष्मा ? कुतो वाहमृतुकालानतिपताम्यधृतगर्भैव ? नूनं संभावयामि भागवतापचारमन्तरा नान्यः कोऽप्येवं बलवदनिष्टमापादयितुं प्रभवति' इति 'सुबहु निरूपयन्नपि न मानसमात्रमपि भागवतापचारं मया कृतं स्मरामि', इति तेन प्रत्युक्ता सा पुनरपि "धूर्तैः शिष्यैराचरितोऽपि भवदीय एव किल भवेत्, यदाहुः 'शिष्यपापं गुरोरपि' इति, सर्वे शिष्या अनुयुज्यन्ताम्" इति न्यवेदयत् । अथ शिष्येषु क्रमेणानुयुक्तेषु स पीडाकरनाथोऽपृच्छत् 'किं वेङ्कटनाथाचार्योऽपि भागवतः' इति । अथ विज्ञाय वृत्तं वृत्तमखिलं 'अन्वर्थनामा भवान्' इति तमुपालभ्य देशिकेन्द्रावासमधिगत्य तत्र तमपश्यन्, आत्मीयानामतिचारमेव तस्य प्रवासे कारणमवगत्य नितरामनुतपन् विहाय सर्वं डम्बरं सह जायया कालं समधिगत्य गुरुवरं तं प्रासादयत् । प्रणिपातप्रसन्ना गुरूत्तमास्ते सुबहून् सान्त्ववादान् आरचयन् । अथ च वत्सरमेकं सनियमं गुरूत्तमपादोदकमासेवमानौ दम्पती तौ तत्रैवाध्यवात्ताम् । परिपूर्णे वत्सरे धृतगर्भया धर्मपत्न्या सह लक्ष्मणाचार्यो गुरूत्तमानभ्यर्थ्य श्रीरङ्गमासादयामास । इति । काले प्रसूतः पुत्रस्तीर्थात्मजनाम्ना प्रख्यातिमभजत् ।

द्वैतीयीकीयम् । यथा तुरुष्कोपरोधात् श्रीरङ्गाधीश्वरे दूरं क्वापि नीयमाने सदानुगच्छन्तो गुरूत्तमा एते वेदव्यासाचार्यैः ( सुदर्शनाचार्यैः ) सहस्तस्पर्शं "भगवदनुगमनाधिकारिणो बहवो वर्तन्ते, ततोऽपि वरमावश्यकमिदं कैङ्कर्यं, अस्मद्गुरुभिर्वात्स्यवर-

द्देशिकैरुपदिष्टया दिशा श्रीभगवद्रामानुजमुनिवरविरचितं ब्रह्मसूत्रभाष्यं व्याख्यातं द्विर्मया, ते इमे व्याख्ये भवतैव परिशोध्य प्रचारणीये; नात्र भवन्तमन्तरा कोऽप्यधिकरोति।" इति सन्दिष्टाः ते पुस्तके आदाय तदात्मजौ च प्रत्यावर्तमाना आसन्ने यवनानां सैन्ये कोशं कावेरीसैकते गुप्तं कृत्वा सह तदात्मजाभ्यां शवानां मध्ये विलीय कालकलां काम्प्यतिवाह्यापक्रान्ते म्लेच्छदस्युजने कोशाभ्यां सह पुत्रावानीय सहकुटुम्बं सत्याकालमासीदन्। तस्मिन्नेव पर्याये यादवाद्रिमप्यलङ्कुः।

श्रीरङ्गमधिवसतां देशिकेन्द्राणामेषां गृहे पितृदिनं किमपि संन्यधत्त। तदर्थं यथाविधि निमन्त्रिता विप्राः। तांश्च परिदानेन वशीकृत्याविदितमेव कृताशान् कृत्वा श्राद्धविघ्नं केऽपि समपादयन्। कालातिपातेन द्विजान्तरालाभमवगत्यानन्तरमेते न्यवेदयन्नात्मनां भोजनम्। अथ चिन्ताकुला गुरूत्तमा एते सुचिरं विमृश्य यथाविधि होमं समाप्य भगवन्तमेव विप्रस्थाने भावयित्वा सर्वं पात्रे परिविष्य मन्त्रवदखिलं निरवर्तयन्। स्वयमनवेक्षमाणा जप्यं जपन्तो भोजयामासुः। श्रीरङ्गश्रीवेङ्कटाचलश्रीहस्तिगिरीश्वरास्त्रयोऽपि भगवन्तो विप्ररूपेण सचूत्कारमखिलमभ्यवहरन्। किं वा वर्तत इत्यवलोकनार्थं पार्श्वगृहमासन्नैरसूयकैः स्पष्टमेष शब्दः शुश्रुवे। स्वेन रूपेण तृप्तास्ते गृहीतताम्बूला गुरूत्तमैर्विसृष्टाः गृहाद्बहिरागत्य सर्वेष्वेव पश्यत्सु तिरोभवन्। अथ विघ्नकर्तारस्ते भग्नाः सानुतापं क्षमामभ्यार्थयन्।

एवमन्याप्यमुपनमन्तीमसूयामेते गुरवोऽमृष्यमाणाः "आपादचूडमनपायिनि दर्शनेऽस्मिन् आशासनीयमपरं न विपक्षहेतोः। आपातशान्तिमसुरान् पुनरस्मदीयानन्योन्यवैरजननी विजहात्वसूया॥" इत्याशशंसुः।

अथ कदाचित् तीर्थयात्रायां श्रीरङ्गस्थलमागतेन गुरूत्तमैर्वादे विजितेन कृष्णमिश्रेण स्वकृतिं प्रबोधचन्द्रोदयं नाटकमवलोकयितुमभ्यर्थिताः नाम्नैवास्य शैलीमवगत्य तत्खण्डनतया सङ्कल्पसूर्योदयं नाम महानाटकं रात्र्यैव निर्मातुं व्यवस्यन्तः, मदीयस्सङ्कल्पः सूर्योदयावधि भवतावलोकनीय इति सूचयन्तः तथेति प्रतिपन्ने तस्मिन् यथोद्देशं निरुह्य प्रातस्तस्मै प्रदर्श्य अनितरसाधारण्या प्रतिभाविकासधोरण्या तं व्यस्मापयन्।

अन्यदा देशाटनपर्याये श्रीरङ्गमागतेन कवितार्किकसिंहविरुदममृष्यमाणेन डिण्डिमकविसार्वभौमेण "छित्वा सर्वाण्यरण्यान्यतिविषमलतागुल्मदुर्गाणि सद्यः प्राप्तं मां पञ्चाननं बत भषकततिर्भुक्कनैर्धिक्करोति। लज्जन्ते हन्तुमेनां मदकरटिघटाकुंभपीठीविपाटक्रीडाधौरेयधारा मम खलु नखराः किं करोमि क्व यामि॥" "प्राज्ञानामेव राज्ञां सदसि न सहते जल्पमल्पेतरेषां क्षुद्रेष्वाक्षेपमुद्रां न खलु गणयते डिण्डिमः सार्वभौमः। भाकुर्वद्भेककुक्षिंभरिषु भयभरभ्रान्तभोगीन्द्रसुभ्रूभ्रूणभ्रंशी किमम्भः फणिषु पतगराट् संभ्रमी बम्भ्रमीति॥" इत्यधिक्षिप्ताः 'पिशाचानां पिशाचभाषयोत्तरं देय'मिति प्रतिपद्यमानाः 'स्पर्धन्तां सहजं नु कुञ्जरतया दिक्कुञ्जरैः कुञ्जरा ग्राम्या वा वनवासिनो मदजलप्रक्लिन्नगण्डस्थलाः। हा कालस्य विपर्ययं शृणु सखे प्राचीनपालीमलखादसिं-

गधकपोलभित्तिरधमः कोलोऽपि संस्पर्धते ॥' 'बाह्यैर्वर्णाडम्बरैर्मा भ्रमन्तु च्छित्वा गर्भाभ्यन्तरं शोधयन्तु । निर्णेतारो नीरसत्वेन को वा डिण्डीराणां डिण्डिमानां च भेदः ॥" इत्युदतरयन् । अथ च वादेऽपि तं पराजयन्त । डिण्डिमेन च पराजयमभ्युपगच्छता 'धोटीधाटीकठोरस्फुटविकटकथाटोपवाचाटकोटीकोटीराधाटपेटीपुटघटितमणीसङ्घसङ्घट्टिताङ्घ्रिः । खर्वीकुर्वन् सगर्वं जयति कवितते्स्सर्वतन्त्रस्वतन्त्रो वेदान्ताचार्यवर्यो विघटितजडधीसङ्कटो वेङ्कटेशः ॥" इति निवेदयता "द्विचतुष्पदपरिवर्तनगर्वितकविशरभगण्डभेरुण्डः । खण्डनखण्डनकविरिह डिण्डिमकविगण्डडिण्डिमो जयति" ॥ इति स्वकपोलताडनमारचयता बहुक्रियन्त । पश्चाच्च तेन राघवाभ्युदयकाव्यमात्मीयमवलोकयितुमर्थिताः स्वीयस्य यादवाभ्युदयस्यावलोकनमासूचयन् । सङ्कल्पसूर्योदयमिव रात्रावेव यादवाभ्युदयं काव्यं रसभावध्वनिगम्भीरं चतुर्विंशतिसर्गात्मकं प्रणीय प्रातरस्मै प्रदर्श्य तमाश्चर्यविवशमारचयन् ।

कदाचित् कूपनिर्मात्रा निर्बद्धाः तद्दत्ताभिरिष्टकाभिरेवाहीन्द्रपुरे स्वगृहे कूपं कमपि निर्ममिरे । आहितुण्डिकेन बद्धस्पर्धेन पीडिताः गरुडमन्त्रेण तदीयान् सर्वान् सर्पान् स्वकृतमण्डलरेखातिपातासमर्थानारचय्यान्ते महता वेगेनापतितं शङ्खपालकुलीनं सर्पं गरुडेन सर्वप्रत्यक्षमहारयन् । भग्नदर्पेण तेनानुनाथिताः गरुडदण्डकमनुसंधाय तं पुनरानीयादुः । शिल्पिना स्वकीयामेव मूर्तिं धातुमयीं निर्मातुं निर्बद्धाः श्रीरङ्गनाथेन स्वप्ने निर्दिष्टया दिशा वामकरे पुस्तकं दक्षिणकरे व्याख्यानमुद्रां दधत् पद्मासनेनोपविष्टं च ताम्रमयं बिम्बं निर्माय यथापूर्वनिर्देशं शिल्पिना स्वकृते पीठे तस्य संधानं कर्तुमशक्तेन कपोलतले तत्क्षणमावश्यकं मन्यमानेन कृतायुधस्पर्शे स्वकपोले संभवता रक्तबिन्दुना विस्मापयन्तः, पीठ एव दोषं निरूप्य तमभ्युपगमय्य कथमपि तमेव समीकृत्य समयोजयन् । एवमसदृशैरपि तैस्तैः परप्रेरणया स्पर्धमानैर्विवादमसंमन्यमाना अपि शिष्याभ्यर्थनया कथंचित्पातकमिवाभ्युपगम्य बहुशो भग्नदर्पानारचयन् ।

कदाचिच्च समस्यासहस्रं समापूर्य 'समस्यासहस्री'पदं लेभिरे । श्रीभगवद्रामानुजमुनिविरचितं ब्रह्मसूत्रभाष्यं द्वात्रिंशत्कृत्वः शिष्येभ्य उपदिश्य श्रुतप्रकाशिकाटीकां शतवारं प्रोच्य शताभिषेकमस्याः समारचयन् । एकाधिकाः शतं शरदो भूमण्डलमेतदमण्डयन् । अथार्चारूपेणाद्य यावत्सर्वत्र संश्रितान् परिपालयन्ति ।

एवमीदृशान्यमीषां गुरूत्तमानामाश्चर्यमयानि चरितामृतानि स्वतस्सर्वज्ञस्यापि सहस्रशीर्षस्य नारायणस्य न वाचां पद इति स्थिते तत्त्वे के वयं मितंपचमतयः पामरा इति दिङ्मात्रसूचनेनैतावता विरमामः ।

तदिदमखिलमाचार्यपादैरेव तत्र तत्र निबन्धेषु स्वयं समसूचि । यथा;

उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेस्समजनिष्ट यदात्मनेति ।

"श्रीरङ्गराजदिव्याज्ञालब्धवेदान्ताचार्यपदः कवितार्किकसिंह इति प्रख्यातगुणसमाख्यः ।" (सं—सू).

"श्रीमद्भ्यां स्यादसावित्यनुपधि वरदाचार्यरामानुजाभ्यां सम्यक् दृष्टेन,"
"व्यातानीद्वेङ्कटार्यो वरदगुरुकृपालंभितोद्दामभूमा ।" (त-क).
"स्वकमिति हरिदत्तं यामुनस्तोत्रवृत्त्या व्यवृणुत निगमान्ताचार्यकं वेङ्कटेशः ।
अगणि सदसि सद्भिर्यस्समस्यासहस्री कविकथकमृगेन्द्रस्सर्वतन्त्रस्वतन्त्रः ॥" (र-र).
इत्यादिषु ।

प्रतिभयङ्कराचार्यैश्च "इह रङ्गपतिप्रसादलब्धोभयवेदान्तधुरन्धरत्वकीर्तिः । अपि तत्सहधर्मिणीकृपात्ताखिलतन्त्रप्रभुताक एष सूरिः" ॥ इति ।

गुरूत्तमैरेतैर्विरचितानां निबन्धानां सूची पृथगत्र प्रकाशिता वर्तते । एतदीयानि चरितानि यथाकालं संक्षेपविस्तराभ्यां प्रतिपादयन्ति बहूनि निबन्धनानि । तेषु चण्डमारुतकर्तृदोड्डयाचार्यविरचितं श्रीमन्निगमान्तदेशिकवैभवप्रकाशिकास्तोत्रं, द्वाविंशतिसर्गात्मकं वेदान्ताचार्यचरितकाव्यं, आचार्यचम्पूनामकश्चम्पूप्रबन्धः, अस्माभिरधुना निर्मीयमाणं घण्टावतारचरितनाटकं च ललिततया सुखावगम्यया सरण्या चेतस आवर्जकानीति भावयामः ।

**अथास्य पादुकासहस्रस्याविर्भावः प्रस्तूयते ।** श्रीमतो विशिष्टाद्वैतभाष्यकारस्य शिष्येषु बहुषु तदनन्तरं सिद्धान्तप्रवचनमारचयत्सु द्वेधा व्यभिद्यत प्रस्थानम् । तत्रैकं उत्तरकलाव्यपदेशं, अन्यत् दक्षिणकलाव्यपदेशं चाध्यगच्छत् । उत्तरकलाप्रस्थानस्थाः श्रीमद्वेदान्तदेशिकानां शिष्यपरम्परायां निविष्टाः ।

असूया हि नामाप्रतीकारगुरुको बलवान् मानसो रोगः । स हि न कमपि परित्यजत्यापातदर्शिनम् । दक्षिणकलानिष्ठाना गुरुपरम्परायां श्रीकृष्णनाम्नः द्राविडवेदव्यपदेश्यानां भक्तगाथानां व्याख्यानेन गृहीतनामधेयस्यात्मजौ लोकाचार्य वरवर (अड्हियमणवाळ्प्पेरुमाळ्) नामानावास्ताम् । द्वावपि नैष्ठिकब्रह्मचारिणौ । कनीयानतयोः कवितायां परिचयरहितोऽनधीतशास्त्रश्च । स हि ब्राह्मणानां विशेषतो वैष्णवानां सहजेन तेन मानसेन रोगेणोपहतो दिव्यदम्पतीवतीर्णयोः 'वेदान्तदेशिक' 'सर्वतन्त्रस्वतन्त्र' विरुदयोर्दिव्ययोर्द्वयोरात्मनो मूकीभावमभीचितं प्रतिजानानो हठाकृष्टकतिपयपदसन्दर्भग्रथनपरिचयमात्रेण कविसार्वभौममन्यः कदाचिदास्थानमण्डपमलङ्कुर्वतो भगवतो रङ्गपतेः परिषदि 'कवितार्किकसिंह' पदं बद्धस्पर्धं विवदमानः, तत्कालमिलितैर्भगवद्दास्यरसिकैः परमैकान्तिभिरेकस्यामेव यामिन्यां सहस्रं पद्यानां कवयन्नेव 'कवितार्किकसिंह' इति व्यवस्थामाशंसमानैः, देशिकेन्द्राभिनन्दितैरावेदितः श्रीरङ्गनाथचरणनलिनविषयं पदकमलसहस्रं प्रणयामीति प्रतिजज्ञे ।

देशिकेन्द्रास्तु तादात्विकसात्विकगोष्ठीनिष्ठात्ममस्तकतलविन्यस्तभगवद्दिव्यपादुकाशेषत्वकाष्ठारसिकाः "पादुकासहस्र"स्य प्रणयनं प्रत्यजानन् । प्रतिपक्षस्तु विमुक्तान्यसमारम्भो जाग्रदेवाखिलां निशां कथकथमपि कवयन् त्रिशतीमेव पद्यानां निरवहत् । देशिकवर्यास्तु यामिन्यास्तस्याः प्राथमिकं यामद्वयं योगयोगनिद्राभ्यां तृतीयं पादुकास्तु-

तिग्रथनेन चातिवाह्य तुरीये यथायथं नित्यकर्मानुष्ठाय प्रभाते च रङ्गपतेरलमकुर्वन्नाःस्थानीम् ।

प्रतिपक्षस्तावदात्मनैवात्मानं बहु कुर्वन् कवनमात्रथनेन रचितायां त्रिशत्यामेव पद्यानां कथंतमां तेन रचितं भविष्यति सहस्रमिति स्वयमेव सन्तुष्यन् कृतार्थंमन्यो यवनकलमन्यायेन सिंहपदालाभेऽपि शार्दूलपदं वा लभेय; स वावरोपितसिंहपदो भविष्यतीति मनोरथपरम्परामातन्वानो धीरधीरमास्थानमभ्यागमत् ।

अथ च भगवता रङ्गपतिना सहस्रद्वयस्यापि शुश्रूषुणा सबहुमानमाज्ञप्ते, स वरवरनाथनथिनाराख्यस्त्रिशतीमेवात्मकृतां व्यजिज्ञपत् । देशिकमणयस्तु "सन्तः श्रीरङ्गपृथ्वीशचरणत्राणशेखराः । जयन्ति भुवनत्राणपदपङ्कजरेणवः" ॥ इत्युपक्रम्य "जयति यतिराजसूक्तिर्जयति मुकुन्दस्य पादुकायुगली । तदुभयधनास्त्रिवेदीमवन्ध्ययन्तो जयन्ति भुवि सन्तः"॥ इत्युपसंजहुः पादुकासाहस्रीमष्टपद्याधिकाम्। निशम्य चेदं सहस्रं निशाम्य च भगवता रङ्गपतिना विरचितामाचार्यवर्यसम्मानधोरणीमनणीयसीं व्रीडावनताननो मत्सरेऽपि परवशतया सूरिवर्यसूक्तिरत्नं संस्तुवन्, देशिकेन्द्रैः 'सूते सूकरयुवतिस्सुतशतमत्यन्तदुर्भगं झडिति । करिणी चिराय सूते सकलमहीपाललालितं कलभम्' ॥ इति नैच्यानुसन्धानेन प्रोत्साहितः, स्ववचनेनैव कवितार्किकविरुदमाचार्याणां त्रिरुद्घोषयन् 'वादिकेसरि'तामात्रमात्मनः प्रार्थयमानः सन्तुष्टान्तरङ्गैर्गुरूत्तमैः 'बलादिव पारिषदानभ्युपगमय्य 'वादिकेसरि' विरुदेन विश्राणितेन कृतार्थीकृतो निजान् गृहान्प्रत्यागमत् ।

रङ्गेन्द्रपादसरसीरुहमरन्दबिन्दुसन्दोहसौवादवास्वादसततसक्तचित्तचञ्चरीकास्सबहुमानमेव निबन्धरत्नमामोदमानाः पराङ्कुशपरकालकूरनाथपराशरभट्टपादादिदिव्यसूक्तिसहोदरीं साहस्रीमेनामन्वहमपि पारायणपदवीमासादयामासुः । इत्ययमस्य निबन्धरत्नस्यावतरणक्रमः ।

तदिदमखिलमाचार्यपादैरेव निबन्धरत्नेऽत्र संक्षेपादन्वग्राहि । "प्रख्यातानां परिषदि सतां कारयित्वा प्रतिज्ञां प्रायेण त्वां प्रथितविभवां वर्णयन्ती मया त्वम् ।" "पृथुकवदनशङ्कास्पर्शनीया कदाचिच्छिरसि विनिहितायाः स्वेन भूम्ना तवैव । स्तुतिरियमुपजाता मन्मुखेनेत्यधीयुः परिचरणपरास्ते पादुकेऽपास्तदोषाः" । इत्यादिना ।

अनवधिगुणालङ्कारसन्दोहसुन्दरं स्तोत्ररत्नमेतदामूलाच्चलं वेदान्तार्थदन्तुरं शास्त्रपरिश्रमालसान् कोमलमतीन् सुखेन भगवद्रामानुजसिद्धान्तसारार्थमखिलमवगमयत् सर्वोपजीव्यं सर्वसंभाव्यं सर्वसेव्यं सर्वभोग्यं सर्वरस्यं चेति स्पष्टमेवेदमखिलानामनुवाचयताम्। तथा वक्तृवैलक्षण्यविषयवैलक्षण्याभ्यांचातिशयादेतत्परमं पावनमित्यपि सर्वसंप्रतिपन्नम्।

इत्थं चैतद्ग्रन्थरत्नस्य प्रणेतुः गुरुवरस्य समयः शालीवाहनशकाब्दपर्याये-॥ 1191-1292, कलेः-4370-4471-(AD-1268-1369) तमयोर्वत्सरयोर्मध्यकाल इति स्पष्टमेतत् । गुरुपरम्परोपदेशागतोऽयमंशः प्रमाणान्तरैरपि संवाद्यते । यथा, विजयनग-

रविद्यास्थाने बुक्कमहीपतेरास्थाने सचिवपदमध्यासीनो माधवाचार्यो विद्यारण्यमुनिः मध्वसिद्धान्तनिष्ठेनाक्षोभ्यतीर्थयतिना सह द्वैताद्वैतविषये तत्त्वमसिश्रुत्यर्थे वादमारचयत् । समुचितमध्यस्थविरहेण, गुरूत्तमानेतान् तत्रागमनायाभ्यर्थयन् । तदसंमन्यमानेषु तेषु वादकथामविकलां पत्रारोपितामारचय्य गुरूत्तमानां संनिधिमनुप्रेषयामास राजमुखेनेति गुरुवरा एते परिशील्य सकलं 'असिना तत्त्वमसिना परजीवप्रभेदिना । विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् ॥" इति व्यलिख्यन्निति च प्रथते किंवदन्ती ।

सोऽयं माधवाचार्यो मायणात्मजो विद्यारण्यतीर्थापरनामा सायणाग्रजन्मा–(1257) तमे शालिवाहनशके (A.D.1334)तमे भाववत्सरे लक्ष्मीं प्रत्यक्षीचकारेति,(1259) तमे शा० शके ( A. D 1336 ) धातृवत्सरे आनैकुन्दि ( विद्यानगर ) नाम्नि राज्ये हरिहरमभ्यषिञ्चदिति हरिहरस्यानुजो बुक्को विजयनगरे राज्यमकरोदिति तस्य गुरुत्वं मन्त्रितां चायमातस्थाविति महीशूरपुरीयराजवंशचरितैरवगम्यते । हरिहरोऽयं A. D. 1336 प्रभृति 1350 A. D. पर्यन्तं, अनन्तरं तदनुजः A. D. 1350 प्रभृति A.D.1379 पर्यंतं च राजभावमवहदिति विजयनगरीयराजचरितैरवगम्यते । काव्यमालामुद्रितायां प्राचीनलेखमालायां 44 तमेन लेखेन बुक्कमहीपतिपौत्रस्य प्रतापदेवरायस्य पुत्रो विजयभूपतिः 1338 शा० श. A. D. 1416. दुर्मुखिवत्सरे ग्रामस्य कस्यापि दानमकरोदिति स्पष्टमगवम्यते । तथा तत्रैव 55 तमो लेखः स बुक्कमहीपतिर्विजयनगरीं राजधानीं चकारेत्यवगमयति ।

माधवाश्रितस्य बुक्कमहीपतेः पौत्रः हरिहरसहोदरस्य कम्पराजस्य सुतस्सङ्गमो नाम राजा 1261–शा–श. A.D.1338समयाङ्किते वादामीसन्निकृष्टथाटकोटिग्रामस्थशासने समुल्लिख्यते । एतैरवष्टम्भैर्निर्णीयमानो माधवाचार्यस्य कालः प्रागुपदर्शितेनौपदेशिकेन गुरोः कालेन संवदति किल । विद्यारण्यदेशिकेन्द्रयोः बाल्यस्नेहोऽप्यासीदिति तेन सौहृदेन विजयनगरागमने राजमुखेन साहाय्याधानं सुकरं विद्यारण्यैरासूचितो गुरुशिखामणिरयं तदसम्मन्यमानो वैराग्यपञ्चकं तदुत्तरतया विलिख्य प्रेषदित्यपि वर्तते वार्ता । तस्यायमुपोद्धातश्लोकः–

यथा—

"क्षोणीकोणशतांशपालनकलादुर्वारगर्वानल-
क्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनां धन्यां न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा
धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेभताम् ॥" इति ।

उपसंहारश्लोकश्च'

"नास्ति पित्रार्जितं किञ्चित् न मया किञ्चिदार्जितम् ।
अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥" इति ।

---

१. धानाः स्त्रियो भ्रष्टयवा इति वैजयन्ती.

# अथैतद्ग्रन्थकर्तुः पितृमातृगुरुप्रतिपक्षिणां वंशवृक्षः ।



**एतैरवष्टम्भैरवगम्यमाना वंशावलीयं तेषाम् ।**




अपि च देशिकेन्द्रा एते स्वकीये सङ्कल्पसूर्योदये दर्पवाक्यतया 'तुण्डीरं मण्डलं मे कुलपतिरपि च स्कन्दभूपालवन्द्यः क्षेत्रं सत्यव्रताख्यं क्षितितलतिलकं क्षुद्रकाञ्च्यग्रहारः" इति पद्यमाविष्कुर्वन्ति । स चायं स्कन्दभूपाल एव 'गण्डगोपालराय' इति सांप्रदायिकाः ।

आसन्नः प्रसिद्ध एव च गौरवाय गृह्यत इति तेनानेन भूपतिना देशिकेन्द्रकालिकेनासन्नपूर्वकालभवेन वा भावितव्यं किल ? तस्य किमपि दानं. शा. श. 1153–(A.D. 1231 ) कालिकं शासनेनावगम्यते ।

किं बहुना, गुरुवराः स्वयमेव निजग्रन्थान्ते ग्रन्थकरणकालं सूचयन्तीति स्थिते सूक्ष्मेक्षिकया निर्धारिते रहस्ये किमनेन प्रपञ्चनप्रयासेन ? । तथाहि उपसंहारे 'जयति यतिराजसूक्तिः ++सन्तः" इति पद्ये जयतीति (618) संख्यायाः यतिराजसूक्तिरिति (678261) संख्यायाः पुनः जयतीति × (618) संख्यायाः मुकुन्दस्य इति(1815)

संख्यायाः पादुकायुगलीति (931181) संख्यायाः तदुभयधना इति पादद्वयोक्तायाः संख्यासंयोजनस्य च सूचनेन स्वग्रन्थरचनसमये(1614493)संख्या तावान् कलिदिनानां सञ्चयो गत इति स्पष्टं गूढं निर्दिशति। सेयं दिनसंख्या कलेः-(4415) शा-श. (1286) तमस्य (A.D.1313) प्रमादीवत्सरस्य वृश्चिकमासे सप्तविंशं दिनं भवति। प्रमादीवर्षोऽयं प्रमाथीचेति व्यवह्रियमाण आनन्दवत्सरात्पूर्वः। ग्रन्थरचनाकालस्य रीत्यानया सूचनमन्येऽपि बहव आद्रियन्ते।

स्तोत्ररत्नस्य व्याख्यानमिदं भारद्वाजश्रीनिवाससूरिविरचितम्। अनेन नाम्ना प्रसिद्धावुभौ श्रीनिवासाचार्यौ पितापुत्रावास्ताम्। पिताचिरात् दक्षिणकलासंप्रदायमास्थितः मध्ये उत्तरकलासंप्रदायमाश्रयति स्मेति न्यायपरिशुद्धिव्याख्याने न्यायसारे प्रथमत एव दृश्यमानेन 'इयतः समयानहं महान्तं मतिभेदं विवशः प्रपद्यमानः। समवद्मयमञ्जसाद्य दैवाद् निगमान्तार्यगुरूक्तिभिः प्रबुद्धः॥' इति पद्येन प्रतीयते। अयं च षट्त्रिंशत्सहस्रीसमाख्यायाः दिव्यप्रबन्धव्याख्यायाः संबद्धेनैतिह्येन श्रीवैष्णवगोष्ठीषु प्रसिद्धस्य ईयुण्णिमाधवदेशिकस्य कुलीन इति तत्रैवास्य प्रतिज्ञाश्लोकेन 'द्रमिडोपनिषद्देशिकमाधववंश्येन नीतिपरिशुद्धेः। व्याख्या विशदार्थपदा विरच्यते श्रीनिवासदासेन' इति पद्येनावगम्यते। एनेन कूरेशविरचितायाः पञ्चस्तव्याः देशिकसूक्तिषु दयाशतकस्य च व्याख्यानमारचि। केषुचिद्व्याख्यानेषु कियानपि संप्रदायभेदोऽपि दृश्यते। अत्र च पूर्वसूचित एव हेतुः।

अस्य पुत्रः श्रीनिवासाचार्यः देशिकस्तोत्रेषु केषांचन व्याख्यानमारचयामास। रहस्यत्रयसारस्य व्याख्यां सारत्रयकाशिकाख्यां च। पुत्रः श्रीनिवासाचार्य एव व्याख्यानस्यास्य प्रणेतेति तस्मान्नवमाः श्रीमन्तो राघवाचार्या वदन्ति स्म। न तत्र किमपि प्रबलं प्रमाणमुपन्यास्थन्। येनात्र दृश्यमानं देवराजसूरिसूनुनेति पदं प्रक्षिप्तं भावयेम। पितुः श्रीनिवासाचार्यस्य पिता देवराजसूरिः, पंचसंस्कारकर्ता श्रीराघवयतीन्द्रः, भरन्यासकारः कौशिकवरददेशिकः, वेदान्तोपदेष्टा वाधूलश्रीनिवासाचार्य इति सारप्रकाशिकागतात् तद्वन्दनपद्यात् "श्रीमद्राघवसंयमीन्द्रकरुणासंप्राप्तसत्त्वं तथा श्रीमत्कौशिकदेशिकेन्द्रवरदैः क्षिप्तात्मरक्षं पुनः। श्रीवाधूलकुलोद्भवाद् गुरुवरात् श्रीवासविद्यानिधेः वेदान्तद्वयमाप्तवन्तमनघं श्रीश्रीनिवासं भजे॥" इत्यस्मात्प्रतीयते। सोऽयं वाधूलश्रीनिवासाचार्यश्चण्डमारुतकर्तुः प्रसिद्धस्य दोड्डयार्यापराख्यस्य महाचार्यस्यापि गुरुरित्यनयोः समकालिकता तावदविवादा।

दोड्डयाचार्योऽयं लक्ष्मीकुमारताताददेशिकाप्पदीक्षितयोः समकालिक इति प्राचां प्रवादः। तथाचाप्पदीक्षितीये निग्रहाष्टके "सङ्कल्प्या स्थाणुशाखाप्रचरणविहतिः स्वेन कार्या भुवीति श्मश्रूणि स्वैरमश्रूण्यपि दृशि महतां स्पर्धया वर्धयन्तम्।" इतीदं वचनमेनमेव स्पृशतीति चैतिह्यम्। सोऽयमप्पदीक्षितः स्वकृते कुवलयानन्दे "नियोगात् वेङ्कटपतेर्निरुपाधिकृपानिधे"रिति वेङ्कटपतिरायं स्मरति' स वीरवेङ्कटपतिरायो लक्ष्मीकुमारतातदेशिकपितुः

पञ्चमतभञ्जनतातदेशिकस्यान्तेवासीति शासनान्यवगमयन्ति । पितुस्तातसूरेः समयः–शा–श–(1431–1513 A. D. 1564.1590) सुतस्य तातसूरेः समयः–शा-श–(1494. 1554 (A. D. 1571 1631). अप्पदीक्षितजन्मसमयः–शा-श–1475 (A.D.1552) इति तदीयाः प्रथयन्ति । दीक्षितेन यादवाभ्युदयव्याख्याने कीर्तितस्य रामराजपौत्रस्य तिम्मराजपुत्रस्य चिन्नतिम्मरायस्य शिवार्कमणिदीपिकायां कीर्तितस्य बोम्मराजस्य च समयः स एव । अतो ग्रन्थस्यास्य व्याख्यातुर्भारद्वाजश्रीनिवासाचार्यस्य समयः षोडश्याः क्रैस्तशताब्द्या उत्तरार्धं इति वक्तव्यं भवति ।

तदयमत्युत्तमो ग्रन्थः सर्वदेशप्रचारिभिर्नागराक्षरैरद्य मुद्रित इति भाग्यपरिपाकोऽयमखिलानाम् । बून्दिनरेशाश्रिताः अद्य स्वर्गमधिवसन्तः गङ्गासहायविबुधाः 'पादुकासहस्र'मिदं बुन्दिरङ्गनाथमन्दिराध्यक्षस्यास्मत्तोऽधीतसाहित्यस्य लक्ष्मीकुमारतातार्यस्य मुखात् श्रुत्वा "किं यामिनी याममात्रनिर्माणप्रयासारोपणेन, प्रतिदिनमेकैकस्य पद्यस्य निर्माणेऽपि नैवं सरलं सरसं भावबन्धमनोहरं च कवयितुमीष्टे कोऽपीति स्पष्टं प्रतिपादयन्ति स्मेतीदं सुगृहीतनाम्नाप्पदीक्षितेन 'वितस्तिमात्रे दारुखण्डे सहस्रं विवराणि रचितवान्वेङ्कटनाथगुरुरेव कविः । अन्ये तु कपय एवे'ति प्रत्यपादीति प्रथमामिमामुपोद्बलयति ।

ग्रन्थस्यास्य स्वारस्यादिकं स्वयमेव वाचनादवगम्येतेति नात्र तत्प्रपञ्चनप्रयासः समाश्रितः । शोधनसहकारिपुस्तकादिविषये वक्तव्यं संशोधकेन प्रस्तूयते । वयमेतादृशग्रन्थरत्नमुद्रणे प्रोत्सहकान् शोधकान् संपादकान् मुद्रिकांश्च सबहुमानं सभाजयन्तो भूमिकाया अस्याः विलेखनमात्रेणात्र यथाभाग्यमनुष्ठितपरिचरणं धन्यमात्मानं भावयन्तो महनीयानामेषां पुण्यपुरुषाणां ग्रन्थस्यास्य वाचकानां च सन्ततमखिलानां श्रेयसामभिवृद्धिं देवदेवं देवाधिराजं प्रार्थयमानाः सन्तुष्यामः ।

इति आचार्यश्यामदेशिक–

**श्रीशैलताताचार्याध्वरी ।**

**श्रीकाञ्चीपुरस्थशठकोपनिलय-**
**पाठशालायाः प्रधानाध्यापकः ।**

श्रीः ।

## ग्रन्थस्यास्य प्रणेत्रा श्रीमद्वेदान्तदेशिकवेङ्कटनाथगुरुणा प्रणीताना ग्रन्थानां सूची ।

१—यादवाभ्युदयकाव्यम् । चतुर्विंशतिसर्गात्मकम् । सुप्रसिद्धेनाप्पयदीक्षितेन व्याख्यायि ।

२—हंससन्देशः । आश्वासद्वयात्मकः । सुगृहीतनामभिः श्रीमन्महीशूरपुराधिराजकुलगुरुभिः श्रीकृष्णब्रह्मतन्त्रपरकालगुरुभिर्व्याख्यायि विस्तरेण ।

३—सङ्कल्पसूर्योदयः—दशाङ्कम् महानाटकम् । प्रबोधचन्द्रोदयखण्डनरूपम् । व्याख्यात्रयमस्याद्य यावदुपलभ्यते ।

४—सुभाषितनीवी—पद्धतिद्वादशकात्मिका । प्रतिपद्यं त्रिचतुराधिकार्थगुम्फिता । व्याख्यात्रयमस्याद्ययावदुपलभ्यते । इति काव्यचतुष्टयम् ।

१ हयग्रीवस्तोत्रम् ।
२ देवनायकपञ्चाशत् ।
३ अच्युतशतकम् । ( प्राकृतभाषामयम् । )
४ गोपालविंशतिः ।
५ देहलीशस्तुतिः ।
६ वरदराजपञ्चाशत् ।
७ यथोक्तकारिस्तोत्रम् ।
८ कामासिकाष्टकम् ।
९ अष्टभुजाष्टकम् ।
१० शरणागतिदीपिका ।
११ परमार्थस्तुतिः ।
१२ दयाशतकम् ।
१३ भगवद्ध्यानसोपानम्
१४ दशावतारस्तोत्रम् ।
१५ अभीतिस्तवः ।
१६ न्यासदशकम् ।
१७ न्यासतिलकम् ।
१८ श्रीस्तुतिः ।

१९ भूस्तुतिः ।
२० गोदास्तुतिः ।
२१ सुदर्शनाष्टकम् ।
२२ षोडशायुधस्तोत्रम् ।
२३ गरुडदण्डकः ।
२४ गरुडपञ्चाशत् ।
२५ यतिराजसप्ततिः ।
२६ धाटीपञ्चकम् ।
२७ दिव्यदेशमङ्गलाशासनपञ्चकम् ।
२८ पादुकासहस्रम् ।
२९ रघुवीरगद्यम् ।
३० अपर्याप्तामृतस्तुतिः ।
३१ वीरराघवस्तुतिः ।
३२ नीलास्तुतिः ।

इति द्वात्रिंशत् स्तोत्राणि ।

| | | | |
|---|---|---|---|
| १ | यज्ञोपवीतप्रतिष्ठा । | श्लोकरूपा | |
| २ | आराधनक्रमः । | ,, | |
| ३ | हरिदिनतिलकम् । | ,, | |
| ४ | न्यासविंशतिः । | ,, | |
| ५ | तत्वमुक्ताकलापः । | ,, | विशिष्टाद्वैतसिद्धान्तानुरोधिप्रकरणम् । |
| ६ | अधिकरणसारावली । | ,, | ब्रह्मसूत्रार्थसंग्रहरूपा । |
| ७ | मीमांसापादुका । | ,, | पूर्वमीमांसान्यसंग्रहरूपा । प्रथमाध्याय-प्रथमपादमात्रस्य । |
| ८ | वैश्वदेवकारिका । | ,, | |

९ न्यासविंशतिव्याख्या ।
१० सर्वार्थसिद्धिः । तत्वमुक्ताकलापव्याख्यारूपा ।
११ श्रीपाञ्चरात्ररक्षा ।
१२ सच्चरितरक्षा ।
१३ निक्षेपरक्षा ।
१४ गीतार्थसंग्रहरक्षा । श्रीमद्यामुनमुनिविरचितगीतार्थसंग्रहश्लोकव्याख्यारूपा ।
१५ रहस्यरक्षा । श्रीमद्यामुनमुनिविरचितचतुःश्लोकी । स्तोत्ररत्नभगवद्रामानुजमुनिविरचितगद्यत्रयव्याख्यारूपा ।

१६ न्यायपरिशुद्धिः। विशिष्टाद्वैतसिद्धान्तानुसारिन्यायग्रन्थः प्रमाणनिरूपणपरः।
१७ न्यायसिद्धाञ्जनम्। ,, प्रमेयनिरूपणपरम्।
१८ अधिकरणदर्पणः। श्रीभाष्यार्थरूपः। ( लुप्तः। )
१९ तत्त्वटीका श्रीभाष्यव्याख्यारूपा। स्वल्पमात्रैव लभ्यते।
२० तात्पर्यचन्द्रिका। श्रीभगवद्रामानुजमुनिविरचितस्य भगवद्गीताभाष्यस्य व्याख्या।
२१ शतदूषणी। षट्षष्टिर्वादा एव लभ्यन्ते।
२२ चकारसमर्थनम् शतदूषण्याम् कस्यापि चकारस्य नैरर्थक्यमाशङ्कमानेन श्रीमता विद्यारण्यमुनिना तदुपरि विन्दौ कृते तदाशङ्काः स्वयमुद्भाव्य तत्समाधानमत्र कृतम्। ( दुष्प्रापम्। )
२३ ईशावास्योपनिषद्भाष्यम्।
२४ शिल्पार्थसारः। ( दुर्लभः। )
२५ रसभूमामृतम्। } वैद्यकग्रन्थौ सुविपुलौ।
२६ वृक्षभूमामृतम्। }
२७ २८ भूगोलनिर्णयः। पुराणानुसारी श्लोकरूपः—तद्व्याख्यानं च। इत्यष्टाविंशतिः अनुष्ठानशास्त्रानुबन्धीनि।

१—२४ द्रमिडभाषागाथामयाः प्रबन्धाः चतुर्विंशतिः।

एतेषु पञ्च लुप्ताः।

१—३२ संस्कृतद्रामिडोभयभाषासंवलनात्मकमणिप्रवालमया रहस्यग्रन्था द्वात्रिंशत्।

एषु त्रयो विलुप्ताः।

१—श्रीशठकोपसूरिसूक्तिसहस्रस्य व्याख्या निगमपरिमलः। ( लुप्तः। )

मणिप्रवालमयी।

इत्येते।

"परःशतं वापि परस्सहस्रं श्रीवेङ्कटाचार्यकृताः प्रबन्धाः।
तत्रालमेकः खलु भक्तिमुक्त्योः कार्त्स्न्येन कस्तान् गणयेत्समस्तान्॥"

सप्ततिरत्नमालिका.

---

# काव्यमाला ।

## श्रीमद्वेङ्कटनाथाचार्यप्रणीतं

## पादुकासहस्रम् ।

सटीकम्[1] ।

प्रथमा पद्धतिः ।

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

यत्रानन्दं प्रज्ञया वृत्तितो वा शेषीभावो यत्र काष्ठां दधाति ।
तिष्ठेते ते मह्यमन्योन्ययोगात्रैय्यं तार्यौ रङ्गराट् पादुका च ॥

रङ्गास्थानीरसिकपरिषत्प्रेरणां प्राप्य शौरः
पादावन्याः स्तुतिमकृत यो यैः सहस्रेण ८यैः ।
भक्तिस्तस्मिन्परमकरुणासागरे देशिकेन्द्रे
व्यक्तं तेषां वितरतितरां व्याकृतौ ये नियोगम् ॥

संन्येश्वाङ्याय···(?)गभीरपयोनिधाने··· मानवस्तु गतिमृम्भनलब्धवर्णाः(?)।
किंतु त्रयीमुकुटदेशिकदिव्यवाचामर्थग्रहे स इव त(?)स्रवणाः क्षमन्ते ॥

······देशिकगिरां व्यङ्ग्यालंकारगुणगणनसीम्राम् ।
निःशेषताविवरणादनवस्थितिरित्यपेक्षितं क्रमः (कर्म?) ॥

इह खलु निखिलनिगमागमपरीक्षणप्रगुणितसर्वतन्त्रस्वतन्त्रभावः श्रीरङ्गनाथदिव्याज्ञालब्धवेदान्ताचार्यापरनामधेयः **श्रीमान्वेङ्कटनाथो** गुरुर्भगवतो **रङ्गनाथस्य** दिव्यास्थानीरसिकैर्भागवतैरभ्यनुज्ञातपादुकास्तुतिः **पादुकासहस्रं** नाम काव्यं प्रणिनाय । तत्र प्रथमपद्धतौ पादुकास्तुतिं प्रतोष्यन् 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इति शिष्टाचारपरम्पराप्राप्तमङ्गलाचरणरूपतया वस्तुनिर्देशात्मकं भागवतप्रशंसनमाचरति—

सन्तः श्रीरङ्गपृथ्वीशचरणत्राणशेखराः ।
जयन्ति भुवनत्राणपदपङ्कजरेणवः ॥ १ ॥

**सन्त इति** । श्रीरङ्गपृथ्व्या रङ्गरङ्गमि·········क्रयात् (?)क्षतप्रस्खलादिष्विति पावनतया प्रसिद्धश्रीरङ्गसंज्ञकविमानविशेषितभूम्यां रङ्गस्य नाथस्य चरणयोस्त्राणसाधने ।

१. एतत्काव्यटीकाकर्तुः पृथङ्नाम स्फुटं नोपलभ्यते.

पादुके इति यावत्। 'त्रैङ् पालने' इति धातोः 'करणाधिकरणयोश्च' इति करणे ल्युटि कृते शेखरः शिरोभूषणमाल्यं येषां ते तथोक्ताः। 'शिखास्वापीडशेखरौ' इति माल्यप्रकरणेऽमरः। भुवनस्य लोकस्य त्राणा रक्षणसाधनानि पदपङ्कजानां पद्मसदृशचरणानां पदानि पङ्कजानि वेति विग्रहः। 'उपमितं व्याघ्रादिभिः' इति समासः। रेणव एषां ते तथोक्ता अधिगतपरमात्मयाथात्म्या भागवताः। 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः। जयन्ति सर्वोत्कर्षेण वर्तन्ते। अनेन पादुकायै भागवतेभ्यश्च स्वनिरूपितोत्कृष्टबुद्धिरूपमानसिकनमस्कारश्च कृतो भवति। 'आराधनानां सर्वेषां विष्णोराराधनं परम्। तस्मात्परतरं प्रोक्तं तदीयाराधनं नृप॥' इति इतिहाससमुच्चयोक्त्या, 'मद्भक्तजनसंमर्दपादपांसुविमर्दनात्। चतुःसागरपर्यन्ता पावना स्याद्वसुंधरा॥' इति नारदीयवचनेन च प्रतिपादितपादुकाभक्तिमाहात्म्यानां जगत्पावनरजस्कानां पुरुषाणामुत्कर्षकथनेन निरतिशयोत्कर्षकविशेषिता भगवत्पादुका वर्णनीया। प्रस्तुता भगवतीति पद्धतिसंगतिः। अत्र परिकरालंकारविशेषणयोर्जयत्युक्त्यहेलभिप्रायगर्भत्वात् 'विशेषसाकूतभावः परिकरः स्मृतः' इति लक्षणम्। उदात्तालंकारश्च। सतामुत्कर्षवर्णनस्य पादुकामाहात्म्याङ्गत्वात् उदात्तम्। 'महत्त्वं यद्विभूतेराशयस्य वा। महापुरुषचारित्रवर्णनं चाङ्गतां गतम्॥' इति लक्षणम्। आभ्यामुपस्कृतः प्रेयोलंकारश्च। भागवतविषयस्य रतिभावस्य पादुकाविषयरतिभावाङ्गत्वात्। 'रसाङ्गभूतो रसवत्' इति रसवदलंकारलक्षणोक्त्यनन्तरम् 'प्रेयोभावस्तथाविधः' इति प्रेयोलंकारलक्षणमुक्तम्। तथा चोदात्तपरिकरयोः प्रेयसश्चाङ्गाङ्गिभावेन संकरः। 'नीरक्षीरवदेतेषां संभेदः संकरस्त्रिधा। अङ्गाङ्गिभावात्संदेहादेकोक्त्यनुगमादपि॥' इति लक्षणम्। एकारस्य चतुर्वारमावर्तनाद्वर्णानुप्रासः शब्दचित्रम्। त्राणशब्दस्य द्विवारमावर्तनाच्छेकानुप्रासः। 'वर्णसाम्यमनुप्रासप्रच्छेकवृत्तगतो द्विधा। सकृष्णारूप्यमन्योन्यं मद्वर्णसमुदाययोः॥ द्वयोस्तदाद्यो नैकस्य चैकस्यान्यो हलोऽसकृत्॥' इति उक्तयोः शब्दालंकारयोः पूर्वोक्तानामर्थालंकाराणां परस्परानपेक्षाणामेकत्र तिलतण्डुलवत्फुटावगम्यभेदनयावस्थितेः संसृष्टिः। 'भेदेनावस्थितिर्येषां सा संसृष्टिरुदाहृता' इति लक्षणम्। उक्तालंकारैर्निरतिशयप्रीतिविषयीभूतायाः पादुकायाः परमपुरुषार्थत्वं व्यज्यते इत्यलंकाराधीनवस्तुध्वनिर्वाक्यगतः पदपङ्कजशब्देन धर्मवाचकलुप्तोपमापरेण पङ्कजत्वोपलक्षितसौगन्ध्यसौकुमार्यादिसंपत्तिः। स्वसेवकेषु तदाधायकत्वं च पादुकाया व्यज्यते। इत्यलंकारेण लक्षणामूलवस्तुध्वनिपदे द्रष्टव्यः। तथा चास्य काव्यस्य ध्वनिवृत्त्या पादुकोत्कर्षपरत्वादुत्तमकाव्यत्वम्। तदुक्तम्—'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितम्' इति। इदं काव्यं पद्यानामकम्—'एकप्रघट्टकं पद्यामुक्तकानां निबन्धनम्' इति लक्षणात्। अत एव परिच्छेदेषु पद्धतिशब्दः पद्याशब्दपर्यायः प्रयुज्यते। अत्र काव्यपद्धत्यादौ भूदेवताकः सर्वगुरुर्मगणः प्रयुक्तः। 'मो भूमिस्त्रिगुरुः श्रियं वितनुते' इति। न चात्र श्लोके त्राणशब्दस्य द्विवारमावर्तनात्कथितपदत्वदोषः शङ्क्यः। चरणत्राणशब्दस्य पादुकायां योगरूढतया केवलत्राणशब्दादन्यत्वादित्यलं बहुना॥

अथ यावत्पादुकामाहात्म्यप्रख्यापनेन प्रकृतोपकारिणं भरतं नमस्करोति—

भरताय परं नमोऽस्तु तस्मै प्रथमोदाहरणाय भक्तिभाजाम् ।
यदुपज्ञमशेषतः पृथिव्यां प्रथितो राघवपादुकाप्रभावः ॥ २ ॥

**भरतायेति** । भक्तिभाजां पादुकाभक्तानां प्रथमोदाहरणायाद्यनिदर्शनाय तस्मै भरताय परं भरतायैव । परंशब्दोऽत्रावधारणार्थेऽव्ययम् । 'परः स्याच्छ्रेष्ठमानातवैरिश्रेष्ठेषु केवले । परमव्ययमिच्छन्ति' इति विश्वः । नमोऽस्तु अन्येषां पादुकामाहात्म्याज्ञ·········त्वादनादरः । तदेवाह—राघवस्य रामतयावतीर्णस्य श्रीरङ्गनायकस्य पादुकयोः प्रभावः शक्तिस्तेजो वा । 'प्रभावः शक्तितेजसोः' इति विश्वः । यदुपज्ञं यस्य भूतस्योपज्ञा प्रथमदर्शनविषयः सन् उपपूर्वात् 'ज्ञा अवबोधने' इति धातोः 'आतश्चोपसर्गे' इति शत्रधिकारविहितः कर्मण्यण्प्रत्ययः । भरतस्योपज्ञेति विगृह्य कृद्योगलक्षणायाः षष्ठ्याः समासः । 'उपज्ञोपक्रमं तदाद्याचिख्यासायाम्' इति नपुंसकत्वम् । अशेषतः सर्वस्यासंमतां दयादित्वात्सार्वविभक्तिकस्तसिः । पृथिव्यां प्रथितः प्रख्यातः तस्मै भरतायेति पूर्वेणान्वयः । 'अधिरोहाय पादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥' इति । 'सवल्कलजटाधारिरामवेषधरः प्रभुः । प्राकाममभिषिच्याथ नन्दिग्रामेऽवसत्तदा ॥' इत्यादिभिः प्रतिपादिततया तद्वृत्त्या च भगवत्पादुकामाहात्म्यप्रख्यापनादिति भावः । काव्यलिङ्गमलंकारः । पादुकाप्रभावख्यापकत्वेन नमस्कार्यत्वसमर्थनात् । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणम् । पूर्ववृत्तप्रेयोलंकारश्च । भरतविषयरतिभावस्य पादुकाभक्त्यङ्गत्वात् । तयोः संस्कारः । औपच्छन्दसिकं वृत्तम्—'षड्विषयेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥' इति प्रकृतेर्वैतालीयलक्षणमुक्त्वा 'पर्यन्ते यौ तथैव शेषं त्वौपच्छन्दसिकं प्रधीभिरुक्तम्' इत्यौपच्छन्दसिकस्य लक्षणमुक्तम् ॥

यन्नामवहनकृतपदभेदाध्यवसायेन भगवत्पादुका भागवतानां मान्यासीत्तं शठकोपमुनिं सेवते—

वर्णस्तोमैर्बकुलसुमनोवासनामुद्वहन्ती-
माम्नायानां प्रकृतिमपरां संहितां दृष्टवन्तम् ।
पादे नित्यं प्रणिहितधियं पादुके रङ्गभर्तु-
स्त्वन्नामानं मुनिमिह भजे त्वामहं स्तोतुकामः ॥ ३ ॥

**वर्णस्तोमैरिति** । वर्णस्तोमैरक्षरसमुदायैर्बकुलसुमनसां केसरपुष्पाणामेव वासनां सौरभमुद्वहन्तीं स्वसाहचर्यायत्तह्यार्यस्मारकभावसंबन्धेन धारयन्तीम् । शठकोपस्य बकुलाभरणत्वादिति भावः । पादुकापक्षे वर्णस्तोमैः पादुकागतनवरत्नगतशौक्त्यादि-

रूपसमुदायैरुपलक्षितामर्चकोपनीतबकुलसुमनःसौरभयुक्ताम् । वाचरहपत्रापि आम्नायानां वेदानाम् । 'श्रुतिः स्त्री वेद आम्नायः' इत्यमरः । अपरां प्रकृतिं अन्यां भङ्गीम् । धर्मधर्मिणोरभेदोपचारात्तथोक्तिः । 'सुरभिश्चन्दनखण्डने' इति वन(?)संहितां द्रविडवेदसंदर्भम् । अन्यत्र शिष्टाम् । दृष्टवन्तं प्रकटितवन्तम् । विश्वामित्रादेर्गायत्र्यादिशिवदर्शनमेव न तु कृतिरिति भावः । रङ्गभर्तुः श्रीरङ्गनाथस्य पादे चरणे नित्यं सदा प्रणिहितधियमवहितबुद्धिम् । अन्यत्र तद्रक्षणार्थं तदेकासक्ताम् । त्वन्नामानं त्वन्नामेव नाम स्वसंज्ञा यस्य तम् । त्वयि स्थितं नाम यस्येति वा तम् । पादुकावकुलाभरणयोः शठकोपशब्दवाच्यत्वादिति भावः । मुनिं ऋषिम् । पूर्वोक्तशिष्टाभिहितत्वात् । स्तोतुं कामो यस्य स तथोक्तः । मयूरव्यंसकादित्वाद्बहुव्रीह्यर्थे तत्पुरुषः । बहुव्रीहिर्वा सामानाधिकरण्यात् । 'तुं काममनसोरपि' इति मलोपः । ·········इह स्तुत्यारम्भे भजे सेवे श्रेये । संसृष्टिः प्रेयोऽलंकारः । 'नानार्थसंशयः श्लेषवर्ण्यौ वर्ण्योभयास्पदः' इति श्लेषलक्षणम् । प्रथमपादे बकारस्य द्वितीयपाद आकारस्य तृतीयपादे यकारस्य यकारसमुदायस्य चावृत्तेर्वृत्त्यनुप्रासः । शब्दालंकारः । मन्दाक्रान्तावृत्तम्—'मन्दाक्रान्ता जलधिषडगैर्भ्भौ नतौ ताद्गुरू चेत्' ॥

पादुकामाहात्म्यस्य परिज्ञातारं वाल्मीकिमादिकविं प्रस्तुतस्तुतिप्रणयनाय वाचं प्रार्थयते—

दिव्यस्थानात्त्वमिव जगतीं पादुके गाहमाना
पादन्यासं प्रथममनया भारती यत्र चक्रे ।
योगक्षेमं सकलजगतां त्वय्यधीनं स जान-
न्वाचं दिव्यां दिशतु वसुधाश्रोत्रजन्मा मुनिर्मे ॥ ४ ॥

**दिव्यस्थानादिति** । हे पादुके, त्वमिवानवद्या पावनी भारती सरस्वती । 'ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती' इत्यमरः । दिव्यस्थानाज्जगतीं भूमिम् । 'जगती रत्नगर्भा च' इत्यमरः । गाहमानाश्रयन्ती सती यत्र यस्मिन्वाल्मीकिमुनौ पादन्यासं चरणनिक्षेपं प्रथमं पूर्वं चक्रे कृतवती सकलानां जगतां लोकानां योगक्षेमम् । योगोऽलब्धस्य लाभः, क्षेमं लब्धस्य परिपालनम् । द्वन्द्वैकवद्भावः । 'त्वदधीनं त्वदायत्तं वाक्यं वक्तर्यधीनं हि' इति भाष्यप्रयोगात् । वाक्येऽप्युत्तरपदलक्षणखप्रत्ययः साधुः जानन् । 'एते हि सर्वलोकस्य योगक्षेमं विधास्यते' इति तदुक्तेः । 'योगो लब्धस्य लाभः स्यात्क्षेमं लब्धस्य पालनम्' इति विश्वः । वसुधाश्रोत्रे वल्मीके जन्म यस्य स वाल्मीकिः । 'श्रोत्रं ह्येतत्पृथिव्यापद्वल्मीके' इति श्रुतेः । मे मह्यं दिवि भवां संस्कृतात्मिकाम् । 'द्युप्रागुदक्प्रतीचो यत्' इति यत्प्रत्ययः । वाचं वाणी दिव्याम् । वल्गुमित्यर्थः । 'दिव्या वल्गौ दिवि भवेऽन्यवत्' इति विश्वः । दिशतु ददातु । ब्रह्मप्रसादाद्वाल्मीकौ सरस्वत्यागमनं रामायणे, रङ्गनाथेन सहेक्ष्वाकुप्रार्थनया पादुकाया ब्रह्मलोकादागमनं श्रीरङ्गमाहात्म्ये च प्रसिद्धम् । काव्यलिङ्गमलंकारः । वाल्मीकेर्वाग्दानसामर्थ्यस्य ब्रह्मलोकाद्वागागमनाधारतया समर्थनात् । त्वमिव जगतीं गाहमानेत्यत्र पादुकासरस्वत्योः सत्यलोकागमनपावनपावनत्वाभ्यां सादृश्यवर्णाभावा-

दुपमालंकारश्च । तदुक्तम्—'यथा कथंचित्सादृश्यं यत्रोद्भूतं प्रतीयते । उपमानाम सा तस्याः प्रपञ्चोऽयं निदर्श्यते ॥' इति ॥

ननु **वाल्मीकिप्रभृतिमहाकविस्तुताया** भगवत्पादुकायास्त्वदीया स्तुतिर्दोषायेत्याशङ्क्य दोषः किं पादुकाया उत मदुक्तेरिति विकल्पाद्ये उच्चनीचस्थानसंबद्धवदधिकाल्पस्तुत्यङ्गीकारोऽपि पारम्यसौभग्यगुणावह इत्याह—

नीचेऽपि हन्त मम मूर्धनि निर्विशेषं
तुङ्गेऽपि यन्निविशते निगमोत्तमाङ्गे ।
प्राचेतसप्रभृतिभिः प्रथमोपगीतं
स्तोष्यामि रङ्गपतिपादुकयोर्युगं तत् ॥ ५ ॥

**नीच इति ।** यत्पादुकयोर्युगं नीचे निकृष्टे मम मूर्धनि मस्तके । 'मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । तुङ्गे उत्कृष्टे निगमानां वेदानामुत्तमाङ्गे शिरस्युपनिषदि । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । निर्विशेषं वैलक्षण्यरहितं यथा तथा निविशते वर्तते । 'नेर्विशः' इत्यात्मनेपदम् । प्राचेतसप्रभृतिभिर्वाल्मीकिप्रमुखैः । 'प्राचेतसस्तु वाल्मीकिर्मैत्रावरुणिरुच्यते' इति हलायुधः । प्रथममुपगीतं स्तुतं कुर्वत् तत् रङ्गपतिपादुकयोर्युगं स्तोष्यामि । अतो न पादुकाया दोषः, अपि तु गुण इति भावः । अत्र पादुकाया उच्चनीचस्थानयोरधिकाल्पस्तुत्याश्च तुल्यतावर्णनात्तुल्ययोगिताभेदोऽलंकारः । हिताहिते वृत्तितौल्यमपरतुल्ययोनिलक्षणात् । पूर्ववाक्यार्थस्योत्तरवाक्यार्थसमर्थनात् काव्यलिङ्गमपीति तयोः संकरः । वसन्ततिलकं वृत्तम्—'उक्तं वसन्ततिलकं नभजा जगौ गः' इति लक्षणम् ॥

द्वितीये स्वोक्तमहाकविसाम्यरूपो गुण एवास्ति, न तु दोष इति वक्ति—

धत्ते मुकुन्दमणिपादुकयोर्निवेशा-
द्वल्मीकसंभवगिरां समतां ममोक्तिः ।
गङ्गाप्रवाहपतितस्य कियानिव स्या-
द्रथ्योदकस्य यमुनासलिलाद्विशेषः ॥ ६ ॥

**धत्त इति ।** ममोक्तिर्वाचः । 'व्याहार उक्तिर्लपितं भाषितं वचनं वचः' इत्यमरः । मुकुन्दस्य श्रीरङ्गनाथस्य मणिमय्योः पादुकयोर्निवेशात्प्रवेशाद्वल्मीकसंभवस्य वाल्मीकेर्गिरा समतां साम्यं धत्ते वहति । तत्र दृष्टान्तमाह—गङ्गायाः प्रवाहे ओघे पतितस्य रथ्योदकस्य प्रतोलीसलिलस्य । 'रथ्या प्रतोली विशिखा' इत्यमरः । यमुनासलिलाज्जलाद्गङ्गाप्रवाहपतितादिति विपरिणामेनानुषज्यते । विशेषो भेदः कियानिव स्यात् किंपरिमाणः संभावितः । न स्वल्पोऽपीत्यर्थः । संभावनायामिवशब्दः 'किमिदंभ्यां वो घः' इति परिमाणनी वतुप् वस्य घः । वल्मीकसंभवगिरासमानामित्यत्रोपमालंकारः । तत्र बिम्बप्रतिबिम्बभावेन दृष्टान्तकथनात् । दृष्टान्तालंकारश्च—'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः' इति लक्षणात् । तस्य चोपमाङ्गत्वात्संकरः ॥

पादुकां प्रति स्वप्रबन्धस्य सज्जनपरिग्राह्यत्वं प्रार्थयते—

विज्ञापयामि किमपि प्रतिपन्नभीतिः
प्रागेव रङ्गपतिविभ्रमपादुके त्वाम् ।
वक्तुं क्षमाः सदसती विगताभ्यसूयाः
सन्तः स्पृशन्तु सदयैर्हृदयैः स्तुतिं ते ॥ ७ ॥

**विज्ञापयामीति** । हे रङ्गपतेर्विभ्रमपादुके विलासपादुके, अहं प्रतिपन्नभीतिः प्राप्तसाध्वसः सन् स्तुत्यारम्भात्प्रागेव त्वां किमपि किंचिद्विज्ञापयामि । श्रोतव्यविस्रयालस्यनिवारणाय किंचित्त्वोक्तिः । सदसती गुणदूषणे वक्तुं विवेचयितुं क्षमाः शक्ता विगता निःशेषविनष्टासूया गुणेषु दोषारोपो येषां ते । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । सन्तः सदयैर्दयासहितैर्हृदयैः ते तव स्तुतिं स्पृशन्तु । अङ्गीकुर्वन्त्वित्यर्थः । गुणदोषाभिज्ञानाङ्गीकारोऽपि त्वदधीन इति भावः । अत्र प्रार्थना पादुकाभक्त्यङ्गत्वात्प्रेयोलंकारः ॥

प्रकृतस्तुतेः पादुकाप्रेरितत्वं ससाक्षिकमासज्जते—

अश्रद्दधानमपि नन्वधुना स्वकीये
स्तोत्रे नियोजयसि मां मणिपादुके त्वम् ।
देवः प्रमाणमिह रङ्गपतिस्तथात्वे
तस्यैव देवि पदपङ्कजयोर्यथा त्वम् ॥ ८ ॥

**अश्रद्दधानमिति** । हे मणिपादुके, त्वमधुनेदानीं स्वकीये स्वविषये । स्वजनपराज्ञां कृत् चेति चान्द्रादिति दुर्घटतां वैकश्च समर्थितः स्वकस्मै ईहित इति वा प्राक्नियश्च स्तोत्रेऽश्रद्दधानमपि स्वाशक्तिनिरूपणेनेति भावः(?) । मां नियोजयसि प्रेरयसि । इह तथात्वे अस्मिन् कृतप्रेरणे देवः प्रभुः राजा च गम्यते । 'देवः सूर्ये घने राज्ञि' इत्यमरः । रङ्गपतिः श्रीरङ्गनाथ एव सभानायकश्च गम्यते । प्रमाणं प्रमाता । साक्षीत्यर्थः । तस्य रङ्गनाथस्य पदपङ्कजयोः पद्मसदृशचरणयोः प्रमाणमियत्तापरिच्छेदिकेति पूर्वेणान्वयः । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । श्लेषेणेयत्ताप्रमातृतयाध्यवसीयते । यद्वोभयत्रापि मर्यादेत्यर्थः । यथा त्वं श्रीरङ्गनाथचरणयोरतिलङ्घ्यवृत्तिं निवर्तयसि, तथा सोऽपि श्रीरङ्गनाथो मयि त्वदीयप्रेरणातिलङ्घनं निवर्तयेत् । लोके सभानायको राज्ञां साक्षिवत् प्रथमोक्तातिलङ्घने नतो जनं निवर्तयति तद्वदत्रापीति व्यज्यते । तथा चोत्तरत्र रङ्गनाथप्रेरिता त्वं तव स्तुतौ मां सावधानतयेति भावः । श्लेषानुप्राणितोपमालंकारः ॥

त्वदाज्ञाभावे मम तव स्तुतौ शक्तिर्नास्तीत्याह—

यदाधारं विश्वं गतिरपि च यस्तस्य परमा
तमप्येका धत्से दिशि वरगतिं तस्य रुचिराम् ।

कथं सा कंसारेर्द्रुहिणहरदुर्बोधमहिमा
कवीनां क्षुद्राणां त्वमसि मणिपादु स्तुतिपदम् ॥ ९ ॥

**यदिति** । कंसारेः श्रीरङ्गनायकस्य संबन्धिनि हे मणिमयि रत्नमयि पादुके । 'रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च' इत्यमरः । 'अथ पादुका । पादुः' इति चामरः । विश्वं प्रपञ्चः यदाधारं यः कंसारिराधारो धारकं यस्य तत् भवति तस्य विश्वस्य यो हरिः परमोत्कृष्टा गतिरपि प्राप्योऽपि भवति । 'गम्लृ गतौ' इत्यतः 'स्त्रियां कर्मणि क्तिन्' । तमपि भगवन्तं त्वमेका अद्वितीया सती धत्से वहसि । पादुकात्वेनैक्योक्तिः । तस्य कंसारे रुचिरां मञ्जुलां वरगतिं संचारं प्राप्यमिति च गम्यते । दिशसि ददासि । द्रुहिणहराभ्यां ब्रह्मशिवाभ्यां दुर्बोधो ज्ञातुमशक्यो महिमा माहात्म्यं यस्यास्तत्त्वं सा त्वं क्षुद्राणां कल्पकानां कवीनां मादृशानां प्रबन्धॄणां स्तुतेः स्तोत्रस्य पदं विषयः कथमसि । कवीनां त्वदनुग्रहाभावे त्वां स्तोतुं शक्तिर्नास्त्येवेति भावः । अत्र प्रपञ्चधारकतयाधाराधिक्यवर्णनादधिकालंकारभेदः । 'अल्पाख्ये वा यदाधिक्यं···तदपि तन्मतम्' इति लक्षणम् । 'गतिभूतस्यापि गतिदानवर्णनेनोत्तरोत्कर्षत्वात् सारालंकारश्चोत्तरोत्तरमुत्कर्षस्सार इत्यभिधीयते' इति लक्षणात् । क्षुद्राणां स्तुत्यनर्हस्य भगवतोऽप्यधिकायाः पादुकायाः कैमुतिकन्यायेन क्षुद्रस्तुत्यनर्हत्वकथनात् । काव्यार्थापत्त्यलंकारः । 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति लक्षणम् । द्रुहिणहरदुर्बोधमहिमेत्यस्य विशेषणस्य तत्र साकूतत्वात् । परिकरालंकारश्च । उक्तानां काव्यार्थापत्त्यङ्गत्वात्संकरः । वृत्तं शिखरिणी—'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणात् ॥

त्वदनुग्रहे सति ममापि शक्तिरस्तीत्याह—

श्रुतिप्रज्ञासंपन्महितमहिमानः कति कति
स्तुवन्ति त्वां सन्तः श्रुतिकुहरकण्डूहरगिरः ।
अहं त्वल्पस्तद्वदिह बहु च जल्पामि तदपि
त्वदायत्तं रङ्गक्षितिरमणपादावनि विदुः ॥ १० ॥

**श्रुतीति** । हे रङ्गक्षितिरमणस्य पादावनि । पदमव्यते येनेति कर्णव्युत्पत्त्या ल्युट् । स्त्रीत्वविवक्षया 'टिड्ढाणञ्–' इति ङीप् । श्रुतेः शास्त्रश्रवणस्याधीतस्य वेदस्य प्रज्ञायाः स्वाभाविकविवेकस्य च संपदा समृद्ध्या महितो महिमा माहात्म्यं येषां ते । श्रुतेर्वेदस्य श्रोत्रस्य वा कुहरे हृदये । तात्पर्यार्थं इति यावत् । अन्तरविवरे च या कण्डूः प्रतपत्यादिव खर्जत्वेन निगीर्यते । 'कण्डूः खर्जूश्च कण्डूर्या' इत्यमरः । तां हरन्ति अयनं हीति तथोक्ता गिरो येषां ते इतिहासपुराणप्रणेतारः । तैरेव हि वेदानां श्रोत्राणां च संदेहादिकण्डूया चापनीयते । स्मरन्ति च—'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥' इति । तत्र तत्र कियन्तः । असंख्याता इति यावत् । सन्तस्त्वां स्तुवन्ति । अल्पः क्षुद्रः । परिमितविवेक इति यावत् । अहं तु तद्वत् सन्त इवेहास्यां त्वयि बहु बहुलं

यथा तथा जल्पामि वदामीति यत्तदपि तज्जल्पनमपि त्वदायत्तं त्वदधीनतया विदुर्जानते स्म इत्यनुषङ्गः । 'विद ज्ञाने' इति धातुः । 'विदो लटो वा' इति झेरुट् । जल्पामीति विनयेनात्मकृतस्य पादुकाविषयस्य स्तोत्रकार्यतया तेन कारणभूतपादुकानुग्रहानुमानादनुमानालंकारः । 'अष्टौ प्रमाणालंकाराः' इति तत्तत्प्रमाणोपन्यासशैलीये च तत्प्रमाणालंकारलक्षणतया वर्णयन्ति तद्विदः ॥

सतां त्वत्स्तुतौ स्वतःसिद्धा प्रज्ञा हेतुरस्ति मम तद्भावात्स दुरग्रहः कारणतयोपमात्वं शक्यत इति गर्वो मदीयया स्तुत्या भवदुत्कर्षापकर्षयोरभावेऽपि ममास्ति श्रेय इति सदृष्टान्तमाह—

यदेषां स्तौमि त्वां त्रियुगचरणत्रायिणि ततो
महिम्नः का हानिस्तव मम तु संपन्निरवधिः ।
शुना लीढा कामं भवतु सुरसिन्धुर्भगवती
तदेषा किंभूता स तु सपदि संतापरहितः ॥ ११ ॥

यदिति । त्रीणि युगानि ज्ञानशक्त्यादियुगलानि । षड्गुणा इति यावत् । तानि यस्य तस्य भगवतश्चरणौ त्रायते इति तथोक्ता तत्र संबद्धा । 'बहुलमाभीक्ष्ण्ये' इति कर्तरि णिनि 'ऋन्नेभ्यः—' इति ङीप् । एषोऽहम् । अल्पविवेकोऽहमिति यावत् । ततो हेतोस्तव महिम्नो माहात्म्यस्य का हानिः । न कापि क्षतिरित्यर्थः । मम तु निरवधिः परिच्छेदरहिता संपत् संपत्तिरस्तीति गम्यते । तत्र दृष्टान्तमाह—भगवती पूज्या सुरसिन्धुर्गङ्गा शुना शुनकेन कामं भृशं लीढा जिह्वया स्पृष्टा भवत्वस्तु । लिहेः कर्मणि क्तः । तत् ततः एषा किंभूता कीदृशी जाता । दोषवती न भवतीति यावत् । स तु श्वा तु सपदि सहसा संतापेन शरीरतापेन रहितस्त्यक्तो भवति । दृष्टान्तालंकारः—'चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः' इति लक्षणम् ॥

महाकवीनामुद्योगविषये निकृष्टस्योद्योगः सर्वजनहास्य इति पूर्वपद्येनाशङ्क्योत्तरपद्येन समाधत्ते—

मितप्रेक्षालाभक्षणपरिणमत्पञ्चषपदा
मदुक्तिस्त्वय्येषा महितकविसंरम्भविषये ।
न कस्येयं हास्या हरिचरणधात्रि क्षितितले
मुहुर्वात्याधूते मुखपवनविस्फूर्जितमिव ॥ १२ ॥

मितेति । हे हरेश्चरणयोर्धात्रि पोषिके इति पादुकासंबुद्धिः । शेषषष्ठ्या समासः । महितानां पूजितानां कवीनां वाल्मीकिप्रभृतीनां संरम्भविषय उद्योगगोचरे त्वयि एषा मदुक्तिः मितायाः प्रेक्षाया ज्ञहस्य लाभक्षणेऽधिगमसमये परिणमन्ति आनुपूर्व्येण समुन्मिषन्ति पञ्चषानि पञ्च षड्वा पदानि सुप्तिङन्तरूपाः शब्दा यस्याः सा भवतीति शेषः ।

अत इयमीदृशी मदुक्तिः क्षितितले कस्य हास्या न । सर्वेषामपि हास्यास्पदमित्यर्थः । कथमिव । मुहुः शश्वद्वात्यया वातसमूहेन धूते वृक्षपर्वतादौ मुखपवनस्यास्यवातस्य विस्फूर्जितमिव विजृम्भणमिव । स्फूर्जेर्भावे क्तः । अत्रेयमेषेति पदयोर्भिन्नवाक्यान्विततया न पौनरुक्त्यम् । उपमालंकारः ॥

निःसंदेहनिजापकर्षविषयोत्कर्षोऽपि हर्षोदय-
प्रत्यूहक्रमभक्तिवैभवभवद्वैयात्यवाचालितः ।
रङ्गाधीशपदत्रवर्णनकृतारम्भैर्निगुम्फैर्गिरां
नर्मास्वादिषु वेङ्कटेश्वरकविर्नासीरमासीदति ॥ १३ ॥

**निःसंदेहेति** । निःसंदेहौ निःसंशयौ । निश्चिताविल्यर्थः । निजापकर्षः स्वनैच्यम्, विषयस्य पादुकाया उत्कर्षः पारम्यं च तौ यस्य तादृशोऽपि हर्षस्योदयेनोद्भवेन प्रत्यूहक्रमेणोपेतव्यवस्थेन भक्तिवैभवेन पादुकाविषयप्रेमोपचयेन कारणेन वा भवता जायमानेन वैयात्येन धार्ष्ट्येन । 'धृष्णुर्वियातश्च' इत्यमरः । वाचालितो बहुगर्ह्यवाकृतः । 'वाक्शब्दात् 'आलजाटचौ बहुभाषिणि' इति कुत्सिते आलच् । 'तत्करोति—' इत्यन्तात्कर्मणि क्तः। वेङ्कटेश्वरकविर्वेदान्ताचार्यः।स्वातन्त्र्यानिवृत्त्यर्थं प्रथमपुरुषनिर्देशः । रङ्गाधीशस्य पदे चरणौ त्रायते इति पदत्रं पादुका । 'आतोऽनुपसर्गे कः' इति कर्मण्युपपदे कप्रत्ययः । वर्णने स्तोत्रे कृत आरम्भ उद्योगो यैस्तैर्गिरां वाचां निगुम्फैः संदर्भैः नर्मास्वादिषु क्रीडारसिकेषु । 'क्रीडा खेला च नर्म च' इत्यमरः । 'स्वाद आस्वादने' इति धातोस्ताच्छील्ये णिनिः । नासीरं सेनामूलम् । 'सेनामूलं तु नासीरम्' इत्यमरः । अग्रेसरत्वमिति यावत् । आसीदति प्राप्नोति । तथा च सर्वजनहास्यत्वेऽपि पादुकाविषया 'अत्यन्तभक्तिमुक्तानां न शास्त्रं नैव च क्रमः' इति न्यायेन मर्यादातिलङ्घनेन स्तोत्रप्रभृतिरूपविहारः स्वस्योक्त इति भावः । वैयात्यवाचालित इति विशेषणस्य नर्मास्वादिताहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलंकारः । शार्दूलविक्रीडितं वृत्तम् । 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणम् ॥

संप्राप्यतासिद्ध्यर्थं पादुकां प्रति सरसकथनं प्रार्थयते—

रङ्गक्ष्मापतिरत्नपादु भवतीं तुष्टूषतो मे जवा-
ज्जृम्भन्तां भवदीयशिञ्जितसुधासंदोहसंदेहदाः ।
श्लाघाघूर्णितचन्द्रशेखरजटाजङ्घालगङ्गापय-
स्यासादेशविशृङ्खलप्रसरणोत्सिक्ताः स्वयं सूक्तयः ॥ १४ ॥

**रङ्गेति** । रङ्गक्ष्मापतेः श्रीरङ्गनाथस्य रत्नपादु मणिपादुके संबुद्धिः । 'अम्बार्थनद्योर्ह्रस्वः' । भवतीं तुष्टूषतः स्तोतुकामस्य मे मम भवदीयानां शिञ्जितानां भूषणभूतान्तर्मणिरवानां-(णाम्) । 'भूषणानां तु शिञ्जितम्' इत्यमरः । सुधेवामृतमिव स्थितानाम् । 'पीयूषममृतं

सुधा' इत्यमरः । 'उपमितं व्याघ्रादिभिः—' इति समासः । जरामृतिहान्यर्थिभिः सादरं प्राह्यतया सुधासाम्योक्तिः । संदोहस्य समूहस्य संदेहं संशयं ददतीति तथोक्ताः श्रोतॄणां सूक्तयो वा शिञ्जितसंदोहा वेति संशयदायिन्य इत्यर्थः । अथवा सुधानाममृतानां संदोहस्य च संदेहं ददतीति तथोक्ता पादुका । शिञ्जितानि वा अमृतानि वेति संशयदायिन्य इत्यर्थः । श्लाघयाभिनन्दनव्यञ्जकशिरःकम्पनेन घूर्णितायां भ्रमितायां चन्द्रशेखरस्य शिवस्य जटायां शिरःकेशसंघाते जङ्घालस्य प्रशस्तजङ्घावतः । वेगिन इति यावत् । 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्प्रत्ययः । गङ्गापयसस्त्रासादेशे भयवितरणे विश्रृङ्खलैरविरोधैः प्रसरणैः । प्रघाणैः इति यावत् । उत्सिक्ता गर्वयुक्ताः सूक्तयः समीचीना भणितयः स्वयमयत्नेन जवादुद्वेगाज्जृम्भन्तामुद्भवन्तु । प्रार्थनायां लोट् । शिञ्जितसुधेत्युपमा । संदेहदा इति संदेहासंभावितस्य त्रासादेशस्य कथनादतिशयोक्तिरित्येषा संसृष्टिः । संदोहसंदेहेत्यादौ वृत्त्यनुप्रासः ॥

पादुकावहनमात्रेण निखिलसाक्षात्कारसमर्थयोगविशिष्टमहाकविमनोरथसत्त्वस्याप्यप्रवेशोऽस्तीत्याह—

हिमवदचलसेतुमध्यभाजां भरताभ्यर्थितपादुकावतंसः ।
अतपोधनधर्मतः कवीनामखिलेष्वस्मि मनोरथेष्वबाह्यः ॥ १५ ॥

**हिमवदिति** । अतपोधनधर्मतस्तपोधनानां वाल्मीकिप्रभृतीनां न धर्मोऽदृष्टं यस्यास्तीति सः । प्रथमान्तात्सार्वविभक्तिकस्तसिः । अतीतानागतहेत्वदृष्टरहित इत्यर्थः । यद्वा यावद्रक्षणीयं तप एव धर्मो लौकिकश्रेयःसाधनं येषां ते तपोधर्मास्तद्भावस्तत्ता स एव धनं यस्य स तथोक्तः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । अहं भरतेनाभ्यर्थितपादुके अवतंसः शिरोभूषणं यस्य स सन् । 'आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः' इति हलायुधः । हिमवतो हिमवत्पर्वतस्याचलसेतोरचलीकृतरामसेतोश्च मध्यभाजामन्तरालभुवमाश्रयतां कवीनां अखिलेषु मनोरथेष्विच्छासु पादुकाप्रभावप्रकाशकप्रबन्धनिर्माणाभिलाषेष्वबाह्यः कर्तृत्वेनान्तर्गतोऽस्मि । पादुकाभक्तानामखिलप्रबन्धनिर्माणशक्तिः संभवतीति भावः । पादुकावतंस इति विशेषणस्य प्राचीनकव्यन्तर्भावसाकूतत्वात्परिकरालंकारः । औपच्छन्दसिकं वृत्तम् ॥

अस्तु वा यथावत्स्तुतिशक्त्यभावः, तथापि भगवत्प्रसादानुरूपं फलमविकलमित्याह—

अनिदंप्रथमस्य शब्दराशेरपदं रङ्गधुरीणपादुके त्वाम् ।
गतभीतिरभिष्टुवन्विमोहात्परिहासेन विनोदयामि नाथम् ॥ १६ ॥

**अनिदमिति** । रङ्गधुरीणस्य रङ्गधुरंधरस्य । 'खः सर्वधुरात्' इत्यत्र 'धुरो यड्ढकौ' इत्यतो 'धुरः' इत्यनुवर्त्य 'खः' इति योगविभागात्केवलधुर्शब्दात्खप्रत्ययः । पादुके संबुद्धिः । अनिदंप्रथमस्यायं कालः प्रथम उत्पत्तिकालो यस्य न भवति तस्य । अनादेरित्यर्थः । शब्दराशेर्वेदस्यापदमस्थानम् । अशक्यप्रतिपादनमिति यावत् । 'पदं व्यवसितत्राणस्थान-

लक्ष्याङ्कवस्तुषु' इत्यमरः । त्वां विमोहादज्ञानेन गतभीतिर्भयहीनोऽहमभिष्टुवन् सन् परिहासेन हासहेतुव्यापारेण । 'अकर्तरि च कारके संज्ञायाम्' इति हसतेः करणे घञ् । नाथं श्रीरङ्गनाथं विनोदयामि । कालक्षेपशालीनं करोमीत्यर्थः । आशिक्षितचमत्कारवचनेन हासः प्रभूणां युज्यत इति भावः । निर्दुष्टहीनोक्तेर्गुणत्वकथनात् लेशालंकारः । 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्' इति लक्षणात्पूर्ववत् ॥

अथ स्वोक्तेः पादुकाविषये प्रसक्तिं तदादरणाय प्रार्थयते—

वृत्तिभिर्बहुविधाभिराश्रिता वेङ्कटेश्वरकवेः सरस्वती ।
अद्य रङ्गपतिरत्नपादुके नर्तकीव भवतीं निषेवताम् ॥ १७ ॥

**वृत्तिभिरिति** । हे रङ्गपते रत्नपादुके, भवतीं त्वां बहुविधाभिरनेकविधाभिरनेकप्रकाराभिर्वृत्तिभिः प्रशक्तिलक्षणादिभिः, अन्यत्र कैशिक्यादिभिराश्रिता वेङ्कटेश्वरकवेर्वेदान्ताचार्यस्य कवयितुः सरस्वती सूक्तिर्नर्तकी नटीवाद्येदानीं भवतीं निषेवतां भजताम् । रङ्गस्थलवर्तिपरिगृढस्य पादुकान्यासे…(?)प्यत इति व्यज्यते । उपमालंकारः श्लेषानुप्राणितः । रथोद्धता वृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणम् ॥

अपरिध्येयमाहात्म्यायाः पादुकायाः कथं परिमितसहस्रश्लोक्या स्तुतिरित्याशङ्क्याह—

अपारकरुणाम्बुधेस्तव खलु प्रसादादहं
विधातुमपि शक्नुयां शतसहस्रिकां संहिताम् ।
तथापि हरिपादुके तव गुणौघलेशस्थिते-
रुदाहृतिरियं भवेदिति मितापि युक्ता स्तुतिः ॥ १८ ॥

**अपारेति** । हे हरिपादुके, अपारकरुणाम्बुधेरनवधिकदयापयोनिधेस्तव प्रसादादनुग्रहाच्छतगुणितं सहस्रं तत्परिमाणं यस्यास्ताम् । 'संख्याया अतिशदन्तायाः कन्' इति कन्प्रत्ययः । लक्ष्यमिति यावत् । शतसहस्रमनन्तमित्यनन्तार्थवाचकमित्युक्तरीत्यानन्तपरं वा । संहितां श्लोकसंततिं विधातुं कर्तुमपि शक्नुयां खलु, तथापीयं संहिता तव गुणौघस्य गुणस्तोमस्य लेशस्यैकदेशस्य स्थितेरवस्थानस्य । न तु वृद्धेरिति भावः । उदाहृतिर्भवेत् प्रदर्शनमेव स्यात् । इत्यतो हेतोः । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । मितापि सहस्रसंख्यापरिमितापि स्तुतिर्युक्ता । उभयोरप्येकदेशस्तुतिप्रदर्शनत्वाविशेषादिति भावः । परिमितत्वरूपदोषस्यापि अपरिमितफलाविशेषनि[दर्श]नाभ्यर्थनादनुज्ञालंकारः । 'दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्' इति लक्षणात् । इतिशब्देन पूर्ववाक्यहेतुत्वकथनाद्वाक्यार्थहेतुककाव्यलिङ्गमलंकारः । स चागमतया संकीर्त्यते । पृथ्वीवृत्तम् । 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणम् ॥

पादुकां प्रति वाङ्मनसयोरवधानं प्रार्थयते—

अनुकृतनिजनादां सूक्तिमापादयन्ती
मनसि वचसि च त्वं सावधाना मम स्याः ।

निशमयति यथासौ निद्रया दूरमुक्तः
परिषदि सह लक्ष्म्या पादुके रङ्गनाथः ॥ १९ ॥

**अनुकृतेति**। हे पादुके, अनुकृतो निज आत्मीयो नादोऽन्तर्मणिरवो यया ताम्। पादुकाशिञ्जितावतंसवदतिरमणीयामित्यर्थः। सूक्तिं रमणीयां वाचमापादयन्ती त्वं मम मनसि हृदये वचसि वाचि च सावधानाप्रमादा स्या भवेः। निद्रया योगनिद्रया दूरमत्यन्तं मुक्तस्त्यक्तः। सुप्सुपेति समासः। रङ्गनाथो लक्ष्म्या श्रीरङ्गनायक्या सह परिषद्यास्थान्यां यथा येन प्रकारेण निशमयति शृणोति तथेति पूर्वेणान्वयः। स्वस्यान्तः प्रविश्य पादुका स्वयमेव कवयतीति कवेराचार्यस्य हृदयम्। द्वितीयो विशेषालंकारः। एकस्याः पादुकाया अनेकत्र मनसि वचसि च स्थानवर्णनात्। 'विशेषः सोऽपि यत्रैकं वस्त्वनेकत्र वर्ण्यते' इति लक्षणम्। तदनुप्राणितोऽनुप्रासोऽलंकारः। मालिनीवृत्तम्॥

पादुकास्तुतेः श्रीरङ्गनाथपादारविन्दपर्यवसानमनुसंधत्ते—

त्वयि विहिता स्तुतिरेषा पदरक्षिणि भवति रङ्गनाथपदे।
तदुपरि कृता सपर्या नमतामिव नाकिनां शिरसि ॥ २० ॥

**त्वयीति**। हे पदरक्षिणि। 'बहुलमाभीक्ष्ण्ये' इति कर्तरि णिनिः। 'ऋन्नेभ्यः—' इति ङीप्। त्वयि विषये विहिता कृतैषा स्तुतिः श्रीरङ्गनाथस्य पदे चरणे विषये विहिता भवति। कथमिव। तदुपरि तस्य पदस्योपरि। अव्ययेन षष्ठीसमासनिषेधस्य कृदव्ययविषयत्वान्नात्र समासनिषेधः। कृता सपर्या पूजा नमतां प्रह्वीभवतां नाकिनां देवानां शिरसीव। शेषशेषिणोरन्यतरपूजाया उभयपूजात्मकत्वादिति भावः। भगवच्चरणारविन्दे विहिता पूजा शिवशिरस्यर्जुनेन दृष्टेत्ययं वृत्तान्तः प्रकृतोत्तम्भकतया व्यज्यते। उपमालंकारः। आर्यावृत्तम्। 'लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः। षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः॥ षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः। चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥' इति लक्षणम्। इत्थं यद्यन्यत्वं तेषु नियमेनार्याभेद एव प्रयुज्यते। 'सर्वत्र भिन्नसर्गान्तैरुपेतं लोकरञ्जकम्' इति हि काव्यं लक्ष्यते॥

इति श्रीभारद्वाजकुलजलधिसुधाकरश्रीदेवराजार्यसूनुना **श्रीनिवासेन** विरचितायां श्रीरङ्गनाथपादुकासहस्रपरीक्षायां प्रस्तावनामपद्धतिः प्रथमा॥

---

द्वितीया पद्धतिः।

अथास्यां पद्धत्यां द्रविडोपनिषद्दर्शनरहस्योपदेशादिभिर्विश्वोपकारैकतानेन परमकारुणिकेन भगवता शठकोपमुनिना नामैक्यादत्र देशतः प्राप्तानुगुणान्पादुकायामासज्यन्ते(?)—

वन्दे विष्णुपदासक्तं तमृषिं पादुकां च ताम्।
यथार्थशठजित्संज्ञा मच्चित्तविजयाद्ययोः ॥ १ ॥

**वन्द इति ।** विष्णोः श्रीरङ्गनाथस्य पदयोश्चरणयोरासक्तं प्रेमशालीनम्, अन्यत्रासक्तां नमामीति लिङ्गविपरिणामेन योऽत्यन्तं तमृषिं द्रविडवेददृष्टत्वेन प्रसिद्धं शठकोपं तां पादुकां च वन्दे । ययोर्वंकुलाभरणश्रीरङ्गनाथपादुकयोः शठजिदिति संज्ञा । शठजित्संज्ञाशब्दस्य स्वपरत्वात्कर्मधारयः । शठं गुरुविप्रियकृतं जयत्यभिभवतीति शठजित् । 'गुरुविप्रियकृच्छठः' इत्यमरः । 'जि अभिभवे' इति धातोः 'सत्सूद्विष–' इत्यादिना कर्तरि क्विप् । मम चित्तस्य मनसः शठस्य विजयात् शाठ्यमभिभूय स्वविषयकतया वशीकरणाद्धेतोश्चित्तशाठ्यं चाहितेषु विषयेषु हितत्वबुद्धिस्थापकत्वात् । यथार्थां यथा अनतिवृत्ता शठजित्संज्ञा अभिधेयं यस्याः सा । अवयवार्थविशिष्टेति यावत् । पूर्वपदार्थप्राधान्यस्य विवक्षायां ह्यव्ययीभावः । अत्रान्यपदार्थप्राधान्यस्य विवक्षितत्वात् बहुव्रीहिरेव । पूर्वार्धे दीपकमलंकारः । वर्ण्यायाः पादुकायाः शठकोपमुनेरवर्ण्यस्य धर्मैक्यवर्णनात् । 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः' इति लक्षणम् । उत्तरार्धे स निरुक्तिसंकीर्णः । 'नाम्नामन्यार्थजल्पनम्' इति लक्षणम् । युग्मविपुलावृत्तम् । लक्षणं पूर्वमुक्तम् ॥

द्रविडोपनिषन्निवेशशून्यानपि लक्ष्मीरमणाय रोचयिष्यन् ।
ध्रुवमाविशति स पादुकात्मा शठकोपः स्वयमेव माननीयः ॥ २ ॥

**द्रविडेति ।** द्रविडोपनिषद्द्रविडभाषात्मके रहस्यार्थप्रकाशकज्ञाने निवेशशून्याँस्तद-ध्ययनतदर्थज्ञानादिरहितान् । पामरानपीति यावत् । लक्ष्मीरमणाय श्रियः पत्ये रोच-यिष्यन् । तस्य प्रीतिविषयीकरिष्यन्नित्यर्थः । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्च-तुर्थी । द्रविडोपनिषत्प्रवेशवतां तु तत एव तत्प्रीतिसिद्धेरिति भावः । माननीयः पूज्यः शठकोपः स्वयमेव पादुकात्मा पादुकारूपेणाविशति स्मावतीर्णः । ध्रुवमिति संभावना सू-च्यते । सर्वेषां शिरसि पादुकासंबन्धमात्रेण भवत्प्रीतिः सुलभेति भावः । पादुकायाः शठकोपमुन्यवतारत्वसंभावनात् स्वरूपोत्प्रेक्षा । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्म-ना' इति लक्षणम् । औपच्छन्दसिकं वृत्तम् ॥

ननु पादुकयैवाविशेषेण सर्वेषां भगवत्प्रीतिसिद्धेः शठकोपावतारवैयर्थ्यमित्याशङ्क्याह—

नियतं मणिपादुके दधानः स मुनिस्ते शठकोप इत्यभिख्याम् ।
त्वदुपाश्रितपादजातवंशप्रतिपत्त्यै परमाततान रूपम् ॥ ३ ॥

**नियतमिति ।** हे मणिपादुके, स मुनिः शठकोपस्ते तव शठकोप इत्यभिख्यां नाम । 'अभिख्या नामशोभयोः' इत्यमरः । दधानः सन् त्वयोपाश्रितयोर्पादयोर्भगवच्चरणारविन्द-योर्जातानामुत्पन्नानां शूद्राणाम् । 'पद्भ्यां शूद्रो अजायत' इति श्रुतेः । वंशस्याभिजनस्य जातस्य वंशस्येति वा । श्रुतौ शूद्र इत्यनेन जातिलाभात् । प्रतिपत्त्यै परं पूजनार्थमेव रूपं वकुलदामालंकृतदिव्यमङ्गलविग्रहमाततान कृतवान् । नियतमिति संभावना सूच्यते । इयं फलोत्प्रेक्षा । शठकोपावतारस्य पादुकासंबन्धेन धन्यस्य पूजनमेव फलं नान्यदिति भावः ॥

यद्वोभयोरपि प्रयोजनभेदोऽस्तीत्याह—

मुनिना मणिपादुके त्वया च प्रथिताभ्यां शठकोपसंज्ञयैव ।
द्वितयं सकलोपजीव्यमासीत्प्रथमेन श्रुतिरन्यतस्तदर्थः ॥ ४ ॥

**मुनिनेति** । हे मणिपादुके, शठकोप इति संज्ञयैव नाम्नैव प्रथिताभ्यां प्रसिद्धाभ्याम् । इदमुभयोर्विशेषणम् । मुनिना वकुलाभरणमुनिना त्वया च युवाभ्यां च त्रिधा सकलानां वर्णानामुपजीव्यं हिततया परिग्राह्यमासीत् । केन किमित्यत आह—प्रथमेन पूर्वं निर्दिष्टमुनिना श्रुतिः सकलोपजीव्यमासीत् । शूद्राध्ययनयोग्यया द्राविडभाषया परिणामितत्वात् । अन्यत इतरया पादुकया । तृतीयान्तात्सार्वविभक्तिकस्तसिः । तदर्थः श्रुत्यर्थः । 'वेदैश्च सर्वैरहमेव वेद्यः' इति गीता । रङ्गनाथः सकलानामुपजीव्य आसीत् । पादुकाया लीलोत्सवनित्योत्सवादौ सर्वेभ्यो रङ्गनाथस्य प्रदर्शितत्वादिति भावः । तथा चैतदुभयप्रयोजनार्थमवतारद्वयमित्याशयः । पूर्वार्धे मुनिना त्वया चोत्तरार्धे यथासंख्ययान्वयाद्यथासंख्यालंकारः । 'यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः' इति लक्षणम् । प्रकृताप्रकृतयोः पादुकाशठकोपयोरेकक्रियान्वयाद्दीपकालंकारश्च । तयोः प्राधान्यासंदेहात्संकरः ॥

आकर्ण्य कर्णामृतमात्मवन्तो गाथासहस्रं शठकोपसूरेः ।
मञ्जुप्रणादां मणिपादुके त्वां तदेकनामानमनुस्मरन्ति ॥ ५ ॥

**आकर्ण्येति** । हे मणिपादुके, आत्मवन्तो लब्धात्मानः । द्वयार्थवेदिन इति यावत् । शठकोपसंज्ञकस्य सूरेर्विदुषः । 'विद्वान्सूरिः कृती' इत्यमरः । कर्णामृतं श्रवणानां सुधात्मकम् । स्वेन यात्राजननमरणापनोदकत्वाद्भोग्यत्वातिशयत्वाचात्र तत्त्वोक्तिः । गाथासहस्रं सहस्रं गाथा । विशेषणविशेष्ययोः कामचारात्सहस्रशब्दस्य परनिपातः । 'गाथासहस्रम्' इति पाठे तु कर्णामृतमित्यनेन क्रियाविशेषणम् । चरमप्रबन्धमिति यावत् । आकर्ण्य श्रुत्वा मञ्जुप्रणादां मनोज्ञशब्दितां त्वां तदेकनामानं तदभिसंज्ञायुक्तामनुस्मरन्ति अतुलं संदधते । मञ्जुध्वनिसादृश्याच्छठकोपनामकं पादुकायाः स्मर्यत इति भावः । स्मृतिरलंकारः । 'स्यात्स्मृतिभ्रान्तिसंदेहैस्तदङ्कालंकृतित्रयम्' इति लक्षणम् । तत्र स्मरणवर्णनं स्मृत्यलंकारा इति विवेकः । उपजातिवृत्तम् । 'स्यादिन्द्रवज्रा ततजास्ततो गौ' । 'उपेन्द्रवज्रा जतजास्ततो गौ' । 'अनन्तरोदीरितलक्ष्मभाजः पादा यदीया उपजातयस्ताः' इति लक्षणम् ॥

स सप्तपर्वव्यवधानतुङ्गां शेषत्वकाष्ठामभजन्मुरारेः ।
तस्यापि नामोद्वहनात्त्वयासौ लघूकृतोऽभूच्छठकोपसूरिः ॥ ६ ॥

**स इति** । यः शठकोपसूरिः सप्तानां पर्वणां व्यवधानानां शेषाणाम् । ग्रन्थवाचकः पर्वशब्दो लक्षणया व्यवधायके प्रयुज्यते । यद्वा प्रस्तावाचवाची पर्वशब्दः । सप्तानां प्रस्तावानां व्यवधानेन तुङ्गामुच्छ्रिताम् । 'पर्व स्यादुत्सवग्रन्थौ प्रस्तावलक्षणान्तरे' इति विश्वः । मुरारेर्हरेः शेषत्वस्य दासभावस्य काष्ठामुत्कर्षम् । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । अभ-

जत् प्राप्तवान् । समृद्धपुरुषव्यवहितशेषत्वाध्यवसाययुक्त इत्यर्थः । इति गाथायां द्रष्टव्यम् । तस्यापि शठकोपस्यापि नामोद्वहनात्संज्ञावहनात् त्वयासौ शठकोपमुनिर्लघूकृतोऽभूत् न्यूनशेषत्वयुक्तः कृतः । पादुकायाः 'पद्यमङ्गुलिविच्छेद उरोविन्यस्तमक्षरम् । तन्नामकरणं चैव दास्यमेतच्चतुर्विधम् ॥' इत्युक्तरीत्या शठकोपनामवहनेन शठकोपस्य दासत्वात्ततोऽपि शेषत्वातिशय्यमिति भावः । उत्तरोत्तरमुत्कर्षवर्णनात्सारालंकारः । 'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते' इति लक्षणम् ॥

शय्यात्मना मधुरिपोरसि शेषभूता
पादाश्रयेण च पुनर्द्विगुणीकृतं तत् ।
भूयोऽपि भागवतशेषतया तदेव
व्यक्तुं पदावनि शठारिपदं बिभर्षि ॥ ७ ॥

**शय्यात्मनेति** । हे पदावनि मणिपादुके, शय्यात्मना शयनीयरूपेण । 'शय्यायां शयनीयवत्' इत्यमरः । मधुरिपोर्मधुसूदनस्य शेषभूतासि दासभूतासि । 'निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः' इति श्लोके पादुकायाः शय्यात्मकत्वं व्यक्तमुक्तं यामुनाचार्यैः । अनन्तापरपर्यायशेषशब्दवाच्यता गम्यते । तच्छेषत्वं पादाश्रयेण भगवच्चरणसंश्रयेण पुनर्द्विगुणीकृतम् । द्वौ गुणावावृत्ती यस्य तत् । तदधिकमभूदिति यावत् । भूयोऽपि पुनश्च तद्भगवद्धर्मयत्वमेव भागवतशेषतया भगवच्छेषदास्यत्वेन व्यक्तुं प्रकटीकर्तुं शठारेः पदं शठकोपसंज्ञां बिभर्षि वहसि । पादुका भागवतनामवहनेन 'तन्नामकरणे चैव' इत्युक्तलक्षणेन भागवतदास्यमेव प्रकटीकरोतीति भावः । भागवतशेषत्वेन विना भगवच्छेषत्वानिर्वाहः पुरुषार्थकोषाधिकारे निपुणत्वमुपपादितः । अत्र व्यापारान्तरसंनिधानेन प्राक्सिद्धशेषत्वोत्कर्षवर्णनादनुगुणालंकारः । 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति लक्षणम् । वसन्ततिलकवृत्तम् ॥

पद्येन देवि शठकोपमुनिस्त्वदासी-
त्तस्यापि नामवहनान्मणिपादुके त्वम् ।
शेषीबभूव युवयोरपि शेषशायी
शेषं तु शेषमपि शेषपदे स्थितं वः ॥ ८ ॥

**पद्येनेति** । हे देवि दीव्यमाने । पचादौ 'देवट्' इति पाठात् 'टिड्ढाणञ्–' इत्यादिना ङीप् । हे मणिपादुके, शठकोपमुनिर्वकुलाभरणः पद्येन त्वत्प्रातिपदिकगाथया तव्रासीत्त्वद्दासोऽभूत् । शेषशेषीभावो वाक्यार्थः । त्वमपि तस्य शठकोपमुनेर्नामवहनात्तस्यासि तद्दासभूतासि । पद्यनामवहनयोः शेषलक्षणत्वम् । 'पद्यमङ्गुलिविच्छेद उरोविन्यस्तमक्षरम् । तन्नामकरणं चैव दास्यमेतच्चतुर्विधम् ॥' इत्यन्तं परं क्रयविक्रयार्हदशया समिन्धते इत्याचार्योक्तिरीत्या परदास्यं भगवच्छेषतोत्कर्षावहमेव, न तु विरुद्धम् । शेषशायी श्रीरङ्गनाथो युवयोः

पादुकाशठकोपयोः शेषीबभूव तस्यासीत्तत्र हेतुर्न वक्तव्यः । 'दासभूताः स्वतः सर्वे' इत्युक्तेः । वो युष्माकं तु पादुकाशठकोपश्रीरङ्गनाथानां शेषपदे दासस्थानेऽवशेषं परिशिष्टं सर्वमपि जगत्स्थितमति···ष·········तस्य(?) । पूर्वार्धे पादुकाशठकोपयोः परस्परमुपकारकथनादन्योन्यालंकारः । 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्' इति लक्षणात् । पूर्वार्धोत्तरार्धयोर्ग्रस्तमुक्तरीत्यभिधानादेकावल्यलंकारः । 'गृहीतमुक्तरीत्या तु श्रुतिरेकावली मता' इति लक्षणात् । अशेषमपि शेषमिति विरोधाभासश्च तथा तथा चैषा संसृष्टिः ॥

नामैक्याच्छठकोपमुनिपादुकयोरभेदमध्यवस्यन्नाह—

विन्ध्यस्तम्भादभिहतगतेर्विष्वगाचान्तसिन्धोः
कुम्भीसूनोरसुरकवलग्रासिनः स्वैरभाषा ।
नित्यं जाता शठरिपुतनोर्निष्पतन्ती मुखात्ते
प्राचीनानां श्रुतिपरिषदां पादुके पूर्वगण्या ॥ ९ ॥

**विन्ध्येति ।** हे पादुके, विन्ध्यस्य विन्ध्यपर्वतस्य स्तम्भान्निरोधादभिहता प्रति······र्यस्य तस्य । विष्वक् समन्तात् आचान्तश्चुलुकीभूतः सिन्धुः समुद्रो येन तस्य । असुरो वातापिरेव कवलो ग्रासः । 'ग्रासस्तु कवलः' । तं ग्रसत इति तथोक्तस्य कुम्भीसूनोः कुम्भोद्भवस्य । कुम्भशब्दात्स्त्रीत्वविवक्षायां 'जातेरस्त्रीविषयादयोपधात्' इति ङीप् । अगस्त्यविन्ध्यनिग्रहादिव्यापारः पुराणप्रसिद्धया । विन्ध्यस्तम्भनादिविशेषणं तन्मात्राव्यञ्जनद्वारैतद्दृष्टभाषायाः प्राशस्त्याभिप्रायकम् । नित्यं जातानादिः । इदं प्रथमा न भवतीति भावः । स्वैरभाषा स्वभ्यासमागता भाषा द्रविडभाषा प्रथममगस्त्यमुनिना दृष्टेति प्रसिद्धिः । शठरिपोस्तनुरेव तनुः शरीरं यस्यास्तस्या बकुलाभरणमुनिरूपायास्ते तव मुखान्निष्पतन्ती निर्गच्छन्ती सती प्राचीनानां पुरातनीनां श्रुतिपरिषदां वेदगोष्टीनाम् । 'संमता परिषद्गोष्ठी' इत्यमरः । पूर्वगण्याग्रगणनीया आसीत् । सर्वोपजीव्यतया द्वारान्तरान(णां)शेषतया भगवत्स्वरूपप्रकाशकत्वाच्च श्रेष्ठासीदिति यावत् । अत एवोत्सवादिषु भवतोऽग्रभागे पठनमित्यपि गम्यते । अत्र विशेषणानां साकूतत्वात्परिकरालंकारः । अगस्त्यस्य महापुरुषस्य चरित्रं पादुकामाहात्म्याङ्गतया वर्ण्यत इत्युदात्तालंकारः । तत्र च परिकरोऽङ्गमिति संकरः । मन्दाक्रान्ता वृत्तम् ॥

शठकोप इति समाख्या तव रङ्गधुरीणपादुके युक्ता ।
सूते सहस्रमेवं सूक्तीः स्वयमेव यन्मया भवती ॥ १० ॥

**शठकोप इति ।** हे रङ्गधुरीणस्य श्रीरङ्गनाथस्य पादुके, तव शठकोप इति समाख्या संज्ञा युक्तानुरूपा । तत्र हेतुमाह—यद्यस्माद्धेतोर्भवती स्वयमेव मया करणेनैवं प्रस्तुतस्तुतिरूपेण सहस्रं सूक्तीः पद्यानि सूते उत्पादयति । अत इति पूर्वेणान्वयः । शठकोपस्य सहस्रगाथात्मकचरमप्रबन्धप्रणेतृत्वाच्छठकोपसंज्ञा युक्तेति भावः । काव्यलिङ्गमलंकारः । संज्ञाया युक्तत्वस्य सहस्रपद्यप्रणेतृतया समर्थनात्तत्त्ववाक्यार्थहेतुकं काव्य-

लिङ्गमलंकारः । वृत्तं गीतिरार्याभेदः । 'आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः प्रतिकृतिशोभां गीतिं संगीतवान्भुजङ्गेशः ॥' इति ॥

इति श्रीरङ्गनाथपादुकासहस्रपरीक्षायां समाख्या पद्धतिर्द्वितीया ॥

---

तृतीया पद्धतिः ।

अथास्यां पद्धत्यां निरवधिकां शक्तिं प्रभाव[पारं]पर्यायामाश्रित्य पादुकां स्तौति—

वन्दे तद्रङ्गनाथस्य मान्यं पादुकयोर्युगम् ।
उन्नतानामवनतिर्नतानां यत्र चोन्नतिः ॥ १ ॥

**वन्द इति** । मान्यं पूज्यं रङ्गनाथस्य पादुकयोस्तद्युगं युगलम् । 'युग्मं तु युगलं युगम्' इत्यमरः । वन्दे सेवे । यत्र पादुकायुगलविषये उन्नतानामप्रह्वीभूतानाम् । शेषित्वबुद्धिहीनानामिति यावत् । अवनतिः प्रह्वीभावोऽपकर्षश्च । नतानां प्रह्वीभूतानाम् । शेषत्वाध्यवसाय[वता]मिति यावत् । उन्नतिरप्रह्वीभाव उत्कर्षश्च भगवत इति गम्यते । तत्पादुकायुगलमिति पूर्वेणान्वयः । पादुकामनमन्तोऽतिहीना भवन्ति, नम[न्त]स्तु परमोत्कृष्टा भवन्तीति भावः । अन्वयव्यतिरेकाभ्यामर्थानर्थप्रदर्शनेनोत्तरवाक्यार्थेन पूर्ववाक्यार्थस्य पादुकावन्दनस्य समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः । उन्नत्यवनत्योर्विरुद्धावनत्युन्नतिफलकल्पवर्णनाद्विभावनाभेदः । 'विरुद्धा कार्यसंपत्तिर्दृष्टा काचिद्विभावना' इति लक्ष्म । अवनतेर्विपरीतोन्नतिप्रयोजनोद्देश्यकत्वाद्विचित्रालंकारोऽपि । 'विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया' इति लक्षणम् । उन्नतेरनिष्टावनतिजनकत्ववर्णनाद्विषमभेदः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षणम् । तथा चैषामेव संदिह्यमानानां संकीर्णानां काव्यलिङ्गाङ्गतया संकरान्तरमित्यलंकारैरघटितघटनानुगुणा शक्तिः पादुकायाः पद्धतिः प्रतिपाद्या युज्यत इत्यालंकारिकाः ॥

निःशेषमम्बरतलं खलु पत्रिका स्या-
त्सप्तार्णवी यदि समेत्य मषीभवित्री ।
वक्ता सहस्रवदनः पुरुषः स्वयं चे-
ल्लिख्येत रङ्गपतिपादुकयोः प्रभावः ॥ २ ॥

**निःशेषमिति** । निःशेषमत्येकदेशमम्बरतलमाकाशस्वरूपम् । 'अधःस्वरूपयोरस्त्री तलम्' इत्यमरः । पत्रिका लिप्याधारतालपत्रं स्याद्यदि भवेच्चेत् । सप्तानामर्णवानां समाहारः सप्तार्णवी । 'द्विगोः' इति ङीप् । सप्तापि सागराः समेत्य मिलित्वा मषी लेखनसाधनाञ्जनं भवति यदि । सहस्रवदनः सहस्रमुखः पुरुषः । 'सहस्रशीर्षा पुरुषः' इति श्रुतः । भगवानेव स्वयं वक्ता चेत् लेखनाय प्रतिपादयिता चेद्रङ्गपतेः पादुकयोः प्रभावो दिव्यशक्तिः । 'प्रभावः शक्तितेजसोः' इति विश्वः । लिख्येत लेखनयोग्यः स्यात् । लोके मिलितैरिति शेषः । अन्यथा विलिखितुमशक्यमिति भावः । असंभावितसंभावनात्संभा-

वनालंकारः । 'संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति लक्षणम् । तेन च 'परास्य शक्तिर्विविधैव श्रूयते' इत्युक्तापरिमितविविधशक्तियुक्तेन भगवता साम्यस्य पादुकायां प्रतीतेः संभावनालंकारः । ध्वनिर्वात्वगतः (?) । वसन्ततिलकं वृत्तम् ॥

वेदोपबृंहणकुतूहलिना निबद्धं
विश्वंभराश्रुतिभवेन महर्षिणा यत् ।
व्यासेन यच्च मधुसूदनपादरक्षे
द्वे चक्षुषी त्वदनुभावमवेक्षितुं नः ॥ ३ ॥

**वेदेति** । हे मधुसूदनपादुके, वेदस्योपबृंहणे विवरणे कुतूह[illegible]नोत्सुकेन । इदमुभयोर्विशेषणम् । 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति स्मृतेः । विश्वंभरायां भूम्यां श्रुतौ वल्मीके भवेनोत्पन्नेन महर्षिणा ऋषिमुख्येन वाल्मीकिना यद्रामायणं निबद्धं संदर्भितम् । यच्च भारतं व्यासेन निबद्धम् । ते द्वे अपि रामायणभारते तवानुभावं प्रतिभावमवेक्षितुं द्रष्टुं नः अस्माकं द्वे चक्षुषी नयने । भगवत्पादुकाप्रभावे भारतं रामायणं च प्रमाणमिति भावः । वेदोपबृंहणकुतूहलिनेति पदेन पादुकाप्रभावस्य वेदवेद्यत्वं व्यज्यते.। चक्षुःष्वेव(ष्ट्वेन) परिणतयोर्भारतरामायणयोर्दर्शनक्रियान्वितत्वकथनात्परिणामालंकारः । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणम् ॥

तत्रापि पादुकाप्रभावो रामायणे प्रपञ्चेन वाल्मीकिनोक्त इति दर्शयति—

प्रत्यक्षयन्ति परिशुद्धधियो यथाव-
द्रामायणे रघुपुरंदरपादरक्षे ।
शश्वत्प्रपञ्चितमिदंपरयैव वृत्त्या
संक्षेपविस्तरदशासु तवानुभावम् ॥ ४ ॥

**प्रत्यक्षयन्तीति** । हे रघुपुरंदरस्य राघवस्य पादरक्षे प्रस्तावे । 'पादुके चास्य राज्याय पादुकाभ्याभिषेचके' इत्यादिना विस्तारप्रस्तावे । एते हि सर्वलोकस्य········ ···दुके ते(?) पुरस्कृत्यैता इदंपरया अस्मिन्नु(न्नेव) भावेऽभियोगवत्या । 'सप्तमी' इति योगविभागात्समासः । वृत्त्या शक्तिलक्षणाव्यञ्जनात्मकेन पदपदार्थसंबन्धेनैव········ शश्वन्मुहुः प्रपञ्चितं बहुशः प्रतिपादितं तवानुभावं प्रभावं यथावद्यथार्थं प्रत्यक्षयन्ति स्फुटमनुभवन्ति । अत्र भूतार्थसाक्षात्कारवर्णनाद्भाविकालंकारः । 'भाविकं भूतभाव्यर्थसाक्षात्कारस्य वर्णनम्' इति लक्षणम् ॥

पादुकाप्रभावस्य रामायणे प्रतिपादनात्तेनैव श्रुतिप्रतिपादनमपि सुज्ञानमित्याह—

अल्पश्रुतैरपि जनैरनुमीयसे त्वं
रङ्गेशपादु नियतं निगमोपगीता ।
सारं तदर्थमुपबृंहयितुं प्रणीतं
रामायणं तव महिम्नि यतः प्रमाणम् ॥ ५ ॥

**अल्पेति ।** हे रङ्गेशपादुके, त्वमल्पश्रुतैः परिमितवेदाध्यायिभिरपि जनैः पुरुषैर्निगमेन वेदेनोपगीता बोधितानुमीयसे लिङ्गिकज्ञानविषयीक्रियसे नियतम् । न त्वत्र संदेह इत्यर्थः । अनल्पश्रुतैर्वाल्मीकिप्रभृतिभिस्तु त्वद्विषया श्रुतिः साक्षात्कर्तुं शक्यत इति भावः । अनुभवहेतुमाह—यतः सारमत्यन्तोपादेयं तदर्थं श्रुत्यर्थमुपबृंहयितुं व्याख्यातुं प्रणीतं निबद्धम् । वाल्मीकिनेति शेषः । रामायणं तव महिम्नि माहात्म्ये प्रमाणं यततः तत इति पूर्वेणान्वयः । उपबृंहणत्वं च 'वेदोपबृंहणार्थाय तावग्राहयत प्रभुः' इति तत्रैवोक्तम् । अन्यत्र 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वेदार्थव्याख्यानरूपेण रामायणेन व्याख्येयभूतमूलश्रुत्यनुवर्णनादनुमानालंकारः. । सारं तदर्थमिति वाक्येन पादुकामहिम्ना श्रुतिसारार्थत्वं व्यज्यते ॥

श्रुतिगवेषणीभावेऽपि तत्र प्रभाव एषां समाश्वासः श्रीरामायणेनैव संभवतीत्याह—

तिष्ठन्तु श्रुतयस्ततोऽपि महितं जागर्ति तत्पादुके
तत्तादृक्प्रथनाय तावकगुणग्रामाय रामायणम् ।
यस्यासीदरविन्दसंभववधूमञ्जीरशिञ्जारव-
स्पर्धादुर्धरपादबद्धभणतिर्वल्मीकजन्मा कविः ॥ ६ ॥

**तिष्ठन्त्विति ।** हे पादुके, श्रुतयो वेदास्तिष्ठन्तु । नोऽस्माकं पादुकाप्रभावपरीक्षाया आदरणीया यावत् । कुतः । ततोऽपि श्रुतिभ्योऽपि महितमुत्कृष्टतयाभ्युपगतं तद्रामायणं तत्तादृक्प्रथनाय तत्स्वरूपत्वे परिच्छेद्यं तादृक्प्रकारतोऽप्यपरिच्छेद्यं प्रथनं प्रसिद्धिर्यस्य तस्य तावकानां त्वदीयानां गुणानां शक्तितेज प्रभृतीनां ग्रामाय वृन्दं प्रकाशयितुम् । 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी । जागर्ति सावधानतया वर्तते । तेनैव तव प्रभावो ज्ञातुं शक्यत इति भावः । श्रुतिभ्योऽपि महितत्वहेतुमाह—यस्य रामायणस्यारविन्दसंभवस्य ब्रह्मणो वध्वाः सरस्वत्याः । वाल्मीकिवाचि नर्तक्या इति गम्यते । मञ्जीरयोर्नूपुरयोः । 'हंसकः पादकटको मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । शिञ्जाभिः शब्दैः कर्णावतंसादिवद्विशेषवाचिनापि सति संबन्धप्रयोगे सामान्यपरत्वाद्रवैर्नृत्यानुगुणगानशब्दैः स्पर्धाभिः कलहैर्दुर्धरा गुरवः 'तन्त्रीलयसमन्वितम्' इत्युक्ताः पादाः सदृशं चतुर्थांशास्तैर्बद्धा संदर्भिता भणतिः सूक्तिर्यस्य स वल्मीकजन्मा वाल्मीकिः कविरासीत् कवयिताभूत् । तदिति . पूर्वेणान्वयः । ब्रह्मप्रसादाद्वाचि संनिहितायाः सरस्वत्याः प्रसादात्स्वयमागताया वाल्मीकेर्भणितेर्भ्रमायस्पृष्टतया वेदसाम्यम् । सरस्वतीनूपुरवत्तद्गानवच्च श्रोतृजनसुखावहतया विस्पष्टार्थबोधकतया च ततोऽपि महितत्वमिति भावः । कान्तासंमिततयोपदेशहेतुत्वाद्वेदाधिक्यमित्यालंकारिकदृष्टिमाश्रित्य रामायणस्यादिकाव्यत्वमुक्तमप्यत एव घटते । अत्र प्रमाणतया स्वयमुक्तानां श्रुतीनां रामायणप्रामाण्यविचारणेन प्रतिषेधादाक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति लक्षणम् । ग्रामाय रामायेत्यादिप्रदेशेषु छेकानुप्रासशब्दचित्रम् । तथा च विजातीपदार्थालंकारशब्दालंकारयोः संसृष्टिः । शार्दूलविक्रीडितवृत्तम् ॥

भक्तिप्रह्वपुरप्रभञ्जनजटावाटीसनीडस्फुर-
चूडारग्वधवासनापरिमलस्त्याने स्तुमः पादुके।
रङ्गक्षोणिभृदङ्घ्रिपद्मयुगलीपूर्णप्रपत्तेः फलं
निश्चिन्वन्ति विपश्चितः शमधना नित्यं यदुत्तंसनाम्॥ ७॥

**भक्तीति।** भक्त्या प्रह्वस्यावनतस्य पुरप्रभञ्जनस्य त्रिपुरारेर्जटावाट्याः श्लिष्टकेशपङ्क्त्याः। 'जटा लग्नकचे मूलम्' इति विश्वः। सनीडे समीपे। 'समीपनिकटाभ्यर्णसंनिकृष्टसनीडवत्' इत्यमरः। आरग्वधशब्दात् 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति विहितस्य पुष्पार्थकस्याणः 'पुष्पमूलेषु बहुलम्' इति लुक्। तेषु वासनयासनेन (?)'वसेर्ण्यन्तात् 'ण्यासश्रन्थो युच्' इति युच्प्रत्ययः। आगमैः परिमलैर्विमर्दोत्थसौरभैः। 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः। स्त्याने संहते। 'स्त्यै शब्दसंघातयोः' इत्यस्मात्कर्तरि क्तः। स्त्याने सान्द्रे वा। 'स्त्यानः स्निग्धे प्रतिध्वाने घनत्वालस्ययोरपि' इति विश्वः। ते पादुके। द्वितीयाद्विवचनम्। स्तुमः प्रशंसामः। शम इन्द्रियनिग्रहो धनं धनवत्संपादनीयो येषां ते विपश्चितो विद्वांसः। 'विद्वान्विपश्चित्' इत्यमरः। नित्यं सदा यस्याः पादुकाया उत्तंसनां शिरोभूषणताम् रङ्गक्षोणिभृतः श्रीरङ्गनाथस्य। अङ्घ्रिपद्मयोरित्युपमितसमासः। युगल्यां युगे। युगलशब्दाद्गौरादित्वात् 'जातेरस्त्रीविषयात्' इति [वा] ङीष्। पूर्णप्रपत्तेः साङ्गप्रपदनस्य। 'वाचा नम इति प्रोच्य वपुषा मनसा च यत्। तन्नमः पूर्णमुद्दिष्टमितोऽन्यन्न्यूनमुच्यते। इयं करणपूर्तिः स्यादगपूर्तिमिमां शृणु॥' इत्यादिना प्रतिपादितायाः फलं निश्चिन्वन्ति फलत्वेनाध्यवस्यन्ति। नित्यं पादुकोत्तंसस्य मुक्तेऽप्येव(?)भावात्। भक्तेश्च संगप्रतिपल(?)दुपेयत्वस्य पादुकायुगल एव भावाचेति भावः। प्रेयोलंकारः। सद्विषयप्रेम्णः पादुकाभक्त्यङ्गत्वात्। काव्यलिङ्गमलंकारश्च स्तुतेः सदध्यवसितोत्तरवाक्यार्थेन समर्थनात्। वृत्त्यनुप्रासशब्दचित्रम्॥

मातर्माधवपादुके तव गुणान्कः स्तोतुमस्तोकधीः
कोटीरेषु यदर्पणप्रणयिनां सेवाक्षणे स्वर्गिणाम्।
अन्योन्यं क्षिपतामहंप्रथमिकासंमर्दकोलाहलं
विष्वक्सेनविहारवेत्रलतिकाकम्पश्चिराल्लुम्पति॥ ८॥

**मातरिति।** हे मातर् माधवस्य पादुके, तव गुणान् प्रभावादीन् स्तोतुमस्तोकधीरनल्पबुद्धिः कोऽस्ति। न कोऽपीत्यर्थः। सेवाक्षणे सेवासमये सेवारूपोत्सवे वा। 'व्यापारविकलतायामुत्सवपरतन्त्रतामुहूर्तेषु। परिमाणकालभेदे घटीषडंशे क्षणस्तथावसरे॥' इति नानार्थरत्नमाला। कोटीरेषु किरीटेषु। 'आहुः किरीटमुष्णीषं कोटीरं मुकुटं समम्' इति हलायुधः। यस्याः पादुकायाः समर्पणे निक्षेपे प्रणयिनामभिलाषवतां याच्ञावतां वा। 'विस्रम्भयाच्ञाप्रेमाणः प्रणयाः' इत्यमरः। अत एवान्योन्यं परस्परं क्षिपतां नुदतां स्वर्गिणां देवानामहं-

प्रथमिकया अहंप्रथम इति शब्दकृत्या । अहं प्रथम इत्यनुकरणशब्दात्तत्करोतीत्यर्थे णिनि णिनिप्रत्ययान्ताद्भावलर्थनिर्देशे ण्वुल्प्रत्ययः । यः संमर्दो निबिडभावस्तज्जनितो यः कोलाहलः कलकलः । 'कोलाहलः कलकलः' इत्यमरः । तं विष्वक्सेनस्य सेनापतेर्विहारवेत्रलतिकाया लीलावेत्रयष्ट्याः कम्पो धुननं चिराद्दीर्घकालेन लुम्पति निरस्यति । तस्यास्तवेति पूर्वेणान्वयः । पूर्ववत्प्रेयोऽलंकारः । काव्यलिङ्गं च । वृत्त्यनुप्रासशब्दचित्रम् । क्वचिच्छेकानुप्रासश्च ॥

योषिद्भूतदृषन्त्यपोढशकटस्थेमानि वैमानिक-
स्रोतस्विन्युपलम्भनानि भसितोदञ्चत्परीक्षिन्ति च ।
दूत्यादिष्वपि दुर्वचांसि पदयोः कृत्यानि मत्वेव य-
त्तद्वृत्तप्रणयं तदेव चरणत्राणं वृणे रङ्गिणः ॥ ९ ॥

**योषिदिति ।** यद्रङ्गिणः श्रीरङ्गनाथस्य चरणत्राणं पादुका योषिद्भूता नारी जाता दृषत् शिला यैस्तानि । तथात्वं चाहल्यावृत्तान्ते । अपोढो निरस्तः शकटस्य शकटासुरस्य स्थेमा स्थैर्यं यैस्तानि । तथात्वं च शकटासुरगर्भे । पृथ्वादेराकृतिगणात्स्थिरशब्दादिमनिच् । तत्र तस्यान्तर्भावश्च । 'एतया स्थेम' इति वेदे प्रयोगात् । यद्वा स्थाधातोर्भावे इमनिजौणादिक उन्नेयः । सदा स्थितेरित्यर्थः । वैमानिकानां विमानैश्चरतां देवानां स्रोतस्विन्या नद्या गङ्गाया उपलम्भनानि प्रथमदर्शनसाधनानि । गङ्गोत्पादकानीति यावत् । एतत्त्रिविक्रमवृत्तान्ते । भसिते भस्मनि । 'भूतिर्भसितभस्मनी' इत्यमरः । उदञ्चन् निष्क्रामन् परीक्षित्परीक्षिन्नामक उत्तरासुतो येषां तानि । एतदपाण्डवास्त्रप्रयोगे । दूत्यादिषु दूतकर्मादिषु । 'दूतवणिग्भ्यां कर्मणि भावे च यत्प्रत्ययः' इति वृत्तिः । दुर्वचनानि वक्तुमशक्यानि । एतदपि युधिष्ठिरदूत्यार्जुनसारथ्यादौ । पदयोः श्रीकृष्णचरणयोः कृत्यानि कर्माणि मत्वेव विचार्येव । असिद्धविषया हेतूत्प्रेक्षा । तत्प्रणयं तयोः पादुकयोः प्रणयं प्रेमाणं धत्ते तच्चरणत्राणं पादुकामेव वृणे । श्रेयःसाधनत्वेन स्वीकरोमीत्यर्थः । असिद्धविषया हेतूत्प्रेक्षालंकारः । वृत्त्यनुप्रासः शब्दचित्रम् । क्वचित् छेकानुप्रासश्च स्थेमानि वैमानिकेत्यत्र ॥

वन्दे तन्मधुकैटभारिपदयोर्मित्रं पदत्रद्वयं
यत्तद्भक्तिभरानतेन शिरसा यत्र क्वचिद्बिभ्रति ।
द्वित्रब्रह्मविनाडिकावधिपदव्यत्यासशङ्काभर-
त्रासोत्कम्पदशाविसंस्थुलधृतिस्त्रैविष्टपानां गणः ॥ १० ॥

**वन्द इति ।** मधुकैटभारेर्हरेः पदयोश्चरणयोर्मित्रम् । नित्यसंश्लिष्टत्वान्मित्रत्वव्यपदेशः । तत्पदत्रद्वयं तत्पादुकायुगलं वन्दे । तत्प्रसिद्धं तत्पदत्रद्वयं कर्म यत्र क्वचित् यस्मिन्कस्मिन्पुरुषे भक्तेर्भरेणातिशयेन । 'अतिशयो भरः' इत्यमरः । आनतेन प्रह्वीभूतेन शिरसा मूर्ध्नि बिभ्रति वहति त्रैविष्टपानां त्रिविष्टपवासिनां देवानां गणः समूहः । द्वे वा तिस्रो वा द्वित्रा ब्रह्मणो वेधसो विनाडिका घटिकाहोरात्रषष्टितमभागा अवधयः परिच्छेदिका

येषाम् । ब्रह्मण एकस्मिन्नेव दिने बहूनामिन्द्रादीनां नाशादिति भावः । तेषां पदानां स्थानानां व्यत्यासस्यान्यथाभावस्य शङ्काभरेण संदेहातिशयेन जातयोस्त्रासोत्कम्पयोर्भयवेपथ्वोर्दशयानेकविधावस्थया । 'दशावस्थानेकविधा' इत्यमरः । विसंस्थुला संवलिता धृतिर्धैर्यं यस्य । तादृशो भवतीत्यर्थः । पादुकायां कस्यचिच्छिरसि निक्षिप्तायां स्वेषु पदेषु एवं भगवान् स्थापयिष्यति [न] वेति देवानां संदेहो जायत इत्यर्थः । देवानां स्थानभ्रंशकभयस्य पादुकाभक्त्यङ्गत्वात्प्रेयोऽलंकारः । पूर्ववत्काव्यलिङ्गमपि । तकाररेफादिरूपवर्णसमुदायस्यासकृदावर्तनाच्छेकानुप्रासशब्दचित्रम् ॥

पद्माकान्तपदान्तरङ्गविभवोद्रिक्तं पदत्रं भजे
यद्भक्त्या नमतां त्रिविष्टपसदां चूडापदेष्वर्पितम् ।
नित्यापीतनखेन्दुदीधितिसुधासंदोहमुच्चैर्वम-
त्यन्तर्नूनममान्तमन्तिकलगच्छेषापटच्छद्मना ॥ ११ ॥

**पद्मेति ।** पद्माकान्तस्य कमलापतेः पदयोरन्तरङ्गेणात्यन्तशेषभूतेन विभवेन मणिहेमादिसंपत्त्योद्रिक्तमुत्कृष्टं पदत्रं पादुकां भजे सेवे । यत्पदत्रं भक्त्या नमतां त्रिविष्टपसदां देवानां चूडापदेषु शिरःस्वर्पितमन्तरमान्तमाधिक्येनाभ्यन्तरदेशेऽलब्धावस्थानं नित्यमापीतानां चन्द्रसदृशनखसंबन्धीनां सुधासदृशदीधितीनां संदोहं समूहमन्तिके समीपे लगतः संसेवतः शेषापटस्य पादुकार्पणार्थं शिरसि परिवेष्यमाणांशुकस्य छद्मना व्याजेनोच्चैरत्यर्थं वमत्युद्गिरति । नूनमित्युत्प्रेक्षा । शेषापटे नित्यापीतनखेन्दुदीधित्यागारत्वेनोत्प्रेक्षणात् । छद्मनेत्यपह्नवोक्तिः । अपह्नवगर्भोत्प्रेक्षा । 'यत्रापह्नुतिगर्भत्वं सैव सापह्नवा मता' इति लक्षणम् । वर्णसमुदायस्यासकृदावृत्तेश्छेकानुप्रासवृत्तम् ॥

तद्विष्णोः परमं पदत्रयुगलं त्रय्यन्तपर्यन्तगं
चिन्तातीतविभूतिकं वितरतु श्रेयांसि भूयांसि नः ।
यद्विक्रान्तिदशासमुत्थितपदप्रस्पन्दिपाथस्विनी-
सख्येनैव सदानतस्य तनुते मौलौ स्थितिं शूलिनः ॥ १२ ॥

**तदिति ।** परमं श्रेष्ठं त्रय्यन्तस्य वेदान्तस्य पर्यन्तं मर्यादां गच्छतीति तथोक्तम् । वेदान्ततात्पर्यविषयीभूतमिति यावत् । 'अन्यत्रापि दृश्यते' इति गमेर्डप्रत्ययः । चिन्तातीतविभूतिकं स्मृत्यविषयैश्वर्यविशिष्टं विष्णोः श्रीरङ्गनाथस्य तत्पदत्रयुगलं पादुकाद्वयं नोऽस्माकं भूयांसि बहुतराणि श्रेयांसि अत्यन्तं प्रशस्यानि ज्ञानभक्त्यादीनि वितरतु ददातु । यत् पदत्रद्वयं विक्रान्तिदशायां त्रिविक्रमावतारकाले समुत्थितात् क्षिप्तात्पदाच्चरणात्प्रस्पन्दत इति तथोक्तायाः पाथस्विन्या गङ्गायाः सख्येनैव सदावस्थानार्जितमैत्र्येणैव च सदानतस्य शूलिनो रुद्रस्य मौलौ शिरसि स्थितिमवस्थानं तनुते तदिति पूर्वेणान्वयः । पादुकाया रुद्रमौल्यवस्थानस्य गङ्गासामानाधिकरण्यार्जितसख्यहेतुकत्वेनोत्प्रेक्षणाद्धेतूत्प्रेक्षा । पूर्ववच्छेकानुप्रासशब्दचित्रम् ॥

अम्बुन्यम्बुनिधेरनन्यगतिभिर्मीनैः कियद्गम्यते
क्लेशेनापि कियद्व्यलङ्घि रभसोत्तुङ्गैः प्लवङ्गेश्वरैः ।
विज्ञाता कियती पुनः क्षितिभृता मन्थेन गम्भीरता
किं तैः केशवपादुकागुणमहाम्भोधेस्तटस्था वयम् ॥ १३ ॥

**अम्बुनीति** । अम्बुनिधेः समुद्रस्याम्बुनि जलेऽनन्यगतिभिस्ततोऽन्यत्र गतिरहितैः । एतेन तत्पाटवं सूच्यते । मीनैर्मत्स्यैः कियत् किंपरिमाणं दूरं गम्यते । तैरपि तत्परिच्छेदो न शक्य इति भावः । रभसोत्तुङ्गैर्वेगोत्कर्षैः प्लवङ्गोत्तमैर्हनुमदादिभिः क्लेशेनायासेनापि तदम्बुनि कियद्विलङ्घितम् । मन्थेन मथनदण्डेन । 'वैशाखे मन्थमन्थानौ' इत्यमरः । क्षितिभृता । मन्दरेणेति यावत् । तदम्बुनि पुनः पर्वतेनभेदेन(?) । 'पुनरप्रथमे भेदे' इत्यमरः । कियती गम्भीरता निम्नता विज्ञाता । ततोऽप्यधः परिच्छेदो न ज्ञात इत्यर्थः । तैर्मीनप्लवङ्गेश्वरमन्दरैः किं लब्धमिति शेषः । ते वृथोद्यमवन्त इति भावः । वयं एवं वृथोद्यमज्ञानवन्तः केशवपादुकयोर्गुणरूपस्य महाम्भोधेस्तटस्था अर्वाक्तीरनिष्ठाः । अशक्तिज्ञानेनोद्यमरहिता इत्यर्थः । प्राकृतस्तुतेरल्पत्वात्तटस्थितत्वोक्तिः । अत्र मीनादीनामुद्योगस्य स्वकीयतटावस्थानस्य दोषस्य च वैपरीत्येन गुणदोषत्ववर्णनाल्लेशालंकारः । 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनात्' इति लक्षणम् । तुङ्गैः प्लवङ्गेश्वरैरित्यादौ छेकानुप्रासः शब्दचित्रम् ॥

पदकमलरजोभिर्वासिते रङ्गभर्तुः
परिचितनिगमान्ते पादुके धारयन्तः ।
अविदितपरिपाकं चन्द्रमुत्तंसयन्ते
परिणतभुवनं तत्पद्ममध्यासते वा ॥ १४ ॥

**पदेति** । रङ्गभर्तुः श्रीरङ्गनाथस्य चरणसरसिजपरागैः सुरभीकृते परिचितः प्रतिपादकभावे संगतो वेदान्तो ययोस्ते वेदान्तवेद्यपादुके कर्मणी धारयन्तः पुरुषाः अविदितपरिपाकमज्ञातप्रत्यक्षरूपपरिणतिं चन्द्रमुत्तंसयन्ते शिरोभूषणतया वहन्ति । रुद्रस्य ललामात्रधारित्वाद्रुद्रा भवन्तीत्यर्थः । परिणतमुत्पन्नं भुवनं लोको यस्मात्तत् पद्मं भगवन्नाभिपद्मं तत् । ब्रह्मद्वारा समस्तलोकोत्पत्तेरिति भावः । अध्यासते वा । 'अधिशीङ्स्थासां कर्म' इत्याधारस्य कर्मता । ब्रह्माणो भवन्ति वेति भावः । भगवत्पादुकावहनफलं शिवत्वब्रह्मत्वादिरिति निगर्वः । भङ्ग्यन्तरेण ज्ञापितयोः शिवत्वब्रह्मत्वयोर्वाकारेण विकल्पाभिधानाद्विकल्पालंकारसंसृष्टः पर्यायोक्तालंकारः । 'पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयः' इति पर्यायोक्तलक्षणम् । 'विरोधस्तुल्यबलयोर्विकल्पालंकृतिर्मता' इति विकल्पलक्षणम् । न त्वत्र ध्वनित्वं शङ्क्यम् । व्यङ्ग्यस्य वाच्यपर्यवसाने हेतुत्वेन प्राधान्यभङ्गात् । यत्र तु पर्यवसिते वाच्यव्यङ्ग्यं स्वप्रधानतया प्रतीयते तत्रैव ध्वनिरिति हि तद्विदः । वर्णमात्रावृत्तेर्वृत्त्यनुप्रासः ॥

सकृदपि भुवनेऽस्मिञ्शार्ङ्गिणः पादुके त्वां
मनुजमनुवहन्तं देहबन्धव्यपाये।
उपचरति यथार्हं देववर्गस्त्वदीयः
स तु नियमितभृत्यो जोषमास्ते कृतान्तः॥ १५॥

**सकृदिति**। हे शार्ङ्गिणः पादुके, त्वदीयो देववर्ग आतिवाहिकगणस्त्वां मूर्ध्ना सकृदपि एकदाप्यनुवहन्तं धारयन्तं मनुजं मानवं तस्य देहबन्धस्य शरीरबन्धस्य व्यपायेऽवसानकाले यथार्हं स्वस्वाधिकारानुगुणेनोपचरति बहु मनुते। किल वार्तायां संभावनायाम्। 'वार्तासंभावनयोः किल' इत्यमरः। स प्रेताधिकारी कृतान्तो यमस्तु नियमितभृत्यो निवारितनिजकिंकरः सन् जोषं तूष्णीं [आस्ते।] 'परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम्' इत्यादिप्रमाणैः पादुकासंबन्धवतां नियमवश्यतेति भावः। अत्र मुक्तो भवतीत्यस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तमलंकारः॥

पदसरसिजमेतत्पादुके रङ्गभर्तुः
प्रतिनिधिपदवीं ते गाहते स्वेन भूम्ना।
तदिदमपरथा चेत्तिष्ठतस्तस्य नित्यं
कमिव च विदितार्थास्त्वां भजन्ते महान्तः॥ १६॥

**पदेति**। हे पादुके, एतत्परिदृश्यमानं रङ्गभर्तुः पदसरसिजं स्वेन भूम्ना निजेन माहात्म्येन ते तव प्रतिनिधिपदवीं प्रतिनिधिरीतिं गाहते। मुख्यालाभे तत्सदृशमुपादीयमानं प्रतिनिधिरित्युच्यते। यथा 'सोमाभावे पूतीकानभिषुणुयात्' इति, तथा श्रीरङ्गनाथस्य चरणारविन्दं तव प्रतिनिधिरिति भावः। तदिदमस्मदुक्तमपरथा चेदन्यथा यदि तस्य तिष्ठतस्तस्मिन्पदसरसिजे तिष्ठति सः। 'षष्ठी चानादरे' इति षष्ठी। विद्यमानमपि तदन्येत्यर्थः। विदितार्था ज्ञातवस्तुवास्तवा महान्तः प्रकृष्टाः पुरुषास्त्वां कमिव भजन्ते सर्वसमक्षं शिरसा वहन्ति। सोमाभावे पूतीकोपादानवत् पादुकालाभे श्रीरङ्गनाथचरणारविन्दसेविनमिति भावः। अपरथा चेदित्यनेनोपपत्तिकथनादौपपत्तिरलंकारः॥

श्रुतिशिरसि निगूढं कर्मणां चोदितानां
त्वदवधि विनिवेशं नाधिगन्तुं क्षमाणाम्।
परिहसति मुरारेः पादुके बालिशानां
पशुवधपरिशेषान्पण्डितो नामयज्ञान्॥ १७॥

**श्रुतीति**। हे मुरारेः पादुके, चोदितानां विहितानां कर्मणामग्निहोत्रज्योतिष्टोमादीनां श्रुतिशिरसि वेदान्ते निगूढं गुप्तं त्वदवधि विनिवेशं त्वत्पर्यन्तसमर्पणं परयशोविभूतत्वच्छेषत्वपर्यन्तमधिगन्तुं ज्ञातुं क्षमाणां समर्थानाम्। नशब्दोऽयं निषेधार्थः। तेन

'सुप्सुपा' इति समासः । बालिशानामज्ञानाम् । 'अज्ञे मूर्खयथाजातमूढवैधेयबालिशाः' इत्यमरः । पशुवधः प्राणेहिंसा परिशेषोऽवशिष्टो येषां तान् । प्राणिवधप्रयुक्तदोषमात्रहेतूनिति यावत् । न तु तेषां चोदितफलसिद्धिरिति भावः । नामयज्ञान् नाम्ना क्रतून् । यज्ञाभासानिति यावत् । पण्डितो विद्वान् । 'यज्ञेन यज्ञमयजन्त देवाः', 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥' इत्यादिप्रमाणप्रतिपत्तिमानित्यर्थः । परिहसति । अपहसतीत्यर्थः । अत्राज्ञाविषयकहासरसस्य पादुकाविषयभक्तिरूपभावाङ्गत्वाद्रसवदलंकारः । 'रसाङ्गभूतो रसवत्' इति लक्षणात् ॥

जनयितुमलमर्घ्यं दैत्यजित्पादरक्षे
नमति महति देवे नाकसिन्धोर्विशीर्णाः ।
मुहुरहिपतिचूडामौलिरत्नाभिघाता-
त्परिणतलघिमानः पाथसामूर्मयस्ते ॥ १८ ॥

जनयितुमिति । हे दैत्यजितः श्रीरङ्गनाथस्य पादरक्षे पादुके, महति देवे महादेवे शिवे नमति मुहुः पुनःपुनरहिपतेर्वासुकेरेव चूडायाः शिखण्डकस्य । अहिपतिश्चूडेवेत्युपमितसमासो वा । मौलिरत्नेषु शिरोमणिषु अभिघातादाघट्टनाद्विशीर्णा विकीर्णा अत एव परिणतलघिमानो जातलाघवा नाकसिन्धोः स्वर्गङ्गायाः पाथसां जलानाम् । 'कबन्धमुदकं पाथः' इत्यमरः । ऊर्मयो वीचयः । 'भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः' इत्यमरः । ते तवार्घ्यं पूजार्हजलं जनयितुं संपादयितुमलं समर्था । अत्र जलोत्पतनक्रियायामर्घदानत्वमुत्प्रेक्ष्यत इत्युत्प्रेक्षालंकारः ॥

पदसरसिजयोस्त्वं पादुके रङ्गभर्तु-
र्मनसि मुनिजनानां मौलिभागे श्रुतीनाम् ।
वचसि च सुकवीनां वर्तसे नित्यमेका
तदिदमवगतं ते शाश्वतं वैश्वरूप्यम् ॥ १९ ॥

पदेति । हे पादुके, त्वमेका सती रङ्गभर्तुः पदपद्मयोर्धारकतया वर्तसे । मुनिजनानां योगिनां मनसि हृदये ध्येयतया वर्तसे । श्रुतीनां मौलिदेशे वेदान्तभागे च प्रतिपाद्यतया वर्तसे । सुकवीनां महाकवीनां वाल्मीकिप्रभृतीनां वचसि वाचि वर्णनीयतया वर्तसे । सर्वत्र नित्यमित्येतदन्वेति । तत्तस्मात्कारणाच्छाश्वतं पूर्वकालसंबन्धि । शाश्वतमित्येतद्भाष्यप्रयोगात्साध्वित्यभियुक्ताः । वैश्वरूप्यमीश्वरवद्बहुरूपयुक्तता इदमवगतमेभिः प्रपञ्चवर्तिभिरवगतं ज्ञातम् । अनुमितमिति यावत् । अत्रैकस्या एव पादुकाया अनेकाधारेषु वर्णनाद्विशेषालंकारः । 'विशेषः सोऽपि यद्येकं वस्त्वनेकत्र वर्ण्यते' इति लक्षणात् । इति पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुत्ववर्णनाद्वाक्यार्थहेतुककाव्यलिङ्गमलंकारः । तत्र च विशेषस्यानुप्राणितत्वात्संकरः ॥

परिसरविनतानां मूर्ध्नि दुर्वर्णपङ्क्तिं
परिणमयसि शौरेः पादुके त्वं सुवर्णम्।
कुहकजनविदूरे सत्पथे लब्धवृत्तेः
क नु खलु विदितस्ते कोऽप्यसौ धातुवादः ॥ २० ॥

**परिसरेति।** हे शौरेः पादुके, त्वं परिसरे समीपदेशे विनतानां प्रणमतां मूर्ध्नि स्थितां दुर्वर्णपङ्क्तिं दुष्टाक्षराणां श्रेणीम्। 'वर्णं तु वाक्षरे' इत्यमरः। रजतश्रेणीमित्यपि च गम्यते। 'दुर्वर्णं रजतं रूप्यम्' इत्यमरः। सुवर्णं परिणमयसि शोभनाक्षरतया विकारयसि। पङ्क्तिमतोरभेदविवक्षया पङ्क्तिं सुवर्णां परिणमयसीत्युक्तिः। पादुकाभक्तानां मूर्ध्नि पूर्वं ब्रह्मणा लिखिता दुःखसूचिका लिपयो निरवधिपुरुषार्थसूचकलिपयो भवन्तीति भावः। कनकतया परिणमयसीत्यपि गम्यते। व्यङ्ग्यार्थमभिप्रेत्यासंभावितत्वं सूचयति— कुहकेत्यादिना। कुहकजनानां छद्मकमनुष्याणां विदूरेऽसंनिकटे सत्पथे सन्मार्गे लब्धवृत्तेः प्राप्तस्थितिकायाः। प्राप्तजीविकाया इत्यपि च गम्यते। 'आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवनम्' इत्यमरः। ते तवासौ धातुवादो रसवादः। 'रसादयः सप्त कफादयस्त्रयो भूतानि पञ्च स्वगुणाश्च गैरिकम्। शिलाविकारेन्द्रियशब्दयोनयो लोहः स्वभावात्कनकं च धातवः॥' इति नानार्थरत्नमालायाम्। क नु कुत्र वा। 'नु पृच्छायां विकल्पे च' इत्यमरः। खल्वित्यनुनये जिज्ञासायां वा। 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इत्यमरः। विदितो ज्ञातः। अत्र पूर्वार्धे रजतस्य सुवर्णतया परिणामो विरुद्ध्यत इति तस्याक्षरपरतयाभासीकरणाद्विरोधाभासालंकारः। 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणात्। उत्तरार्धेऽद्भुतरसस्य पादुकाभक्त्यङ्गतया वर्णनाद्रसवदलंकारः। तत्र च विरोधाभासोऽङ्गमिति संकरः, सन्मार्गवर्तिन्याः पादुकायाः सतां निषिद्धस्य रसवादस्य व्याहतत्ववर्णनाद्व्याघातालंकारश्च। 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्' इति लक्षणम्॥

बलिमथनविहाराद्वर्धमानस्य विष्णो-
रखिलमतिपतद्भिर्विक्रमैरप्यमेयः।
अवधिमनधिगच्छन्पापराशिर्मदीयः
समजनि पदरक्षे सावधिस्त्वन्महिम्ना ॥ २१ ॥

**बलिमथनेति।** हे पादरक्षे, बलिमथनविहारान्महाबलिनिग्रहक्रीडामवेक्ष्य। ल्यब्लोपे कर्मणि पञ्चमी। वर्धमानस्य विष्णोस्त्रिविक्रमस्य अखिलं वस्तुजातमतिपतद्भिरतिक्रम्य गच्छद्भिर्विक्रमैः पदविक्षेपैरप्यमेयोऽपरिच्छेद्योऽत एवावधिं नाशमधिगच्छन् तां नाप्नुवन्। तत्परिच्छेदे कृते तु पापानां तदैव नाशः स्यादिति भावः। मदीयः पापराशिर्दुष्कृतसमूहस्तव महिम्ना प्रभावेन सावधिः परिच्छिन्नः समजनि। त्वत्प्रभावान्निरवशेषं नष्ट इत्यर्थः। अतः श्रीरङ्गनाथचरणापेक्षया त्वं प्रभाववतीति भावः। अत्र भगवच्चरणेनाप्यपरिच्छिन्ने बल-

वति शत्रोः पापराशौ पादुकापराक्रमस्य वर्णनात्प्रत्यनीकालंकारः । 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमे' इति लक्षणम् ॥

तटभुवि यमुनायास्तस्थुषी यन्निवेशा-
द्वहति निगमशाखावैभवं नीपशाखा ।
पदकमलयुगं तत्पादुके रङ्गभर्तु-
स्त्वयि भजति विभूतिं पश्य शाखानुशाखम् ॥ २२ ॥

**तटेति ।** हे पादुके, यमुनायाः कालिन्द्यास्तटभुवि तीरदेशे । 'कालिन्दी सूर्यतनया यमुना' इत्यमरः । तस्थुषी स्थिता नीपशाखा नीपस्य कदम्बवृक्षस्य शाखावयवो यस्य रङ्गनाथपदसरसिजस्य निवेशान्निक्षेपान्निगमशाखाया ऋगादिवेदभेदस्य वैभवं विभूतिं वहति धत्ते विश्वपूज्याभिवृद्धियुक्ता भवति तत् रङ्गभर्तुः श्रीरङ्गनाथस्य पदसरसिजं कर्तृ त्वय्याधारे । शाखाश्चानुशाखाश्चेति द्वन्द्वात् । अर्शाद्यच् । ता उत्तरोत्तरा वृद्धिमतीमिति यावत् । प्रतिपादकतया रागादिमहाप्रभेदप्रश्नानुवाकाद्यवान्तरभेदयुक्तश्रुतिमतीमित्यर्थः । शाखाशब्दस्य चरणपरत्वादनुशाखाशब्देनाङ्गुलय उच्यन्ते । तथा च भगवत्पादाङ्गुलीयुतामित्यपि गम्यते । 'शाखा तु पादे पक्षान्तरे भुजे । निकटे च पदाङ्गे च प्रभेदे छन्दसां मुखे ॥' इति नानार्थरत्नमाला । विभूतिं संपत्तिं भजति वहति । पश्येति संवादार्थमुक्तम् । निगमशाखावैभवमित्यत्रोपमालंकारः । नीपशाखावैभवकल्पकस्य पदसरसिजस्याप्यत्र वैभवकल्पकता पादुकायां वर्ण्यत इत्युत्तरोत्तरोत्कर्षकथनात्सारालंकारः । पश्येति प्रत्यक्षप्रमाणोपन्यासात्प्रत्यक्षालंकारः । तथा चैषां यथासंभवमङ्गाङ्गीभावेन संकरः ॥

शिरसि विनिहितायां भक्तिनम्रैर्भवत्यां
सपदि तनुभृतस्तामुन्नतिं प्राप्नुवन्ति ।
मधुरिपुपदरक्षे यद्वशेनैव तेषा-
मनितरसुलभं तद्धाम हस्तापचेयम् ॥ २३ ॥

**शिरसीति ।** हे मधुरिपुपदरक्षे, तनुभृतः शरीरिणः कर्तारो भक्त्या नतैः शिरसि भवत्यां विनिहितायां सत्यां तामुन्नतिमुत्कर्षम् । उच्छ्रायमित्यपि प्रतीयते । सपदि सद्यः । 'सद्यः सपदि तत्क्षणे' इत्यमरः । प्राप्नुवन्ति यस्या उन्नत्या वशेनैवाधीनतयैव अप्रभुत्वेनैव वा । 'वशो स्पृहायत्तेष्वायत्तत्वाप्रभुत्वयोः' इति विश्वः । तेषां तनुभृतामनितरसुलभं पादुकासंबन्धरहितपुरुषाप्राप्यं तत्प्रसिद्धं धाम पदमपदरूपभवनं भगवद्रूपं तेजो वा हस्तापचेयं करेण प्राप्यं भवति । अयत्नप्राप्यमिति यावत् । पादुकासंबन्धवतां जनानां भगवांस्तद्धाम च सुलभमिति भावः । उन्नतिशब्दश्लेषेणोत्कर्षस्यैवोन्नतित्वनिरूपणाच्छ्लेषानुप्राणितं रूपकमलंकारः । तस्या उन्नतेर्हेतोरनितरसुलभधामप्राप्त्याकारेण सह वर्णनाद्धेतुरलंकारः । 'हेतुहेतुमतोः सार्धं वर्णनं हेतुरुच्यते' इति लक्षणम् । अस्य च पूर्वोक्तरूपकानुप्राणितत्वात्संकरः ॥

सकृदपि भुवनेऽस्मिञ्शार्ङ्गिणः पादुके त्वा-
मुपनिषदनुकल्पैरुत्तमाङ्गैर्दधानाः ।
नरकमिव महान्तो नाकमुल्लङ्घयन्तः
परिषदि निविशन्ते प्राक्तनानां गुरूणाम् ॥ २४ ॥

**सकृदिति** । हे शार्ङ्गिणः पादरक्षे, अस्मिन्भुवने कर्मभूमौ त्वामुपनिषदां वेदान्तानामनुकल्पैः प्रथमकल्पात् किंचिदूनैरुपनिषत्सदृशैः । 'मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' इत्यमरः । उत्तमाङ्गैः शिरोभिः सकृदेकवारमपि दधाना वहन्तो महान्तो नरकमिव निरयमिव नाकं स्वर्गमुल्लङ्घयन्तस्तिरस्कुर्वन्तः सन्तः । 'एते वै निरयास्तात स्थानस्य परमात्मनः' इत्येतदत्र भाव्यम् । प्राक्तनानां प्राचीनानां गुरुणामाचार्याणां पराङ्कुशपरकालयतिवरादीनां परिषदि समाजे निविशन्ते प्रविशन्ति । मुक्ता भवन्तीति भावः । नरकमिवेत्युपमा । नाकमुल्लङ्घयन्तः परिषदि निविशन्त इति मुक्तेः पर्यायतः कथनात्पर्यायोक्तिरलंकारः । 'पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयम्' इति लक्षणम् ॥

शमदमगुणदान्तोदन्तवैदेशिकानां
शरणमशरणानां मादृशां माधवस्य ।
पदकमलमिदं ते पादुके रक्ष्यमासी-
दनुदयनिधनानामागमानां निधानम् ॥ २५ ॥

**शमेति** । शमो बाह्येन्द्रियनिग्रहः, दमोऽन्तरिन्द्रियनिग्रहः, गुणाः श्रद्धातितिक्षादयः, दान्ता भक्तिः, तासामुदन्तस्य वैदेशिकानां विदेशभवानाम् । तद्रहितानामिति यावत् । अशरणानां रक्षकान्तरशून्यानां शरणं रक्षकः । 'शरणं गृहरक्षित्रोः' इत्यमरः । अनुदयनिधनानां प्रवाहरूपेण नित्यानामागमानां वेदानां निधानं निधिवद्गोपनीयमिदं माधवस्य श्रीरङ्गनाथस्य पदकमलमित्युपमितसमासः । ते तव रक्ष्यमासीत् । अशरणशरणभूतभगवत्पादारविन्दस्यापि पादुका रक्षिकेत्युत्तरोत्तरोत्कर्षवर्णनात्सारालंकारः । 'उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयते' इति लक्षणम् ॥

परिचितपदपद्मां पादुके रङ्गिणस्त्वां
त्रिभुवनमहनीयां सादरं धारयन्तः ।
निजशिरसि निलीनं देवि मन्दारमाल्यं
निगमपरिमलैस्ते वासयन्तीव देवाः ॥ २६ ॥

**परिचितेति** । हे देवि रङ्गिणः पादुके, परिचितपदपद्मां नित्यसंसृष्टभगवत्पादारविन्दां त्रिभुवनमहनीयां सर्वलोकमान्यां त्वां सादरमादरेण भक्त्या सहितं यथा तथा धारयन्तो वहन्तो देवा निजशिरसि स्वमूर्ध्नि निलीनं सक्तं मन्दारमाल्यं पारिजातकुसुममालां ते तव निगमपरिमलैर्वेदप्रतिपाद्यैः सर्वगन्धैः। 'सर्वगन्धः सर्वरसः' इति श्रुतेः । भगवत्पद-

पद्मनिष्ठस्य सर्वगन्धस्य तत्परिचयात्पादुकायामपीति भावः । वासयन्तीव सुरभी-कुर्वन्तीवेत्युत्प्रेक्षा । देवा भगवत्पादुकापरिमलैः स्वशिरोमाल्यं वासयितुमिव त्वां वहन्तीति भावः ॥

कनकसरिदनूपे कल्पवृक्षस्य भूष्णोः
पदकिसलयलग्ना पादुके मञ्जरी त्वम् ।
परिणतिमधुराणां या फलानां सवित्री
वहसि निगमवृन्दैः संपदं षट्पदानाम् ॥ २७ ॥

**कनकेति** । हे पादुके, कनकसरितः कावेर्या अनूपे कच्छदेशे । श्रीरङ्गनगर इति यावत् । भूष्णोः सततं वृद्धयुन्मुखस्य कल्पवृक्षस्य देवतरुभेदस्य । अत्र कल्पवृक्षशब्देन श्रीरङ्गनाथो निगीर्यत इति रूपकातिशयोक्तिः । 'कल्पवृक्षस्य विष्णोः' इति पाठे व्यस्तरूपकम् । पदकिसलये मूलपल्लवे चरणरूपे किसलये वा । तदा मयूरव्यंसकादित्वात्समासः । लग्ना सक्ता त्वं मञ्जरी वल्लरी । 'मञ्जरी वल्लरी स्त्रियाम्' इत्यमरः । कीदृशी । परिणत्या परिपाकेन मधुराणां स्वादूनां फलानामभिलषितानां पुरुषार्थानां सवित्री जनयित्री त्वं निगमवृन्दैर्वेदसमूहैः प्रतिपादकत्वेन संनिहितैः षट्पदानां भ्रमराणां संपदं समृद्धिं वहसि दधासि । रूपकातिशयोक्तिरूपकयोरङ्गाङ्गिभावेन संकरः । 'रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः' इति । 'विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् । रूपकं तत्' इति च तयोर्लक्षणम् ॥

परिकलयसि चेन्मां पद्मवासानिषेव्ये
पदकमलयुगे त्वं पादुके रङ्गभर्तुः ।
अविदितनिगमानां नूनमस्मादृशाना-
मघटितघटिनी ते शक्तिमाविष्कृता स्यात् ॥ २८ ॥

**परिकलयसीति** । हे पादुके, त्वं पद्मवासया लक्ष्म्या निषेव्ये सेवनीये रङ्गभर्तुः श्रीरङ्गनाथस्य पदकमलयोश्चरणसरसिजयोर्युगे मां परिकलयसि चेत् परिचारकतया योजयसि चेत्, तदाविदितनिगमानामज्ञातवेदानां तज्ज्ञाने ते तव । पादुकाशक्तिज्ञानसिद्धेरिति भावः । अस्मादृशानां पुरुषाणामघटितघटिनी मेरुमन्दरसंयोगवदयोग्यानामपि योजनहेतुस्त्वे तव शक्तिः सामर्थ्यं प्रभावो नूनमसंदिग्धं यथा तथा आविष्कृता प्रकटिता स्यात् । लक्ष्मीपरिचारयोग्यस्य स्वपरिचारयोग्यत्वादिति भावः । संभावनालंकारः । 'संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति लक्षणात् ॥

श्रुतिशतशिरश्चूडापीडे निपीडयितुं क्षमे
दुरितसरितामोघानेतानमोघविसर्पिणः ।
क्रमपरिणमद्बोधःश्रेणीशिखामणिघट्टना-
मसृणिततले रङ्गक्षोणीभृतो मणिपादुके ॥ २९ ॥

**श्रुतीति।** श्रुतिशतानां शिरसामुपनिषदां चूडा प्रतिपाद्यतया परिष्कारकत्वेन शिखावत्स्थितः श्रीरङ्गनाथः स एवापीडः शेखरो ययोस्ते। 'चूडापीडौ' इति पाठे तु श्रुतिशिरसां चूडापीडौ शिखाशेखरौ। परमतात्पर्यस्य विषयाविति यावत्। क्रमेण परिणमतां वेधसां चतुर्मुखानां श्रेण्या पङ्क्त्या शिखामणीनां चूडारत्नानां घट्टनया संघर्षणेन मसृणिततले स्निग्धस्वरूपे। 'चिक्कणं मसृणं स्निग्धम्' इत्यमरः। रङ्गक्षोणीभृतः श्रीरङ्गनाथस्य पादुके कत्र्यौ। अमोघविसर्पिणोऽप्रतिबद्धप्रसरणशीलान् दुरितसरितां पापनदीनामेतानोघान्प्रवाहान्निपीडयितुं क्षमे शक्ते। पापप्रवाहप्रतिबन्धनक्षमप्रवाहद्वयवृत्तान्तस्यार्थशक्त्या प्रतीतेः समासोक्तिरलंकारः। 'समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत्' इति लक्षणम्। तत्र च सरितामिति नदीरूपणमङ्गमिति संकरः। हरिणीवृत्तम्। 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणम्॥

जगज्जननरक्षणक्षपणसङ्गिनो रङ्गिणः  
पवित्रतममाद्रिये भगवतः पदत्रद्वयम्।  
शिवत्वकरणक्षमत्रिदिवसिन्धुसंबन्धिनं  
प्रधाव्य चरणं निजं प्रणिदधाति यत्र प्रभुः॥ ३०॥

**जगदिति।** जगतां लोकानां जनने उत्पत्तौ, रक्षणे पालने, क्षपणे संहारे च सङ्गिनः संकल्पवतो भगवतो ज्ञानशक्त्यादिमतो रङ्गिणः श्रीरङ्गनाथस्य पवित्रतममत्यन्तपावनं पदत्रद्वयं पादुकायुगलमाद्रियेऽङ्गीकरोमि। पवित्रतमत्वे हेतुमाह—यत्र पादुकाद्वये प्रभुः स्वामी रङ्गनाथः शिवत्वकरणे रुद्रस्य शिवशब्दप्रवृत्तिपदशुद्धिकृतौ क्षमायाः शक्त्याः यास्त्रिदिवसिन्धोर्गङ्गाया जनकत्वेन संबन्धिनम्। परिपावनमिति भावः। 'तस्य पादोदकेन स शिवः' इति स्तोत्ररत्नम्। 'यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्' इति भागवते। निजं स्वकीयं चरणं प्रधाव्य प्रक्षाल्य प्रणिदधाति निक्षिपति। लोके प्रभवश्चरणौ रजोनिराकरणाय प्रक्षाल्य पादुकामाददते। तदत्र पवित्रतमत्वे हेतुकृतमित्यहेतोर्हेतुत्वसंभावनार्थे उत्प्रेक्षा वाचकाभावाद्गम्या। पृथ्वीवृत्तम्। लक्षणमुक्तम्॥

यदध्वरभुजां शिरः पदयुगं च रङ्गेशितु-  
र्दृढं घटयितुं क्षमं भवति शेषशेषित्वतः।  
शिरस्त्वमिदमस्तु मे दुरितसिन्धुमुष्टिंधयं  
कदध्वविहतिक्षमं किमपि तत्पदत्रद्वयम्॥ ३१॥

**यदिति।** यत्पदत्रद्वयमध्वरभुजां देवानां शिरः रङ्गेशितुः पदयुगं च शेषशेषित्वतः स्वस्वामिभावेन। सार्वविभक्तिकस्तसिः। दृढं विभागानर्हं यथा तथा घटयितुं योजयितुं क्षमं भवति। पादुकावहनस्य पददास्यावहकत्वादिति भावः। दुरितसिन्धोरनादिवासनया प्रवृद्धस्य पापसागरस्य मुष्टिंधयं चुलुकीकृत्य पातृ। 'नाडीमुष्ट्योश्च' इति खश्। तत्रा-

शकमिति यावत् । कदध्वनः कुत्सितमार्गस्य । करिष्यमाणपापस्येति यावत् । विहत्या निवारणेण क्षमं हितम् । 'क्षितिक्षान्त्योः क्षमा प्रोक्ता हिते शक्ते च वाच्यवत्' इति विश्वः । अतो न कथितपदत्वदोषः । किमप्यनिर्वचनीयप्रभावं तत्पदत्रद्वयं पादुकायुगलं मे मम शिरस्त्रमुष्णीषमस्तु । उष्णीषवच्छिरसि नैरन्तर्येण लग्नं भवेदित्यर्थः । प्रेयोऽलंकारः । 'प्रेयः प्रियतराख्यातम्' इति दण्डी ॥

समुत्क्षिपति चेतसि स्थिरनिवेशिता तावकी
मुकुन्दमणिपादुके मुहुरुपासनावासना ।
उदर्कपरिकर्कशानुपरिपर्वणा खर्विता-
ननर्थशतगर्भितानमरशम्भलीविभ्रमान् ॥ ३२ ॥

**समुत्क्षिपतीति** । हे मुकुन्दमणिपादुके, चेतसि मनसि स्थिरं यथा निवेशिता निहिता तावकी त्वद्विषयिणी मुहुः शश्वदुपासनाया निरन्तरस्मृतेर्वासना संस्कार उदर्केणोत्तरफलेन । 'उदर्कः फलमुत्तरम्' इत्यमरः । परिकर्कशानत्यसह्यान् उपरिपर्वणोत्तरोत्तरतारतम्येन खर्वितान् ह्रस्वीकृतान् अनर्थशतैरनेकपुरुषार्थैः पातभीत्यादिभिर्गर्भितान् । 'तारकादिगणे गर्भादप्राणिनि' इति पाठादितच् । अमरशम्भलीनां देवकुट्टनीनाम् । 'कुट्टनी शम्भली समे' इत्यमरः । अप्सरसामिति यावत् । विभ्रमान् विलासान् समुत्क्षिपत्युन्मूलयति । पादुकाभक्तानामनर्थान्तरत्वबहुतारतम्यपातभीत्यादिबहुदोषदुष्टे 'एते वै निरयास्तात स्थानस्य परमात्मनः । स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निष्कृतिः' इत्यादि निन्दितस्वर्गादिभोगे न बुद्धिः प्रभवतीति भावः । पादुकाविषयवासनया विषयान्तरवासनाविच्छेदेन कार्येण साहित्यवर्णनाद्धेतुरलंकारः । 'हेतोर्हेतुमता सार्धं वर्णनं हेतुरुच्यते' इति लक्षणम् ॥

विगाहन्ते रङ्गक्षितिपतिपदत्रायिणि सकृ-
द्वहन्तस्त्वामन्तर्विनिहितकुचेलव्यतिकराः ।
मदोद्दामस्तम्बेरमकरटनिर्यन्मदझरी-
परीवाहप्रेङ्खद्भ्रमरमुखरामङ्गणभुवम् ॥ ३३ ॥

**विगाहन्त इति** । हे रङ्गक्षितिपतिपदत्रायिणि, अन्तर्गोप्यप्रदेशे कक्षादौ विनिहितो निवेशितः कुचेलस्य कुत्सितपटस्य व्यतिकरः संसर्गो येषां ते । दरिद्रा इति यावत् । मनसा ज्ञातकुचेलनामकमुनिसादृश्यवत इत्यपि प्रतीयते । नरास्त्वां सकृद्वहन्तः सन्तो मदेनोद्दामानां विशृङ्खलानां स्तम्बेरमाणां मातङ्गानां करटेषु गण्डेषु निर्यन्त्यां मदझर्यां पुष्परसवद्भ्रमरानन्दकरे दानजलप्रवाहे परिवाहतया प्रवाहरूपेण प्रेङ्खद्भिः प्रसर्पद्भिर्भ्रमरैर्मुखरां शब्दायमानामङ्गणभुवं चत्वरभूमिम् । 'अङ्गणं चत्वराजिरे' इत्यमरः । विगाहन्ते प्रविशन्ति । कुचेलस्य कृष्ण इव पादुकापि स्वसेवकानां दरिद्राणां गजान्तमैश्वर्यं ददातीति

भावः । कुचेलशब्दव्यञ्जिते ऐश्वर्यप्रतिबन्धके प्रारब्धे सत्यप्यैश्वर्यरूपकार्योदयवर्णनात्समासोक्त्यनुप्राणितो विभावनाभेदोऽलंकारः । 'कार्योत्पत्तिस्तृतीया स्यात्सत्यपि प्रतिबन्धके' इति लक्षणम् ॥

अधिदैवतमापतत्सु कल्पेष्वधिकारं भजतां पितामहानाम् ।
अभिरक्षतु रङ्गभर्तुरेषा करुणा काञ्चनपादुकामयी नः ॥ ३४ ॥

**अधिदैवतमिति** । आपतत्स्वागच्छत्सु कल्पेषु ब्रह्मायुःपरिमितकालेषु अधिकारं प्रभुत्वं भजतां पितामहानां ब्रह्मणामधिदैवतमधिष्ठात्री काञ्चनपादुकामय्येषा करुणा नोऽस्मानभिरक्षतु । रक्षणार्थायाः पादुकायाः रक्षणात्मकतावर्णनात्परिणामालंकारः । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणम् ॥

ध्रुवमिन्द्रियनागशृङ्खला वा निरयद्वारनिवारणार्गला वा ।
अनयापपदाधिरोहणी वा मम रङ्गेशविहारपादुके त्वम् ॥ ३५ ॥

**ध्रुवमिति** । भो रङ्गेशस्य विहारपादुके लीलापादावनि, त्वं ममेन्द्रियाणामेव नागानगजानाम् । दुर्वाराणामिति भावः । शृङ्खला निगलो वा निरयद्वारस्य नरकप्रतिहारस्य निवारणेऽर्गला विष्कम्भदारु वा द्वारप्रतिहारः । 'तद्विष्कम्भोऽर्गलं न ना' इत्यमरः । अनयापपदस्य परमपदस्याधिरोहणी निश्रेणिर्वा । 'निश्रेणिस्त्वधिरोहिणी' इत्यमरः । ध्रुवमिति संभावनायाम् । सा च वाक्यार्थान्विता । तथा च सर्वथा संसारविच्छेदलक्षणकार्योत्पत्तेरुक्तेषु प्रकारेष्वन्यतमप्रकारो [न] निश्चित इति भावः । कोटीनामिदमत्रानिर्धारणात्संदेहालंकारः ॥

शरणागतसार्थवाहशीलां श्रुतिसीमन्तपदप्रसादनार्हाम् ।
अधिरङ्गमुपास्महे मुरारेर्महनीयां तपनीयपादुके त्वाम् ॥ ३६ ॥

**शरणेति** । मुरारेस्तपनीयपादुके काञ्चनपादुके । 'तपनीयं शातकुम्भं हिरण्यं हेम हाटकम्' इत्यमरः । शरणागतानां प्रपन्नानां सार्थस्य समूहस्य वहने नयने शीलं यस्यास्ताम् । शरणागतेषु सार्थवाहकस्य वैदेहकस्य शीलमिव शीलं यस्यास्तामिति वा । 'वैदेहकः सार्थवाहः' इत्यमरः । श्रुतीनां सीमन्तपदस्य शिरसः । उपनिषद इति यावत् । प्रसादनार्हां परिष्कारयोग्यां महनीयां पूज्यां त्वामधिरङ्गं रङ्गविमाने उपास्महे । प्रेयोऽलंकारः ।

इह ये भवतीं भजन्ति भक्त्या कृतिनः केशवपादुके नियुक्ताः ।
कथयाम्ब तिरोहितं तृतीयं नयनं त्रीणि मुखानि वा किमेषाम् ॥ ३७ ॥

**इहेति** । हे अम्ब मातः केशवपादुके, इह भूमौ कृतिनः कुशला भक्त्या नियुक्ताः प्रेरिताः सन्तो भवतीं भजन्ति उपासते । एषां तृतीयं नयनं तिरोहितं किम्, त्रीणि मुखानि वा तिरोहितानि किमित्यनुषङ्गः । कथय वद । ते रुद्रा ब्रह्माणो वा भवन्ति ।

तृतीयनयनमुखत्रयादर्शनं तु विधानायत्तमिति भावः । भगवत्प्रसादनहेतुभूतकर्मकरणेन ब्रह्मादीनां पदप्राप्तिः स्थितिश्चेति ब्रह्मपुराणमाह—'ब्रह्मरुद्रेन्द्रवह्नीन्दुदिवाकरमनुग्रहाः । तच्छक्त्या विष्ठिताः सन्तो मोदन्ते दिवि देवताः ॥' इति । पर्यायोक्तसंकीर्णः संदेहालंकारः । 'पर्यायोक्तं तु गम्यस्य वचोभङ्ग्यन्तराश्रयम्' इति पर्यायोक्तिलक्षणम् ॥

मधुवैरिपरिग्रहेषु नित्यं क्षमया त्वं मणिपादुके समेता ।
तदपि क्षमसे न किं परेषां त्रिदशाधीश्वरशेखरे निवेशम् ॥ ३८ ॥

**मधुवैरीति** । हे मणिपादुके, मधुवैरिणः श्रीरङ्गनाथस्य परिग्रहेषु परिबर्हेषु त्वं नित्यं क्षमया क्षान्त्या भूम्या च समेता युक्ता, तदपि तथापि परेषां चामरादीनां त्रिदशाधीश्वराणामिन्द्रादीनां शेखरे किरीटादिशिरोभूषणे निवेशं निक्षेपणं किं किमर्थं न क्षमसे न सहसे । चामरादीनां वन्दकशिरःसु निवेशो नास्तीति प्रसिद्धं तदिह पादुकाया अक्षान्तिमूलतयोत्प्रेक्ष्यते । क्षमापदश्लेषमूलके क्षान्तिमत्त्वे सत्यपि तदभाववर्णनाद्विरोधालंकारः । भूमिपरत्वादविरोधः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणम् ॥

द्वितयं प्रतियन्ति रङ्गभर्तुः कतिचित्काञ्चनपादुके शरण्यम् ।
अभयान्वितमग्रिमं करं वा भवती शेखरितं पदाम्बुजं वा ॥ ३९ ॥

**द्वितयमिति** । हे काञ्चनपादुके हेमपादरक्षे, 'काञ्चनं हेम सुवर्णम्' इत्यमरः । कतिचित्केचन पुरुषा दुर्लभतादृशसुकृतशालिनः । विरला इति यावत् । रङ्गभर्तुः संबन्धि द्वितयं द्वयं वक्ष्यमाणं शरण्यं प्रतियन्ति रक्षकत्वेनाध्यवस्यन्ति । तत्किमित्यत आह—अभयान्वितमभयमुद्रया युक्तम् । इदं विशेषणं शरण्यताज्ञापनार्थम् । अग्रिममग्रे भवम् । भीताश्वासनायोरसः पुरस्कृतमिति यावत् । करं वा दक्षिणहस्तं वा भवतीशेखरितं भवत्या शिरोभूषणीकृतम् । इदमपि शरण्यताज्ञापनाय । 'सर्वनाम्नो वृत्तिमात्रे पुंवत्' इत्येतद्भवतीशब्दविषये प्रायिकम् । 'ठक्छसोश्च' इति भवतीशब्दस्य पुंवद्भावविधायकाज्ज्ञापनादतो भवच्छेखरितमिति नाशङ्कनीयम्[1] । पदाम्बुजं वा अभयान्वितत्वाद्धस्तस्य रक्षकत्वाध्यवसानम् । पादाम्बुजस्य रक्षकत्वं तथेति भावः । सर्वथा शरणार्थी हस्तपादान्यतरमवलम्ब्य स्वरक्षणं याचते न तृतीयमिति निष्कर्षः । वाशब्दो विकल्पे । द्वयोरपि परस्परनिरपेक्षत्वेन तुल्यबलयोः शरण्यताप्रतिपादनाद्विकल्पोऽलंकारः । 'विरोधस्तुल्यबलयोर्विकल्पालंकृतिर्मता' इति लक्षणम् ॥

भरताश्वसनेषु पादशब्दं वसुधाश्रोत्रसमुद्भवो मुनीन्द्रः ।
पठति त्वयि पादुके ततस्त्वं नियतं रामपदादभिन्नभूमा ॥ ४० ॥

---

१. 'एकतद्धिते च' इति सूत्रस्य 'ठक्छसोश्च' इति वार्तिकस्य च 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति भाष्यकारेष्ट्या गतार्थत्वेन प्रत्याख्यातत्वाज्ज्ञापकतासंभवेनाविचारितरमणीयमेव.

**भरतेति।** हे पादुके, वसुधाश्रोत्रसमुद्भवो मुनीन्द्रो वाल्मीकिर्भरताश्वसनेषु भरतप्रयोजककर्तृकप्रकृतिमण्डलशोकापनोदनेषु त्वयि पादशब्दं पठति वक्ति । ततो हेतोस्त्वं रामपदाद्दाशरथेश्चरणादभिन्नमभेदः । भावे क्तः । स एव भूमा माहात्म्यं यस्याः सा तथोक्ता। पादत्वं च एकव्यक्तिरिति भावः । 'मनः' इति ङीप्प्रतिषेधे 'डाबुभाभ्यामन्यतरस्याम्' इति डाब्वा । नियतं न संदेहः । अतस्मिंस्तच्छब्दप्रयोगाभावादिति भावः । 'भरतः शिरसा धृत्वा संन्यासं पादुके ततः । अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलम् ॥ छत्रं धारयतः क्षिप्रमार्यपादाविमौ मतौ । स काममनवाप्यैव रामपादावुपस्पृशन् । नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥' इति रामायणरूपशब्दप्रमाणगर्भितोपन्यासाच्छब्दप्रमाणालंकारः । 'अष्टौ प्रमाणालंकाराः प्रत्यक्षप्रमुखाः क्रमात्' इति लक्षणात् ॥

मुकुटेषु निवेश्य दिक्पतीनां पदमेव प्रतिपद्य दैत्यहन्तुः।
परिरक्षसि पादुके पदं त्वं क्व नु भिद्येत गरीयसां प्रभावः ॥ ४१ ॥

**मुकुटेष्विति।** हे पादुके, त्वं दिक्पतीनामिन्द्रादीनां मुकुटेषु किरीटेषु। 'मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम्' इत्यमरः । निविश्य स्थित्वा पदमेव स्थानमेव परिरक्षसि । दैत्यहन्तुः श्रीरङ्गनाथस्य पदं चरणं प्रतिपद्य पदमेव चरणमेव परिरक्षसि । उभयत्र पदस्यैव रक्षणम् । तथा हि गरीयसां महतां प्रभावो माहात्म्यं क्व नु कुत्र वा भिद्येत भेदं प्राप्नुयात् । न कुत्रापीत्यर्थः । संभावनायां लिङ्। पादमुकुटरूपदेशभेदानादरेण पादुकायाः पदरक्षणस्वाभाव्यरूपविशेषेण सज्जनप्रभावभेदसमर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासालंकारः । 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः' इति लक्षणम् ॥

जगतामभिरक्षणे त्रयाणामधिकारं मणिपादुके वहत्योः।
युवयोः परिकर्म कोटिलग्नं चरणद्वन्द्वमवैमि रङ्गभर्तुः ॥ ४२ ॥

**जगतामिति।** हे मणिपादुके, रङ्गभर्तुश्चरणद्वयं पदद्वयं (कर्म) त्रयाणां जगतामभिरक्षणेऽधिकारं प्रभुत्वं वहत्योर्दधत्योर्युवयोः परिकर्मकोटिलग्नमलंकारपदस्थितमवैमि जानामि। मूर्धाभिषिक्तस्य किरीटवत्पदद्वयमलंकारमात्रम्। ननु तेन युवयोः किंचित्कार्यमिति भावः । भगवत्पदद्वयस्य पादुकाकिरीटत्वरूपवस्तूत्प्रेक्षासंभावनादुत्प्रेक्षा । 'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना' इति लक्षणात् ॥

पदरक्षिणि वत्सला निकामं रघुवीरस्य पदाम्बुजादपि त्वम्।
यदसौ भरतस्त्वयांशवत्त्वान्न पुनस्तादृशमन्वभूद्वियोगम् ॥ ४३ ॥

**पदरक्षिणीति।** हे पदरक्षिणि, त्वं रघुवीरस्य रामचन्द्रस्य पदाम्बुजादपि पदाम्बुजमपेक्ष्य । 'पञ्चमी विभक्ते' इति निर्धारणावधौ पञ्चमीति । कामं भृशं वत्सला भक्तेषु

---

१. 'प्रयोज्यकर्तृकरणेकायनेषु' इति प्रथमपुस्तके.

वात्सल्यवती । यद्यस्मात्कारणादसौ रामविश्लेषासहनो भरतस्त्वयांशवत्त्वात्त्वद्रूपभागवत्त्वात् । प्रकृत्यादित्वात्तृतीया । पुनर्भूयस्तादृशं पादुकालाभप्राक्तनवियोगसदृशमनिर्वाच्यप्रकारं वा वियोगं विश्लेषजं दुःखं नान्वभून्नानुभूतवान् । तादृशावात्सल्याभावाद्रामपादे वियुक्तेऽपि वत्सला त्वं भरतं सुखितवतीति भावः । पादुकालाभानन्तरं पूर्वदुःखं विहाय सुखीभावेन हेतुना पादुकायामधिकवात्सल्यसमर्थनात्काव्यलिङ्गमलंकारः । वाक्यार्थहेतुकम् । 'समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम्' इति लक्षणम् ॥

अभिगम्य मुकुन्दपादुके त्वामपनीतातपवारणैः शिरोभिः ।
हरितां पतयो दुरापमन्यैरनघच्छायमवाप्नुवन्ति भोगम् ॥ ४४ ॥

**अभिगम्येति** । हे मुकुन्दपादुके, हरितां दिशां पतय इन्द्राद्या अपनीतानि निरस्तान्यातपवारणानि छत्राणि येषां तैः शिरोभिरुत्तमाङ्गैस्त्वामभिगम्याभिमुख्येन प्राप्य अन्यैर्दुरापं पादुकाभिगमनरहितैर्दुरापं दुष्प्रापमनघच्छायमपराभवतेजोविशिष्टं निबिडातपयुक्तं च भोगं सुखानुभवं प्राप्नुवन्ति प्रपद्यन्ते । दिक्पतीनां निरुपाधिकमैश्वर्यमपि पादुकाप्रभावाधीनमिति भावः । सामग्रीभूतच्छत्रापनयनेऽपि निबिडच्छायभोगसंबन्धवर्णनाद्विभावनालंकारः । 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत्' इति लक्षणम् ॥

अपहाय सितासितानुपायानरविन्देक्षणपादुके महान्तः ।
त्वदनन्यतया भजन्ति वृत्तिं त्वदसाधारणभोगसाभिलाषाः ॥ ४५ ॥

**अपहायेति** । हे अरविन्देक्षणपादुके, महान्तः सन्तः सितासितान् । प्रत्यूहप्रत्यवायकवलितत्वेन संदिग्धफलकान् । यद्वा सितांस्तत्त्वमूलकान्कर्मज्ञानादीन् । असितान्सत्त्वभिन्नगुणहेतुकान्कामादींश्च । अथवा सितान् निरयफलकानुपायान् इष्टप्राप्तिहेतून् गिरिविशिष्टान् रुद्रमूर्तिभेदानपहाय त्यक्त्वा त्वत्तवासाधारणे भोगे भगवच्चरणारविन्दानुभावे साभिलाषा इच्छावन्तः सन्तस्त्वदनन्यतया त्वदभेदेन । त्वत्समत्वेनेति यावत् । वृत्तिं चरणपरिचरणनिष्ठाम् । यद्वा त्वत्त्वदपेक्षयान्य आराध्यो न विद्यते यस्य तत्तथा' । उपलक्षितां वृत्तिम् । त्वदुपासनामिति यावत् । भजन्ति सादरं सेवन्ते । त्वत्साम्यमेव प्रपन्नानां प्रार्थनीयमिति भावः । दधितक्रन्यायेन कार्यकारणयोगानुरूप्यात्समालंकारभेदः । 'सारूप्यमपि कार्यस्य कारणेन समं विदुः' इति लक्षणात् ॥

प्रणमन्ति न वा विधेर्विपाकाद्य इमे रङ्गनरेन्द्रपादुके त्वाम् ।
उपजातमनुत्तमाङ्गमेषामुभयेषामपि चित्रमुत्तमाङ्गम् ॥ ४६ ॥

**प्रणमन्तीति** । हे रङ्गनरेन्द्रपादुके, इमे परिदृश्यमाना ये नरा विधेरदृष्टस्य । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । विपाकात्परिणामेन प्रणमन्ति न प्रणमन्ति वा एषामुभयेषामप्युत्तमाङ्गं शिरः । 'उत्तमाङ्गं शिरः' इत्यमरः । अनुत्तमाङ्गमुत्तममङ्गं न विद्यते यस्मादिति बहुव्रीहिः प्रणमतां पक्षे । अप्रणमतां तु उत्तमं न भवतीति तत्पुरुषः ।

यश्च रामं न पश्येत्तु यं (तं) च रामो न पश्यति । अप्रणमतां निकर्षः प्रणमतामुत्कर्ष इति भावः । हिताहितयोरुभयोरप्यनुत्तमाङ्गतापादनलक्षणवृत्तितौल्येन तुल्ययोगिताभेदः । 'हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता' इति लक्षणम् ॥

तव केशवपादुके प्रभावो मम दुष्कर्म च नन्वनन्तसारे ।
नियमेन तथापि पश्चिमस्य प्रथमेनैव पराभवं प्रतीमः ॥ ४७ ॥

**तवेति।** हे केशवपादुके, तव प्रभावो दिव्यशक्तिः मम दुष्कर्म पापं च द्वे अप्यनन्तसारे । अनन्तस्य शेषस्य सार इति पादुकापक्षे तत्पुरुषसमासो वा । उभयोरपि पक्षयोर्बहुव्रीहिर्वा । सर्वदा 'नपुंसकमनपुंसकेन' इत्येकशेषः । 'सारो बले स्थिरांशे च' इत्यमरः । नन्वित्यवधारणे संबोधने वा । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । तथापि पश्चिमस्य मम दुष्कर्मणः प्रथमेन प्रभावेनैव नियमेनाव्यभिचारेण पराभवं निग्रहं प्रतीमो निश्चिनुमः । मत्पापेक्षणानन्तसारत्वेऽपि त्वत्प्रभावोऽधिकबल इति भावः। पूर्वार्धे दुष्कर्मपादुकाप्रभावयोर्धर्मैक्यकथनाद्दीपकालंकारः । 'वदन्ति वर्ण्यावर्णानां धर्मैक्यं दीपकं बुधाः' इति लक्षणम् । उत्तरार्धे बलवतो दुष्कर्मणोऽपेक्षया प्रभावस्य पराक्रमवर्णनात्प्रत्यनीकम् । 'प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः' इति लक्षणात् । तयोरङ्गाङ्गिभावेन संकरः ॥

अस्त्रभूषणतयैव केवलं विश्वमेतदखिलं बिभर्ति यः ।
अक्रमेन मणिपादुके त्वया सोऽपि शेखरतयैव धार्यते ॥ ४८ ॥

**अस्त्रेति ।** हे मणिपादुके, यो हरिः केवलमसहायतयाखिलं समस्तमेतद्विश्वं प्रपञ्चमस्त्रभूषणतयैवायुधतयैवालंकारतयैव बिभर्ति दधाति । सोऽपि विश्वाधारोऽपि हरिः श्रीरङ्गनाथस्त्वयाक्रमेनाश्रमेण शेखरतयैव शिरोभूषणमाल्यतयैव धार्यते ध्रियते । विधारकत्वेन पादुकाधिक्यवर्णनादधिकालंकारभेदः । 'पृथ्व्याधेयाद्यदाधाराधिक्यं तदपि तन्मतम्' इति लक्षणम्। प्रपञ्चस्यास्त्रभूषणत्वं विष्णुपुराणेऽस्त्रभूषणाध्याये प्रसिद्धम् ॥

रामपादसहधर्मचारिणीं पादुके सकलपातकच्छिदम् ।
त्वामशेषजगतामधीश्वरीं भावयामि भरताधिदेवताम् ॥ ४९ ॥

**रामेति ।** हे पादुके, भरतस्याधिदेवतां पूज्यां त्वां रामपादस्य दाशरथिचरणस्य पूज्यस्य रामस्य च । अत्र पादशब्दस्य प्रशंसावाचिनः । 'प्रशंसावचनैश्च' इति समासपरनिपातौ । सहधर्मचारिणीं संसारलक्षणैकधर्माचरणशीलाम् । एकाग्निहोत्रादिधर्माचरणशीलां च । 'राघवत्वेऽभवत्सीता' इत्याद्यनुसंधेयम् । निखिलानि पातकानि पापानि छिनत्तीति तथोक्ताम् । 'प्रायश्चित्तप्रसङ्गे तु सर्वपापसमुद्भवे । मामेव देवदेवस्य महिषीं शरणं श्रयेत् ॥' इत्युक्तरीत्या सर्वपापनाशिनीं चाशेषजगतां सर्वलोकानामधीश्वरीं नियन्त्रीम् । अस्येशाना जगतो विष्णुपत्नीत्यपि भाव्यम् । अधिपूर्वादीशेरौणादिको वरट् । टित्त्वान्ङीप् ।

लक्ष्मीं च भावयामि । पूर्वोक्तप्रस्तुतविशेषणबलेनाप्रस्तुतलक्ष्म्याः प्रतीतेः समासोक्तिरलंकारः । तेन च लक्ष्मीसादृश्यप्रतीतेरलंकारेणालंकारध्वनिः ॥

चूडाकपालव्यतिषङ्गदोषं विमोचयिष्यन्निव विष्णुपद्याः ।
कृतादरः केशवपादरक्षे बिभर्ति बालेन्दुविभूषणस्त्वाम् ॥ ५० ॥

**चूडेति ।** हे केशवपादरक्षे, बालेन्दुविभूषणः शिवो विष्णुपद्याः शिरसि लग्नायाः गङ्गायाः । 'गङ्गा विष्णुपदी' इत्यमरः । चूडाकपालेन शिखानिष्ठेन शिरःस्थानव्यतिषङ्गेन संसर्गेण जातदोषमशुद्धिरूपं विमोचयिष्यन्निव निराकरिष्यन्निव कृतादरः कृतप्रीतिकः सन् त्वां बिभर्ति । नित्यप्राप्तायाः पादुकाधृतेर्गङ्गादोषनिराकरणफलकत्ववर्णनात्फलोत्प्रेक्षा ॥

त्वयैव नित्यं मणिपादरक्षे राजन्वती सृष्टिरियं प्रजानाम् ।
स्त्रीराज्यदोषप्रशमाय नूनं निर्दिश्यसे नाथविशेषणेन ॥ ५१ ॥

**त्वयेति ।** हे मणिपादरक्षे, इयं प्रजानां सृष्टिस्त्वयैव राजन्वती । त्वमेवास्याः सुराज्ञीति भावः । तर्हि स्वतन्त्रायाः पादुकाया रङ्गविशेषणं किमर्थमित्याह—स्त्रीराज्यदोषस्य स्त्रीराजस्वरूपदोषस्योपशमाय परिहाराय नाथविशेषणेन स्वामिरूपव्यावर्तकेन निर्दिश्यसे व्यपदिश्यसे । नूनमित्युत्प्रेक्षा । पादुका स्वयं सृष्ट्यादिभिर्जगद्रक्षणशक्तापि स्त्रीराजत्वापवादपरिहाराय रङ्गनाथविशिष्टा जगद्रक्षतीत्युक्त्या रङ्गनाथसाहित्यस्यापवादपरिहारफलकत्ववर्णनात्फलोत्प्रेक्षा ॥

परस्य पुंसः पदसंनिकर्षे तुल्याधिकारां मणिपादुके त्वाम् ।
उत्तंसयन्ति स्वयमुत्तमाङ्गैः शेषां[1]समं शेषगरुत्मदाद्याः ॥ ५२ ॥

**परस्येति ।** हे मणिपादुके, शेषगरुत्मदाद्या अनन्तगरुडप्रभृतयः परस्य पुंसः परमपुरुषस्य पदयोः संनिकर्षे समीपे तुल्याधिकारां परिचरणरूपसमानकार्यवतीं त्वामुत्तमाङ्गैः शिरोभिः शेषया पादुकार्पणार्थेन शिरोवेष्टनपटेन समं तुल्यं यथा तथा स्वयमुत्तंसयन्ति शिरोभूषणीकुर्वन्ति । अधिकारतौल्येऽप्यनन्तादिभ्योऽपि त्वमधिकप्रभाववतीति भावः । शेषादिकृत्यस्य पादुकाप्रभावाङ्गत्ववर्णनादुदात्तालंकारः ॥

बिभर्षि नित्यं मणिपादुके त्वं विश्वंभरं धाम निजेन भूम्ना ।
तवानुभावश्चुलुकीकृतोऽयं भक्तैरजस्रं भवतीं दधानैः ॥ ५३ ॥

**बिभर्षीति ।** हे मणिपादुके, त्वं निजेन स्वकीयेन भूम्ना माहात्म्येन विश्वंभरं प्रपञ्चाधारं धाम तेजो रङ्गनाथरूपं नित्यं बिभर्षि वहसि । तवायमनुभावो विश्वधारकस्यापि धारकत्वरूपमाहात्म्यमजस्रं सदा भवतीं दधानैर्भक्तैश्चुलुकीकृतः करपरिमितः कृतः । हस्तीकृत इति यावत् । आधाराधिक्यवर्णनादधिकालंकारभेदः ॥

---

१. शेषा 'अनन्तेन प्रसादेन स्वनिर्माल्यार्पणे' इति मेदिनी.

मुकुन्दपादाम्बुजधारिणि त्वां मोहादनुत्तंसयतां जनानाम्।
मूर्ध्नि स्थिता दुर्लिपयो भवन्ति प्रशस्तवर्णावलयस्तदीयाः ॥ ५४ ॥

**मुकुन्देति**। हे मुकुन्दपादाम्बुजधारिणि हे पादुके, त्वां मोहादज्ञानेनानुत्तंसयतां शिरोभूषणमकुर्वतां जनानां प्राणिनां मूर्ध्नि शिरसि स्थितास्तदीयाः प्रशस्तवर्णावलयः शुभाक्षरपङ्क्तयो दुर्लिपयो भवन्ति। पादुकातिलङ्घने सददृष्टवतामपि सददृष्टानि दुरदृष्टतया परिणमन्तीति भावः। ललाटलिखितायाः सददृष्टसूचकब्रह्मलिप्याः दुरदृष्टसूचकलिपित्वपरिग्रहवर्णनाद्गुणालंकारः। 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः' इति लक्षणात् ॥

भूमिः श्रुतीनां भुवनस्य धात्री गुणैरनन्ता विपुला विभूत्या।
स्थिरा स्वयं पालयितुं क्षमा नः सर्वंसहा शौरिपदावनि त्वम् ॥ ५५ ॥

**भूमिरिति**। हे शौरिपदावनि, श्रुतीनां वेदानां भूमिः प्रतिपाद्यतया विषयभूता भुवनस्य धात्री पोषिका गुणैः करुणादिभिरनन्तापरिच्छेद्या विभूत्या विभवेन विपुला विस्तारवती स्वयं स्वरूपेण स्थिराचला नोऽस्मान्पालयितुं रक्षितुं क्षमा शक्ता सर्वंसहा सर्वापराधसहना। सहेः 'पूःसर्वयोर्दारिसहोः' इति खच्। 'अरुर्द्विषदजन्तस्य' इति मुम्। अत्र श्रुत्यादिविषयभेदेन भूम्यादिशब्दवाच्यताप्रकारभेदोल्लेखनादुल्लेखभेदोऽलंकारः। स च श्लेषानुप्राणितः। 'एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः' इति लक्षणम्। तेन च भूम्युपमाप्रतीतेरलंकारेणालंकारध्वनिः। तया च भूमिवदनवधिकप्रभावा पादुकेति च गम्यते ॥

स्थैर्यं कुलक्षोणिभृतां विधत्से शेषादयस्त्वां शिरसा वहन्ति।
पदप्रसूता परमस्य पुंसः पृथ्वीमहिम्ना मणिपादुके त्वम् ॥ ५६ ॥

**स्थैर्यमिति**। हे पादुके, त्वं कुलक्षोणिभृतां मनुवंशप्रसूतानां राज्ञां कुलपर्वतानामित्यपि गम्यते। स्थैर्यं स्थिरत्वं विधत्से करोषि। त्वां शेषादयोऽनन्तगरुडादयः। नागराजकूर्मगजादय इत्यपि गम्यते। शिरसोत्तमाङ्गेन वहन्ति। त्वं परमस्य पुंसः परमपुरुषस्य पदेन प्रसूता प्रेरिता। 'षू प्रेरणे' इति धातोः कर्मणि क्तः। परमपुरुषचरणजाता च। तदा 'षूङ् प्राणिगर्भविमोचने' इति धातोः क्तः। 'पद्भ्यां भूमिः' इति श्रुतेः। महिम्ना माहात्म्येन त्वं पृथ्वी। 'वोतो गुणवचनात्' इति ङीष्। पृथ्वी च। 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः। श्लेषालंकारः। तेन भूसादृश्यं प्रतीयते इत्यलंकारेणालंकारध्वनिः पूर्ववत्प्रभावश्च गम्यते ॥

दैत्याधिपानां बलिनां किरीटा निक्षेपणं ते यदि नाभ्यनन्दन्।
रङ्गेशपादावनि रङ्गधाम्नः सोपानतां प्राप्य वहन्त्यमी त्वाम् ॥ ५७ ॥

**दैत्येति**। हे रङ्गेशपादावनि, ते तव निक्षेपणं निवेशनं बलिनां बलवतां दैत्याधिपानामसुरश्रेष्ठानां किरीटा मौलयो नाभ्यनन्दन् न बहु मन्यन्ते यद्यमी किरीटा रङ्गधाम्नः

श्रीरङ्गविमानस्य सोपानतामारोहणभावम् । 'आरोहणं स्यात्सोपानम्' इत्यमरः । प्राप्य त्वां वहन्ति । रङ्गपतिः प्रत्यर्थिनां दैत्यानां शिरांसि छित्त्वा तेषां किरीटकनकरत्नादीनि विमानसोपाने निक्षिप्य सपादुकः सन्नधिरोहतीति भावः । सक्रन्निक्षेपमसहमानानां सर्वदा तद्वहनस्यानिष्टस्यावाप्तेर्विषमभेदः । 'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात्' इति लक्षणम् ॥

शेषो गरुत्मान्मणिपादपीठी त्वं चेति पादावनि विश्वमान्याः ।
तुल्याधिकारा इह किंतु सन्तस्त्वामेव नित्यं शिरसा वहन्ति ॥ ५८ ॥

**शेष इति** । हे पादावनि, विश्वमान्याः सर्वबहुमन्तव्याः । शेषोऽनन्तः । गरुत्मान्गरुडः । मणिमयी पादपीठी पदनिक्षेपणार्थां सिंहासनसंनिकृष्टा वेदिः । त्वं च पादुका चैते तुल्याधिकाराः पादवहनक्षणैककार्यवन्तो यदि तदा सन्तः नित्यं त्वामेव किंतु किमर्थं वा शिरसा वहन्ति । अतस्तेभ्योऽपि त्वमधिकेति भावः । यदि तुल्याधिकारा त्वं तर्हि तानपि वहेरित्युक्त्या तेभ्योऽप्याधिक्यकथनात्संभावनालंकारः ।'संभावना यदित्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति लक्षणात् ॥

परस्य पुंसः परमं पदं तद्बिभर्षि नित्यं मणिपादरक्षे ।
अन्यादृशां व्योमसदां पदानि त्वय्यायतन्ते यदिदं न चित्रम् ॥ ५९ ॥

**परस्येति** । हे मणिपादुके, त्वं परस्य पुंसः परमपुरुषस्य तत्प्रसिद्धं परममुत्कर्षं पदं चरणं नित्यं सदा बिभर्षि वहसि । अन्यादृशां परमाणां व्योमसदां देवानां पदानि स्थानानि त्वयि आयतन्ते त्वदधीनानि भवन्तीति भावः । यदिदं न चित्रमाश्चर्यं न भवति । स्वतन्त्रपदस्य त्वदधीनत्वेऽस्वतन्त्राणां किमु वक्तव्यमिति भावः । कैमुत्येन ब्रह्मादिपदप्रतिष्ठापनवर्णनात्काव्यार्थापत्त्यलंकारः ॥

पादौ मुरारेः शरणं प्रजानां तयोस्तदेवासि पदावनि त्वम् ।
शरण्यतायास्त्वमनन्यरक्षा संदृश्यसे विश्रमभूमिरेका ॥ ६० ॥

**पादाविति** । हे पादावनि मुरारेः पादौ प्रजानां प्राणिनां शरणं रक्षणं तयोः पादयोस्त्वं तदेव शरणमेवासि । अतोऽनन्यरक्षारहिता त्वमेका शरण्यताया रक्षकत्वस्य विश्रमभूमिर्विश्रान्तिस्थानतया संदृश्यसे लक्ष्यसे । जनैरिति शेषः । तव रक्षकान्तरं नापेक्षितमिति भावः । उत्तरोत्तरमुत्कर्षकथनात्सारालंकारः ॥

अन्येषु पद्मा कमलासनाद्यैरङ्गेषु रङ्गाधिपतेः श्रितेषु ।
पादावनि त्वामधिगम्य जातं पदं मुरारेरधिदैवतं नः ॥ ६१ ॥

**अन्येष्विति** । हे पादावनि, अन्येषु पदव्यतिरिक्तेषु रङ्गाधिपतेरङ्गेषु वक्षोनाभिपाणिप्रभृतिषु अवयवेषु पद्माकमलासनाद्यैर्लक्ष्मीब्रह्मशङ्खचक्रादिभिः श्रितेषु अधिश्रितेषु सत्सु मुरारेः पदं त्वामधिगम्य नोऽस्माकमधिदैवतं जातमुपास्यमभूत् । प्रेयोऽलंकारः ॥

क्षणं सरोजेक्षणपादुके यः कृतादरः किं कुरुते भवत्याः।
अकिंचनस्यापि भवन्ति शीघ्रं भ्रूकिंकरास्तस्य पुरंदराद्याः॥ ६२॥

**क्षणमिति**। हे सरोजेक्षणपादुके, यः कृतादरः सन् भवत्याः क्षणं कुरुते किं किंचित्कुरुते। परिचरतीति यावत्। अकिंचनस्यापि दरिद्रस्यापि तस्य पुरंदराद्या इन्द्रादयो भ्रूकिंकरा भ्रूसूचितकार्यकारिणो भवन्ति। पादुकासेवको ब्रह्माधिपत्यं प्राप्नोतीति भावः। अकिंचनत्वेन सामग्रीपौष्कल्यविरहेऽपि ब्रह्माद्याः किंकरा इत्युक्तेर्विभावनाभेदः। 'हेतूनामसमग्रत्वे कार्योत्पत्तिश्च सा मता' इति लक्षणम्॥

वहन्ति ये माधवपादुके त्वामुह्यन्त एते दिवि निर्विघाताः।
हंसेन नित्यं शरदभ्रभासा कैलासगौरेण ककुद्मता वा॥ ६३॥

**वहन्तीति**। हे माधवपादुके, त्वां ये जना वहन्ति एते निर्विघाताः सन्तोऽप्रतिघाताः सन्तो दिवि आकाशे शरदभ्रभासा शरत्कालमेघतुल्यच्छविना हंसेन राजहंसेनोह्यन्ते नीयन्ते। 'वह प्रापणे' इति धातोः कर्मणि लट्। कैलासगिरिवद्गौरेण सितेन ककुद्मता वृषभेण वोह्यन्ते। ब्रह्मत्वं रुद्रत्वं वा पादुकासेवनफलमिति भावः। पर्यायोक्तिसंकीर्णो विकल्पकालंकारः। मुखभेदान्न पौनरुक्त्यम्॥

रुद्रं श्रितो देवगणः स रुद्रः पद्मासनं सोऽपि च पद्मनाभम्।
स त्वामनन्तो न पुनस्त्वमन्यं क एष पादावनि ते प्रभावः॥ ६४॥

**रुद्रमिति**। हे पादावनि, देवगणो देवसमूहः। रुद्रं शिवं श्रित आश्रितः स रुद्रः पद्मासनं ब्रह्माणमाश्रितः स ब्रह्मापि च। (द्विपादसमुदायः समुच्चयार्थः)। पद्मनाभं श्रीरङ्गनाथमाश्रितोऽनन्तस्त्रिविधपरिच्छेदशून्यः, त्वं तु त्वं पुनः अन्यमितरं नाश्रिता एष ते प्रभावः कः किंरूपः। अनिर्वचनीय इति भावः। स पद्मनाभोऽपि त्वामाश्रितः। संतारार्थं भवतीमाश्रित इत्यर्थः। 'रुद्रं श्रितो देवगणो रुद्रो ब्रह्माणमाश्रितः। ब्रह्मा मामाश्रितो राजन्नाहं कैश्चिदुपाश्रितः॥' इत्युक्तपरमपुरुषस्यापि त्वमाश्रयणीया चेत्तव प्रभावोऽपरिच्छेद्य इति भावः। गृहीतमुक्तरीत्या प्रकृताप्रकृतानाश्रित इत्येकसंबन्धकथनान्मालादीपकमलंकारः। 'दीपकैकावलीयोगान्मालादीपकमिष्यते' इति लक्षणम्॥

परस्य धाम्नः प्रतिपादनार्हां वदन्ति विद्यां मणिपादुके त्वाम्।
यतस्तदेवाधिगमे प्रजानां दूरीभवत्युत्तरपूर्वमंहः॥ ६५॥

**परस्येति**। हे मणिपादुके, त्वां परस्योत्कृष्टस्य धाम्नस्तेजोरूपस्य ब्रह्मणः प्रतिपादने प्रापणेनानुभावनेन चार्हां योग्यां विद्यामुपासनां वदन्ति। सन्त इति शेषः। यतः कारणात्तवाधिगम एव त्वत्प्राप्तौ सत्यामेव प्रजानामुपासीनानामुत्तरपूर्वं कृतमागामि च अंहो दुरितम्।

१. 'ये त्वां य उपासते त्वाम्' इति प्रथमपुस्तकस्थः पाठः.

'अंहो दुरितदुष्कृतम्' इत्यमरः । दूरीभवति ध्वस्तमशिष्टं च भवति । अत इति पूर्वेणान्वयः । 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ' इति सूत्रम् । तस्य विद्याकार्यस्य त्वयि दर्शनात्त्वमेव विद्येति भावः । पूर्वार्धोक्तस्य पादुकानिष्ठाविद्यातादात्म्यस्योत्तरपूर्वाघदूरीभावेन हेतुना समर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

धन्या मुकुन्दस्य पदानुषङ्गाद्धनीयता येन समर्चिता त्वम् ।
वासस्तदीयो मणिपादरक्षे लक्ष्म्यालकामप्यधरीकरोति ॥ ६६ ॥

**धन्येति** । हे मणिपादरक्षे, मुकुन्दस्य पदानुषङ्गाच्चरणसंबन्धाद्धन्या पुण्या धनं प्राप्तवती च । 'धनगणं लब्धा' इति यत्प्रत्ययः । धनीयता धनमात्मन इच्छता । 'सुप आत्मनः क्यच्' 'क्यचिच' इत्यवर्णस्येत्त्वम् । लटः शत्रादेशः । येन पुरुषेणार्चिता पूजिता तदीयो वासो निवासो लक्ष्म्या संपदालकामपि कुबेरनगरीमप्यधरीकरोति तिरस्करोति । पादुकार्चकः कुबेरादप्यधिकः संपन्नो भवतीत्यर्थः । उपमानभूताया अलकाया उपमेयत्वेन तिरस्कारवर्णनात्प्रतीपभेदालंकारः ॥

पदेन विष्णोः किमुतेतरेषां विसृज्य सङ्गं य उपासते त्वाम् ।
करोषि तान्किं त्वमपेतकामान्कालेन पादावनि सत्यकामान् ॥ ६७ ॥

**पदेनेति** । हे पादावनि, ये पुरुषा विष्णोः पदेन चरणेन स्थानेन चेति प्रतीयते । सङ्गं संबन्धं विसृज्य त्यक्त्वा । तत्रापि निरपेक्षा इति भावः । त्वां उपासते सेवन्ते । ते इत्यध्याहार्यः । इतरेषां रुद्रादीनामत्र पदेनेत्यनुषङ्गः । स्थानेनेत्यर्थः । सङ्गं विसृज्य उपासत इति किमुत तत्र वक्तव्यमिति भावः । अत एवापेतकामानिच्छारहितान्कालेन शरीरावसानकालेन सत्यकामानप्रतिहतेच्छाकान् किं किमर्थं करोषि । रागरहितानां त्वदुपासकानां त्वत्प्रभावात्सत्यकामत्वादिगुणाष्टकाविर्भावविलक्षणमोक्षो भवतीति विरोधपरिहारः । विरोधाभासोऽलंकारः । 'आभासत्वे विरोधस्य विरोधाभास इष्यते' इति लक्षणम् ॥

अभ्यासयोगेन निगृह्यमाणैरन्तर्मुखैरात्मविदो मनोभिः ।
मातस्त्वया गुप्तपदप्रभावादन्वेषयन्त्यागमिकं निधानम् ॥ ६८ ॥

**अभ्यासेनेति** । हे मातः सर्वजनप्रियकारिणि, आत्मविदो ब्रह्मज्ञा अभ्यासयोगेनाहरहरावृत्तियुक्तेन योगेन निगृह्यमाणैर्बहिर्विषयरससंसर्गितया शिक्ष्यमाणैः अञ्जनादिसंस्कृतैश्चेत्यपि गम्यते । अन्तर्मुखैरान्तरप्रत्यगात्मपरमात्मसक्तैर्भ्रुवोरन्तःप्रवेशनोद्युक्तैश्च मनोभिश्चित्तैः करणैस्त्वया कर्त्र्या प्रभावान्निजशक्त्या गुप्तं गूढं पदं चरणं स्थानं च यस्य तत् । आगमिकं आगमे वेदे भवमागमे पर्वते भवमित्यपि गम्यते । 'तत्र भवः' इत्यर्थेऽध्यात्मादित्वाट्ठञ् । निधानं निधिसदृशं परमात्मानं भोग्यत्वान्निधिशब्दाभिधानमन्वेषयन्ति चिन्तयन्ति मृगयन्ते च । एतेन पादुकाया निधिरक्षकदेवतात्वं प्रतीयत इति समासोक्तिरलंकारः ॥

मूर्ध्ना दधानां मणिपादुके त्वामुत्तंसितं वा पुरुषं भवत्या ।
वदन्ति केचिद्वयमामनामस्त्वामेव साक्षादधिदैवतं नः ॥ ६९ ॥

**मूर्ध्नेति ।** हे मणिपादुके, केचित्केचन पुरुषाः भगवन्तं मूर्ध्ना दधानां त्वां शिरसा गृह्णतीं भवतीं, वा भवत्योत्तंसितं शिरोभूषणीकृतं पुरुषं वाधिदैवतं वदन्ति । वयं तु नोऽस्माकं साक्षात्संनिकृष्टां स्वासाधारणामत्र विश्वविशिष्टां त्वामेवाधिदैवतमधिकां देवतामामनामः पुनः पुनर्वदामः । केचित्पादुकां भगवद्विशेषणतयोपासते, अन्ये भगवद्विशेष्यत्वेन, वयं तु पादुकात्वेनैवोपास्महे इत्युक्त्या बहुभिर्बहुधोल्लेखकथनादुल्लेखालंकारः । 'बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते' इति लक्षणम् । 'दधानम्' इति पाठे तु त्वां मूर्ध्ना दधानं स्वेष्टानिष्टप्राप्तिपरिहाराय त्वां मूर्ध्ना दधानं ब्रह्मरुद्रादिषु क्षेत्रज्ञेष्वन्यतमं पुरुषं वा भवत्या त्वयोत्तंसितं शिरोभूषणीकृतं पुरुषं श्रीरङ्गनाथं वाधिदैवतं वदन्ति, वयं तु पुरुषं दधानामर्थावबोधिदेवतामामनामः ॥

मूर्ध्ना सतामधस्तादुपरि च विष्णोः पदेन संघटिताम् ।
अदवीयसीं विमुक्तेः पदवीमवयन्ति पादुके भवतीम् ॥ ७० ॥

**मूर्ध्नेति ।** हे पादुके, सन्तोऽधस्तात्स्वाधःप्रदेशे, अर्चिरादिमार्गाधःप्रदेशे चेत्यपि गम्यते । सतां महतां सेवकानाम्, नक्षत्राणां च । 'तारा भं रात्रिजं धिष्ण्यं सन्नक्षत्रमुडुर्न ना' इति यादवः । मूर्ध्ना शिरसा संघटितां युक्ताम् । पादुकायाः सतां शिरःसु निक्षेपात्, अर्चिरादिमार्गस्य पूर्वभागेन नक्षत्राणां वृत्तेरिति भावः । उपर्यूर्ध्वभागे विष्णोः पदेन चरणेन परमपदाख्येन भगवल्लोकेन । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । संघटितां भवतीं त्वां विमुक्तेर्मोक्षस्यादवीयसीमदूरतरां पदवीम् । उपायमिति यावत् । अर्चिरादिमार्गं चावयन्ति जानते । पादुकासंबन्धिसंबन्धिनामपि झटितिप्राप्यो हरिरिति भावः । पादुकायां विशेषणश्लेषमहिम्नार्चिरादितादात्म्यसंभवाच्छ्लेषानुप्राणिता स्वरूपोत्प्रेक्षा ॥

इति श्रीरङ्गनाथस्य पादुकासहस्रपरीक्षायां प्रभावपद्धतिस्तृतीया ॥

---

## चतुर्थी पद्धतिः ।

अथास्यां पद्धत्यां पादुकाया भरताय समर्पणे उपयुक्तान्गुणानवलम्ब्य स्तौति—

भजामः पादुके याभ्यां भरतस्याग्रजस्तदा ।
प्रायः प्रतिप्रयाणाय प्रास्थानिकमकल्पयत् ॥ १ ॥

**भजाम इति ।** पादुके कर्मणी भजामः । याभ्यां पादुकाभ्यां करणाभ्यां तदा दण्डकारण्यगमनसमये भरतस्याग्रजो रामः प्रतिप्रयाणाय पुनरागमनाय प्रास्थानिकं प्रस्थानप्रयोजनकं कर्म प्रायोऽकल्पयत् उपपत्तिभूम्ना कल्पितवान् । प्राय इत्युत्प्रेक्षाव्यञ्जकम् । लोके प्रस्थातारः प्रस्थानविलम्बे खड्गादिकमन्यत्र निर्गमयन्ति तद्वद्रामोऽपि

पुनरागमिष्यन्भरते स्वपादुकां निक्षिप्तवानित्यर्थः । 'तदस्य' इत्यनुवर्त्य 'प्रयोजनम्' इति ठक् । तेन प्रास्थानिकमिति सिद्धम् । भरताय पादुकासमर्पणं प्रास्थानिकत्वेनोत्प्रेक्ष्यते इति स्वरूपोत्प्रेक्षा ॥

राज्यं विहाय रघुवंशमहीपतीनां
पौरांश्च पादरसिकान्पृथिवीं च भक्तान् ।
त्वामेव हन्त चरणावनि संप्रयास्य-
न्नालम्बत प्रथममुत्तरकोशलेन्द्रः ॥ २ ॥

**राज्यमिति** । हे चरणावनि, उत्तरकोशलेन्द्रः उत्तरकोशलाधिपती रामो रघुवंशमहीपतीनां संबन्धि राज्यं राजकर्म निग्रहादिकं पादरसिकान् पादे चरणे रसिकानासक्तान्पौरान्पत्तनवासिनः, रक्तामनुरागवतीं पृथिवीं महीं च विहाय त्यक्त्वा संप्रयास्यन्दण्डकारण्याय गमिष्यन्प्रथमं पूर्वं त्वामालम्बत आलम्बितवान् । रामस्य राज्याद्यनभिलाषेऽपि त्वय्येवाभिलाषं दृष्ट्वा तदा गमनाय त्वामेवाङ्गीकृतवानित्यभिप्रायेण समर्पणपद्धतौ निवेशः ॥ प्रेयोलंकारः । 'प्रेयः प्रियतराख्यानम्' इति लक्षणम् ॥

प्राप्ते प्रयाणसमये मणिपादरक्षे
पौरानवेक्ष्य भवती करुणाप्रलापान् ।
मञ्जुप्रणादमुखरा विनिवर्तनार्थं
रामं पदग्रहणपूर्वमयाचतेव ॥ ३ ॥

**प्राप्त इति** । हे मणिपादरक्षे, भवती प्रयाणसमये रामवनगमनकाले करुणाप्रलापानार्तरवान्पौरानवेक्ष्य मञ्जुप्रणादमुखरा सती रमणीयशिञ्जितेन शब्दायमाना सती रामं कोसलाधिपतिं विनिवर्तनार्थं भरताय दत्त्वा मां निवर्तयेत्येवमर्थं पदग्रहणपूर्वमुपसंग्रहणपूर्वमयाचतेव याचितवतीव । अत एव रामस्त्वां भरताय प्रादादिति भावः । सशिञ्जितरामपादेन पादुकापरिग्रहस्य पादुकाकर्तृकनिवर्तनार्थं पादावलम्बनस्योत्प्रेक्षणात्स्वरूपोत्प्रेक्षा ॥

मत्वा तृणं स भरतो मणिपादरक्षे
रामेण तां विरहितां रघुराजधानीम् ।
त्वामेव सप्रणयमुज्जयिनीमवन्तीं
मेने महोदयमयीं मधुरामयोध्याम् ॥ ४ ॥

**मत्वेति** । हे मणिपादरक्षे, भरतो रामेण विरहितां तां प्रसिद्धां रघुराजधानीमयोध्यां तृणाय मत्वा तृणमिवानादृत्य । 'मन्यकर्मण्यनादरे' इति चतुर्थी । सप्रणयं प्रीतिसहितं यथा तथा त्वामेवोज्जयिनीमुत्कृष्टजयवतीमुज्जयिनीनामकपुरीं च, अवन्तीमाश्रिता-

त्रक्षन्तीमवन्तीनामपुरीं च, महोदयमयीमधिकाभ्युदयप्रचुरां महोदयनामकपत्तनरूपां च, मधुरां मनोज्ञां मधुरानामकपुरीं च, अयोध्यां योधयितुमशक्यामयोध्यानामनगरीं च मेने। एतन्नगरं परित्यज्य त्वामनेकनगरात्मिकामभिज्ञातवानिति प्रतीयते। श्लेषानुप्राणित उल्लेखभेदः॥

रामात्मनः प्रतिपदं मणिपादरक्षे
विश्वंभरस्य वहनेन परीक्षितां त्वाम्।
विश्वस्य देवि वहने विनिवेशयिष्य-
न्विश्रब्ध एव भरतो भवतीं ययाचे॥ ५॥

**रामेति।** हे देवि मणिपादरक्षे, रामात्मनो विश्वंभरस्य प्रपञ्चधारकस्य हरेः प्रतिपदं पदे पदे वहनेन धारणेन परीक्षितां कैमुतिकनीत्या विश्ववहनशक्ततया निर्णीतां त्वां विश्वस्य वहने। रक्षणे इति यावत्। विनिवेशयिष्यन्स्थापयिष्यन्भरतो विश्रब्ध एव विश्वासवानेव ययाचे प्रार्थितवान्। राममिति शेषः। 'अधिरोहार्यं पादाभ्याम्' इति प्रार्थितस्याधिरोहणस्य भारवहनशक्तिपरीक्षणतयोत्प्रेक्षणादनुक्तविषया स्वरूपोत्प्रेक्षा॥

नहि भरतः पादुकां परीक्ष्य याचितवान्किंतु रामभक्त्येत्यत आह—

भक्त्या परं भवतु तद्भरतस्य साधो-
स्तत्प्रार्थनं रघुपतेर्मणिपादरक्षे।
केनाशयेन स मुनिः परमार्थदर्शी
भद्राय देवि जगतां भवतीमवादीत्॥ ६॥

**भक्त्येति।** हे देवि मणिपादरक्षे रत्नपादुके, साधोः सुजनस्य भरतस्य रघुपतौ रामचन्द्रे तत्प्रसिद्धं त्वत्प्रार्थनं त्वद्याचनं भक्त्या परं विश्वासेनैव भवतु, परमार्थदर्शी यथार्थद्रष्टा मुनिर्वसिष्ठो जगतां भद्राय क्षेमार्थं भवतीं केनाशयेन हृदयेनावादीदुक्तवान्। यथार्थदर्शी वसिष्ठवचनात्त्वं स्वतः सर्वश्रेयस्करीति भावः। भक्तिकृतत्वं विधाय वसिष्ठाशयप्रश्नेन भक्तिकृतत्वनिषेधस्य तिरोहितत्वादाक्षेपालंकारः। 'आक्षेपोऽन्यो विधौ व्यक्ते निषेधे च तिरोहिते' इति लक्षणम्। जगद्भद्रार्थत्वं श्रीरामायणे वसिष्ठेनोक्तं एते प्रयच्छेति॥

रामे वनं व्रजति पङ्क्तिरथे प्रसुप्ते
राज्यापवादचकिते भरते तदानीम्।
आश्वासयेत्क इह कोशलवासिनस्ता-
न्सीतेव चेत्त्वमपि साहसवृत्तिरासीः॥ ७॥

**राम इति।** हेपादुके, रामे रामचन्द्रे वनं काननम्। 'अटव्यरण्यं विपिनं गहनं काननं

वनम्' इत्यमरः व्रजति सति प्राप्ते सति । पङ्क्तिरथे दशरथे । 'पङ्क्तिविंशति-' आदिसूत्रेण दशसंख्यार्थे निपातनात्पङ्क्तिशब्दस्य दशपर्यायत्वम् । प्रसुप्ते दीर्घनिद्रां गते, भरते राज्यापवादेन पितृभ्रातृविरोधे राज्यमाप्तोऽयमिति जनवादेन चकिते भीते सति, तदानीं तादृशापत्समये सीतेव जानकीव त्वमपि साहसवृत्तिः । रामाज्ञातिलङ्घनरूपदुष्करव्यापारा आसीश्चेत्तानापन्नान् कोशलवासिनोऽयोध्यावासिनो जनानिति शेषः । क इवाश्वासयेत् को-वा सान्त्वयेत् । नकोऽपीत्यर्थः । सीतापेक्षयापि त्वं पारतन्त्र्यवतीति भावः । सीतेव तत्त्वसा-हसवृत्तित्वे संभाविते कोशलवासिजनस्याश्वासनाभावसंभावकथनात्संभावनालंकारः ॥

पादावनि प्रभवतो जगतां त्रयाणां
रामादपि त्वमधिका नियतं प्रभावात् ।
नो चेत्कथं नु भरतस्य तमेव लिप्सोः
प्रत्यायनं परिपणं भवती भवित्री ॥ ८ ॥

**पादावनीति** । हे पादावनि, त्रयाणां जगतां लोकानां प्रभवतः प्रभो रामादपि प्रभावात्त्वमधिका इत्येतन्नियतं निश्चितम् । नोचेत्तथा न यदि तं राममेव लिप्सोः काङ्क्षतो भरतस्य भवतीं त्वं प्रत्यायनं रामागमने विश्वासहेतुः परिपणं मूलधनम् । 'नीवी परिपणं मूलधनम्' इत्यमरः । कथं भवित्री भवेत् । लोकेऽधमर्णोऽधिकमूलधनमुत्तमर्णे निक्षिप्य यत्किंचिद्व्यवहारायाददते तद्वदत्रापि द्रष्टव्यम् । रामादाधिक्यसंभावनादुत्प्रेक्षा । सा चोत्त-रार्धोक्तसंभावनालंकारोत्तम्भितेति तयोरङ्गाङ्गीभावेन संकरः ॥ ८ ॥

मन्ये नियुज्य भवतीं मणिपादरक्षे
पार्ष्णिग्रहस्य भरतस्य निवारणार्थम् ।
रत्नाकरं स खलु गोष्पदयन्विजिग्ये
रामः क्षणेन रजनीचरराजधानीम् ॥ ९ ॥

**मन्येति** । हे मणिपादरक्षे, स रामः पार्ष्णिग्रहस्य पार्ष्णौ गुल्फाधःप्रदेशे ग्रह आग्रहो यस्य । स्वप्रवृत्तिविरोधाय पश्चादागतस्येति यावत् । भरतस्य निवारणार्थे निवा-रणाय भवतीं त्वां नियुज्य प्रेर्य रत्नाकरं समुद्रं गोष्पदयन् खुरपरिमितदेशीकुर्वन् । अयत्ने-नोल्लङ्घ्येति यावत् । राक्षसराजधानीं लङ्कां क्षणेनाल्पकालेन विजिग्ये विजितवानिति मन्ये । उत्प्रेक्षा । त्वया भरतेऽनिवर्तिते रामस्य लङ्काजयप्रतिबन्धो भवेदिति भावः ॥

पादावनि प्रभुतरानपराधवर्गा-
न्सोढुं क्षमा त्वमसि मूर्तिमती क्षमेव ।
यत्त्वां विहाय निहताः परिपन्थिनस्ते
देवेन दाशरथिना दशकण्ठमुख्याः ॥ १० ॥

**पादावनीति।** हे पादावनि, प्रभुतरानत्यन्तमधिकानपराधवर्गानसह्यापचारसमूहानपि सोढुं क्षमितुं क्षमा शक्ता त्वं मूर्तिमती विग्रहवती क्षमेव क्षान्तिरिवासि। यद्यतो देवेन प्रभुणा दाशरथिना रामेण त्वां विहाय भरताय दत्वा दशकण्ठमुख्यास्ते परिपन्थिनो रावणादयः शत्रवो निहता हिंसिताः। तदा त्वमसि चेत्तेषामप्यपराधाः सह्याः स्युरिति भावः। रावणादिवधस्य पादुकासांनिध्याभावहेतुत्वोत्प्रेक्षणाद् हेतूत्प्रेक्षालंकारः॥

वाक्ये गरीयसि पितुर्विहितेऽप्यतृष्ण्या
मातुर्मनोरथमशेषमवन्ध्ययिष्यन्।
मन्ये तदा रघुपतिर्भरतस्य तेने
मातस्त्वयैव मणिमौलिनिवेशलक्ष्मीम्॥ ११॥

**वाक्य इति।** हे मातः पादुके, रघुपती रामस्तदा चित्रकूटावस्थानसमये गरीयस्यतिमहनीये पितुर्दशरथस्य वाक्येऽरण्यगमनार्थके वचने विहितेऽप्यर्थतोऽनुष्ठितेऽप्यतृष्ण्याभिलाषाशान्त्या अशेषं कृत्स्नं मातुः कैकेय्या मनोरथं भरताभिषेकाभिलाषमवन्ध्ययिष्यन्सफलीकरिष्यन् भरतस्य त्वयैव मणिमौलिनिवेशलक्ष्मीं रत्नकिरीटनिक्षेपजातशोभां तेने कृतवान्। पादुकाया भरतकिरीटोत्प्रेक्षणात्स्वरूपोत्प्रेक्षा। 'ततः शिरसि कृत्वा तु पादुके भरतस्तदा। आरुरोह रथं हृष्टः शत्रुघ्नेन समन्वितः॥' इति भरतस्य शिरसा पादुकावहनमुक्तम्॥

पादाम्बुजाद्विगलितां परमस्य पुंस-
स्त्वामादरेण विनिवेश्य जटाकलापे।
अङ्गीचकार भरतो मणिपादरक्षे
गङ्गाधिरूढशिरसो गिरिशस्य कान्तिम्॥ १२॥

**पादेति।** हे मणिपादरक्षे, भरतः परमस्य पुंसो रामस्य त्रिविक्रमस्य यस्य पदाम्बुजाद्विगलितां विनिर्गतां त्वां जटाकलापे जटासमूहे आदरेण प्रीत्या निवेश्य गङ्गया दिव्यसरिताधिरूढं शिरो यस्य तस्य गिरिशस्य शिवस्य कान्तिं शोभामङ्गीचकाराङ्गीकृतवान्। रुद्रशिरसि गङ्गेव भरतशिरसि त्वमिति भावः। उपमालंकारः॥

अविकलमधिकर्तुं रक्षणे सप्तलोक्या
रघुपतिचरणेन न्यस्तदिव्यानुभावाम्।
अभजदु भरतस्त्वामञ्जसा पादरक्षे
मणिमुकुटनिवेशत्यागधन्येन मूर्ध्ना॥ १३॥

**अविकलमिति।** हे पादरक्षे, भरतः सप्तलोक्या मह्यादिसप्तलोकसमाहारस्य रक्षणे पालनेऽविकलं यथातथाधिकर्तुमधिकारीभवितुं रघुपतिचरणेन रामपादे न्यस्तो दिव्यो-

ऽनुभावः प्रभावा यस्यास्तां त्वां मणिमुकुटनिवेशस्य रत्नकिरीटनिवेशस्य त्यागेन परिहारेण धन्येन पुण्येन मूर्ध्ना । मुकुटे सति शिरसि साक्षात्पादुकासंबन्धो न स्यात् । अत्रसाह्वाया-भजत् । वृत्तं मालिनी । प्रेयोऽलंकारः ॥

इयमविकलयोगक्षेमसिद्ध्यै प्रजाना-
मलमिति भरतेन प्रार्थितामादरेण ।
रघुपतिरधिरोहन्नभ्यषिञ्चत्स्वयं त्वां
चरणनखमणीनां चन्द्रिकानिर्झरेण ॥ १४ ॥

**इयमिति** । हे पादुके, इयं पादुका प्रजानामविकलस्य समस्तस्य योगस्य च सिद्ध्यै निष्पत्त्या अलं समर्था । 'एते हि सर्वलोकस्य योगक्षेमं विधास्यतः' इति भरतोक्तिः । इत्येवंप्रकारेणादरेण प्रार्थितां याचितां त्वां रघुपतिरधिरोहन् चरणनखानामेव मणीनां चन्द्रिकानिर्झरेण कान्तिप्रवाहेण स्वयमभ्यषिञ्चदभिषिक्तवान् । 'सोऽधिरुह्य नरव्याघ्रः पादुके ह्यवरुह्य च । प्रयच्छन्सुमहातेजा भरताय महात्मने ॥' इत्येतदत्रोदाहार्यम् । इद-मधिरोहणं पादुकाभिषेकार्थमित्युत्प्रेक्षते ॥

प्रणयिनि पदपद्मे गाढमाश्लिष्यति त्वां
विधिसुतकथितं तद्वैभवं ते विदन्तः ।
अनुदिनमृषयस्त्वामर्चयन्त्यग्न्यगारे
रघुपतिपदरक्षे रामगिर्याश्रमस्थाः ॥ १५ ॥

**प्रणयिनीति** । हे रघुपतिपदरक्षे, प्रणयिनि पादुकाविषये प्रेमवति, पदपद्मे रघुपति-पादारविन्दे त्वां गाढमाश्लिष्यति सत्यालिङ्गमाने सति । पादुकाधिरोहणसमय इत्यर्थः । विधिसुतेन वसिष्ठेन कथितं तत्प्रसिद्धं ते तव वैभवं विदन्तो जानानाः । 'एते प्रयच्छ संहृष्टः पादुके हेमभूषिते । अयोध्यायां महाप्राज्ञ योगक्षेमकरे तव ॥' इति वशिष्ठवच-नमनुसंधेयम् । रामगिर्याश्रमस्थाश्चित्रकूटाश्रमवासिन ऋषयो मन्त्रद्रष्टारोऽग्न्यगारेऽग्नि-होत्रगृहे अनुदिनं दिने दिने त्वामर्चयन्ति त्वत्प्रतिकृतिं कृत्वा पूजयन्ति । त्वामित्यत्र 'इवे प्रतिकृतौ' इति विहितस्य कनो देवपथादित्वाल्लोपः । प्रेयोऽलंकारः । अत्र 'प्रणयिनि पदपद्मे गाढमाश्लिष्यसि त्वम्' इति पाठे तु रघुपतिचरणारविन्दमप्याप्यालिङ्गसि रामार्चा-विग्रहचरणे श्लिष्टा वर्तसे । अधिरूढरामविशिष्टत्वेन पादुकामर्चयन्ति ऋषय इति भावः ॥

नियतमधिरुरोह त्वामनाधेयशक्तिं
निजचरणसरोजे शक्तिमाधातुकामः ।
स कथमितरथा त्वां न्यस्य रामो विजह्रे
दृषदुपचितभूमौ दण्डकारण्यभागे ॥ १६ ॥

नियतेति । हे पादुके, रामो निजचरणसरोजे शक्तिं सामर्थ्यमाधातुमारोपयितुं कामो यस्य सः सन् । अनाधेया स्वतःसिद्धा शक्तिर्यस्यास्तां त्वामधिरुरोहारूढः । नियतमित्युत्प्रेक्षा । रामः स्वपादे शक्तिमाधातुमेव त्वामारूढो न तु त्वयि शक्तिमाधातुमिति भावः । तत्र हेतुमाह । इतरथा अन्यथा स्वचरणयोः शक्त्यनाधाने स रामः त्वां न्यस्य भरते निक्षिप्य दृषद्भिः शिलाभिरुपचिता निबिडा भूमिर्यस्मिंस्तस्मिन् दण्डकारण्यस्य भागे प्रदेशे कथं विजहे विलाससंचारं कृतवान् । पादुकया विना शिलाभूमिसंचारस्य दुर्घटत्वादिति भावः । पादुकाशक्त्यग्रहणे वनसंचारानुपपत्तिकथनेन पूर्वोक्तोत्प्रेक्षासमर्थनात्काव्यलिङ्गम् । तयोः संकरः ॥

रघुपतिपदपद्माद्रत्नपीठे निवेष्टुं
भरतशिरसि लग्नां प्रेक्ष्य पादावनि त्वाम् ।
परिणतपुरुषार्थः पौरवर्गः स्वयं ते
विधिमभजत सर्वो बन्दिवैतालिकानाम् ॥ १७ ॥

रघुपतीति । हे पादावनि, रघुपतिपदपद्माद्रत्नपीठे रत्नसिंहासने निवेष्टुमासितुं भरतशिरसि लग्नां सक्तां त्वां प्रेक्ष्य परिणतः परिपक्वः पुरुषार्थोऽर्थकामादिरूपो यस्य सः । सर्वः समस्तः पौराणां वर्गः समूहः स्वयं ते तव बन्दिनां स्तुतिपाठकानां वैतालिकानां सुप्तराजोद्बोधकानां च । 'बन्दिनः स्तुतिपाठकाः', 'वैतालिका बोधकराः' इत्युभयत्रामरः । विधिं कृत्यमभजत । बन्दिवैतालिकवद्बहुशः स्तुतिं कृतवानिति भावः । अन्यवस्तुवृत्तेरन्यत्र वर्णनान्निदर्शनाभेदः । 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इति लक्षणम् ॥

अनन्यराजन्यनिवेशनिष्ठां चकार पृथ्वीं चतुरर्णवान्ताम् ।
भ्रातुर्यियासोर्भरतः सदा त्वां मूर्ध्ना वहन्मूर्तिमतीमिवाज्ञाम् ॥ १८ ॥

अनन्येति । हे पादुके, भरतो यियासोर्यातुमिच्छतो भ्रातुः सहजस्य रामस्य मूर्तिमतीं विग्रहवतीमाज्ञामिव निर्देशमिवेति स्वरूपोत्प्रेक्षा । त्वां मूर्ध्ना वहन्सन् चत्वारोऽर्णवा अन्ता अवधयो यस्यास्तां पृथ्वीमन्यराजानां निदेश आज्ञायां तिष्ठतीति तथोक्ता सा न भवति या ताम् । स्वाज्ञैकवशंवदामिति यावत् । चकार । शिरसा पादुकावहनस्य पृथ्वीशासनहेतुत्वकथनात्काव्यलिङ्गमलंकारः ॥

यद्भ्रात्रे भरताय रङ्गपतिना रामत्वमातस्थुषा
नित्योपास्यनिजाङ्घ्रिनिष्क्रियतया निश्चित्य विश्राणितम् ।
योगक्षेमवहं समस्तजगतां यद्गीयते योगिभिः
पादत्राणमिदं मितंपचकथामह्नाय मे निह्नुताम् ॥ १९ ॥

यदिति । यत्पादत्राणं यत्पादुकायुगलं रामत्वमातस्थुषा प्राप्तवता रङ्गपतिना

श्रात्रे भरताय नित्योपास्ययोर्निजयोरङ्घ्र्योर्निष्क्रयतया मूल्यतया निश्चित्य निर्णीय विश्राणितं । यद्योगिभिर्वशिष्ठाद्यैः ऋषिभिः समस्तजगतां योगक्षेमयोर्वहं धारकम् । वहतेः पचाद्यच् । गीयते गण्यते । तदिदं पादत्राणं मे मम मितंपचकथां मितंपच इति कदर्यत्वजनितापकीर्तिम् । 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः' इत्यमरः । अह्नाय झटिति निह्नुतामपनयतु । 'ह्नुङ् अपनयने' लोट् । रामाङ्घ्रिनिष्क्रयत्वजगद्योगक्षेमवहत्वयोर्विशेषणयोः स्वरक्षणे साभिप्रायत्वात्परिकरालंकारः । 'अलंकारः परिकरः साभिप्राये विशेषणे' इति लक्षणम् । शार्दूलविक्रीडितं वृत्तम् ॥

भरतस्येव ममापि प्रशमितविश्वापवाददुर्जाता ।
शेषेव शिरसि नित्यं विहरतु रघुवीरपादुके भवती ॥ २० ॥

**भरतस्येति** । हे रघुवीरपादुके, भवती भरतस्येव ममापि प्रशमितः विश्वापवादो लोककर्तृकपरीवाद एव दुर्जातं दुष्कर्म यया सा सती । शिरसि । मे इत्यनुषङ्गः । शेषेव शेषापर इव नित्यं लग्ना सती विहरतु । आस्तामिति यावत् । उपमालंकारः ॥

इति श्रीरङ्गनाथपादुकासहस्रपरीक्षायां समर्पणपद्धतिश्चतुर्थी ॥

---

पञ्चमी पद्धतिः ।

अथास्यां पद्धत्यां भरतगृहीतायाः पादुकायाश्चित्रकूटपर्वतादयोध्याप्रस्थानसमयदृश्यान् गुणानवलम्ब्य स्तौति—

प्रशस्ते रामपादाभ्यां पादुके पर्युपास्महे ।
आनृशंस्यं ययोरासीदाश्रितेष्वनवग्रहम् ॥ १ ॥

**प्रशस्त इति** । रामपादाभ्यां दाशरथिचरणाभ्यां दाशरथिचरणावपेक्ष्य । 'पञ्चमी विभक्ते' इति निर्धारणाश्रये पञ्चमी । प्रशस्ते गुणवत्यौ पादुके कर्मणी पर्युपास्महे नैरन्तर्येण भजामः । ययोः पादुकयोराश्रितेषु विषयेष्वनवग्रहं प्रतिबन्धहीनमानृशंस्यं मार्दवम् । दयेति यावत् । आसीत् । जनशोकमवेक्ष्यापि रामपादयोरनिवृत्तयोः सतोः पादुके दयया स्वयं निवृत्ते इति भावः । अश्रितविषयानृशंस्येन वाक्यार्थेन पादुकयोः प्रशस्तिमुपपाद्योपास्यत्वसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

भृशातुरसहोदरप्रणयखण्डनस्वैरिणा
पदेन किमनेन मे वनमिहावनादिच्छता ।
इतीव परिहाय तन्निववृते स्वयं यत्पुरा
पदत्रमिदमाद्रिये धृतजगत्त्रयं रङ्गिणः ॥ २ ॥

**भृशेति** । यत् पदत्रं पुरा पूर्वं भृशातुरस्यातिदीनस्य सहोदरस्य भरतस्य प्रणयखण्डने याच्ञाभङ्गे 'विस्रम्भयाच्ञाप्रेमाणः प्रणयाः' इत्यमरः । स्वैरिणा स्वच्छन्देन अवनाद-

काननात् रक्षणाच्च अवनं परित्यज्य वनं काननमिच्छतानेन पदेन चरणेन मे मम वहने किं प्रयोजनम् । न किंचिदपीत्यर्थः । इतीवानेन हेतुनेव तत्पदं परिहाय विहाय स्वयं निवृत्ते निवृत्तम् । धृतं जगतां त्रयं येन तत् । इदं श्रीरङ्गिणः श्रीरङ्गनाथस्य पदत्रमाद्रिये प्रीत्या सेवे । प्रेयोऽलंकारः । स चोत्प्रेक्षानुप्राणित इति तयोरङ्गाङ्गिभावेन संकरः ॥

दशवदनविनाशं वाञ्छतो यस्य चक्रे
दशरथमनघोक्तिं दण्डकारण्ययात्रा ।
स च भरतविमर्दे सत्यसन्धस्त्वयासी-
द्रघुपतिपदरक्षे राजधानीं प्रयान्त्या ॥ ३ ॥

**दशवदनेति** । हे रघुपतिपदरक्षे, दशवदनस्य रावणस्य विनाशं ध्वंसं वाञ्छत इच्छतो यस्य रामस्य दण्डकारण्ययात्रा दण्डकवनप्रस्थानं दशरथमनघोक्तिं चक्रे अनपायवाक्यतया कृतवती । स च रामोऽपि भरतविमर्दे भरतकर्तृकनिर्बन्धे सति राजधानीमयोध्यां प्रयान्त्या त्वया, सत्या यथार्था सन्धा प्रतिज्ञा यस्य स आसीत् । अन्यथा भरतनिर्बन्धे रामे निवृत्ते तस्य प्रतिज्ञाभङ्गः स्यादिति भावः । गृहीतमुक्तरीतिकथनादेकावल्यलंकारः॥

अभ्युपेतविनिवृत्तिसाहसा देवि रङ्गपतिरत्नपादुके ।
अत्यशेत भवती महीयसा पारतन्त्र्यविभवेन मैथिलीम् ॥ ४ ॥

**अभ्युपेतेति** । हे देवि, रङ्गपतिरत्नपादुके, अभ्युपेतमङ्गीकृतं विनिवृत्तौ वनाद्राज्यागमने साहसं हठात्कारो यया सा । भवती महीयसा महत्तरेण पारतन्त्र्यरूपेण विभवेनातिशयेन मैथिलीं 'किं त्वा मन्यत वैदेहः पिता मे मिथिलाधिपः । रामजामातरं प्राप्य स्त्रियं पुरुषविग्रहम्' इत्याद्युपालम्भपूर्वकं वनमेव गच्छन्तीं सीतामत्यशेतातिशयितवती । त्वया रामाज्ञा नातिलङ्घितेति भावः । गुणोत्कर्षेणोपमानातिरस्कारात्प्रतीपभेदः ॥

अव्याहतां रघुपतेर्वहतः प्रतिज्ञा-
मंसाधिरोहणरसे विहते धरण्याः ।
प्रादान्निवृत्त्य भवती मणिपादरक्षे
स्पर्शं पदेन विगतव्यवधानखेदम् ॥ ५ ॥

**अव्याहतामिति** । हे मणिपादरक्षे, अव्याहतां व्याघातरहितां प्रतिज्ञां वहतो रघुपते रामस्य अंसाधिरोहणरसे भुजशिखरारोहणेच्छायां धरण्या भूम्या विहते सति प्रतिबन्धे सति भवती त्वं तस्यै धरण्यै विगतः व्यवधानेन विधानेन (जनितः) खेदो दुःखं यस्य तम् । पदेन रामाङ्घ्रिणा सह स्पर्शं संसर्गं प्रादाद्दत्तवती । भूम्या रामांससंबन्धे

गतेऽपि त्वन्निवर्तनेन निर्बाधं रामपदसंबन्धो जातः स च त्वदधीन इति भावः । पादुकानिवृत्तेश्चिरविरहितभूमिसुखप्रदानत्वोत्प्रेक्षणाद्गम्योत्प्रेक्षा ॥

मन्त्राभिषेकविरहाद्भजता विशुद्धिं
संस्कारवर्जनवशादभिसंस्कृतेन ।
मूर्ध्ना निनाय भरतो मणिपादुके त्वां
रामाज्ञया विनिहितामिव राज्यलक्ष्मीम् ॥ ६ ॥

मन्त्रेति । हे मणिपादुके, भरतो मन्त्राभिषेकस्य मन्त्रपूर्वकस्नापनस्य विरहादभावेन विशुद्धिं शुचितां भजता संस्कारस्य अभ्यङ्गाद्यतिशयाधायककर्मणो वर्जनवशात्त्यागवशेन अभिसंस्कृतेनातिशयवता मूर्ध्ना अभ्यङ्गादिसंस्कारे मन्त्राभिषेके च सति रामभक्त्यभावादशुद्धिर्निकर्षश्च स्यादिति भावः । त्वां भवतीं रामस्याज्ञया विनिहितां निवेशितां राज्यलक्ष्मीं राज्यशोभामिव निनाय नीतवान् । पूर्वार्धे कारणाभावेऽपि शुद्ध्यादिकथनाद्विभावनालंकारः । उत्तरार्धे राजलक्ष्मीत्वसंभावनादुत्प्रेक्षा ॥

रक्षार्थमस्य जगतो मणिपादरक्षे
रामस्य पादकमलं समये त्यजन्त्योः ।
किं दुष्करं तव विभूतिपरिग्रहो वा
किं वा विदेहदुहितुः कृपणा दशा सा ॥ ७ ॥

रक्षार्थमिति । हे मणिपादरक्षे, अस्य जगतः लोकस्य रक्षणार्थं समये अरण्यगमनकाले, रावणाहरणकाले च रामस्य पादकमलं त्यजन्त्योर्युवयोः पादुकासीतयोः किं दुष्करं कस्याः किं कार्यं दुःखेनापि कर्तुमशक्यम् । सामान्येनोक्तं विशिनष्टि—तव विभूतेः कोसलैश्वर्यस्य परिग्रहोऽङ्गीकारो वा दुष्करः । किं वा उतार्थे निपातसमुदायः । विदेहदुहितुर्जानक्याः सा कृपणा दीना दशावस्था वा दुष्कराजनि । अभिमतविश्लेषदशायां सुखहेतुत्वानुभावस्यात्यसह्यतायाः । सर्वसाक्षितया तव विभूतिपरिग्रहो दुष्कर इति निर्णयः सुलभ इति भावः । संदेहालंकारः ॥

सीतासखस्य सहसा चरणारविन्द-
भक्त्या नते कृतपदा भरतोत्तमाङ्गे ।
आरुह्य नागमभितो भवती वितेने
मायूरचामरभरं मणिरश्मिजालैः ॥ ८ ॥

सीतेति । हे मणिपादरक्षे, भवती सीतासखस्य रामस्य चरणारविन्दात् पादकमलात् सहसा सपदि भक्त्या नते नम्रे भरतस्योत्तमाङ्गे कृतं पदं यया सा सती । अनेन भरतशिरसो गजारोहाधिष्ठत्वं प्रतीयते । 'प्रदक्षिणं चैव चकार राघवं स पादुके चोत्तमनागमू-

धनि' इति रामायणे। नागं शत्रुंजयं नाम रामौपवाह्यं गजमारुह्य मणीनां खनिष्ठानां नानावर्णरत्नानां रश्मिजालैः किरणसमूहैर्नागमभितो नागस्योभयोः पार्श्वयोः। 'ततोन्यत्रापि दृश्यते' इति द्वितीया। मायूरस्य मयूरसंबन्धिनो वर्णनिर्मितस्येति यावत्। चामरस्य वालव्यजनस्य भरं गौरवं वितेने कृतवती। शबलाः पादुकारत्नकिरणाः नीलकण्ठपिच्छचामरत्वेन वर्ण्यन्ते। तथा च गजारोहणे पादुकान्येषां सार्वभौमत्वं न स्फुटीभवति। तेषां पृथक् सिद्धान्यसामान्यचामरसापेक्षत्वादिति भावः। अकारणाच्चामररूपकार्यवर्णनाद्विभावनाभेदः। 'अकारणात्कार्यजन्मा चतुर्थी स्याद्विभावना' इति लक्षणम्॥

मूर्ध्ना मुकुन्दपदरक्षिणि बिभ्रतस्त्वा-
माविर्मदस्य रघुवीरमदावलस्य।
आमोदिभिः सपदि दानजलप्रवाहै-
र्लेभे चिराद्वसुमती रुचिरं विलेपम्॥ ९॥

**मूर्ध्नेति।** हे मुकुन्दपदरक्षिणि, त्वां बिभ्रतः, अत एवाविर्मदस्याविर्भूतदानजलस्य रघुवीरसंबन्धिनो मदावलस्य गजस्यामोदिभिः संजातगन्धैः। 'आमोदो गन्धहर्षयोः' इत्यमरः। दानजलप्रवाहैर्मदजलप्रवाहै रुचिरं रम्यं विलेपमालेपनं वसुमती भूमिः चिराद्दीर्घकालेन भेजे। रामादपि पादुकायां शत्रुंजयभूम्योर्हर्षातिशयोऽभूदिति भावः। मदजलैरकारणैर्विलेपनरूपकार्यवर्णनात्पूर्ववद्विभावनाभेदः॥

आशाः प्रसाधयितुमम्ब तदा भवत्यां
दैवादकाण्डशरदीव समुत्थितायाम्।
स्तोकावशेषसलिलाः सहसा बभूवुः
साकेतयौवतविलोचनवारिवाहाः॥ १०॥

**आशा इति।** हे अम्ब, भवत्यां त्वयि तदा प्रतिप्रयाणकाले आशा जनतृष्णा दिशश्च। 'आशा तृष्णापि' 'आशाश्च हरितश्च ताः' इत्यमरः। प्रसाधयितुं फलनिष्पत्त्या निर्वर्तयितुं कुमुदकाशादिभिः परिष्कर्तुं चाकाण्डशरदीवासमयप्राप्तशरत्काल इव समुत्थितायां सत्यां सहसा साकेतसंबन्धिनो यौवतस्यायोध्यासंबन्धिनो युवतीसमूहस्य विलोचनान्येव वारिवाहा मेघाः स्तोकावशेषाण्यल्पावशेषाणि सलिलानि येषां ते तथोक्ताः। बभूवुः। पादुकाप्रतिप्रयाणेऽयोध्यापुरयुवतीनां शोकाश्रूणि निर्मृष्टानीति भावः। श्लेषाङ्गकोत्प्रेक्षानुप्राणितरूपकालंकारः॥

अन्तेवसन्नचरमस्य कवेः स योगी
वन्यान्प्रगृह्य विविधानुपदाविशेषान्।

आतस्थुषीं रघुकुलोचितमौपवाह्यं
प्रत्युज्जगाम भवतीं भरतोपनीताम् ॥ ११ ॥

**अन्तेवसन्निति** । हे पादुके, अचरमस्य कवेर्वाल्मीकेरन्तेवसन् शिष्यः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । स प्रसिद्धो योगी भरद्वाजऋषिर्वन्यान्वने भवान्कन्दमूलफलादीन् विविधान्बहुप्रकारानुपदाविशेषानुपदाभेदान्प्रगृह्य गृहीत्वा भरतेनोपनीतामानीतां रघुकुलस्य रघुवंशस्योचितं योग्यमौपवाह्यं राजयोग्यगजम् । 'राजवाह्यस्त्वौपवाह्यः' इत्यमरः । आतस्थुषीमधिरूढवतीं प्रत्युज्जगामाधिजगाम । 'रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्' इति शास्त्रमनुसंदधानस्त्वां प्रत्युद्गतवानिति भावः । पादुकाप्रभावोपपादकस्य महापुरुषभारद्वाजचारित्रस्य वर्णनादुदात्तालंकारः । 'उदात्तमृद्धेश्वरितं श्लाघ्यं चान्योपलक्षणम्' इति लक्षणम् ॥

मातस्त्वदागमनमङ्गलदर्शिनीनां
साकेतपक्ष्मलदृशां चटुलाक्षिभृङ्गैः ।
वातायनानि सहसा शतपत्रितानि
जातानि तत्र वदनैर्मणिपादरक्षे ॥ १२ ॥

**मातरिति** । हे मातः हे अम्ब, हे मणिपादरक्षे, त्वदागमनरूपं मङ्गलं कल्याणं पश्यन्त्यो यास्तथोक्तानां साकेतपक्ष्मलदृशामयोध्यापुररमणीनां चटुलानि चञ्चलान्यक्षीणि नयनान्येव भृङ्गा अलयो येषां तैर्वदनैस्तत्र पुरे वातायनानि गवाक्षाः सहसा शतपत्रितानि संजातपद्मानीति । यद्वा शतपत्रवन्ति जातानि । 'तत्करोति' इति णिच् । णाविष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लुक्, कर्मणि क्तः । पादुकोत्सवप्रेक्षकपौरनारीवदनसंबन्धाद्गवाक्षाणां पद्मालंकरणोत्प्रेक्षणादुत्प्रेक्षा । अलंकारवाचकाभावाद्गम्योत्प्रेक्षा, चटुलाक्षिभृङ्गैरिति रूपणाद्रूपकसंकीर्णा ॥

साकेतसीम्नि भवती मणिपादरक्षे
माङ्गल्यलाजनिकरैरवकीर्यमाणा ।
कीर्त्याः स्वयंवरपतेर्भरतस्य काले
वैवाहिकी जननि वह्निशिखेव रेजे ॥ १३ ॥

**साकेतेति** । हे जननि मणिपादरक्षे, साकेतसीम्न्ययोध्याभागे काले प्रवेशकाले माङ्गल्यैः शुभे साधुभिः । 'तत्र साधुः' इति यत् । लाजनिकरैर्लाजसमूहैरवकीर्यमाणा भवती कीर्त्याः यशोरूपायाः स्त्रियाः स्वयंवरेण लब्धस्य पत्युः प्रियस्य भरतस्य वैवाहिकी विवाहप्रयोजनिका वह्निशिखेव ज्वलनज्वालेव रेजे बभौ । पादुकायां नीयमानायां भरतेनानपाया सुजन इति कीर्तिर्लब्धेति भावः । रत्नमयपादुकाया वैवाहिकवह्नित्वोत्प्रेक्षणात्स्वरूपोत्प्रेक्षा ॥

छत्रेन्दुमण्डलवती मणिपादुके त्वं
व्याधूतचामरकलापशरत्प्रसूना ।
सद्यो बभूविथ समग्रविकासहेतुः
साकेतपौरवनितानयनोत्पलानाम् ॥ १४ ॥

छत्रेति । हे मणिपादुके, छत्रं साम्राज्यातपत्रमेवेन्दुमण्डलं चन्द्रबिम्बमस्या अस्तीति तथोक्ता । व्याधूतानि कम्पितानि चामरकलापा वालव्यजनसमूहा एव शरत्प्रसूनानि काशकुसुमानि यस्याः सा त्वम् । सद्यः सपदि साकेतसंबन्धिनीनां पौरवनितानां नगरस्त्रीणां नयनानामेवोत्पलानां कुवलयानां समग्रे पुष्कले विकासे हेतुर्बभूविथ भूतवती । भूधातोर्लिड्मध्यमपुरुषैकवचनम् । पादुकादर्शनेनायोध्यापुरस्त्रीणामनवधिकहर्षोऽभूदिति भावः । पादुकायां शरत्त्वनिरूपणाच्छत्रादाविन्दुमण्डलत्वादिरूपणाच्चैकदेशविवर्तिरूपकमलंकारः ॥

प्रैक्षन्त वक्त्रैर्मणिपादरक्षे शत्रुंजयं शैलमिवाधिरूढाम् ।
रामाभिमानप्रतिपन्नहर्षैरुत्तानितैरुत्तरकोशलानाम् ॥ १५ ॥

प्रैक्षन्तेति । हे मणिपादरक्षे, उत्तरकोशलास्तद्देशवासिनस्तेषां शैलमिव स्थितं शत्रुंजयं गजमधिरूढां त्वां रामाभिमानेन रामाभेदाध्यवसायेन प्रतिपन्नः प्राप्तो हर्षो यैस्तैः । उत्तानितैरूर्ध्वमुखीकृतैर्वक्त्रैः प्रैक्षन्त अपश्यन् । प्रेयोलंकारः ॥

द्रष्टुं तदा राघवपादरक्षे सीतामिव त्वां विनिवर्तमानाम् ।
आसन्नयोध्यापुरसुन्दरीणामौत्सुक्यलोलानि विलोचनानि ॥ १६ ॥

द्रष्टुमिति । हे राघवपादरक्षे, तदा विनिवर्तमानां सीतामिव स्थितां त्वां द्रष्टुं प्रेक्षितुमयोध्यापुरसुन्दरीणां विलोचनान्यौत्सुक्येनेच्छातिरेकेण लोलानि चञ्चलान्यासन्नभूवन् । साम्राज्यासाधारणपरिजनपरिबर्हवत्त्वात्पादुकायां सीतासाम्यं सीतामिवेत्युपमा । तयानुप्राणितः प्रेयोलंकारः ॥

आस्थाय तत्र स्फुटबिन्दुनादं स्तम्बेरमं तादृशसंनिवेशम् ।
अदर्शयस्त्वं पुरमध्यभागे पादावनि त्वत्प्रणवाश्रयत्वम् ॥ १७ ॥

आस्थायेति । हे पादावनि, त्वं तत्र पुरमध्यभागेऽयोध्याया मध्यदेशे स्फुटा व्यक्ता, बिन्दवः सिध्मादिशारीरविकाराः । 'बिन्दुः सिध्मादिशारीरविकारे' इति नानार्थरत्नमाला । नादा बृंहितानि यस्य तम् । अन्यत्र स्फुटो व्यक्तो बिन्दुरनुस्वारः प्रणवे यो मकारस्तस्यानुस्वाररूपबिन्द्वात्मकत्वम् । ॐस्वाहेत्यादौ हलि 'मोनुस्वारः' इति विहितमस्ति तदालम्ब्येदमुक्तम् । 'अनुस्वारो ध्रुवो बिन्दुर्यष्टिश्चन्द्रार्ध उच्यते' इति पाद्मसंहितायाम् । नादः अर्धमात्रात्मकस्तारस्योपरि श्रूयमाणो ध्वनिविशेषः शास्त्रसंप्रतिपन्नः प्रणवमधिकृत्याद्याक्षरत्रयेऽपि वेदत्रयात्मकत्वमुक्त्वा श्रूयते यावसानेऽस्य चतुर्थी मात्रा सा सोम-

लोकः ॐकारः सा अथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निः मरुते विराडेकर्षिर्भास्वानिति तौ विन्दुनादौ यस्येति तादृशं संनिवेशं गजशास्त्रप्रसिद्धशुभावयवविनिवेशविशिष्टमन्यत्र मातृकाकोशप्रसिद्धलिपिरूपावस्थानविशिष्टं स्तम्बेरमं नागमास्थायारुह्य त्वत्प्रणवाश्रयत्वं त्वदीयप्रणवाकाररङ्गविमानाधारत्वम् । 'विमानं प्रणवाकारं वेदशृङ्गं महाद्भुतम् । श्रीरङ्गशायी भगवान् प्रणवार्थप्रकाशकः ॥' इति स्मृतिर्हि अदर्शयः दर्शितवती । श्लेषानुप्राणितो निदर्शनाभेदः । 'अपरां बोधनं प्राहुः क्रियया सत्सदर्थयोः' इति लक्षणम् ॥

दशग्रीवस्तम्बेरमदलनदुर्दान्तहृदये
विहारस्वाच्छन्द्याद्विशति रघुसिंहे वनभुवम् ।
स्ववात्सल्यक्रोडीकृतभरतशावेव भवती
निराबाधां पादावनि न विजहौ कोशलगुहाम् ॥ १८ ॥

दशग्रीवेति । हे पादावनि, दशग्रीवो रावण एव स्तम्बेरमो गजस्तस्य दलने पाटने दुर्दान्तमप्रतिबन्धप्रवृत्ति हृदयं मनो यस्य तस्मिन् रघौ रघुवंशजे रामे एव सिंहे । अनेन रामस्य महावीरत्वं व्यज्यते । विहारस्वाच्छन्द्यात्क्रीडायां स्वतन्त्रेच्छावत्त्वाद्वनभुवं विशति सति । भवती स्वस्य वात्सल्येन दयया क्रोडीकृतो भरत एव शावः शिशुर्यया सा सती निराबाधां निरुपद्रवां कोशलदेशरूपां गुहां गह्वरं न विजहावेव न विसृष्टवत्येव । अत्र पादुकायाः सिंहीत्वं कोशलदेशस्य दुराधर्षत्वं च प्रतीयते । पादुकासिंहीत्यनुक्त्या एकदेशविवर्तिरूपकमलंकारः ॥

कैकेयीवरदानदुर्दिननिरालोकस्य लोकस्य य-
त्राणार्थं भरतेन भव्यमनसा साकेतमानीयते ।
रामत्यागसहैरसह्यविरहं रङ्गक्षितीन्द्रस्य त-
त्पादत्राणमनन्यतन्त्रभणितेरापीडमीडीमहि ॥ १९ ॥

कैकेयीति । भव्यमनसा शुद्धचेतसा भरतेन कैकेय्या वरदानमेव रामविवासनरूपवरप्रदानमेव दुर्दिनं मेघच्छन्नमहस्तेन निरालोकस्य दर्शनहीनस्य च । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । लोकस्य जनस्य भुवनस्य च । 'लोकस्तु भुवने जने' इत्यमरः । त्राणार्थं रक्षणार्थं यत्पदत्राणं साकेतमयोध्यामानीयते आनीतम् । रामत्यागस्य रामविरहस्य सहैः सहिष्णुभिर्जनैरसह्यविरहमविसह्यवियोगम् । रामवियोगादपि पादुकावियोगो दुःसहः । अत एव पादुकानीतेति भावः । अनन्यतन्त्राया आत्माधीनाया भणितेः उक्तेः श्रुतेरिति यावत् । आपीडं शेखरं रङ्गक्षितीन्द्रस्य श्रीरङ्गनायकस्य तत्पादत्राणं ईडीमहि । प्रार्थने लिङ् । प्रेयोऽलंकारः ॥

समुपस्थिते प्रदोषे सहसा विनिवृत्य चित्रकूटवनात्।
अभजत्पुनर्जनपदं वत्सं धेनुरिव पादुके भवती ॥ २० ॥

**समुपस्थित इति**। हे पादुके, भवतीत्वं प्रदोषे प्रकृष्टे रामारण्यगमनरूपे दोषे रजनीमुखे च समुपस्थिते सति संनिहिते सति चित्रकूटवनाद्रामगिरिकाननादाश्चर्यशिखराद्वनाच्च सहसा शीघ्रं विनिवृत्य धेनुर्दोग्ध्री गौर्वत्समिव पुनर्जनपदं कोशलदेशमभजत प्रीत्या प्राप्तवती। पादुकायाः कोशलेषु निरुपाधिकवात्सल्यमिति भावः। धेनुसादृश्योक्तेरुपमालंकारः ॥

इति श्रीभारद्वाजकुलजलधिसुधाकरश्रीदेवाचार्यसूनुश्रीनिवासार्यविरचितश्रीरङ्गनाथपादुकासहस्रपरीक्षायां प्रतिस्थापनपद्धतिः पञ्चमी ॥

---

अथ अधिकारपरिग्रहपद्धतिः ॥

अथास्यां पद्धतौ पादुकायाः कोशलदेशाधिकारपरिग्रहे संभावितान्गुणानादाय स्तौति—

अधीष्टे पादुका सा मे यस्याः साकेतवासिभिः।
अन्वयव्यतिरेकाभ्यामन्वमीयत वैभवम् ॥ १ ॥

**अधीष्टे इति**। सा पादुका मे ममाधीष्टे अधिश्वरी भवति। 'अधीगर्थदयेशां कर्मणि' इति षष्ठी। यस्याः पादुकाया अन्वयव्यतिरेकाभ्यां सत्त्वासत्त्वाभ्यां साकेतवासिभिर्वैभवं विभुत्वमन्वमीयत। यस्याः साक्षात्संबन्धित्वेनानुमितम्। सेति पूर्वेणान्वयः। अयं भावः—प्रभुत्वं साक्षात्पादुकानिष्ठमेव तत्संबन्धाद्रामेऽपि संक्रान्तिवशादभूत्। यदपगमे रामो वनवासी बभूव। तामादाय भरतो विभुरभूत्। अतः पादुकासंबन्धिनि प्रतीयमानत्वात्तदसंबन्धिन्यप्रतीयमानत्वाच्च जपाकुसुमसंनिहितस्फटिकलौहित्यवत् पादुकाया अन्यत्र संक्रमितं, पादुकायां तु सांसिद्धिकमिति तदन्वयव्यतिरेकदर्शिभिः साकेतवासिजनैरनुमितमित्यनुमानालंकारः। तदनुप्राणितं 'अधीष्ट' इति प्रेयोलंकारः ॥

मोचितस्थिरचरानयत्नतः कोशलाञ्जनपदानुपास्महे।
येषु कांश्चन बभूव वत्सरान्दैवतं दनुजवैरिपादुका ॥ २ ॥

**मोचितेति**। अयत्नतः कर्मज्ञानादिसाधनानुष्ठानयत्नं विनैव मोचिता सूक्ष्मप्रकृत्या त्याजिता निःसंसारीकृताः स्थिराः स्थावराश्चरा जङ्गमाश्च यैस्तान्कोशलाञ्जनपदान् कोशलदेशानुपास्महे। भगवदुपासनापेक्षयापि कोशलोपासनमेवाकिंचन मोक्षहेतुत्वादादरणीयमिति भावः। तथात्वे हेतुमाह—येषु कोशलजनपदेषु दनुजवैरिणो रामस्य पादुका कांश्चन वत्सरांश्चतुर्दश वर्षाणि। 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। दैवतमाराधनीया बभूव। पादुकादेवताकत्वस्य वाक्यार्थस्योपासनं प्रति हेतुत्वात्काव्यलिङ्गमलंकारः ॥

साम्राज्यसंपदिव दासजनोचिता त्वं
रामेण सत्यवचसा भरताय दत्ता ।
स त्वां निवेश्य चरणावनि भद्रपीठे
पृथ्वीं बुभोज बुभुजे च यशोविभूतिम् ॥ ३ ॥

**साम्राज्येति** । हे चरणावनि, दासजनस्य भृत्यजनस्योचिता सेव्यतया योग्या, अन्यत्रोपभोगहेतुतया' । सम्राजो भावः साम्राज्यम् । तस्य या संपत्कनकपशुधान्यादिविभूतिः सेव त्वं सत्यवचसा रामेण भरताय दत्ता । स भरतस्त्वां भद्रपीठे सिंहासने निवेश्य पृथ्वीं भूमिं बुभोज ररक्ष यशोविभूतिं बुभुजे चानुबभूव च । 'भुजोऽनवने' इति 'भुज पालनाभ्यवहारयोः' इति धातोरवनभिन्नेऽर्थे आत्मनेपदम् । पूर्वार्धे उपमा, उत्तरार्धे समुच्चयः । 'बहूनां युगपद्भावभाजां गुम्फः समुच्चयः' इति लक्षणलक्षितक्रियान्वयप्रतिपादनात्तयोः परस्परनिरपेक्षत्वात्संसृष्टिः ॥

भोगाननन्यमनसां मणिपादुके त्वं
पुष्णासि हन्त भजतामनुषङ्गसिद्धान् ।
तेनैव नूनमभवद्भरतस्य साधो-
रप्रार्थितं तदिह राज्यमवर्जनीयम् ॥ ४ ॥

**भोगानिति** । हे मणिपादुके, त्वदन्यत्र त्वत्तोऽन्यत्र मनश्चेतो न विद्यते येषां ते तथोक्तानां भजतामाश्रितानामनुषङ्गसिद्धान् अनुषङ्गेणाप्रार्थितफलजननसामर्थ्येन सिद्धानवर्जनीयतयोपस्थितान् भोगान् सुखान् भावान् पुष्णासि वर्धयसि । हन्तेति हर्षे । तेनैव त्वदीयाप्रार्थितफलजननसामर्थ्येनैव साधोः साधुजनस्य भरतस्याप्रार्थितमयाचितं राज्यमवर्जनीयमत्याज्यमभवदभूत् । नूनमित्युत्प्रेक्षा । ईश्वरः प्रारब्धानुगुण्येन भजतां सुखदुःखानुभवं विदधाति । पादुका तु सुखानुभवमेव करोति न तु दुःखानुभवमिति भगवतोऽप्युत्कृष्टा पादुकेति भावः । भजतां पादुकाकर्तृकानुषङ्गिकफलजननेन हेतुना भरतानुषङ्गिकभोगस्य समर्थनात्काव्यलिङ्गमलंकारः ॥

रामप्रयाणजनितं व्यपनीय शोकं
रत्नासने स्थितिमती मणिपादरक्षे ।
पृथ्वीं निजेन यशसा विहितोत्तरीया-
मेकातपत्रतिलकां भवती वितेने ॥ ५ ॥

**रामेति** । हे मणिपादरक्षे, भवती रत्नासने रत्नमयसिंहासने स्थितिमती आसीना सती पृथ्वीं भूमिं सखीमिति योज्यम् । रामस्य रमणस्य प्रयाणेन वनप्रस्थानेन जनितमुत्पादितं शोकं शुचं व्यपनीय निरस्य निजेन स्वकीयेन यशसा कीर्त्या विहितं

कृतमुत्तरीयं संव्यानं यस्यास्ताम् । 'संव्यानमुत्तरीयं स्यात्' इत्यमरः । एकं साम्राज्यसूचकतया मुख्यमद्वितीयमातपत्रं छत्रमेव तिलकं चित्रकं यस्यास्तां च वितेने कृतवती । रमणवियोगेन दीनाश्रेयसी भूमिनायिका अनादृताच्छादनालंकारा पादुकया राज्यशोकापनोदनाच्छादनालंकारकल्पनादिभिरुपचर्यंत इति प्रतीयते । उत्तरीयतिलकरूपणसमेतत्वात्सखीत्यनूक्तेश्चैकदेशविवर्तिरूपकमलंकारः । रामपृथ्वीशब्दौ श्लिष्टौ ॥

रामाज्ञया परवती परिगृह्य राज्यं
रत्नासनं रघुकुलोचितमाश्रयन्ती ।
शुद्धां पदावनि पुनर्भवती वितेने
स्वातन्त्र्यलेशकलुषां भरतस्य कीर्तिम् ॥ ६ ॥

**रामाज्ञयेति** । हे पदावनि, रामाज्ञया परवती पराधीना राज्यं राजत्वं परिगृह्याङ्गीकृत्य रघुवंशयोग्यं रत्नमयमासनमाश्रयन्ती स्वातन्त्र्येण रामाज्ञातिलङ्घनेन हेतुना लेशकलुषामेकदेशकलङ्कितां भरतस्य कीर्तिं पुनः शुद्धामकलुषां वितेने । पादुकां पुरस्कृत्य राज्यपरित्राणाद्भरतस्य न पारतन्त्र्यहानिर्न यशोभङ्गश्चेति भावः । पूर्वं शुद्धायाः पश्चात्स्वातन्त्र्येणाकलुषाया भरतकीर्तेः पुनः स्वगुणभूतशुद्धिप्राप्तिकथनात्पूर्वरूपमलंकारः । 'पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्' इति लक्षणम् ॥

पौलस्त्यवीरवदनस्तबकावसाना-
त्पुष्पाणि दण्डकवनेष्वपचेतुमिच्छोः ।
रक्षाधुरं धृतवती मणिपादुके त्वं
रामस्य मैथिलसुतासहिते प्रचारे ॥ ७ ॥

**पौलस्त्येति** । हे मणिपादुके, पौलस्त्यस्य पुलस्त्यतनयस्य वीरस्य रावणस्य वदनान्येव स्तबको गुच्छस्तस्यावसानादवसानमुद्दिश्य आवसानादित्याङ्प्रश्लेषो बोध्यः । अवसानपर्यन्तमित्यर्थः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्युक्तेऽव्ययीभावनिमित्तकोऽभावो न । दण्डकवनेषु दण्डकारण्येषु पुष्पाण्यमरपूजोपयुक्तानि खरादिशिरोरूपाणीति गम्यते । वदनस्तबकेन तुल्यजातीयत्वादपचेतुमाहर्तुमिच्छोः काङ्क्षतो रामस्य मैथिलसुतासहिते सीतायुक्ते प्रचारे संचारे सति रक्षाया राज्यपरिपालनस्य धुरं जगदीक्षणभारम् । समासान्तविधेरनित्यत्वात् 'ऋक्पूरब्धूः' इत्यकारप्रत्ययो न । धृतवती । रामतत्पादुकाभ्यामन्यत्र निरुपद्रवतया राज्यरक्षणशक्तो नास्तीति भावः । प्रेयोऽलंकारः, पूर्वार्धे रूपकमलंकारः, तयोः परस्परनिरपेक्षत्वात्संसृष्टिः ॥

पादावनि प्रचलचामरवृन्दमध्ये
भद्रासनास्तरगता भवती विरेजे ।

आकीर्णदिव्यसलिले कटके सुमेरो-
रम्भोजिनीव कलहायितहंसयूथा ॥ ८ ॥

**पादावनीति ।** हे पादावनि, प्रचलानां परिचारकजनवीजनेन चञ्चलानां चामरवृन्दानां बालव्यजनानां मध्येऽन्तरा भद्रासनस्य सिंहासनस्यास्तरमुपर्याततं क्षौमं गता आश्रिता भवती । आकीर्णानि व्याप्तानि दिव्यानि दिविभवानि सलिलानि यस्मिंस्तस्मिन् । सुमेरोः कनकपर्वतस्य कटके नितम्बे कलहायितानि कलहं कृतवन्ति, 'शब्दवैर–' इत्यादिना कृतौ क्यङ्, ततः कर्तरि क्तः । हंसानां यूथानि कुलानि यस्याः सा । अम्भोजिनीव कमलिनीव रेजे । आसनास्तरणपादुकाचामराणां सुमेरुकनकदिव्यगङ्गाजलकमलिनीहंसैर्बिम्बप्रतिबिम्बभावनिर्देशेन यथासंख्यं सादृश्यं द्रष्टव्यम् । अनेन प्रेक्षकाश्चर्यकारित्वं व्यज्यते । अम्भोजिनीसादृश्यकथनादुपमालंकारः ॥

मान्ये रघूद्वहपदे मणिपादुके त्वां
विन्यस्य विग्रहवतीमिव राज्यलक्ष्मीम् ।
आलोलमक्षवलयी भरतो जटावा-
नालम्ब्य चामरमनन्यमनाः सिषेवे ॥ ९ ॥

**मान्य इति ।** हे मणिपादुके, अक्षवलयी जपवलयवान् जटावान् जटी भरतो मान्ये पूज्ये रघूद्वहस्य रामस्य पदे स्थाने सिंहासन इति यावत् । पाद इत्यपि प्रतीयते । विग्रहवतीं मूर्तिमतीं राज्यलक्ष्मीमिव त्वां विन्यस्य निवेश्य, आलोलं चञ्चलं चामरमालम्ब्य अनन्यमनाः संस्त्वदेकायतचित्तः सन् सिषेवे सेवितवान् । आराधकोऽलंकारासने भगवत्पादे पादुकां समर्प्यात्मीयं निवेद्याक्षवलयेन तन्मन्त्रमावर्तयंश्चामरमालम्ब्य सेवते तद्वदिति गम्यते । समासोक्तिः पूर्वार्धे उत्प्रेक्षा, उत्तरार्धे उदात्तम् । संसृष्टिः ॥

प्राप्ते दिवं दशरथे भरते विलक्षे
पर्याकुलेषु परमुत्तरकोशलेषु ।
त्वं चेदुपेक्षितवती क इवाभविष्य-
द्गोपायितुं गुहसखस्य विभोः पदं तत् ॥ १० ॥

**प्राप्त इति ।** हे पादुके, दशरथे दिवं प्राप्ते सति भरते विलक्षे लज्जावति सति उत्तरकोशलेषु परं भृशं पर्याकुलेषु भयव्यग्रेषु सत्सु त्वमुपेक्षितवती अनादृतवती चेद्गुहसखस्य गुहाभिधाननिषादाधिपतेर्मित्रस्य विभोः रामस्य तत्पदं स्थानं गोपायितुं रक्षितुं पदशब्दश्लेषेण पादुकाया एव पदरक्षकत्वमित्यपि गम्यते । क इव को वा भविष्यत् । न कोपीत्यर्थः । पादुकावदापन्नरक्षकः कोऽपि नास्तीति भावः । पादुकोत्प्रेक्षासंभावनेन रक्षकाभावसंभावनात्संभावनालंकारः ॥

भ्रातुर्यदम्ब विरहाद्भरते विषण्णे
दाक्षिण्यमाश्रितवती मणिपादुके त्वम् ।
आसीदशेषजगतां श्रवणामृतं त-
द्वाचालकाहलसहं बिरुदं तदा ते ॥ ११ ॥

**भ्रातुरिति** । हे मणिपादुके, भ्रातू रामस्य विरहाद्वियोगाद्विषण्णे दुःखिते भरते विषये त्वं दाक्षिण्यं सरलत्वं । 'दक्षिणे सरलोदारौ' इत्यमरः । आश्रितवतीति यत्तदाधिकारपरिग्रहसमयेऽशेषजगतां समस्तलोकानां श्रवणानां श्रोत्राणाममृतं पीयूषवदादरेण भोग्यं वाचालस्य शब्दायमानस्य काहलस्य कांस्यवादित्रविशेषस्य सहमर्हं बिरुदमसाधारणोत्कर्षावहचिह्नमासीत् । पादुकाविषण्णजनेषु दाक्षिण्यवती काहलेन तत्रत्या अवादयन्तेत्यर्थः । उदात्तमलंकारः ॥

राज्यं तदा दशरथादनु रामतः प्रा-
ग्बिभ्राणया चरणरक्षिणि वीतशोकम् ।
तुल्याधिकारभजनेन बभूव धन्यो
वंशस्त्वयाम्ब मनुवंशमहीपतीनाम् ॥ १२ ॥

**राज्यमिति** । हे चरणरक्षिणि, तदा मनुवंशमहीपतीनां वैवस्वतमनुकुलजातराजानां वंशोऽन्वयः दशरथादनु दशरथादनन्तरं । 'अपपरिबहिरञ्चवः पञ्चम्या' इति बहिःशब्दयोगे पञ्चमीसमासविधानाज्ज्ञापकात्क्वचिदन्यत्रापि पञ्चमी भवतीत्यनुशब्दयोगेऽपि पञ्चमी । अत एव 'कार्तिक्याः प्रभृत्याग्रहायिणीमासे' इति पातञ्जलभाष्यम् 'पुराणपत्रापगमादनन्तरम्' इति कालिदासप्रयोगश्चोपपद्यते । यद्वा 'ततः पश्चात् स्रंस्यते ध्वंस्यते च' इति पातञ्जलभाष्यात्पश्चादर्थकशब्दप्रयोगेऽपि क्वचित्पञ्चमी जायते । रामतः प्राक् । आद्यादित्वात्तसिः । राज्यं वीतखेदमपेतश्रमं यथा तथा बिभ्राणया त्वया तुल्याधिकारस्यैकराज्यप्रभुत्वस्य भजनेन धन्यो बभूव सुकृती बभूव । 'सुकृती पुण्यवान्धन्यः' इत्यमरः । स्वतःसिद्धस्य मनुवंशप्रभावस्य पादुकासंनिधानेनोत्कर्षकथनादनुगुणालंकारः । 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति लक्षणात् ॥

वर्षाणि तानि वृषलो न तपांसि तेपे
बालो न कश्चिदपमृत्युवशं जगाम ।
राज्ये तवाम्ब रघुपुङ्गवपादरक्षे
नैवापरं प्रतिविधेयमभूत्प्रसक्तम् ॥ १३ ॥

**वर्षाणीति** । हे अम्ब रघुपुङ्गवपादरक्षे, तव राज्ये त्वत्कर्तृकराजकर्मणि सति तानि वर्षाणि चतुर्दश वर्षाणि । अत्यन्तसंयोगे द्वितीया । वृषलः शूद्रस्तपांसि न तेपे न तप्तवान् ।

न कृतवानित्यर्थः । 'तपस्तपःकर्मकस्यैव' इति तपतेः कर्मवद्भावादात्मनेपदम् । कश्चिदपि बालो मृत्युवशं यमाधीनत्वं न जगाम न ममारेत्यर्थः । अपरं लवणासुरबाधादिकमन्यत्प्रतिविधेयं निरसनीयं प्रसक्तं नाभूत् । तादृशप्रसक्तिरेव नासीदित्यर्थः । उदात्तालंकारभेदः । रामराज्ये शूद्रतपोब्राह्मणबालमरणलवणासुराद्युपद्रवप्रसक्तिरस्ति, पादुकाराज्ये तु न तादृशप्रसक्तिरिति रामादपि पादुकाधिकारे उत्कृष्टे सति व्यतिरेको व्यज्यते इत्यलंकारेणालंकारध्वनिः ॥

विश्वं त्वदाश्रितपदाम्बुजसंभवायां
यस्यां प्रतिष्ठितमिदं मणिपादरक्षे ।
आसीदनन्यशरणा समये यथाव-
त्सापि त्वया वसुमती विहितप्रतिष्ठा ॥ १४ ॥

विश्वमिति । हे मणिपादरक्षे, विश्वमिदमयं प्रपञ्चस्त्वयाश्रिते पदाम्बुजे हरिचरणसरोजे संभव उत्पत्तिर्यस्यास्तस्याम् । 'पद्भ्यां भूमिः' इति श्रुतेः । यस्यां भूम्यां प्रतिष्ठितमभूत् । समये रामारण्यगमनकाले अनन्यशरणा त्वदन्येतररक्षकहीना सा वसुमती भूमिरपि त्वया यथावद्विहिता कृता प्रतिष्ठा स्थितिर्यस्याः सासीदभूत् । हरिचरणरूपत्वत्संबन्धिसंबन्धेन विश्वाधारकत्वं भूम्या नान्यथा । अत एव प्रयाणसमये त्वया धृतेति भावः । गृहीतमुक्तरीत्युक्तेरेकावल्यलंकारः ॥

प्रायेण रामविरहव्यथिता तदानी-
मुत्सङ्गमाश्रितवती तव राज्यलक्ष्मीः ।
तामेव देवि ननु जीवयितुं जलार्द्रा-
मङ्गीचकार भवतीं भरतोपनीताम् ॥ १५ ॥

प्रायेणेति । ननु देवि, नन्विल्यामन्त्रणे । 'विस्मयामन्त्रणे ननु' इत्यमरः । तदानीं राज्यलक्ष्मीः राज्यश्रीः रामस्य विरहेण वियोगेन व्यथिता विमोहिता सती तवोत्सङ्गमङ्कमाश्रितवती प्राप्तवती प्रायेण भूयसा हेतुना । उत्कटकोटिकसंशयरूपोत्प्रेक्षाव्यञ्जकोऽयं शब्दः । तदुक्तम् 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इति । यथा काचिद्विरहवती मोहात्कस्याश्चिदुत्सङ्गेऽवशा पतेत्तथेहापीति गम्यते । तां राज्यलक्ष्मीं जीवयितुमेव सप्राणयितुमेव भवती त्वं भरतेनोपनीतां भरतेन भक्त्योपनीतामाश्रितां जलार्द्रां हिमजलादिसिक्ताम् । 'धवित्रं तालवृन्तं स्यादुत्क्षेपो व्यजनं च तत् । जलार्द्रा स्यात्लेज्जनार्द्रम्' इति वैजयन्ती । उशीरकृततालवृन्तमङ्गीचकार वीजनायाभ्युपगतवती । प्रायेणेत्यत्राप्युत्प्रेक्षाद्योतनायोपयुज्यते तालवृन्ताङ्गीकारः राज्यलक्ष्मीजीवनहेतुतयोत्प्रेक्ष्यते । अनया च राज्यलक्ष्म्याः रामविमोहात्पादुकाङ्कपातोत्प्रेक्षोपलभ्यते इत्यङ्गाङ्गीभावेन संकरः । ततश्च पादुकायाः परमकरुणा व्यज्यते ॥

वीरव्रतप्रणयिनि प्रथमे रघूणां
प्राप्ते चिराय भरते व्रतमासिधारम्।
त्यक्त्वा पदावनि तदा विविधान्विहारा-
नेकासिकाव्रतमपूर्वमवर्तयस्त्वम्॥ १६॥

**वीरेति**। हे पादावनि, तदा रघूणां प्रथमे श्रेष्ठे रामे वीराणां युद्धोत्साहिनां संबन्धिनि व्रते प्रणयिनि शत्रूनहत्वा न निवर्तिष्ये इत्येवंरूपे प्रणयिनि प्रेमशालिनि सति भरते चिराय दीर्घकालमासिधारं खड्गनेमिसंबन्धि व्रतं प्राप्ते सति यथा खड्गधाराव्रत्तिर्नटः शिक्षावशात्सावधानो भवति तथा भरते दास्यवृत्तिनियमवतीत्यर्थः। त्वं विविधान्विहाराननेकप्रकारलीलासंचारान् त्यक्त्वा अपूर्वं पूर्वैरननुष्ठितमेकासिकायामचाञ्चल्येन स्थित्यां व्रतमेवं तिष्ठामीति नियमपरिग्रहमवर्तयः अनुष्ठितवती। पादुकाव्रतस्यान्यत्ववर्णनाद्भेदकातिशयोक्तिः। रामभरतावननुष्ठितचरमेव व्रतमनुष्ठितवन्तौ। त्वमननुष्ठितचरमेव व्रतमनुष्ठितवतीति व्यतिरेकः॥

काकुत्स्थपादविरहप्रतिपन्नमौनां
निस्पन्दतामुपगतां मणिपादरक्षे।
आश्वासयन्निव मुहुर्भरतस्तदानीं
शीतैरवीजयत चामरमारुतैस्त्वाम्॥ १७॥

**काकुत्स्थेति**। हे मणिपादरक्षे, भरतः काकुत्स्थपादयोः रामचरणयोः पूज्यस्य रामस्येत्यपि प्रतीयते। विरहेण वियोगेन प्रतिपन्नमौनां प्राप्तनियमाम्। दुःखादनालपन्तीमिति यावत्। निस्पन्दतां निश्चलभावमुपगताम्। एकत्रैवासीनामिति यावत्। त्वामाश्वासयन्निव श्रमापनयेन समुद्बोधयन्निव। शीतैर्हिमजलादिसंपन्नशैत्यैश्चामरमारुतैरवीजयत् वीजितवान्। वीजयतिश्चौरादिकोऽन्यो धातुरुन्नेयः। 'बहुलमेतन्निदर्शनम्' इति सूत्रात्। उन्नीतश्च कविकल्पद्रुमे 'वीजयतु कविजनः' इति। उपचाररूपं चामरवीजनमाश्वासनं इत्युत्प्रेक्ष्यते॥

यत्र क्वचिद्विहरतोऽपि पदारविन्दं
रक्ष्यं मया रघुपतेरिति भावयन्त्या।
निःशेषमेव सहसा मणिपादरक्षे
निष्कण्टकं जगदिदं विदधे भवत्या॥ १८॥

**यत्रेति**। हे मणिपादरक्षे, यत्र क्वचिद् यत्र कुत्रापि राज्ये वा वने वा विहरतो रघुपतेः रामस्य पदारविन्दं चरणकमलं मया रक्ष्यं पालनीयमिति भावयन्त्या चिन्तयन्त्या भवत्या (देशेऽधिकृतया) इदं जगन्निःशेषमेव निरवशेषं यथा तथैव निष्कण्टकं क्षुद्र-

शत्रुहीनं पदवेधकसूच्यग्ररहितं च विदधे विहितम् । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । अधिकारपरिग्रहेण पादुकया क्षुद्रशत्रवः सर्वत्र निराकृताः । तन्निराकरणमेव श्लेषेण सूच्यग्रनिराकरणत्वेनाध्यवसायः । सर्वत्र रामपादरक्षणार्थत्वेनोत्प्रेक्ष्यते ॥

रामं त्वया विरहितं भरतं च तेन
त्रातुं पदावनि तदा यदभूत्प्रतीतम् ।
रामानुजस्य तव चानु जगत्समस्तं
जागर्ति तेन खलु जागरणव्रतेन ॥ १९ ॥

राममिति । हे अम्ब हे मातः पादावनि, त्वया विरहितं वियुक्तं राममरण्यगमनकाले पादुकयोः रामेण भरताय दत्तत्वादिति भावः । तेन रामेण विरहितं वियुक्तं भरतं च त्रातुं रक्षितुं तदा त्वधिकरणकाले रामानुजस्य लक्ष्मणस्य तव च प्रतीतं प्रसिद्धं यज्जागरणमभूत्तेन जागरणव्रतेन निद्राक्षयनियमेन सावधानतानियमेन च । 'नियमो व्रतमस्त्री स्यात्' इत्यमरः । समस्तं जगज्जागर्ति । निर्बाधं वर्तत इत्यर्थः । पादुकाविषये जागरणव्रतशब्देन लक्षणया अधिकारोपयुक्तं सावधानत्वं बोध्यते । लक्ष्मणविषये तु निद्राक्षयो बोध्यते । 'तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम्' इति रामायणे । पादुकालक्ष्मणयोर्जागरणव्रतेन कारणेन जगज्जागरणकथनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः । अतीतस्य जगज्जागरणस्याद्याप्यनुभूयमानत्वकथनाद्भाविकमलंकारश्च । 'भाविकं भूतभाव्यार्थसाक्षात्कारस्य वर्णनम्' इति लक्षणम् ॥

अन्तःपुरे परिजनैः समयोपयातै-
रभ्यर्चिता भवति या विनयोपपन्नैः ।
सा कोशलेश्वरपदावनि भूपतीनां
संघट्टनं मुकुटपङ्क्तिभिरन्वभूस्त्वम् ॥ २० ॥

अन्तःपुर इति । हे कोशलेश्वरपादावनि, या त्वमन्तःपुरे शुद्धान्ते समयोपयातैस्तत्तद्राजोपचारकालागतैर्विनयोपपन्नैः परिजनैः परिचारकैरभ्यर्चिता पूजिता भवसि सा त्वं भूपतीनां राज्ञामन्वहं प्रणमतां मुकुटपङ्क्तिभिः संघट्टनं दृढघट्टनमन्वभूरनुभूतवती । अन्तःपुरपरिजनपरिचरणयोग्यसुकुमारतनुरपि पादुका जगद्रक्षणाय तादृशराजसमूहमुकुटसंघट्टनमपि सोढवतीति भावः । सुकुमाराया अननुरूपसंघट्टनवर्णनाद्विषमालंकारः ॥

प्राप्याधिकारमुचितं भुवनस्य गुप्त्यै
भद्रासनं भरतवन्दितमाश्रयन्त्या ।

मध्येऽवतीर्णमिव माधवपादरक्षे
मातस्त्वयापि मनुवंशमहीपतीनाम् ॥ २१ ॥

**प्राप्येति।** हे माधवपादरक्षे, भुवनस्य गुप्त्यै रक्षणाय उचितं योग्यमधिकारं कोशलदेशप्रभुत्वं प्राप्य भरतेन वन्दितं भद्रासनमाश्रयन्त्या त्वयापि मनुवंशमहीपतीनामिक्ष्वाकुप्रभृतीनां मध्येऽवतीर्णामिव यथा विष्णुना जगद्रक्षणाय मनुवंशेऽवतारः कृतस्तथा त्वयाप्यवतारः कृत इत्यर्थः। पूर्वं पादुकायास्तुल्याधिकारयोगान्मनुवंशमहीपतीनां पुण्यकृत्त्वमुक्तमिदानीं तु विष्णोरिव पादुकाया मनुवंशावतार उत्प्रेक्ष्यत इति न पौनरुक्त्यम्। उत्प्रेक्षालंकारः॥

राजासने रघुकुलोद्वहपादरक्षे
नीराजनं समभवत्समयोचितं ते।
श्लाघावशेन बहुशः परिघूर्णिताभिः
सामन्तमौलिमणिमङ्गलदीपिकाभिः ॥ २२ ॥

**राजेति।** हे रघुकुलोद्वहस्य रामस्य पादरक्षे, श्लाघावशेन त्वदीयकल्याणगुणाभिनन्दनवशेन बहुशो बहुवारम्। 'संख्यैकवचनाच्चवीप्सायाम्' इति शस् प्रत्ययः। परिघूर्णिताभिर्भ्रमिताभिः सामन्तानां संनिहितदेशनृपाणां मौलिमणय एव दीपिकास्ताभिः। ते तव राजासने सिंहासने समीपे समयोचितमधिकारपरिग्रहकालानुगुणं नीराजनमारार्तिकं समभवत्। राज्ञां श्लाघाशिरोघूर्णनानुषक्ततेजःप्रचुररत्नकिरीटघूर्णनं प्रथममधिकृतायाः पादुकायाः नीराजनत्वेनोत्प्रेक्ष्यत इत्युत्प्रेक्षा रूपकसंकीर्णा॥

पृथ्वीपतीनां युगपत्किरीटाः प्रत्यर्थिनां प्राणितुमर्थिनां च।
प्रापुस्तदा राघवपादरक्षे त्वदीयमास्थानिकभद्रपीठम् ॥ २३ ॥

**पृथ्वीपतीनामिति।** हे राघवपादरक्षे, प्रत्यर्थिनां परिपन्थिनां प्राणितुं जीवितुमर्थिनां याचमानानां च पृथ्वीपतीनां राज्ञां किरीटाः युगपत् एकदा तदा अधिकारकाले त्वदीयमास्थाने भवमास्थानिकं पादपीठं चरणनिक्षेपधिष्ण्यं प्रापुः प्राप्तवन्तः। पादुकाधीनेन भरतेन निहतानां शत्रूणां किरीटानां पादपीठे निक्षेपात् जीवितार्थिकिरीटानां प्रणामेन पादपीठसंबन्धाच्च युगपत्पादपीठप्राप्तिरिति भावः। सहोक्तिरलंकारः। 'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः' इति लक्षणात्॥

प्रणम्य रङ्गेश्वरपादरक्षे दूरोपनीतैरुपदाविशेषैः।
सभाजयन्तिस्म तदा सभायामुच्चैस्तरामुत्तरकोशलास्त्वाम् ॥ २४ ॥

**प्रणम्येति।** हे रङ्गेश्वरस्य पादरक्षे, तदा सभायामास्थाने उत्तरकोशलास्तन्निष्ठा जनाः प्रणम्य दूरोपनीतैः दूरदेशाहृतैः (अनेनातिदुर्लभत्वं सूच्यते) उपदाविशेषैरुप-

हारभेदैः । उच्चैस्तराम् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति तरबन्तादामुप्रत्ययः । पूर्वेभ्योऽप्युत्कर्षेण सभाजयन्ति स्म प्रीत्या पश्यन्ति स्म । 'सभाज प्रीतिदर्शने(नयोः)' इति धातुश्चौरादिकः । 'लट् स्मे' इति भूते लट् । उदात्तालंकारः ॥

अपावृतद्वारमयन्त्रिताश्वं रङ्गेशपादावनि पूर्वमासीत् ।
त्वया यदृच्छासुखसुप्तपान्थं रामे वनस्थेऽपि पदं रघूणाम् ॥ २५ ॥

अपावृतेति । हे रङ्गेशपादावनि, पूर्वं तवाधिकारात् प्राग् दशरथनिर्याणानन्तरं रघूणां पदं कोशलजनपदरूपमपावृतद्वारमपिहितप्रतीहारम् । 'स्त्रीद्वार्द्वारं प्रतीहारः' इत्यमरः । अयन्त्रिताश्वमसंयततुरगं चासीत् । नियामकाभावादिति भावः । त्वया तु रामे वनस्थेऽपि यदृच्छया सुखसुप्तपान्थं स्वच्छन्दसुखशयितपथिकमासीदित्यनुषङ्गः । त्वय्यधिकृतायामराजकत्वनिमित्तभयं नास्ति । पूर्वं त्वराजकतया भीरूणां स्वस्वरक्षाव्यापृतत्वेन राजकार्यानादरात् द्वारबन्धनादिप्रसक्तिर्नासीदिति भावः । दशरथनिर्याणानन्तरं विकृतस्य राज्यस्य पादुकया यथापूर्वमवस्थापनात् पूर्वरूपमलंकारः । 'पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि' इति लक्षणा ॥

अनन्यभक्तिर्मणिपादुके त्वामभ्यर्चयन्दाशरथिर्द्वितीयः ।
विकल्प्यमानः प्रथमे न कीर्त्या वन्द्यः स्वयं व्योमसदां बभूव ॥ २६ ॥

अनन्येति । हे मणिपादुके, अनन्यभक्तिस्त्वदेकभक्तिः साधनान्तरफलान्तररहितो मुमुक्षुरपीति गम्यते । द्वितीयो दाशरथिः भरतः त्वामभ्यर्चयन् पूजयन् कीर्त्या यशसा प्रथमेन ज्येष्ठेन रामेण विकल्प्यमानस्तुल्यतया ज्ञायमानः परमसाम्यप्रथां प्राप्त इति गम्यते । व्योमसदां देवानां स्वयमात्मना (हेत्वन्तरमनपेक्ष्य) वन्द्यश्च बभूव । 'द्रवन्ति दैत्याः प्रणमन्ति देवाः' इति भागवतस्थदेववन्द्यत्वं प्रतीयते । द्वितीयोऽपि पादुकार्चनात् प्रथमसाम्यं सर्वदेववन्द्यत्वं च प्रापेत्युक्त्या काव्यलिङ्गमलंकारः । पादुकायाः परमसाम्याद्यापादनलक्षण(म्)भगवत्साम्यं व्यज्यते ॥

अरण्ययोग्यं पदमस्पृशन्ती रामस्य राज्यार्हपदे निविष्टा ।
आस्थाननित्यासिकया निरास्थः स्वर्गौकसां स्वैरगतेर्विघातम् ॥ २७ ॥

अरण्येति । हे पादुके, अरण्ययोग्यं वनार्हं रामस्य रामचन्द्रस्य पदं चरणमस्पृशन्ती अगृह्णन्ती राज्यार्हपदे सिंहासने निविष्टा स्थिता त्वं आस्थाननित्यासिकया सभायां नित्यवृत्त्या स्वर्गौकसां देवानां स्वैरगतेः स्वेच्छासंचारस्य विघातं प्रतिबन्धं राक्षसादिकृतं निरास्थः निराकृतवती । निर्पूर्वात् 'असु क्षेपणे' इति धातोर्लुङि मध्यमपुरुषस्यैकवचने 'अस्यतिवक्तिख्याति' इत्यादिना अङ् 'अस्यतेस्थुक्' । वनसंचारसाध्यगतिप्रतिबन्धनिरसनस्य स्वासिकासाध्यत्ववर्णनाद्विभावनाभेदः । रामाद्व्यतिरेको व्यज्यते ॥

राजासने चेद्भवती निषण्णा रङ्गेशपादावनि तन्न चित्रम् ।
यत्राधिरूढाः क्रमशः पुरा त्वामुत्तंसयन्ते रघुसार्वभौमाः ॥ २८ ॥

**राजासन इति ।** हे रङ्गेशपादावनि, राजासने सिंहासने भवती निषण्णेति यत्तत्र चित्रम्। यत्र राजासने क्रमशः आनुपूर्व्येणाधिरूढा रघुवंशजाः सार्वभौमाः त्वामुत्तंसयन्ते पुरा शिरसा वहन्ति स्म। 'तसि अलंकारे' उत्पूर्वश्चौरादिकः। 'पुरि लुङ् चास्मे' इति पुराशब्दयोगे भूते लट्। तत्रेति पूर्वेणान्वयः। सर्वपृथ्वीश्वरशिरोधृतायास्तव कैमुतिकन्यायेन सिद्धा तदासनस्थितिर्नाद्भुतेत्युक्त्या काव्यार्थापत्तिरलंकारः। 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' इति लक्षणम् ॥

भद्रासनं चेत्परिवृत्तमासीद्देवि क्षणं दक्षिणतो मुखं ते ।
कथं भवेत्काञ्चनपादरक्षे रामस्य रक्षोमृगयाविहारः ॥ २९ ॥

**भद्रासनमिति ।** हे देवि काञ्चनपादरक्षे, ते तव भद्रासनं सिंहासनं क्षणं दक्षिणतो वर्तमानं मुखं पुरोभागो यस्य तत् सत् परिवृत्तमासीत् चेद्दक्षिणपार्श्वाभिमुखं भवेद्यदि तर्हि रामस्य रक्षःसु राक्षसेषु मृगयाविहारः आखेटक्रीडा भगवल्लीलाविषयत्वेन संरम्भविषयत्वं व्यज्यते। कथं भवेत्। न कथमपीत्यर्थः। असंभावित इति भावः। 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इति लिङ्। यद्यपि आसीदित्यत्र 'हेतुहेतुमतोः' इति लिङः प्राप्तिस्तन्निमित्तकल्टङश्च वा तथापि 'विभाषा धातौ' इत्यतः विभाषानुवृत्तेर्व्याख्यानात् लिङभावे लङ्। अत एव 'भाष्यं चेद्यवृणोत्' इति व्यासाचार्यप्रयोगः। एतेन 'सीतेव चेत्त्वमपि साहसवृत्तिरासीः' इत्यादि व्याख्यातम्। अत्र पादुकाया आभिमुख्यमात्रेण शत्रुनिरासान्निरतिशयप्रतापो व्यज्यते। पादुकाभिमुख्यहेतुना तर्कितेन राक्षसमृगयाविहाराभावोहनात् संभावनालंकारः। 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति लक्षणम् ॥

यावत्त्वया राघवपादरक्षे जिगीषिता राक्षसराजधानी ।
मालेव तावल्लुलिता मदान्धैरुद्यानशाखामृगयूथपैस्ते ॥ ३० ॥

**यावदिति ।** हे राघवपादरक्षे, त्वया यावत् यदैव राक्षसराजधानी लङ्का जिगीषिता जेतुमभीप्सिता तावत् तदैव मदान्धैर्दर्पेण कृत्याकृत्यपराङ्मुखैः ते तव उद्यानशाखामृगयूथपैः आरामवानरश्रेष्ठैः विधेयतातिशयेन सुग्रीवादीनामुद्यानवानरत्वमुत्प्रेक्ष्यते। मालेव लुलिता उपद्रुता। 'लुल विलोडने' इति धातोः कर्मणि क्तः। पादुकाजयेच्छामात्रेण लङ्कोपद्रववर्णनात् चपलातिशयोक्तिरलंकारः हेतूत्प्रेक्षासंकीर्णः। 'चपलातिशयोक्तिः स्यात्कार्ये हेतुप्रसक्तिजे' इति लक्षणम्। मालेवेत्युपमासंसृष्टिरपि ॥

महीक्षितां राघवपादरक्षे भद्रासनस्थां भवतीं स्पृशन्तः ।
पूर्वं तथात्वे नियतेऽपि भूयः कल्याणतामानशिरे किरीटाः ॥ ३१ ॥

**महीक्षितामिति ।** हे राघवपादरक्षे, भद्रासनस्थां भवतीं सिंहासनस्थां त्वां स्पृशन्तः। प्रणामेनेति भावः। महीक्षितां राज्ञां किरीटाः पूर्वं प्रणामतः प्राक् तथात्वे कल्याणत्वे सुवर्णत्व इति यावत्। नियतेऽपि अविनाभूतेऽपि भूयः पुनः कल्याणतां शुभतां आनशिरे प्राप्ताः। 'अशूङ् व्याप्तौ' इति धातोर्लिट्। राज्ञां हेमकिरीटाः पादुकासंबन्धाच्छुभा बभूवुरिति

भावः । कल्याणानामेव सतां भूयः कल्याणत्वोक्त्यानुगुणालंकारः । 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति लक्षणम् ॥

अनिच्छतः पाण्डुरमातपत्रं पित्रा वितीर्णं मणिपादरक्षे ।
आसीत्त्वदर्थे विधृतेन तेन छाया समग्रा भरतस्य मौलौ ॥ ३२ ॥

**अनिच्छत इति** । हे मणिपादरक्षे, पित्रा दशरथेन वितीर्णं दत्तं पाण्डुरं श्वेतमातपत्रं छत्रमनिच्छतो भरतस्य मौलौ शिरसि त्वदर्थे विधृतेन तेन पाण्डुरातपत्रेण समग्रा पर्याप्ता छाया शोभा अनातपश्च आसीत् । 'छाया त्वनातपे कान्तौ' इति विश्वः । छत्रं निवारयतोऽपि भरतस्य तत्फलमूलभूतच्छायावाप्तेर्विरुद्धयोक्त्या असंगतिरलंकारः छायाशब्दश्लेषसंकीर्णः । 'अन्यत्कर्तुं प्रवृत्तस्य तद्विरुद्धकृतिश्च सा' इति लक्षणात् ॥

पादुके रघुपतौ यदृच्छया प्रस्थिते वनविहारकौतुकात् ।
आधिराज्यमधिगम्यते युवामक्षतं वसुमतीमरक्षतम् ॥ ३३ ॥

**पादुके इति** । हे पादुके, संबोधनद्विवचनम् । रघुपतौ रामे यदृच्छया स्वच्छन्देन वने विहारकौतुकात् वनक्रीडनेच्छया प्रस्थिते सति ते प्रसिद्धे युवामाधिराज्यं सार्वभौमत्वमधिगम्य प्राप्य वसुमतीमक्षतमनुपहतं यथा तथा अरक्षतं रक्षितवत्यौ स्तः । 'रक्ष पालने' लङ् मध्यमपुरुषद्विवचनम् । दशरथानन्तरं क्षतरक्षाया भूमेः पुररक्षकत्वप्रतिपादनात् पूर्वरूपालंकारः । 'पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्' इति लक्षणात् ॥

रघुवीरपदानुषङ्गमात्रात्परिबर्हेषु निवेशिता यदि त्वम् ।
अधिकारदिने कथं पुनस्ते परिवारास्तव पादुके बभूवुः ॥ ३४ ॥

**रघुवीरेति** । हे पादुके, त्वं रघुवीरस्य रामस्य पदानुषङ्गमात्रात् पदसंबन्धेनैव स्थानसंबन्धेनैव परिबर्हेषु छत्रचामरादिपरिच्छदानां मध्ये निवेशिता यदि तत्साधारण्येन ज्ञाता यदीति यावत् । तर्हि अधिकारदिने राज्यरक्षणकाले ते परिबर्हाः कथं पुनः कथं वा तव परिवाराः परिच्छदा बभूवुः । भगवत्परिबर्हाणामेव पादुकापरिबर्हत्वाद्भगवत्समायास्तस्यास्तत्पदसंबन्धो न परिबर्हसाधारण्यप्रयोजक इति भावः । पूर्वोक्तसंभावनालंकारः ॥

पुरुषार्थचतुष्टयार्थिनीनां परिषत्ते महिता वसिष्ठमुख्यैः ।
क्रयविक्रयपत्तनं प्रजानामभवत्काञ्चनपादुके तदानीम् ॥ ३५ ॥

**पुरुषार्थेति** । हे काञ्चनपादुके, तदानीमधिकारकाले वसिष्ठमुख्यैर्वसिष्ठवामदेवादिभिः महिता पूजिता यद्यपि 'मतिबुद्धिपूजार्थेभ्यश्च' इति 'मह पूजायाम्' इति धातोर्वर्तमाने क्तः 'क्तस्य च वर्तमाने' इति षष्ठीप्राप्तेः कथं वसिष्ठमुख्यैरिति तृतीयेति तथापि तेनेत्यधिकृत्य 'उपज्ञाते' इति तृतीयान्तादुपज्ञाते प्रत्ययविधानात् तृतीयापि समुच्चीयते । अतोऽत्र न तृतीयानुपपत्तिः । ते तव परिषत् गोष्ठी पुरुषार्थानां धर्मार्थकाममोक्षाणां चतुष्टयमर्थयन्ते यास्तासां प्रजानां क्रयविक्रययोर्ग्रहणवितरणयोः पत्तनं नगरमभवत् । प्राक्तनराजपरिषदपे-

क्षया पादुकापरिषदः सकलपुरुषार्थबोद्धृबोधयित्रजनपूर्णत्वेन व्यतिरेको व्यज्यते। अत्र परिषदः पत्तनत्वेन परिणतायाः क्रयविक्रयान्वयोक्त्या परिणामालंकारः। 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणात्॥

मनुजत्वतिरोहितेन शक्ये वपुषैकेन विरोधिनां निरासे।
अभजद्भरतादिभेदमीशः स्वयमाराधयितुं पदावनि त्वाम्॥ ३६॥

**मनुजत्वेति**। हे पदावनि, मनुजत्वतिरोहितेन मनुष्यत्वाच्छादितेन एकेन वपुषा विरोधिनां राक्षसानां निरासे शक्येऽपि ईशः श्रीरङ्गनाथः त्वां स्वयमात्मना आराधयितुमर्चयितुं भरतादिभेदमभजत्। एकस्यैव शक्तस्य भगवतः भरतशत्रुघ्नादिरूपेण बहुधावतारपादुकार्चनायैवेत्युत्प्रेक्ष्यते। तथा च प्रेयोऽलंकारो व्यज्यते॥

मगधाङ्गकलिङ्गवङ्गमुख्यान्विमतान्रन्ध्रगवेषिणः ससैन्यान्।
रघुपुङ्गवपादुके विजिग्ये भरतः शासनमुद्वहन्भवत्याः॥ ३७॥

**मगधेति**। हे रघुपुङ्गवपादुके, भरतः भवत्यास्तव शासनमाज्ञामुद्वहन् सन् मगधाः अङ्गाः कलिङ्गाः वङ्गास्तत्तद्देशाधिपतयो मुख्या येषां तान् रन्ध्रमुपद्रवावकाशं गवेषयितुं मार्गितुं शीलं येषां तान् ससैन्यान् सेनया सहितान् विमतान् शत्रून् विजिग्ये जितवान्। 'जि जये' जयतेर्लिट् 'विपराभ्यां जेः' इत्यात्मनेपदम्, 'संल्लिटोर्जेः' इति कुत्वम्। अत्र शासनमुद्वहन्निति विशेषणस्य विमतजेतृत्वाभिप्रायगर्भत्वात्परिकरालंकारः॥

अनितरवहनीयं मन्त्रिमुख्यैर्यदा त-
त्त्वयि विनिहितमासीत्सूर्यवंशाधिराज्यम्।
रघुपतिपदरक्षे रत्नपीठे तदानीं
श्रियमिव ददृशुस्त्वां सादरं लोकपालाः॥ ३८॥

**अनितरेति**। हे रघुपतिपदरक्षे, यदा मन्त्रिमुख्यैः सुमन्त्रप्रभृतिभिः अनितरवहनीयं त्वदन्येन वोढुमशक्यं तत् प्रसिद्धं सूर्यवंशस्य आधिराज्यं सार्वभौमकत्वं त्वयि विनिहितं निक्षिप्तमासीत् तदानीं लोकपालाः देवराजाश्च त्वां रत्नपीठे श्रियमिव सादरं ददृशुः। इवशब्द उत्प्रेक्षाव्यञ्जकः स्मृत्यलंकार उत्प्रेक्षालंकारसंसृष्टः॥

परिहृतदण्डकाध्वगमनं पदरक्षणि त-
त्परिणतविश्वसंपदुदयं युवयोर्द्वितयम्।
रघुपतिभद्रपीठमधिरुह्य तदा विदधे
व्यपगतवैरिभूपनिलयं वसुधावलयम्॥ ३९॥

**परिहृतेति**। हे पादुके, इति द्विवचनान्तं संबोधनमुपस्कार्यं तदा अधिकारकाले परिहृतं त्यक्तं दण्डकाध्वनः कर्मणो गमनं येन तत् भरतेन प्रत्यानीतमिति यावत्। पदस्य

चरणस्य स्थानस्य रक्षणमस्यास्ति तथोक्तम् । 'अत इनिठनौ' इतीनिप्रत्ययः । परिणतः परिपक्वः विश्वेषां संपदुदयः यस्य तत् । पदरक्षिणीति पाठे तु स्वाज्ञयायोध्यास्थानरक्षणशीले भरते विषये परिणतः विश्वेषां संपदामुदयो यस्येति बोध्यम् । न तु संबुद्धिः । युवयोरित्यनुपपत्तेः तत्प्रसिद्धं युवयोर्द्वितयम् । 'द्वयोरवयवयोः समाहारः' । रघुपतेः भद्रपीठं कर्माधिरुह्य वसुधावलयं भूमण्डलं कर्म व्यपगता नष्टा वैरिभूपानां निलया निवासा यस्मिन् तथाविधं विदधे कृतवत्(वान्) । अत्राङ्गीकृतारण्यगमनाद्रामादपि पादुकायाः प्रजासु दया व्यज्यते । प्रेयोऽलंकारः ॥

प्राप्तोदया तदानीं किमपि तमस्तन्निराकरोद्भवती ।
तनुरिव मनुकुलजनुषां प्रसवित्री रत्नपादुके सवितुः ॥ ४० ॥

**प्राप्तोदयेति** । हे रत्नपादुके, तदानीं अधिकारपरिग्रहकाले प्राप्त उदयः वृद्धिः उदयपर्वतश्च । 'उदयः पूर्वपर्वतः' इत्यमरः । यया सा भवती मनुकुलजनुषां मनुवंशजातानां मनुष्याणां च प्रसवित्री उत्पादयित्री हितप्रेरयित्री च । 'षूङ् प्राणिप्रसवे' 'षू प्रेरणे' उभाभ्यां तृच् 'ऋन्नेभ्यो ङीप्' । सवितुः सूर्यस्य जगत्स्रष्टुर्भगवतश्च तनुरिव मूर्तिरिव किमप्यनिर्वचनीयं तत्प्रसिद्धं तमः दुरिततिमिरं तमोगुणं च निराकरोत् निरस्तवती । श्लेषसंकीर्ण उपमालंकारः । वृत्तमार्याभेदः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरघुनाथपादुकासहस्रे सटीकाधिकारपरिग्रहपद्धतिः षष्ठी ।

---

अथाभिषेकपद्धतिः सप्तमी प्रारभ्यते ।

अथास्यां पादुकां राज्याभिषेकावलम्बनेन स्तौति—

पाहि नः पादुके यस्या विधास्यन्नभिषेचनम् ।
आभिषेचनिकं भाण्डं चक्रे रामः प्रदक्षिणम् ॥ १ ॥

**पाहीति** । हे पादुके, नः अस्मान् पाहि रक्ष । रामो यस्यास्तवेत्युपस्कार्यम् । अभिषेचनं समन्त्रस्नानं विधास्यन्करिष्यन् सन् आभिषेचनिकं अभिषेचनप्रयोजनकम् । 'तदस्य' इत्यनुवर्त्य 'प्रयोजनम्' इति ठञ् । भाण्डं उपकरणं प्रदक्षिणं चक्रे दक्षिणपार्श्वस्थं कुर्वन् परिचक्राम । प्रदक्षिणमिति तिष्ठद्गुप्रभृतित्वादव्ययीभावः । शास्त्रीयस्य मङ्गलद्रव्यप्रदक्षिणस्य पादुकाभिषेकार्थद्रव्यबुद्धिमूलकत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा । आभिषेचनिकभाण्डप्रदक्षिणं च रामायणे—'आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् । शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन्' इत्युक्तम् ॥

राघवस्य चरणौ पदावनि प्रेक्षितुं त्वदभिषेकमीषतुः ।
आभिषेचनिकभाण्डसंनिधौ यत्प्रदक्षिणगतिः शनैर्ययौ ॥ २ ॥

**राघवस्येति** । हे पदावनि, राघवस्य रामस्य चरणौ त्वदभिषेकं प्रेक्षितुमीषतुः

काङ्क्षितवन्तौ । गम्योत्प्रेक्षा । यद्यस्मात्कारणात् रामः आभिषेचनिकभाण्डसंनिधौ प्रदक्षिणगतिः सन् शनैर्मन्दं ययौ गतवान् । तत इति पूर्वेणान्वयः । अत्र पूर्वार्धोक्तस्योत्तरार्धेन समर्थनात् काव्यलिङ्गमलंकारः । अस्योत्प्रेक्षाङ्गत्वात्संकरः ॥

मूर्धाभिषिक्तैर्नियमेन वाह्यौ विचिन्त्य नूनं रघुनाथपादौ ।
रत्नासनस्थां मणिपादुके त्वां रामानुजात्मा भरतोऽभ्यषिञ्चत् ॥ ३ ॥

**मूर्धाभिषिक्तैरिति** । हे मणिपादुके, रामानुजन्मा भरतः रघुनाथपादौ नियमेनाव्यभिचारेण । सदेति यावत् । मूर्ध्न्यभिषिक्तैः मन्त्रपूततीर्थोदकस्नपितैः वाह्यौ वोढव्यौ विचिन्त्य परामृश्य रत्नासनस्थां मणिमयसिंहासनोपरिस्थितां त्वामभ्यषिञ्चत् । अभिपूर्वात् 'षिच क्षरणे' इति धातोर्लङ् । 'प्राक् सितादड्व्यवायेऽपि' इति षत्वम् । नूनमित्युत्प्रेक्षा ॥

भ्रातुर्नियोगेऽप्यनिवर्तमानं राज्याभिषेकं च परित्यजन्तम् ।
रामानुजौ तौ ननु पारतन्त्र्यादुभावुभाभ्यां भवती जिगाय ॥ ४ ॥

**भ्रातुरिति** । नन्वित्यामन्त्रणे । पादुके इति शेषः । भवती भ्रातुः रामस्य नियोगे प्रेरणेऽप्यनिवर्तमानं लक्ष्मणं राज्याभिषेकं परित्यजन्तमनङ्गीकुर्वाणं भरतं च तौ तथात्वेन प्रसिद्धावुभौ रामानुजौ पारतन्त्र्यात् शेषत्वेन हेतुना उभाभ्यां निवर्तनाभिषेकानङ्गीकाराभ्यां जिगाय जितवती । रामवाक्यातिलङ्घनेन तौ त्वत्तोपकृष्टाविति भावः । पदार्थहेतुकं काव्यलिङ्गमलंकारः ॥

निवेश्य रङ्गेश्वरपादरक्षे भद्रासने सादरमभ्यषिञ्चत् ।
वशी वसिष्ठो मनुवंशजानां महीक्षितां वंशपुरोहितस्त्वाम् ॥ ५ ॥

**निवेश्येति** । हे रङ्गेश्वरपादरक्षे, वशी जितेन्द्रियः मनुवंशजानां मह्यां क्षीयन्ति निवसन्तीति तथोक्तानां, 'क्षि निवासगत्योः' इति धातोः क्विप् । राज्ञां वंशपुरोहितः बहुकालजीवी वसिष्ठः त्वां भद्रासने सिंहासने निवेश्य सादरमादरेण सह अभ्यषिञ्चत् । अत्र महापुरुषवसिष्ठचरितस्य पादुकावर्णनाङ्गत्वादुदात्तालंकारः । 'महापुरुषचारित्रवर्णनं चाङ्गतां गतम्' इति लक्षणात् ॥

कृताभिषेका भवती यथावद्रङ्गेशपादावनि रत्नपीठे ।
गङ्गानिपातस्नपितां सुमेरोरधित्यकाभूमिमधश्चकार ॥ ६ ॥

**कृतेति** । हे रङ्गेश्वरपादावनि, रत्नपीठे मणिमयसिंहासने यथावत् यथार्हम् तवानुभावसदृशमिति यावत् । 'तदर्हम्' इत्यर्हे वतिः । कृताभिषेका विहितस्नपना भवती गङ्गायाः निपातेन पतनेन स्नपिता सुमेरोः रत्नसानोः । 'मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः' इत्यमरः । अधित्यकाभूमिम् । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । अधश्चकार अनादृतवती । रत्नपीठस्य मेरोः साम्यमभिषेकस्य गङ्गानिपातसाम्यं, काञ्चनपादुकाया ऊर्ध्वभागसाम्यं च प्रतीयत इत्युपमायामनादराधिक्यात्प्रतीपभेदः । 'वर्ण्योपमेयलाभेन तथान्यस्याप्यनादरः' इति लक्षणात् ॥

वसिष्ठमुख्यैर्विहिताभिषेकां राज्यासने रामनिवेशयोग्ये ।
तुष्टाव रङ्गेश्वरपादरक्षे प्राचेतसस्त्वां प्रथमः कवीनाम् ॥ ७ ॥

**वसिष्ठेति** । हे रङ्गेश्वरपादरक्षे, रामस्य निवेशयोग्येऽवस्थानार्हे राज्यासने वसिष्ठमुख्यैः ऋषिभिर्विहिताभिषेकां कृतस्नपनां त्वां भवतीं कवीनां प्रथमः प्राचेतसः वाल्मीकिस्तुष्टावास्तुवत् । प्रेयोऽलंकारः । प्राचेतसस्य बन्दित्वोक्त्या प्राचीनसार्वभौमव्यतिरेकः पादुकाया व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

रक्षोवधार्थं मणिपादरक्षे रामात्मनो रङ्गपतेः प्रवासे ।
रक्षोपकाराद्भवती वितेने राजन्वतीं कोशलराजधानीम् ॥ ८ ॥

**रक्षोवधेति** । हे मणिपादरक्षे, रामात्मनो रङ्गपतेः रक्षसां वधार्थं वधाय प्रवासे वनगमने सति भवती रक्षोपकारात् (हेतौ पञ्चमी) रक्षणरूपोपकारेण राघवराजधानीमयोध्यां राजन्वतीं शोभनराजयुक्तां वितेने । त्वमेव शोभनो राजा बभूविथ । रामप्रवासेनाराजकतया विकृताया अयोध्यायाः पुनः राजन्वत्त्वकरणेन स्वगुणप्राप्तेः पूर्वरूपभेदोऽलंकारः । तेन राज्ञो वधरूपैककार्यार्थं राज्यनिविष्टायाः पादुकाया व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

प्राप्ताभिषेका मणिपादरक्षे प्रतापमुग्रं प्रतिपद्यमाना ।
शशास पृथ्वीं भवती यथावत्साकेतसिंहासनसार्वभौमी ॥ ९ ॥

**प्राप्तेति** । हे मणिपादरक्षे, साकेतसिंहासनेन अयोध्याधिष्ठानेन परिगृहीतेन सार्वभौमी सर्वभूमीश्वरा प्राप्ताभिषेका उग्रं प्रतापं प्रतिपद्यमाना, अवस्थानेनैव राज्यरक्षणादिति भावः। भवती यथावत् यथार्हं पृथ्वीं शशास शिक्षितवती। उदात्तालंकारः। तेन दिग्विजययात्रामन्तरेण सद्यः प्रतापपरिग्रहमात्रेण दुष्टनिग्रहोक्त्या प्रसिद्धसार्वभौमव्यतिरेको व्यज्यते ॥

दशाननादीन्मणिपादरक्षे जिगीषतो दाशरथेर्वियोगात् ।
जातोपतापा त्वयि संप्रयुक्तैस्तीर्थोदकैरुच्छ्वसिता धरित्री ॥ १० ॥

**दशाननादीनिति** । हे मणिपादरक्षे, दशाननादीन् जिगीषतो जेतुमिच्छतो दाशरथे रामस्य वियोगाज्जातोपतापा जनितव्यथा धरित्री त्वयि संप्रयुक्तैस्तीर्थोदकैरुच्छ्वसिता आश्वासिता । 'श्वस प्राणने' इति धातोः कर्तरि क्तः। अत्र विशेषणमहिम्ना विप्रलब्धनायिकावृत्तान्तः प्रतीयते । समासोक्तिरलंकारः ॥

अध्यासितं मनुमुखैः क्रमशो नरेन्द्रै-
रारोप्य देवि भवतीं तपनीयपीठम् ।
राज्याभिषेकमनघं मणिपादरक्षे
रामोचितं तव वशं भरतो वितेने ॥ ११ ॥

**अध्यासितमिति** । हे देवि मणिपादरक्षे, भरतः मनुमुखैः वैवस्वतमनुप्रभृतिभिः नरेन्द्रैः क्रमशः क्रमेण, 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् । अध्यासितमधिष्ठितं तपनीयपीठं स्वर्णसिंहासनं भवतीमारोप्य। रुहेर्गत्यर्थत्वेन 'गतिबुद्धि' इत्यादिनाणौ प्रयोज्यस्य कर्तुः कर्मत्वम् । 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः । रामस्योचितं योग्यं राज्याभिषेकमनघमव्यसनं यथा तथा तव वशमधीनं वितेने कृतवान् । रामस्य राज्याभिषेकाभावनिमित्तं व्यसनं तवाभिषेकेन भरतस्य नष्टमिति भावः । रामे कर्तव्यस्याभिषेकस्य पादुकायां करणादसंगतिरलंकारः । 'अन्यत्र करणीयस्य ततोऽन्यत्र कृतिश्च सा' इति लक्षणात् । तेन रामापेक्षया व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

स्नेहेन देवि भवतीं विषयेऽभिषिञ्च-
न्द्विःसप्तसंख्यभुवनोदरदीपरेखाम् ।
जातं रघूद्वहदिवाकरविप्रयोगा-
दन्धं तमिस्रमहरद्भरतः प्रजानाम् ॥ १२ ॥

**स्नेहेनेति** । हे देवि, भरतः द्विः द्विरावृत्ता सप्तसंख्या येषां तेषां भुवनानामुदरस्य मध्यावकाशस्य दीपरेखाम् । प्रकाशकतया दीपत्वारोपः । भवतीं त्वां स्नेहेन प्रेम्णा तैलेन च विषये देशे पात्रे चाभिषिञ्चन्सन् रघूद्वहः राम एव दिवाकरस्तस्य विप्रयोगाद्विरहाज्जातं प्रजानामन्धं विवेकहेतुम् । 'अन्ध दृष्ट्युपघाते' इति धातोः पचाद्यच् । तमिस्रं दुःखं तमश्च अहरत् निराकृतवती । दीपत्वेन परिणतायाः पादुकायस्तमिस्रशब्दश्लेषमूलाभेदाध्यवसायनिरूपिततमोनिरासकत्वोक्त्या रूपकसंकीर्णः परिणामः ॥

हस्तापचेयपुरुषार्थफलप्रसूते-
र्मूलं पदावनि मुकुन्दमहीरुहस्त्वम् ।
छायाविशेषमदिशद्यदसौ प्रजाना-
मावर्जितैस्त्वयि शुभैरभिषेकतोयैः ॥ १३ ॥

**हस्तेति** । हे पादावनि, त्वं हस्तैरपचेयानां पुरुषार्थानां धर्मार्थादीनामेव फलानां प्रसूतेः उत्पादकस्य । प्रसूतिपदस्य लक्षणया तत्कर्तृपरत्वम् । मुकुन्द एव महीरुट् तस्य मूलं बुध्नः । 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः । यस्मादसौ मुकुन्दवृक्षः त्वय्यावर्जितैरभिषेकतोयैः प्रजानां छायाविशेषं शोभोत्कर्षं अनातपसमृद्धिं नादिशत् दत्तवान् । 'दिश अतिसर्जने' लङ् । त्वदभिषेकश्रवणजनितहर्षेण रामेण दण्डकारण्यतपस्विनो रक्षिता इति भावः । पुरुषार्थरूपफलजनकवृक्षत्वेन निरूपितस्य भगवतो मूलत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः । अस्यैवार्थस्योत्तरार्धेन छायाशब्दश्लेषवता समर्थनात् श्लेषानुप्राणितकाव्यलिङ्गसंकीर्णः ॥

अह्नाय रामविरहात्परिखिन्नवृत्ते-
राश्वासनाय भवती मणिपादरक्षे ।

तीर्थाभिषेकमपदिश्य वसुंधराया-
श्चक्रे तदा समुचितं शिशिरोपचारम् ॥ १४ ॥

**अह्नायेति** । हे मणिपादरक्षे, भवती रामस्य विरहात् परिखिन्ना वृत्तिर्नतिर्यस्यास्तस्याः वसुंधराया भूमेराश्वासनाय शोकापनोदनाय तीर्थाभिषेकमपदिश्य राज्याभिषेकव्याजेन तदा खेदकाले समुचितं योग्यं शिशिरोपचारं शैत्योपचारमह्नाय चक्रे शीघ्रं कृतवती । विशेषणपदशक्त्या कान्तप्रवासदुःखितायाः प्रियसखीकृतशिशिरोपचारप्रतीतेः समासोक्तिरलंकारः, तीर्थाभिषेकमपदिश्येति पदस्योक्तेः कैतवापह्नुतिसंकीर्णः ॥

मालिन्यमाश्रितवती मणिपादरक्षे
पङ्केन केकयसुताकलहोत्थितेन ।
शुद्धिं परामधिजगाम वसुंधरेयं
त्वत्तः क्षणं निपतितैरभिषेकतोयैः ॥ १५ ॥

**मालिन्यमिति** । हे मणिपादरक्षे, केकयसुतायाः कैकेय्याः कलहेनोत्थितेन जातेन पङ्केन पापेन कर्दमेन च । 'पङ्कः कर्दमपापयोः' इति विश्वः । मालिन्यं पापं धूसरत्वं च 'मलोऽस्त्री पापविट् किट्टे' इत्यमरः (इति मेदिनी) । तदस्यास्तीत्यर्थे 'ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः' इति निपातनान्मलशब्दादिनच्, ब्राह्मणादित्वात् ष्यञ् । आश्रितवती । इयं वसुंधरा त्वत्तो निपतितैरभिषेकतोयैः क्षणात् परां शुद्धिमधिजगाम पवित्रतां क्षालनं च प्राप्तवती । पङ्कमलिनशब्दश्लेषेण प्रतीतस्य कर्दमस्याभिषेकतोयेन क्षालनोत्प्रेक्षणात् फलोत्प्रेक्षा, वाचकाभावाद्गम्या, तथा च पूर्वरूपध्वनिः ॥

आवर्जितं मुनिगणेन जगद्विभूत्यै
तोयं पदावनि तदा त्वयि मन्त्रपूतम् ।
मूलावसेकसलिलं निगमद्रुमाणां
शापोदकं च समभूत्क्षणदाचराणाम् ॥ १६ ॥

**आवर्जितमिति** । हे पादावनि, मुनिगणेन ऋषिसमूहेन तदाधिकारकाले जगद्विभूत्यै लक्ष्म्यावर्जितं मुक्तं मन्त्रैः पूतं तोयं जलं निगमानां वेदानामेव द्रुमाणां मूलावसेकसलिलं मूले वृद्ध्यर्थमावर्जनजलमभूत् । त्रैवर्णिका यथार्हमध्ययनाध्यापनादिकं कृतवन्त इति भावः । क्षणदाचराणां राक्षसानां तु (चस्त्वर्थे) शापोदकं शापार्थं जलमभूत् जातम् । ततःप्रभृति विराधादीनां नाशोऽभूदित्यर्थः । वेदवृक्षरक्षोरूपविषयभेदेनैकस्याभिषेकतोयस्य बहुधोल्लेखादुल्लेखालंकारः । 'एकस्य बहुधोल्लेखेऽप्यसौ विषयभेदतः' इति लक्षणात् ॥

विप्रोषिते रघुपतौ भवती यथार्हे
मान्ये पदे स्थितिमती मनुवंशजानाम् ।

आत्मन्यथर्वनिपुणैः प्रहितैः प्रजाना-

मश्रूण्यपास्यदभिषेकजलप्रवाहैः ॥ १७ ॥

**विप्रोषित इति।** हे पादुके, रघुपतौ रामभद्रे निर्घृणत्वेन विप्रोषिते वनं गते सति भवती मनुवंशजानां मान्ये पदे स्थाने यथार्हं यथायोग्यम्, रामापेक्षया यथायोग्यस्तव राज्यपरिग्रहो युक्त इति भावः। स्थितिमती प्रतिष्ठिता सती आत्मनि स्वस्मिन् अथर्वणि तुरीये वेदे निपुणैः समर्थैर्वसिष्ठादिभिः प्रहितैरभिषेकजलप्रवाहैः प्रजानामश्रूणि नयनजलान्यपास्यत् मार्जितवती। त्वदभिषेकजलेन रामविप्रवासशोको निवृत्त इति भावः। अत्राभिषेकजलस्याश्रुमार्जनजलत्वोत्प्रेक्षणात्स्वरूपोत्प्रेक्षा व्यञ्जकाभावाद् गम्या ॥

प्रायो विशोषितरसा पतिविप्रयोगा-

त्पर्याकुलीकृतसमुद्रपयोधरा गौः।

अम्ब त्वदीयमभिषेकपयः पिबन्ती

धेनुर्बभूव जगतां धनधान्यदोग्ध्री ॥ १८ ॥

**प्राय इति।** हे अम्ब मातः, पत्यू रामस्य विप्रयोगाद्विरहात्। विशोषितरसा प्रीतिविहीना, विशोषितद्रवा च। 'रसो रागे द्रवेऽपि च' इत्यमरः। अत एव पर्याकुलीकृताः क्षुब्धाः समुद्रा एव पयोधराः स्तना यस्याः सा गौर्भूमिरेव गौः स्त्रीगवी त्वदीयमभिषेकपयः पिबन्ती सती जगतां धनधान्यानां दोग्ध्री धेनुर्बभूव धानकर्मव्यक्तिर्बभूव। प्राय इत्युत्प्रेक्षा। पादुकाभिषेकानन्तरं भूम्या धनधान्यादिसमृद्धिर्जातेति भावः। गोत्वेन रूपिताया भूमेर्धनधान्यदोहनस्याभिषेकजलपानहेतुत्वोत्प्रेक्षणाद् हेतूत्प्रेक्षा श्लेषानुप्राणितरूपकसंकीर्णा ॥

वृत्ते यथावदभिषेकविधौ बभाषे

पश्चात्तवाम्ब भरतेन धृतः किरीटः।

आकस्मिकः स्वकुलविप्लवशान्तिहर्षा-

त्प्राप्तस्त्विषामिव पतिर्मणिपादुके त्वाम् ॥ १९ ॥

**वृत्त इति।** हे अम्ब मणिपादुके, त्वदभिषेकस्य विधौ विधाने यथावत् वृत्ते निवृत्ते सति पश्चात् भरतेन धृतः धारितस्तव किरीटः आकस्मिकस्य अकस्माज्जातस्य, अङ्गुल्यादित्वाट्ठक् 'अकस्माद्' विभक्तिप्रतिरूपकमव्ययम्। स्वकुलविप्लवस्य स्वान्वयोपद्रवस्य शान्त्या विनिवृत्त्या जनिताद्धर्षात् त्वां प्राप्तस्त्विषां पतिः सूर्य इतीव बभाषे। स्वरूपोत्प्रेक्षा ॥

मनुवंशपुरोहितेन मन्त्रैरभिमन्त्र्य त्वयि पादुके प्रयुक्तम्।

अभिषेकजलं क्षणेन राज्ञां शमयामास समुत्थितान्प्रतापान् ॥ २० ॥

**मनुवंशेति** । हे पादुके, मनुवंशपुरोहितेन वसिष्ठेन मन्त्रैरभिमन्त्र्य संस्कृत्य त्वयि प्रयुक्तमभिषेकजलं (कर्तृ) राज्ञां विरोधिनां समुत्थितान् प्रतापान् प्रभावानेव उष्णांशून् क्षणेन झटिति शमयामास । पादुकाकृताया विरोधिप्रतापशान्तेरनन्तरभावमात्रेण तापस्य जलनाशकत्वमवलम्ब्याभिषेकजलहेतुकत्वोक्त्या हेतूत्प्रेक्षा प्रतापशब्दश्लेषसंकीर्णरूपकानुप्राणिता ॥

पादपादुपहृता रघूद्वहादालवालमिव पीठमाश्रिता ।
अभ्यषेचि भवती तपोधनैः पारिजातलतिकेव पादुके ॥ २१ ॥

**पादपादिति** । हे पादुके, तपोधनै ऋषिभिः पादपादिव पारिजातवृक्षादिव स्थिताद्रामादुपहृता नीता आलवालमिव स्थितं पीठं तादृशसंनिवेशविशिष्टं सिंहासनमाश्रिता भवती त्वं पारिजातलतिकेव कल्पवृक्षशाखेव । 'समे शाखालते' इत्यमरः 'हस्वे' इति प्रागिवीयः कः । अभ्यषेचि अभिषिक्ता । प्रत्यवयवं वाचकप्रयोगादवयवोपमा नतूत्प्रेक्षा । आलवालमित्युपमान्वयायोगादालवालसदृशपीठस्य लतासंभावनारूपोत्प्रेक्षाप्रयोजकत्वाभावात् । तत्रत्यैवशब्दस्यापि संभावनार्थकत्वं वदाम इति चेत् । न प्रधानान्वितस्येवशब्दस्य संभावनायामव्युत्पत्तेः, त्वत्पक्षे पादपाद्रघूद्वहादित्येवंरूपेण प्रकृतोपयोगसंभवेन इवशब्दस्य वैयर्थ्यापत्तेश्च । इवशब्दद्वयेनावयवे उपमात्वस्य स्फुटत्वात्, तदा वैरूप्याय पूर्वत्र इवशब्दोपस्कारस्यैवौचित्याच्च यथोक्तमेव सम्यक् ॥

अलघुभिरभिषेकव्यापृतैरम्बुभिस्ते
दिनकरकुलदैन्यं पादुके क्षालयिष्यन् ।
स खलु कमलयोनेः सूनुराधत्त मन्त्रे-
ष्वधिकनियमयोगां शक्तिमाथर्वणेषु ॥ २२ ॥

**अलघुभिरिति** । हे पादुके, स प्रसिद्धः कमलयोनेः ब्रह्मणः सूनुर्वसिष्ठः अलघुभिर्मन्त्राहितगौरवशक्तियुक्तैस्ते तवाभिषेके साम्राज्यस्नपने व्यापृतैः करणभूतैरम्बुभिः दिनकरकुलस्य सूर्यवंशस्य दैन्यमवसादं क्षालयिष्यन् । अनेन दैन्यस्य पङ्कत्वं व्यज्यते । आथर्वणेषु अथर्वसंज्ञकऋषिसंबन्धिमन्त्रेष्वधिकोहुः नियमानां ब्रह्मचर्योपयुक्तक्षारलवणवर्जनादिरूपधर्माणां योगः संबन्धो यस्यास्तां शक्तिमतिशयमाधत्त खलु संपादितवान् हि । वसिष्ठोऽपि त्वदभिषेकयोग्यतासिद्ध्यर्थमितरदुरनुष्ठानब्रह्मचर्याचरणपूर्वकमथर्ववेदमधीतवानिति भावः । वसिष्ठब्रह्मचर्यस्य सूर्यवंशहर्षहेतुपादुकाभिषेकत्वोपपादनादुत्प्रेक्षालंकारः । एतेन लोकोत्तरमुनिजनाराध्यत्वं प्रतीयत इत्यलंकारेण वस्तुध्वनिः ॥

दिनकरकुलजानां देवि पृथ्वीपतीनां
निरुपधिमधिकारं प्राप्नुवत्यां भवत्याम् ।

अजनिषत समस्ताः पादुके तावकीन-
स्नपनसलिलयोगान्निम्नगास्तुङ्गभद्राः ॥ २३ ॥

**दिनकरेति**। हे देवि पादुके, भवत्या दिनकरकुले जातानां पृथ्वीपतीनां निरुपधिं स्वाभाविकमधिकारं प्रभुत्वं प्राप्नुवत्यां भजमानायां तावकीनस्य त्वदीयस्य स्नपनसलिलस्याभिषेकजलस्य योगात् समस्ता निम्नगा नद्यः तुङ्गभद्राः अभिवृद्धा भद्राश्च मङ्गलाश्च तुङ्गभद्रानामकनद्यभिन्नाश्च अजनिषत जाताः। विरोधाभासोऽलंकारः॥

तव विधिवदुपात्ते सार्वभौमाभिषेके
भरतसमयविद्भिः पादुके मन्त्रिमुख्यैः।
तदवधि निजकर्मास्थायिनीनां प्रजानां
प्रथमयुगविशेषैः प्रादुरासन्विचित्राः॥ २४ ॥

**तवेति**। हे पादुके, भरतस्य यः समयः संकेतः भगवत्पादुकाभिषेकगोचरस्तं विदन्ति तैरेतैर्मन्त्रिमुख्यैः सचिवश्रेष्ठैः शरणागतिमन्त्रविदामग्रेसरैश्च, मन्त्रशब्दान्मत्वर्थे इनिः। तव सार्वभौमाभिषेके स्वामित्वाध्यवसाये विधिवद्विध्यर्हं यथा तथोपात्ते सति त्वदवधिषु त्वच्छेषित्वपर्यन्तेषु निजकर्मसु स्ववर्णाश्रमोचितनित्यनैमित्तिककर्मसु स्थायिनीनां प्रजानां विचित्रा आश्चर्यभूता नानाविधाश्च प्रथमयुगस्य कृतयुगस्य विशेषा अतिशयितफलोदयाः स्थिराश्च भक्तिप्रभृतयः प्रादुरासन् प्रादुर्भूताः। धर्मसमृद्धेर्वर्णनादुदात्तालंकारः श्लेषसंसृष्टः॥

अवसितरिपुशब्दानन्वभूस्त्वं तदानीं
रघुपतिपदरक्षे लब्धराज्याभिषेका।
चलितभुजलतानां चामरग्राहिणीनां
मणिवलयनिनादैर्मेदुरान्मन्त्रघोषान्॥ २५ ॥

**अवसितेति**। हे रघुपतिपदरक्षे, त्वं तदानीं लब्धराज्याभिषेका सती चलिता लोला लतासदृशा भुजा यासां चामरग्राहिणीनां वालव्यजनग्रहणवतीनां परिचारिकाणां मणिमयानां कटकानां निनादैः खलखलात्कारैर्मेदुरान् सान्द्रान् अवसिताः शान्ता रिपूणां शब्दा नामानि वादाश्च यैस्तान्मन्त्रघोषानन्वभूरनुभूतवती। समृद्धिवर्णनादुदात्तः प्रेयःसंकीर्णः॥

समुचितमभिषेकं पादुके प्राप्नुवत्यां
त्वयि विनिपतितानां देवि तीर्थोदकानाम्।
ध्वनिरनुगतमन्त्रः सीदतां कोशलानां
शमयितुमलमासीत्संकुलानार्तनादान्॥ २६ ॥

**समुचितमिति** । हे देवि पादुके, समुचितमभिषेकं प्राप्नुवत्यां त्वयि विनिपतितानामावर्जितानां तीर्थोदकानां गङ्गादिजलानाम् । अनुगता अनुहृता मन्त्रा अभिषेककरणभूता यस्य स ध्वनिः सीदतां दुःखितानां कोशलदेशस्थानां संकुलान् परस्परपराहतान् आर्तनादान् दीनविलापान्, 'अथ संकुलक्लिष्टे परस्परपराहते' इत्यमरः । शमयितुमलमासीत् समर्थं आसीत् । अनन्तरभावमात्रेण आर्तशब्दशान्तिरभिषेकजन्यध्वनिजन्योत्प्रेक्षणादुत्प्रेक्षालंकारः ॥

दिविषदनुविधेयं देवि राज्याभिषेकं
भरत इव यदि त्वं पादुके नान्वमंस्थाः ।
कथमिव रघुवीरः कल्पयेदल्पयत्न-
स्त्रिचतुरशरपातैस्तादृशं देवकार्यम् ॥ २७ ॥

**दिविषदिति** । हे देवि पादुके, त्वं दिविषद्भिर्देवैरनुविधेयमनुमोदनीयं राज्याभिषेकं भरत इव नान्वमंस्था यदि नाङ्गीकृतवती चेत् रघुवीरोऽल्पयत्नः सन्नल्पायासः सन् त्रयश्चत्वारो वा त्रिचतुराः 'संख्ययाव्यया' इत्यादिना बहुव्रीहिः, अच्प्रकरणे 'त्र्युपाभ्यां चतुरोऽजिष्यते' इति अच् । तेषां शराणां पातैस्तादृशं रावणादिवधरूपं देवकार्यं कथमिव कल्पयेत् । न कथमपीत्यर्थः । पादुकाराज्याङ्गीकाराभावे राजरक्षा वैरिवधरूपकार्यद्वयव्यासङ्गेनायासबाहुल्याद्रामो न किंचिदपि कुर्यादिति भावः । संभावनालंकारः ॥

कतिचन पदपद्मस्पर्शसौख्यं त्यजन्ती
व्रतमतुलमधास्त्वं वत्सरान्सावधाना ।
रघुपतिपदरक्षे राक्षसैस्त्रासितानां
रणरणकविमुक्तं येन राज्यं सुराणाम् ॥ २८ ॥

**कतिचनेति** । हे रघुपतिपदरक्षे, रामस्येति गम्यते । पद्मसदृशपदयोः स्पर्शजनितसौख्यं त्यजन्ती जहती त्वं सावधाना अप्रमादा सती कतिचन वत्सरान् वर्षाणि अतुलमसदृशं व्रतं नियममधाः धृतवती । येन व्रतेन राक्षसैस्त्रासितानां भीषितानां सुराणां राज्यं रणरणकविमुक्तं भयानुवृत्तिशून्यमासीदिति शेषः । पादुकासंबन्धिन्या नित्यासिकया स्वाभाविक्या एव व्रतत्वसंभावनादुत्प्रेक्षालंकारः । तेनैव रक्षणे जागरूकत्वरूपाशयमहत्त्वव्यञ्जनादुदात्तालंकारध्वनिः 'तदुदात्तं महत्त्वं यद्विभूतेराशयस्य वा' इति लक्षणात् ॥

अथर्वोपज्ञं ते विधिवदभिषेकं विदधतां
वसिष्ठादीनामप्युपचितचमत्कारभरया ।
त्वदास्थान्या रङ्गक्षितिरमणपादावनि तदा
लघीयस्यो जाता रघुपरिषदाहोपुरुषिकाः ॥ २९ ॥

**अथर्वेति** । हे रङ्गक्षितिरमणपादावनि, तदा अभिषेककाले अथर्वोपज्ञमथर्वर्षिणा

प्रथमं दृष्टं ते तव विधिवत् विध्यर्हं यथा तथा अभिषेकं विदधतां कुर्वतां वसिष्ठवामदेव- प्रभृतीनामपि उपचितः प्रवृद्धश्चमत्कारभरो विस्मयातिशयो यया तया त्वदास्थान्या रघुपतिपरिषदां रघुवंशराजसमानामाहोपुरुषिका दर्पजनितात्मसंभावना। 'द्वन्द्वमनोज्ञादि- भ्यश्च' इति भावे अहोपुरुषशब्दाद्वुञ्। 'आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि' इत्य- मरः। लघीयस्यः अतिशयेन लघ्व्यो जाताः। पादुकापरिषदा उपमेयया पूर्वराजपरिषदां चमत्कारातिशयेन तिरस्कारवर्णनात्प्रतीपभेदः॥

अभिषेचयतु स रामः पदेन वा स्पृशतु पादुके भवतीम्।
अविशेषितमहिमा त्वं क्व वा विशेषः क्षमासमेतानाम्॥ ३०॥

**अभिषेचयत्विति**। हे पादुके, स रामो भवतीमभिषेचयतु वा पदेन चरणेन स्पृशतु वा। त्वं तु अविशेषितोऽविकृतः महिमा माहात्म्यं यस्याः सा। तथा हि—क्षमया क्षान्त्या भूम्या च समेतानां क्व वा कुत्र वा विशेषः तारतम्यम्। न क्वापीत्यर्थः। पादुकायाः क्षान्तियुताया भगवच्चरणवहने सिंहासनारोहणे च नोत्कर्षापकर्षाविति भावः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालंकारः॥

भारद्वाज**श्रीनिवासार्य**नामा स्तोत्रं चित्रं पादुकाया व्यवारीत्।
वात्स्यः श्रीमान्मातुलो यस्य मान्यो व्याख्यातॄणामग्रणीर्वेङ्कटेशः॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य वृत्तिषु श्रीरङ्गनाथपादुकासहस्रे सटीकाभिषेकपद्धतिः सप्तमी॥

---

अथ निर्यातनापद्धतिरष्टमी प्रारभ्यते।

अथास्यां पद्धत्यां भरतकृतन्यासप्रत्यर्पणमवलम्ब्य पादुकां स्तौति—

अभिषेकोत्सवात्तस्माद्यस्या निर्यातनोत्सवः।
अत्यरिच्यत तां वन्दे भव्यां भरतदेवताम्॥ १॥

**अभिषेकेति**। यस्या रामेण भरते न्यासत्वेन निक्षिप्तायाः पादुकायाः। 'पादुके चास्य राज्याय न्यासं दत्वा पुनः पुनः' इत्युक्तेः। निर्यातनोत्सवः न्यासप्रत्यर्पणोत्सवः 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि च' इत्यमरः। तस्मात्प्रसिद्धादभिषेकोत्सवादत्य- रिच्यत अतिशयितः। 'रिचिर् विरेचने' इत्यस्मात्कर्मकर्तरि लङ्। पादुकाया राज्याभिषेका- पेक्षया प्रत्यर्पणं सर्वेषामानन्दावहमासीदिति भावः। भव्यां मङ्गलकरीं भरतस्य देवतां आराध्यां तां पादुकां वन्दे। प्रेयोऽलंकारः॥

उपास्य वर्षाणि चतुर्दश त्वामुत्तारिकामुत्तरकोशलस्थाः।
सनन्दनाद्यैरपि दुर्विगाहं सांतानिकं लोकमवापुरग्र्यम्॥ २॥

**उपास्येति**। हे पादुके, उत्तरकोशलस्था जना उत्तारिकां परमपुरुषार्थसिद्धयु-

गायभूतां त्वां चतुर्दश वर्षाणि । अत्यन्तसंयोगे द्वितीया । उपास्य अभ्यर्च्य सनन्दनः ब्रह्मपुत्रः ब्रह्मर्षित्वेन प्रसिद्धः आद्यो येषां तैर्योगिभिरपि दुर्विगाहं दुष्प्रवेशं सान्तानिकनामानमग्र्यं लोकमवापुः प्राप्ताः । निर्याणकाले भगवता रामेण दत्तसाकेतवासिना सान्तानिकलोकः पादुकोपासनफलमिति भावः । उदात्तालंकारः ॥

पादावनि प्रत्ययितो हनूमान्सीतामिव त्वां चिरविप्रयुक्ताम् ।
प्रणम्य पौलस्त्यरिपोरुदन्तं विज्ञापयामास विनीतवेषः ॥ ३ ॥

**पादावनीति** । हे पादावनि, प्रत्ययितः आप्तः 'आप्तप्रत्ययितौ समौ' इत्यमरः । हनूमान् चिरविप्रयुक्तां । रामेणेति शेषः । त्वां सीतामिव प्रणम्य पौलस्त्यरिपो रामस्योदन्तं रावणवधरूपं सुग्रीवसख्यादिकं च विनीतवेषः सन् विज्ञापयामास विज्ञापितवान् । उपमा। तथा च कारागृहनिग्रायाः सीताया हनुमद्वाक्याद्यथा हर्षो बभूव तथा पादुकाया अपीति व्यज्यते । इतः प्रभृति 'श्रुत्वैवं हनुमन्मुखात्—' (८।१८) इत्यन्तं हनुमतो विज्ञापनप्रकारः । अतो न पद्धतावसंगतिः ॥

तवाभिषेकान्मणिपादरक्षे मूले निषेकादिव वृद्धियोगात् ।
जहुस्तदैव त्रिदशाङ्गनानां प्रम्लानतां पत्रलताङ्कुराणि ॥ ४ ॥

**तवेति** । हे मणिपादरक्षे, त्रिदशाङ्गनानां देवस्त्रीणामङ्कुराणीव स्थिताः पत्रवल्लयः । 'उपमितं व्याघ्रादिभिः' इति समासः । 'भुजशिखरस्तनमण्डलकपोलकण्ठेषु विरचिता कुशलैः । अनुलेपनेन रेखा निगद्यते पत्रवल्लीति' इति हलायुधः । वृद्धेरैश्वर्यस्योपचयस्य योगात् मूले बुध्ने निषेकात् सेकादिव स्थिता तवाभिषेकात्तदैव तत्क्षणमेव प्रम्लानतां तिरोहिततां ग्लानिं च जहुस्त्यक्तवन्ति । अवयवोपमा, लताङ्कुरेत्यत्र समासशास्त्राद्वाचकलोपात् लुप्ता ॥

सर्वतस्त्वदभिषेकवासरे सम्यगुज्झितसमस्तकण्टके ।
राघवस्य विपिनेषु पादुके यत्र कामगमता व्यवस्थिता ॥ ५ ॥

**सर्वत इति** । हे पादुके, तवाभिषेकेणोपलक्षितवासरे दिने सर्वतः सर्वत्र राज्ये अरण्ये च सम्यक् उच्छ्रिता उत्पतिताः कण्टकाः क्षुद्रशत्रवस्तीक्ष्णाग्राश्च । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । तं यत्र तस्मिन् सति राघवस्य विपिनेषु वनेषु यत्रकामगमता यत्र गन्तव्यत्वेनोपस्थिते देशे काम इष्टः । कमेः कर्मणि घञ् । गमो गमनम् 'ग्रहवृदृनिश्चिगमश्च' इति गमेर्भावे अप् । यस्य सः । अव्ययघटितत्रिपदबहुव्रीहिः । स च अस्तिक्षीरादिः । तस्य भावस्तत्ता सा 'अप्रमेयो नियोज्यश्च यत्रकागमनो वशी । मोदते भगवान्भूतैर्बालः क्रीडनकैरिव' इत्युक्ता व्यवस्थिता अबाधिता जाता । कण्टकशब्दश्लेषाध्यवसितसूच्यग्रोद्धरणहेतुत्वोत्प्रेक्षा ॥

किं चतुर्दशभिरेव वत्सरैर्नित्यमेव मणिपादुके युवाम् ।
पादयोस्त्रिभुवनाधिराजयोर्यौवराज्यमधिगच्छतं स्वयम् ॥ ६ ॥

**किमिति ।** हे मणिपादुके, चतुर्दशभिर्वत्सरैरेव अधिकारोपयुक्तैरब्दैरेव किम् । तत्र को विशेष इत्यर्थः । रामस्य पादयोश्चरणयोस्त्रिभुवनस्य पातालादेः अधिराजयोः सार्वभौमयोः सतोर्नित्यमेव यौवराजभावमधिगच्छताम् । गमेर्लोण्मध्यमपुरुषस्य द्विवचनम् । रामचरणयोः सिंहासनावस्थानकाले पादुकयोः पादपीठनिष्ठत्वेन युवराजत्वमिति भावः । आक्षेपालंकारः ॥

रामस्य राक्षसवधे त्वरितस्य काले
पादावनि प्रकटयन्निव पार्ष्णिगुप्तिम् ।
आचित्रकूटमधिगम्य शशंस वार्ता-
मव्याहतस्त्वदभिषेकमृदङ्गनादः ॥ ७ ॥

**रामस्येति ।** हे पादावनि, अव्याहतोऽप्रतिबद्धोऽवाभिषेके मृदङ्गानां वाद्यविशेषाणां नादः काले दण्डकारण्यगमनकाले राक्षसवधे त्वरितस्य रामस्य पार्ष्णिगुप्तिं पश्चाद्देशरक्षां प्रकटयन् प्रकाशयन्निव आचित्रकूटं चित्रकूटं पर्वतमभिव्याप्याधिगम्य वार्तां वृत्तान्तं इयं पादुका पृष्ठदेशरक्षायां वर्तते निःशङ्कं गन्तव्यमित्येवंरूपां वाचं शशंसेव उवाचेव । स्वरूपोत्प्रेक्षा ॥

भद्राणि देवि जगतां प्रतिपादयिष्य-
न्प्रागेव येन भवतीं भरतोऽभ्यषिञ्चत् ।
मन्ये कपीश्वरविभीषणयोर्यथाव-
त्संतन्यते स्म तत एव किलाभिषेकः ॥ ८ ॥

**भद्राणीति ।** हे देवि मातः, भरतः येन कारणेन जगतां भद्राणि प्रतिपादयिष्यन् संपादयिष्यन् प्रागेव । रामाभिषेकादिति योज्यम् । भवतीमभ्यषिञ्चत् ततः कारणादेव किल कपीश्वरविभीषणयोः सुग्रीवविभीषणयोरभिषेको यथावत् यथार्हं संतन्यते स्म उत्तरोत्तरतया ववृधे । कर्मकर्तरि लिट् । मन्य इत्युत्प्रेक्षा पादुकाभ्याभिषेकस्य सुग्रीवाद्यभिषेकानुस्यूतिहेतुत्वोत्प्रेक्षणात् ॥

संभिद्यमानतमसासरयूपनीतैः
संवर्द्धितस्तव शुभैरभिषेकतोयैः ।
मन्ये बभूव जलधिर्मणिपादरक्षे
रामास्त्रपावकशिखाभिरशोषणीयः ॥ ९ ॥

**संभिद्यमानेति ।** हे मणिपादरक्षे, संभिद्यमानाभ्यां परस्परं संगच्छमानाभ्यां तमसासरय्वाख्याभ्यां नदीभ्यामुपनीतैराहृतैः शुभैर्मङ्गलैस्तवाभिषेकतोयैः संवर्द्धितः जलधिः समुद्रः रामस्य अस्त्रपावकस्य अस्त्रजनिताग्नेः शिखाभिर्ज्वालाभिरशोषणीयो बभूव इति

मन्ये । रामास्त्रलक्षीकृतस्यापि जलधेरशोषणं तमसासरयूद्वारोपगतपादुकाभिषेकतोयसंसर्गादिति हेतूत्प्रेक्षा ॥

पादावनि त्वदभिषेचनमङ्गलार्थं
भेरीशतं भृशमताड्यत यत्प्रतीतैः ।
आकर्ण्य तस्य सहसा तुमुलं निनादं
लङ्काकपाटनयनानि निमीलितानि ॥ १० ॥

**पादावनीति** । हे पादावनि, प्रतीतैर्वाद्यवादनपटुत्वेन प्रसिद्धैस्त्वदभिषेकस्य मङ्गलार्थं यत् भेरीशतं भृशमताड्यत ताडितम् । 'तड आघाते' इति धातोश्चौरादिकात् कर्मणि लङ् । तस्य भेरीशतस्य तुमुलं निबिडं शब्दमाकर्ण्य लङ्कायाः कपाटान्येव नयनानि निमीलितानि । पादुकाभिषेकभेरीशब्दश्रवणेनासह्यशब्दश्रवणेन भीरूणां नयननिमीलनवत् स्त्रीत्वेन प्रतीताया लङ्कापुर्याः कपाटनयननिमीलनोत्प्रेक्षणात् समासोक्तिरूपकसंकीर्णेयमुत्प्रेक्षा ॥

तापोद्गमस्त्वदभिषेकजलप्रवाहै-
रुत्सारितस्त्वरितमुत्तरकोशलेभ्यः ।
लेभे चिराय रघुपुङ्गवपादरक्षे
लङ्कावरोधसुदृशां हृदयेषु वासम् ॥ ११ ॥

**तापेति** । हे रघुपुङ्गवपादरक्षे, त्वदभिषेकजलप्रवाहैरुत्तरकोशलेभ्यस्त्वरितं शीघ्रमुत्सारितो निरस्तस्तापोद्गमस्तापोदयो लङ्काया अवरोधसुदृशामन्तःपुरनारीणां हृदयेषु चिराय अनेककालं वासं स्थितिं लेभे लब्धवान् । रावणान्तःपुरस्त्रीमनस्तापानामभिषेकजलोत्सारितकोशलदेशतापात्मकत्वोत्प्रेक्षणात्स्वरूपोत्प्रेक्षा ॥

आवर्जितं विधिविदा मणिपादरक्षे
पद्मासनप्रियसुतेन पुरोहितेन ।
आसीन्निदानमभिषेकजलं त्वदीयं
नक्तंचरप्रणयिनीनयनोदकानाम् ॥ १२ ॥

**आवर्जितमिति** । हे मणिपादरक्षे, विधिविदा अभिषेकविधायकशास्त्रज्ञेन पद्मासनस्य ब्रह्मणः प्रियसुतेन पुरोहितेन वसिष्ठेनावर्जितं मुक्तं त्वदीयमभिषेकजलं नक्तंचराणां रावणादीनां प्रणयिनीनां प्रेयसीनां नयनोदकानामश्रूणां निदानमादिकारणम् । 'निदानं त्वादिकारणम्' इत्यमरः । आसीत् । राक्षसस्त्रीमुखाश्रूणां पादुकाजलसमवायिकारणत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥

देवि त्वया स्नपनसंपदि संश्रितायां
दग्धे पुरे दशमुखस्य बलीमुखेन।
आसीत्ततःप्रभृति विश्वजनप्रतीत-
मद्भ्योऽग्निरित्यवितथं वचनं मुनीनाम्॥ १३॥

**देवीति**। हे देवि, त्वया स्नपनमभिषेक एव संपद्वृद्धिस्तस्यां संश्रितायां सत्यां दशमुखस्य रावणस्य पुरे लङ्कायां बलीमुखेन हनुमता दग्धे च सति ततःप्रभृति अद्भ्योऽग्निरिति सर्वेषां जनानां प्रतीतं प्रसिद्धं मुनीनां व्यासादीनां वचनमवितथमासीत् अबाधितमासीत्। भारते संभवपर्वणि (?) द्रोणं प्रति दुर्योधनवचनम्—'अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमश्मनो लोहमुत्थितम्। तेषां सर्वगतं तेजः स्वासु योनिषु शाम्यति'। उत्तरत्र च 'सलिलादुत्थितो वह्निर्येन दग्धं चराचरम्' इति। इदं व्यष्टिसमष्टिविषयमित्यभिहितमाचार्यैः—'अद्भ्योऽग्निस्तेजसस्ताः' इति श्लोके। अत्र अद्भ्योऽग्निरिति वचनस्य पादुकाभिषेकजलजन्यत्वोत्प्रेक्षितलङ्कादाहकाग्निपरत्वेन योजनान्निरुक्तिरलंकार उत्प्रेक्षासंकीर्णः॥

आयोध्यकैस्त्वदभिषेकसमिद्धहर्षै-
राध्मापिताः श्रुतिसुखं ननु ते तदानीम्।
रामस्य राक्षसशिरोलवनेऽप्यशाम्य-
न्येषां ध्वनिर्विजयशङ्खरवो बभूव॥ १४॥

**आयोध्यकैरिति**। ननु पादरक्षे, 'आमन्त्रणे ननु' इत्यमरः। तदानीं. ते शङ्खाः। तवाभिषेकेण समिद्धाः प्रबुद्धा हर्षा येषां तैरायोध्यकैरयोध्यावासिजनैः। 'धन्वयोपधाद्वुञ्' शैषिकः। श्रुतीनां सुखं यथा तथा आध्मापिता शब्दायिताः कृताः। येषां शङ्खानां ध्वनी राक्षसशिरसां लवने छेदनकालेऽप्यशाम्यन्ननुपरमन् रामस्य विजयसूचकशङ्खरवो बभूव। पादुकाभिषेकशङ्खस्य दीर्घकालावस्थानेन निमित्तेन रामविजयशङ्खत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः। वाचकाभावाद्गम्या॥

प्रथयितुमभिषेकं पादुके तावकीन
दुरितशमनदक्षे दुन्दुभौ ताड्यमाने।
सपदि परिगृहीतं साध्वसं देवि नूनं
दशवदनवधूनां दक्षिणैर्नेत्रकोशैः॥ १५॥

**प्रथयितुमिति**। हे देवि पादुके, तावकीनमभिषेकं प्रथयितुं दुरितानामरिष्टानां शमने निरासे दक्षे समर्थे दुन्दुभौ भेर्यां ताड्यमाने सति दशवदनस्य रावणस्य वधूनां दक्षिणैः सव्येतरैः नेत्रकोशैर्नयनपिधानावयवैः। खड्गपिधानवाचिना कोशशब्देन नयनपिधानावयवस्य लक्षणया बोधनम्। सपदि झटिति साध्वसं भयं परिगृहीतम्। अन्यथा

कम्पानुपपत्तिरिति भावः । रावणस्त्रीणामतिभयसूचकदक्षिणाक्षिस्पन्दनस्य पादुकाभिषेकदुन्दुभिजन्यशब्दभयनिमित्तकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥

रघुपतिपदरक्षे रत्नपीठे यदा त्वा-
मखिलभुवनमान्यामभ्यषिञ्चद्वसिष्ठः ।
दशमुखमहिषीभिर्देवि बाष्पायिताभिः
स्तनयुगमभिषेक्तुं तत्क्षणादन्वमंस्थाः ॥ १६ ॥

रघुपतीति । हे रघुपतिपदरक्षे, वसिष्ठो यदा अखिलभुवनमान्यां त्वां रत्नपीठेऽभ्यषिञ्चत् । ततः क्षणाद्बाष्पायिताभिर्बाष्पमुद्वान्तवतीभिः । 'बाष्पोष्मभ्यामुद्वमने' इति क्यङ्, कर्तरि क्तः । दशमुखस्य महिषीभिः स्तनयोर्युगम् । प्रत्येकापेक्षया एतदुक्तिः । अभिषेक्तुमन्वमंस्था अनुमतवती । रावणस्त्रीणामश्रुजलेन स्तनाभिषेकस्य झटित्यानन्तर्यमात्रेण पादुकानुज्ञाहेतुकत्वोत्प्रेक्षणादुत्प्रेक्षालंकारः ॥

रामास्त्राणि निमित्तमात्रमिह ते लब्धाभिषेका स्वयं
रक्षस्तत्क्षपयांचकार भवती भद्रासनस्थायिनी ।
यद्दोष्णामतिवेलदर्पदवथुज्वालोष्मलानां तदा
निष्पिष्टैः कलधौतशैलशिखरैः कर्पूरचूर्णायितम् ॥ १७ ॥

रामेति । हे पादुके, इह रक्षःक्षपणे ते तव रामास्त्राणि निमित्तमात्रं कालादिवत् साधारणकारणमेव । भद्रासनस्थायिनी भवती लब्धाभिषेका सती तद् रक्षः तं रावणं स्वयं क्षपयांचकार क्षपितवती । अतिवेलं निर्मर्यादः दर्पजनितो दवथुस्तापः स एव ज्वाला वह्निशिखा तयोष्मलानामुष्णानां यस्य रक्षसो दोष्णां भुजानाम् । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । निष्पिष्टैश्चूर्णितैः कलधौतशैलस्य कैलासस्य शिखरैः शृङ्गैः । 'कूटोऽस्त्री शिखरं शृङ्गम्' इत्यमरः । तदा कैलासोद्धारकाले कर्पूरचूर्णायितं कर्पूरचूर्णवदाचरितम् । कैलासनिष्पेषेणोत्सिक्तस्य रावणस्य वधो; न रामास्त्रकृतः अपि तु पादुकाकृत एवेति रामास्त्रप्रधानकारणत्वपमह्नुत्य माहात्म्यातिशयेन पादुकायां निवेशनादपह्नवः, उत्तरत्र रावणचरित्रस्य पादुकाचरिताङ्गतावर्णनादुदात्तं च । कर्पूरचूर्णायितमित्यत्र लुप्तोपमा । एषां यथासंभवमङ्गाङ्गिभावेन संकरः ॥

श्रुत्वैवं हनुमन्मुखाद्रघुपतेः प्रत्यागतिं तत्क्षणा-
दासीदक्षरतानुवर्तनवशादारूढकुम्भस्थलाम् ।
कालोन्निद्रकदुष्णदानमदिरामाद्यद्द्विरेफध्वनि-
श्लाघाचाटुभिरस्तुतेव भवती शत्रुंजयः कुञ्जरः ॥ १८ ॥

श्रुत्वेति । हे पादुके, शत्रुंजयाख्यः कुञ्जरो गजः 'तवाभिषेकादिति' तृतीयश्लोकादारभ्य 'कर्पूरचूर्णायितमिति' सप्तदशश्लोकपर्यन्तमुक्तप्रकारेण हनुमन्मुखाद्रघुपतेः प्रत्यागतिं

श्रुत्वा तत्क्षणादासीदतो रामसमीपमागच्छतो भरतस्य कर्तुरनुवर्तनवशादनुसरणायत्ततया आरूढः कुम्भस्थलो गजमस्तकप्रदेशो यया तां भवतीं काले रामागमनकाले उन्निद्रमुद्भूतं कदुष्णं दानं मदजलमेव मदिरा मधु तया मायतां मदयुक्तानां द्विरेफाणां भ्रमराणां ध्वनिभिरेव श्लाघार्थैश्चाटुभिः स चमत्कारप्रियोक्तिभिरस्तुतेव स्तुतवानिव । हनुमदुक्तं सर्वं युक्तमिति सश्लाघमनुकृतवानिवेत्युत्प्रेक्षा ॥

प्रत्यागतस्य भवतीमवलोक्य भर्तुः
पादारविन्दसविधे भरतोपनीताम् ।
पूर्वाभिषेकविभवाभ्युचितां सपर्यां
मध्ये सतामकृत मैथिलराजकन्या ॥ १९ ॥

**प्रत्यागतस्येति** । हे पादुके, मैथिलराजस्य कन्या सीता प्रत्यागतस्य वनान्निवृत्यागतस्य भर्तू रामस्य पादारविन्दसविधेऽरविन्दसदृशपादसमीपे भरतेनोपनीतां भवतीमवलोक्य पूर्वस्य प्राथमिकस्याभिषेकजनितविभवस्याभ्युचितां पूर्वाभिषेकस्य नन्तव्यताहेतुत्वात् सपर्यां पूजां सतां वसिष्ठादीनां मध्ये अकृत प्रणीतवतीत्यर्थः । सीताप्रेम्णः पादुकाप्रेमाङ्गत्वात्प्रेयोऽलंकारः ॥

संप्रेक्ष्य मैथिलसुता मणिपादरक्षे
प्रत्युद्गतस्य भवतीं भरतस्य मौलौ ।
निर्दिश्य सा निभृतमञ्जलिना पुरस्तात्
तारादिकाः प्रियसखीरशिषत्प्रणन्तुम् ॥ २० ॥

**संप्रेक्ष्येति** । हे मणिपादरक्षे, सा मैथिलराजसुता भवतीं प्रत्युद्गतस्य । राममिति शेषः । भरतस्य मौलौ चूडायां भवतीं संप्रेक्ष्य पुरस्तादग्रे निभृतमव्याकुलं यथा तथा अञ्जलिना आकोशहस्ताभ्यां निर्दिश्य दर्शयित्वा तारादिकाः सुग्रीवमहिषीप्रभृतीः प्रियसखीः प्रणन्तुमशिषदनुशिष्टवती । 'शासु अनुशिष्टौ' अस्मात् 'सर्तिशास्ति' इत्यादिना अङ्, 'शास इदङ्हलोः' इति इत्वम् । पूर्ववत्प्रेयोऽलंकारः ॥

तुल्येऽपि देवि रघुवीरपदाश्रयत्वे
पूर्वाभिषेकमधिगम्य गरीयसी त्वम् ।
तेनैव खल्वभजतां मणिपादरक्षे
रक्षःप्लवंगमपती भवतीं स्वमूर्ध्ना ॥ २१ ॥

**तुल्येऽपीति** । हे देवि मणिपादरक्षे, त्वं रघुवीरस्य पदाश्रयत्वे स्थानाधिष्ठातृत्वे चरणारविन्दसेवकत्वे च तुल्येऽविशेषेऽपि । अपिना तुल्याधिकारवतामेकस्यान्येन प्रणामो नोपपद्यते इति विरोधस्फूर्तिः । परिहरति—**पूर्वेति** । पूर्वाभिषेकं प्राथमिकाभिषेकम-

धिगम्य गरीयसी गुरुतरा भवती तेनैव खलु ततो हेतोरेव हि रक्षसां प्लवंगमानां च पती विभीषणसुग्रीवौ भवतीं स्वमूर्ध्ना अभजतां प्रगतवन्तावित्यर्थः । श्लेषानुप्राणितः काव्यलिङ्गमलंकारः ॥

निर्वृत्तराक्षसचमूमृगयाविहारो
रङ्गेश्वरः स खलु राघववंशगोप्ता ।
वंशक्रमादुपनतं पदमादधानो
मान्यं पुनस्त्वयि पदं निदधे स्वकीयम् ॥ २२ ॥

**निर्वृत्तेति** । हे पादुके, राघववंशगोप्ता रामत्वेनावतीर्णो निर्वृत्तः समाप्तो राक्षसानां चमूषु सेनासु मृगयाविहार आखेटक्रीडा यस्य स रङ्गेश्वरो वंशक्रमात् कुलपारम्पर्येणोपनतमागतं पदं स्थानमादधानोऽङ्गीकुर्वन् पुनर्मान्यं पूज्यं स्वकीयं पदं चरणं त्वयि निदधे निहितवान् । श्लेषोत्थापितं पूर्वरूपम् ॥

तत्तादृशोश्चरणयोः प्रणिपत्य भर्तुः
पौरास्त्वया विधृतयोः प्रतिपन्नसत्त्वाः ।
प्राप्ताभिषेकविभवामपि पादुके त्वा-
मानन्दबाष्पसलिलैः पुनरभ्यषिञ्चन् ॥ २३ ॥

**तत्तादृशोरिति** । हे पादुके, पौराः पुरवासिनस्त्वया विधृतयोस्तत्तादृशोरवाङ्मनोगोचरस्वरूपप्रकाशयोर्भर्तुः प्रभो रामस्य चरणयोः प्रणिपत्य, प्रतिपन्नसत्त्वाः सन्तः प्राप्तपूज्यत्वाध्यवसायाः सन्तः । 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः । प्राप्तोऽभिषेकजनितविभवो यया तां सतीमपि त्वामानन्दबाष्पसलिलैर्हर्षजनितनयनजलैः पुनः आवृत्याभ्यषिञ्चन्नभिषिक्तवन्तः । अनुगुणालंकारः ॥

मातस्त्वयैव समये विषमेऽपि सम्य-
ग्राजन्वतीं वसुमतीमवलोक्यमानः ।
संजीवनाय भरतस्य समग्रभक्तेः
सत्यप्रतिश्रवतयैव चकार राज्यम् ॥ २४ ॥

**मातरिति** । वात्सल्यप्रियप्रवर्तकत्वाध्यवसायेन पादुकायां मातृत्वोक्तिः । हे मातः, रामो विषमे समयेऽपि वसुमतीं भूमिं त्वयैव सम्यक् राजन्वतीं शोभनराजयुक्तामवलोक्य समग्रभक्तेर्भरतस्य सत्यप्रतिश्रवतया अबाधितप्रतिज्ञतया संजीवनायैव प्राणनायैव राज्यं चकार कृतवान् । प्रेयोऽलंकारः ॥

पादावनि प्रतिगतस्य पुरीमयोध्यां
पौलस्त्यहन्तुरभिषेकजलार्द्रमूर्तेः ।

अंसे यथार्हमधिवास्य निजैर्यशोभिः
कस्तूरिकेव निहिता वसुधा त्वयैव ॥ २५ ॥

**पादावनीति**। हे पादावनि, अयोध्यां पुरीं साकेतनगरीं प्रतिगतस्य पुनः प्राप्तस्याभिषेकजलेनार्द्रा मूर्तिर्यस्य तस्याभिषिक्तस्येति यावत्। पौलस्त्यहन्तू रामस्यांसे भुजशिखरे त्वयैव न तु भरतेन वसुधा निजैरात्मीयैर्यशोभिर्यथावदधिवास्य कस्तूरिकेन निहिता निक्षिप्ता। स्वरूपोत्प्रेक्षा॥

यासौ चतुर्दशसमाः पतिविप्रयुक्ता
विश्वंभरा भगवती विधृता भवत्या।
विन्यस्य तां रघुपतेर्भुजशैलशृङ्गे
भूयोऽपि तेन सहितां भवतीं बभार ॥ २६ ॥

**यासाविति**। भवत्या त्वया पत्या रामेण विप्रयुक्ता विश्लिष्टा भगवती पूज्या यासौ विश्वंभरा वसुधा विधृता असंकीर्णतया भृता; तां रघुपतेर्भुज एव शैलशृङ्गे विन्यस्य निक्षिप्य भूयोऽपि तेन राघवेण सहितां तां भवती बभार धृतवती। द्वितीयोऽधिकालंकारः। 'पृथ्वाधेयाद्यदाधाराधिक्यं तदपि तन्मतम्' इति लक्षणात्॥

निस्तीर्णदुःखजलधेरनघस्य देवि
त्वत्संप्रयुक्तरघुनाथपदान्वयेन।
सद्यः सनन्दनमुखैरपि दुर्निरीक्ष्या
साम्राज्यसंपदपरा भरतस्य जज्ञे ॥ २७ ॥

**निस्तीर्णेति**। हे देवि, निस्तीर्णो लङ्घितो दुःखमेव जलधिर्येन तस्य भरतस्य। त्वया संप्रयुक्तस्य रघुनाथपदस्य रघुकुलसंस्थानस्य भगवच्चरणस्य चान्वयेन संबन्धेन सनन्दनमुखैर्योगिभिरपि दुर्निरीक्ष्या दुरवलोका अपरान्यादृशी साम्राज्यस्य सार्वभौमत्वस्य शेषत्वसाम्राज्यस्य च संपत् सद्यो जज्ञे जाता। भरतस्य जलधितरणरघुवंशप्रभुत्वस्थानोक्त्या रामसमाधिर्व्यज्यते। समासोक्तिसंकीर्णा भेदकातिशयोक्तिः॥

निर्गत्य देवि भरताञ्जलिपद्ममध्या-
द्भूयः समागतवती पुरुषोत्तमेन।
पद्मेव भद्रमखिलं मणिपादरक्षे
प्रादुश्चकार भवती जगतां त्रयाणाम् ॥ २८ ॥

**निर्गत्येति**। हे देवि मणिपादरक्षे, भरतस्य पद्मसदृशाञ्जलिमध्यान्निर्गत्य भूयः पुरुषोत्तमेन रामेण समागतवती पद्मेव श्रीरिव त्रयाणां जगतामखिलं भद्रं प्रादुश्चकार आविष्कृतवती। दुर्वाससः शापादन्तर्हितं समुद्रमथनानन्तरं पद्ममध्यान्निर्गता विष्णुवक्षःस्थलं

श्रिता श्रीः जगतां त्रयाणां क्षेममाविश्वकारेति श्रीविष्णुपुराणादौ । अत्र तत्साम्यवर्णनादुपमालंकारः ॥

रघुपतिमधिरोप्य स्वोचिते रत्नपीठे
प्रगुणमभजथास्त्वं पादुके पादपीठम् ।
तदपि बहुमतिस्ते तादृशी नित्यमासी-
त्क्वनु खलु महितानां कल्प्यते तारतम्यम् ॥ २९ ॥

**रघुपतिरिति** । हे पादुके, त्वं रघुपतिं स्वोचिते आत्मयोग्ये रत्नपीठेऽधिरोप्य पादपीठं प्रगुणं यथा तथा अभजथाः प्राप्तवती 'भज सेवायाम्' इति धातोर्लमध्यमपुरुषैकवचनम् । तदपि पादपीठाधिरोहणमपि नित्यं तादृशी भद्रपीठाधिरोहणसदृशी बहुमतिर्बहुमानमासीत्; भद्रपीठपादपीठाधिरोहणयोरुभयोरपि शेषत्वोपयुक्तत्वादिति भावः । तथाहि महितानां पूजितानां क्वनु खलु क्वा तारतम्यमुत्कर्षापकर्षणव्यवस्था कल्प्यते क्रियते; न क्वापीत्यर्थः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालंकारः ॥

अनुवृत्तरामभावः शङ्के निर्विष्टचक्रवर्तिपदाम् ।
अधुनापि रङ्गनाथः सचमत्कारं पदेन भजति त्वाम् ॥ ३० ॥

**अनुवृत्तेति** । हे पादुके, इति योज्यम् । अनुवृत्तोऽनुगतो रामभावो रामत्वं येन स रङ्गनाथः । निर्विष्टमनुवृत्तं चक्रवर्तिपदं सार्वभौमस्य स्थानं यया तां त्वामधुनापीदानीमपि चमत्कारेण विदग्धकृत्येन सहितं यथा तथा । पदेन चरणेन स्थानेन चेति गम्यते । भजति सेवते । उपास्त इति यावत् । शङ्क इत्युत्प्रेक्षा; अत्र रामात्मनो रङ्गनाथस्य चरणाग्रावनतिपूर्वकपादुकाग्रहणस्य सार्वभौमस्थानोचितप्रणामत्वोत्प्रेक्षणात् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका निर्यातना पद्धतिरष्टमी ॥ ८ ॥

---

अथ बन्दिवैतालिकपद्धतिः ।

अथास्यां पद्धतौ वेदान्तानेव बन्दिवेतालकीकृत्य तन्मुखेन पादुकां स्तोतुं प्रस्तौति—

नमस्ते पादुके पुंसां संसारार्णवसेतवे ।
यदारोहस्य वेदान्ता बन्दिवैतालिका(:)स्वयम् ॥ १ ॥

**नमस्त इति** । हे पादुके, पुंसां संसारार्णवस्य सेतवे उत्तारणोपायभूतायै ते तुभ्यं नमः । यस्यास्तव कर्मण आरोहस्य भगवत्कर्तृकस्य वेदान्ता उपनिषदः, भगवच्छास्त्रं चोपलक्ष्यते । बन्दिनः स्तुतिपाठका वैतालिका बोधकराश्च भवन्तीति गम्यते । 'बन्दिनः स्तुतिपाठकाः' 'वैतालिका बोधकराः' इत्युभयत्रामरः । पादुकाविषयवेदान्तप्रेम्णां वक्तृप्रेमाङ्गत्वात्प्रेयोऽलंकारः, उत्तरार्धे वेदान्तानां वैतालिकत्वेन परिणामात्परिणामः; तयोरङ्गाङ्गिभावेन संकरः ॥

अथ द्वाभ्यां वेदान्तवैतालिक आह—

उचितमुपचरिष्यन्रङ्गनाथ प्रभाते
विधिशिवसनकाद्यान्बाह्यकक्षानिरुद्धान्।
चरणकमलसेवासौख्यसाम्राज्यभाजां
प्रथमविहितभागां पादुकामाद्रियेथाः ॥ २ ॥

**उचितमिति**। हे रङ्गनाथ, त्वं वाह्यकक्ष्यासु वहिरङ्गणेषु निरुद्धान् विष्वक्सेनादिभिः प्रतिबद्धगतीन्, विधिर्ब्रह्मा, शिवो हरः, सनको ब्रह्मपुत्रस्तदाद्यान् प्रभाते उचितं थयार्हमुपचरिष्यन् सन्, उपचरितुमिति यावत्। चरणकमलयोः सेवाजनितसौख्यमेव साम्राज्यं तद्भाजां श्रीप्रभृतीनां मध्ये प्रथमं विहितः कल्पितो भागोंऽशो यस्याः सा तां पादुकामाद्रियेथाः उपादत्स्वेति यावत्। आङ्पूर्वात् 'दृङ् आदरे' इति धातोर्लिङ्मध्यमपुरुषस्यैकवचनम्। उदात्तालंकारः॥

पद्माजुष्टं भजतु चरणं पादुका लब्धवारा
प्रत्यासन्नास्तव परिजनाः प्रातरास्थानयोग्याः।
अर्धोन्मेषादधिकसुभगामर्धनिद्रानुषङ्गां
नाभीपद्मे तव नयनयोर्नाथ पश्यन्तु शोभाम् ॥ ३ ॥

**पद्माजुष्टमिति**। हे नाथ, लब्धवारा प्राप्तपर्यायावसरा पादुका पद्मया श्रिया जुष्टं संवहनेन सेवितं तव चरणं भजतु सेवताम्। प्रातरास्थानस्य प्रभातगोष्ठ्या योग्याः प्रत्यासन्नाः समीपमागतास्तव परिजनाः परिचारकाः; आदर्शधेन्वादिदर्शका इति यावत्। अर्धोन्मेषात् सामिविकासादधिकसुभगामत्यर्थंरमणीयामर्धनिद्रयानुषङ्गोऽनुवृत्तिर्यस्याः सा तां नयनयोः शोभां कान्तिं नाभीपद्मे पश्यन्तु। भगवन्नयनयोश्चन्द्रसूर्यात्मकत्वेन तत्संबन्धान्नाभीपद्मस्यार्धसंकोचविकासता भवति। तादृशसादृश्यं भगवन्नयने प्रतीयते। नयनशोभाया नाभीपद्मवृत्त्युक्त्या पदार्थवृत्तिनिदर्शनालंकारः; 'पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम्' इति लक्षणात्। भगवतश्चन्द्रसूर्यात्मकनयनस्य नाभीपद्मार्धविकासेन पर्यायतः कथनात्पर्यायोक्तालंकारोऽपि; तयोरङ्गाङ्गिभावेन संकरः॥

इतः परं षड्भिः कालसूचकवन्द्युक्तिः—

उपनमति मुहूर्तं शेषसिद्धान्तसिद्धं
तदिह चरणरक्षा रङ्गनाथ त्वयैषा।
मृदुपदमधिरूढा मञ्जुभिः शिञ्जितैः स्वै-
रुपादिशतु जनानामुत्सवारम्भवार्ताम् ॥ ४ ॥

**उपनमतीति**। हे रङ्गनाथ, शेषस्यानन्तस्य सिद्धान्ते गर्गायोपदिष्टे 'यमाराध्य पुरा-

णर्षिर्गर्गो ज्योतींषि तत्त्वतः । ज्ञातवान्सकलं यच्च निमित्तपठितं फलम्' इति श्रीविष्णुपुराणे । तत्र सिद्धं ज्ञानम् । मुहूर्ते शुभकालः । उपनमति उषःकालः संनिहितो वर्तत इति यावत् । 'उषः प्रशंस[शस्य]ते गर्गः' इति वचनात् । तत्तस्मादिह श्रीरङ्गे एषा चरणरक्षा । त्वया मृदुपदं यथा तथा सविलासमिति यावत् । अधिरूढा सती मञ्जुभिः स्वैः शिञ्जितैर्जगतामुत्सवारम्भवार्तामुत्सवारम्भवृत्तान्तमुपदिशतु ज्ञापयतु । त्वयि पादुकामधिरुह्य सविलाससंचारपरे पादुकाशिञ्जितं श्रुत्वा प्राणिनः सर्वे समागच्छन्तीति भावः । प्रेयोऽलंकारः, पादुकाशिञ्जितैः सेवापरजनसमाह्वानोत्प्रेक्षा च ॥

रङ्गाधीश मरुद्गणस्य मकुटादाम्नायवृन्दस्य वा
प्रत्यानीय समर्पिता विधिमुखैर्वारक्रमादागतैः ।
वाहारोहणसंभृतं श्रमभरं सम्यग्विनेतुं क्षमा
लीलासंचरणप्रिया स्पृशतु ते पादाम्बुजं पादुका ॥ ५ ॥

**रङ्गाधीशेति ।** हे रङ्गाधीश, वारक्रमात् पर्यायानुगुण्येन आगतैर्विधिमुखैर्ब्रह्मादिभिः परिचारकैर्मरुद्गणस्य देवसमूहस्याम्नायवृन्दस्य वेदसमूहस्य मूर्तस्य वा मकुटान्मौलिदेशात् प्रत्यानीयोपाहृत्य समर्पिता, वाहारोहणेन गरुन्मदादिवाहनारोहणेन संभृतं संपादितं श्रमभरं श्रान्त्यतिशयं सम्यक् विनेतुं निवर्तयितुं क्षमा शक्ता, लीलासंचरणं प्रियमिष्टं यस्याः सा पादुका ते तव पादाम्बुजं स्पृशतु । वाहनेन शीघ्रगमनजन्यश्रमस्य मन्दसंचारापनोद्यत्वादिति भावः । अत्र विशेषणमहिम्ना वल्लभया पादसंवाहस्य व्यञ्जनात्समासोक्तिरलंकारः । अनेन संगवकाले सेवोक्ता ॥

वृत्तं क्रमेण बहुधा नियुतं विधीना-
मर्धं द्वितीयमिदमङ्कुरितं तवाह्नः ।
नीलासखीभिरुपनीय निवेश्यमाना
मङ्क्षु प्रभो त्वरयते मणिपादुका त्वाम् ॥ ६ ॥

**वृत्तमिति ।** हे प्रभो रङ्गनाथ, विधीनां ब्रह्मणां नियुतं लक्षं क्रमेण पर्यायेण बहुधानेकप्रकारं वृत्तमतीतम्, तवाह्नो दिवसस्येदं द्वितीयं मध्याह्नस्योपरिभागोऽङ्कुरितमुत्पन्नम् । चतुर्मुखस्य चतुर्युगसहस्रमहः, ततोऽप्यनवधिकातिशयमहिम्नो भगवतोऽनेकलक्षचतुर्मुखायूंषि एकमहरिति परिकल्प्य शतगुणितब्रह्मानन्दवदिदमुक्तम् । वस्तुतस्तु 'नैवाहस्तस्य न निशा नित्यस्य परमात्मनः' इति स्मृतेर्नाहरादिपरिच्छेदः । नीलाया देव्याः सखीभिरुपनीय निवेश्यमाना समीपे निक्षिप्यमाणा मणिपादुका श्रीभूम्योरास्थान्यां सहैव वृत्तेः परिशेषान्नीलादेव्या एवान्तःपुराधिष्ठातृत्वादिति भावः । मङ्क्षु स्नातुं त्वरयते ससं-

१. 'दिनादौ प्राह्णपूर्वाह्णौ ततः सङ्गतसङ्गवौ' इति वैजयन्ती.

भ्रममुद्योजयति । अत्र पादुकासमीपास्थानस्य त्वरणहेतुव्यापारत्वेनोत्प्रेक्षणादुत्प्रेक्षालंकारः, अनेकलक्षब्रह्मायुषां भगवदहरर्धत्वासंभवेऽपि तत्संबन्धोक्तेः संबन्धातिशयोक्तिश्च । 'संबन्धातिशयोक्तिः स्यादयोगे योगकल्पनम्' इति लक्षणात् । अनयोस्तिलतण्डुलवत्स्फुटावगम्यमानभेदत्वात्संसृष्टिः । अनेन मध्याह्नकालसेवोक्ता ॥

दिव्याप्सरोभिरुपदर्शितदीपवर्गे
रङ्गाधिराज सुभगे रजनीमुखेऽस्मिन् ।
संरक्षिणी चरणयोः सविलासवृत्ति-
र्नीराजनासनमसौ नयतु स्वयं त्वाम् ॥ ७ ॥

**दिव्येति** । हे रङ्गाधिराज, दिव्याप्सरोभिरप्राकृतदेववनिताभिरुपदर्शितः समीपे दर्शितो दीपवर्गो दीपसमूहो यस्मिन् तस्मिन्, अत एव सुभगे मनोज्ञेऽस्मिन्वर्तमाने रजनीमुखे प्रदोषे। 'प्रदोषो रजनीमुखम्' इत्यमरः । चरणयोः संरक्षिणी पादुका सविलासवृत्तिः सती स्वयं त्वां नीराजनासनमारार्तिकोपचारार्थमासनं नयतु प्रापयतु । यथा लोके पुरंध्री नीराजनाय वरं पीठे निवेशयति तथैव पादुकापीति पादुकायाः पुरंध्रीसमाधिर्व्यज्यत इति समासोक्तिः । सायंतनसेवाक्रमः ॥

आसनादुचितमासनान्तरं रङ्गनाथ यदि गन्तुमीहसे ।
संनतेन विधिना समर्पितां सप्रसादमधिरोह पादुकाम् ॥ ८ ॥

**आसनादिति** । हे रङ्गनाथ, आसनान्मन्त्रासनादेरुचितमुत्तरोत्तरं युक्तमासनान्तरं स्नानासनालंकारासनादि गन्तुं प्राप्तुमीहसे यदीच्छसि चेत् तर्हि संनतेन विनयानतेन विधिना ब्रह्मणा समर्पिताम् । रङ्गनाथस्य ब्रह्माराध्यत्वादिति भावः । सप्रसादं यथा तथा पादुकामधिरोह । प्रत्यासनं पादुका समर्पणीयेत्यस्य शास्त्रस्य वन्दित्वाध्यवसायादेवमुक्तिराचार्यस्य । प्रेयोऽलंकारः । 'प्रेयः प्रियतराख्यानम्' इति लक्षणात् ॥

परिजनवनिताभिः प्रेषितः प्राञ्जलिस्त्वां
प्रणमति मदनोऽयं देव शुद्धान्तदासः ।
फणिपतिशयनीयं प्रापयित्री सलीलं
पदकमलमिदं ते पादुका पर्युपास्ताम् ॥ ९ ॥

**परिजनेति** । हे देव, परिजनवनिताभिरन्तःपुरपरिचारिकाभिर्महिषीहृदयाभिज्ञाभिः प्रेषितः प्रेरितः शुद्धान्तचरो दासोऽयं मदनः प्राञ्जलिः सन् त्वां प्रणमति । समयं विज्ञापयितुमिति भावः । प्राकृतानामिव भगवतः कामवश्यत्वाभावात्प्रणामोक्तिः । फणिपतिं शेषमेव शयनीयं शय्यां सलीलं यथा तथा प्रापयित्री गमयित्रीयं पादुका ते तव पदकमलं पर्युपास्तां भजतु । पर्युपपूर्वात् 'आस उपवेशने' इति धातोर्लोट् । देवीभिः सह पर्युपासनं प्राप्तुं समय इति वक्तव्ये मदनप्रणामोक्तेः पर्यायोक्त्यलंकारः ॥

अथ बन्दिवैतालिकोक्तिं निगमयति—

इति निगमवन्दिवचसा समये समये गृहीतसंकेतः ।
अभिसरति रङ्गनाथः प्रतिपदभोगाय पादुके भवतीम् ॥ १० ॥

**इतीति** । हे पादुके, इत्युक्तप्रकारेण निगमा एव बन्दिनः । वेदे रूढो वन्दिशब्दो योगवृत्त्या वा लक्षणया वा निरपेक्षप्रमाणं भगवच्छास्त्रमपि लक्षयति । प्रतिपादितानामर्थानां तत्रैवाम्रेडितानां वन्दिशब्देन साहचर्यात् प्रक्रान्ता वैतालिकाश्च लक्ष्यन्ते । तेषां वचसा समये समये तत्तदवसरेषु गृहीतसंकेतः प्रत्यभिज्ञातकर्तव्यसूचकव्यापारो रङ्गनाथो भवतीं त्वां प्रतिपदं पदे पदे प्रतिचरणविन्यासमिति यावत् । क्षणे क्षणे च भोगाय सुखानुभवायाभिसरति स्वयमागच्छति । कामुकस्य नायकस्य सखीसंकेतगृहपूर्वकाभिसरणप्रतीतेः समासोक्तिरलंकारः । तेन च पादुकायाः प्रेयसीभावो व्यज्यते । वृत्तमार्याभेदः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका वैतालिकपद्धतिर्नवमी ।

---

अथ शृङ्गारपद्धतिः ।

अथास्यां पद्धत्यां पादुकाभगवतोर्हृद्यव्यापारभेदानालम्ब्य समासोक्तिविधया दम्पतीकृत्यत्वेन स्तौति—

शौरेः शृङ्गारचेष्टानां प्रसूतिं पादुकां भजे ।
यामेष भुङ्क्ते शुद्धान्तात्पूर्वं पश्चादपि प्रभुः ॥ १ ॥

**शौरेरिति** । शृङ्गारचेष्टानां रमणीयव्यापाराणां परस्पररतिजन्यविलासानां च प्रसूतिं हेतुभूतां शौरे रङ्गनाथस्य पादुकां भजे । एष प्रभुः श्रीरङ्गनाथः शुद्धान्तादन्तःपुरमहिषीसंभोगात्पूर्वमपि प्रागपि पश्चादप्यनन्तरमपि तां पादुकां भुङ्क्तेऽनुभवति । अन्तःपुरगमनागमनकालेषु त्वामारुह्य संचरतीति भावः । तामिति पूर्वेणान्वयः । अत्र यथा वारक्रमभाविमहिषीभोगपूर्वोत्तरकालयोरपि समर्थो नायको वल्लभामनुभवति तथेति व्यञ्जनात् पादुकाया भगवद्वल्लभात्वप्रतीतेः समासोक्तिरलंकारः । अत्र नायको दक्षिणोऽनेकासु नायिकास्वविशेषेण वृत्तेः । 'तुल्योऽनेकत्र दक्षिणः' इति लक्षणात् । नायिका स्वीया स्वाधीनपतिका च 'तत्र स्वीयापरिग्रहात्' इति । 'स्नेहात् प्रियाविनाभूता स्वाधीनपतिका मता ।' इति लक्षणात् । संभोगः शृङ्गारः 'अनुकूलौ निषेवेते यत्रान्योऽन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोग उदाहृतः ॥' इति लक्षणम् । चेष्टानामित्यनेन यथोचितं भावादिचतुर्दश विलासा अपि व्यज्यन्ते ॥

प्रणतत्रिदशेन्द्रमौलिमालामकरन्दार्द्रपरागपङ्किलेन ।
अनुलिम्पति पादुके स्वयं त्वामनुरूपेण पदेन रङ्गनाथः ॥ २ ॥

**प्रणतेति ।** हे पादुके, रङ्गनाथः प्रणतानां त्रिदशानां ब्रह्मादीनां मौलौ शिरसि या माला तस्या मकरन्देनार्द्रो यः परागः पुष्पधूलिस्तेन पङ्कवता, अनुरूपेण योग्यानुलेपनक्षमेण पदेन चरणेन, अन्यत्र युक्तेन व्यवसायेन प्रेम्णेति यावत्। तदायं पङ्किलेनेत्यत्र करणेनेति योज्यम्। स्वयमनुलिम्पति चर्चयति। अत्र पुष्परसार्द्रपरागसंबन्धस्य चन्दनानुलेपनत्वोत्प्रेक्षणात् स्वरूपोत्प्रेक्षा, आनुरूप्यस्य कथनात्समालंकारश्च । अत्र शब्दशक्त्या पादुकायाः प्रेयसी समाधिर्व्यज्यते। अत्र व्यज्यमानो नायकोऽनुकूलः। 'एकायत्तोऽनुकूलः स्यात्' इति लक्षणात् । नायिका स्वीया स्वाधीनपतिका च । संभोगः शृङ्गारः॥

अवदातहिमांशुकानुषक्तं पदरक्षे त्वयि रङ्गिणः कदाचित् ।
किमपि स्थितमद्वितीयमाल्यं विरलावस्थितमौक्तिकं स्मरामि ॥ ३ ॥

**अवदातेति ।** हे पादरक्षे, कदाचित्स्नपनसमयेऽवदातेन धवलेन हिमांशुकेनाभिषेकशीतलेन वस्त्रेण, अन्यत्र ग्रीष्मे शिशिरोपचारार्थं हिमजलावसिक्तवस्त्रेणानुषक्तं युक्तम्, अद्वितीयमाल्यं द्वितीयमालारहितम्, विरलतया असान्द्रतया अवस्थितानि भूषणमौक्तिकानि, अन्यत्र लक्षणया श्रमजलबिन्दवो यस्मिन् तत् किमप्यनिर्वचनीयं रङ्गिणस्त्वयि स्थितं स्मरामि चिन्तयामि। प्रेयोऽलंकारः । अत्र विशेषणमहिम्ना कदाचित् किमपीत्युक्त्या च रतिर्व्यज्यते। पूर्ववन्नायकः, नायिका, रसश्च । विच्छित्तिर्नाम विलासो व्यज्यते। 'रम्याणामप्यलंकारकुसुमालेपवाससाम्। अनादरेण स्वल्पानां न्यासो विच्छित्तिरिष्यते ॥' इति लक्षणात् ॥

असहायगृहीतरङ्गनाथामवरोधाङ्गणसीम्नि पादुके त्वाम् ।
सुदृशः स्वयमर्चयन्ति दूरादवतंसोत्पलवासितैरपाङ्गैः ॥ ४ ॥

**असहायेति ।** हे पादुके, अवरोधाङ्गणसीम्नि अन्तःपुरचत्वरदेशे असहायं द्वितीयनायिकासंश्लेषरहितं यथा तथा गृहीतो रङ्गनाथो यया तां त्वां सुदृशः लक्ष्मीप्रभृतयोऽवतंसोत्पलैरवतंसीकृतकुवलयैर्वासितैः सुरभीकृतैरपाङ्गैर्नेत्राञ्चलैः, अर्चनसाधनपुष्पैरिति व्यज्यते। दूराद्दूरे स्थित्वा स्वयमर्चयन्ति इयमत्युत्कृष्टभागधेयेति सादरावलोकनस्यार्चनत्वेनोत्प्रेक्षणात् स्वरूपोत्प्रेक्षा वाचकाभावाद्गम्या । सुदृश इति विशेष्यस्याभिप्रायगर्भत्वात् परिकराङ्कुरालंकारश्च । अत्र कयाचन वल्लभया नित्यासक्ते नायके इतराः पत्न्यो नायिकारूप्यं(पं) ज्ञात्वा यथा तां मानयन्ति तथा श्रीमुख्या देव्योऽपि पादुकां मानयन्तीति ध्वन्यते। अन्यत्पूर्ववत् ॥

---

१. 'अनुकूलेन' इत्यपरः पाठः.

निर्विश्यमानमपि नूतनसंनिवेशं
कैवल्यकल्पितविभूषणकायकान्तिम् ।
कालेषु निर्विशसि रङ्गयुवानमेका
शृङ्गारनित्यरसिकं मणिपादरक्षे ॥ ५ ॥

**निर्विश्येति** । हे मणिपादरक्षे, त्वं निर्विश्यमानमपि संभुज्यमानपि नूतनोऽननुभूतपूर्वः संनिवेशो दिव्यमङ्गलविग्रहस्थानं यस्य तम्, सदानुभवेऽपि प्रीत्यतिशयावहतया नूतनवद्भासत इति यावत् । कैवल्येन केवलभावेन भूषणराहित्येन कल्पितानि विभूषणानि यस्याः सा कायकान्तिः शरीरशोभा यस्य तम्, शृङ्गारे हृद्यव्यापारे संभोगे च नित्यरसिकं सदासक्तं रङ्गविमानसंस्थं युवानं कालेष्वेकान्तसेवाकालेषु रतिसमयेष्वित्यपि गम्यते । एका अद्वितीया सती निर्विशसि अनुभवसि । रत्यासक्ता नायिका व्यज्यते । समासोक्तिरलंकारः ॥

निद्रापितस्य कमितुर्मणिपादुके त्वं
पर्यङ्किकापरिसरं प्रतिपद्यमाना ।
श्वासानिलप्रचलितेन भजस्यभीक्ष्णं
नाभीसरोजरजसा नवमङ्गरागम् ॥ ६ ॥

**निद्रापितस्येति** । हे मणिपादुके, निद्रापितस्य निद्रामनुभूतवतः । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । तस्य कमितुः कान्तस्य रङ्गनाथस्य पर्यङ्किकायाः शेषशय्यायाः परिसरं समीपं प्रतिपद्यमाना प्राप्नुवती सती श्वासानिलैर्भगवन्मुखोद्गतैः शेषमुखोद्गतैर्वा प्रचलितेनोत्थितेन नाभीसरोजस्य भगवन्नाभिपद्मस्य रजसा परागेण नवं नूतनमङ्गरागमनुलेपमभीक्ष्णं मुहुर्मुहुर्भजसि प्राप्नोषि । भगवन्निद्राकाले श्वासोत्थितभगवन्नाभीपद्मपरागपतनं पादुकापरिष्कारानुलेपनत्वेनोत्प्रेक्ष्यते । तथाच पादुकाया वासकसज्जिकात्वं व्यज्यते । 'या वल्लभागमायात्या मण्डयेदंशुकादिभिः । आत्मानं केलिसदनं सा स्याद्वासकसज्जिका ॥' इति लक्षणात् ॥

शयितवति रजन्यां पादुके रङ्गबन्धौ
चरणकमलपार्श्वे सादरं वर्तते त्वम् ।
फणिपतिशयनीयादुत्थितस्य प्रभाते
प्रथमनयनपातं पावनं प्राप्तुकामा ॥ ७ ॥

**शयितवतीति** । हे पादुके, रजन्यां रङ्गबन्धौ शयितवति सति त्वं फणिपतिरेव शयनीयं तस्मादुत्थितस्य, रङ्गबन्धोरिति योज्यम् । पावनं परिशुद्धिहेतु प्रथमं नयनपातं वीक्षणं प्राप्तुकामा सती चरणकमलयोः पार्श्वे सादरं यथा तथा वर्तते । नित्यं पादुकाव-

स्थानं प्रथमकटाक्षपातफलकत्वेनोत्प्रेक्ष्यते । पत्युः पूर्वोत्थानस्य पतिव्रताचारित्रयोग्यत्वात् पादुकायाः पतिव्रतात्वं व्यज्यते ॥

चरणकमलसङ्गाद्रङ्गनाथस्य नित्यं
निगमपरिमलं त्वं पादुके निर्वमन्ती ।
नियतमतिशयाना वर्तसे सावरोधं
हृदयमधिवसन्तीं मालिकां वैजयन्तीम् ॥ ८ ॥

**चरणेति** । हे पादुके, रङ्गनाथस्य चरणकमलसङ्गात् सदा निगम(मे)[म ए]व वेद(मे)[द ए]व परिमलं विमर्दोत्थसौरभं नागरपटवासादिसौरभं च । 'वणिक्पथः पुरं वेदो निगमः' इत्यमरः । निर्वमन्त्युद्गिरन्ती विस्तारयन्तीति यावत् । समस्तवेदवेद्यभगवच्चरणारविन्दसंबन्धात्स्वयमपि वेदवेद्यत्वेन प्रतीयत इति भावः । त्वं सावरोधं लक्ष्म्याधारत्वादन्तःपुरयुक्तं हृदयं भगवदुरःस्थलमधिवसन्तीमधितिष्ठन्तीं वैजयन्तीं वैजयन्त्याख्यां मालिकामतिशयाना अपकर्षयन्ती अतिक्रम्य शयाना तद्वारेऽपि भगवद्भोगवती वर्तसे । नियतं ध्रुवम् । अन्यथा नित्यमीदृशगन्धाप्रसक्तेरिति भावः । सदातनसौरभसंबन्धेन नायिकान्तरवारातिक्रमेण भोगातिशयोत्प्रेक्षणादुत्प्रेक्षा, सङ्गनिगमपरिमलवैजयन्त्यादिशब्दैर्नित्यं नायकसक्ताया नायिकायाः प्रतीतेः समासोक्तिश्च । अवरोधवैजयन्त्यौ प्रतिनायिके ॥

उपनिषदबलाभिर्नित्यमुत्तंसनीयं
किमपि जलधिकन्याहस्तसंवाहनार्हम् ।
तव तु चरणरक्षे देवि लीलारविन्दं
चरणसरसिजं तच्चारु चाणूरहन्तुः ॥ ९ ॥

**उपनिषदिति** । हे देवि चरणरक्षे, उपनिषद एव अबला रमण्यस्ताभिर्नित्यमुत्तंसनीयं शिरोभूषणीयं वेदान्तैर्लोकोत्तरत्वेन प्रतिपाद्यं किमप्यनिर्वचनीयगुणविभूतिकं जलधिकन्यायाः श्रियो हस्ताभ्यां संवाहनस्यार्हं योग्यं तत्प्रसिद्धं चाणूरहन्तुः श्रीकृष्णस्य चरणसरसिजं तव लीलायोग्यमरविन्दमासीत् । यथावद्विनियोगार्हतया वाल्लभ्यातिशयो व्यज्यते । अत्र स्वाधीनपतिका नायिका व्यज्यते ॥

अखिलान्तःपुरचारेष्वनेकवारं पदावनि स्वैरम् ।
अनुभवति रङ्गनाथो विहारविक्रान्तिसहचरीं भवतीम् ॥ १० ॥

**अखिलेति** । हे पदावनि, विहारे क्रीडायां विक्रान्तौ पराक्रमेऽपि सहचरीमविनाभूतां भवतीमखिलान्तःपुराणां श्रीभूमिलीलानां वारेषु भोगकालेष्वनेकवारमसकृत् स्वैरं

१. 'लीलायाम्' इत्यपरः पाठः.

स्वच्छन्दं यथा तथानुभवति भुङ्क्ते। स्वैरादिति तु न सम्यक् पाठस्तस्य नित्यक्रियाविशेषणत्वेन धातुवृत्त्यादिषूक्तेः तत्तद्देवीगृहगमनेषु पादुकामुपादत्त इति भावः । वाल्लभ्याशयविशिष्टा नायिका व्यज्यते । विहारविक्रान्तिसहचरीमित्यस्य साकूतत्वात् परिकरालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीवेङ्कटरङ्गनाथस्य श्रीवेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका शृङ्गारपद्धतिदर्शमी ।

---

अथ संचारपद्धतिः ।

अथास्यां पद्धत्यां भगवतो लीलासंचारानवलम्ब्य स्तौति—

अग्रतस्ते गमिष्यामि मृद्गती कुशकण्टकान् ।
इति सीतापि यद्वृत्तमियेष प्रणमामि ताम् ॥ १ ॥

अग्रत इति । आर्यपुत्रेत्युपस्कार्यम् । अहं कुशानेव कण्टकान् तीक्ष्णाग्रान् मृद्गती मर्दयन्ती सती ते तवाग्रतोऽग्रे गमिष्यामि । एतदर्थे श्रीरामायणे सीतावाक्यं तदेवाचार्यैः पठितम् । इति सीतापि यस्याः पादुकाया वृत्तं व्यापारं कण्टकमर्दनस्य पादुकाकार्यत्वादिति भावः । इयेष काङ्क्षितवती तां पादुकां प्रणमामि । पादुकामित्यनुक्त्वा कण्टकमर्दनव्यापारमुखेन पर्यायेणोक्तेः पर्यायोक्तमलंकारः । सीतापेक्षयापि पादुकायाः कैंकर्यातिशयोक्तिर्व्यज्यते ॥

शरदःशतमम्ब पादुके स्यां समयाहूतपितामहस्तुतानि ।
मणिमण्डपिकासु रङ्गभर्तुस्त्वदधीनानि गतागतानि पश्यन् ॥ २ ॥

शरद इति । हे अम्ब पादुके, मणिमण्डपिकासु रत्नमण्डपेषु समये उत्सवसमये आहूतेन पितामहेन ब्रह्मणा (उत्सवेषु ब्रह्माद्याह्वानं भगवच्छास्त्रसिद्धम् ।) स्तुतानि त्वदधीनानि त्वदायत्तानि गतागतानि गमनागमनानि पश्यन्नहं शतं शरदो वत्सरान् 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । स्याम् भवेयम् । लीलासंचारसेवार्थमहं दीर्घायुः स्यामिति भावः । प्रेयोऽलंकारः ॥

त्वदधीनपरिक्रमो मुकुन्दस्तदधीनस्तव पादुके विहारः ।
इतरेतरपारतन्त्र्यमित्थं युवयोः सिद्धमनन्यतन्त्रभूम्नोः ॥ ३ ॥

त्वदधीनेति । हे पादुके, मुकुन्दस्त्वदधीनस्त्वदायत्तः परिक्रमः संचारो यस्य सः । भवतीं पादुकां विहाय प्रभोः संचारायोगादिति भावः । तव विहारस्तस्मिन्मुकुन्देऽधीन आयत्तः । पादुकाया नियमनेऽन्याधीनगतित्वादिति भावः । अन्यस्तन्त्रं प्रधानं यस्य स न भवति भूमा महिमा ययोस्तयोर्युवयोर्मुकुन्दस्य तव चेतरेतरस्य पारतन्त्र्यं पराधीनत्वमित्थमुक्तप्रकारेण सिद्धम् । स्वतन्त्रयोः पारतन्त्र्यमिति विरोधः । 'शेषशेषिणोः परस्परच्छन्दोऽनुवर्तनं युक्तम्' इति इत्थंशब्देन परिणीयत अतो विरोधाभासालंकारः । पूर्वार्धेऽन्योन्योपकारवर्णनादन्योन्यालंकारः, अस्य विरोधाभासाङ्गत्वात्संकरः ॥

रजसा तमसा च दुष्टसत्त्वे गहने चेतसि मामके मुकुन्दः।
उचितं मृगयाविहारमिच्छन्भवतीमादृत पादुके पदाभ्याम्॥ ४॥

**रजसेति**। हे पादुके, मुकुन्दो रजसा रजोगुणेन पांसुना तमसा तमोगुणेनान्धकारेण च दुष्टः सत्त्वगुणो यस्मिन् तस्मिन्, अन्यत्र दुष्टा हिंस्राः सत्त्वा जन्तवो यस्मिन् तस्मिन्। 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु।' इत्यमरः। पांसुष्वन्धकारार्थकत्वमुपलक्षितमिति योज्यम्। गुणार्थकत्वेऽनेन पितृमानितिवत् रजस्तमोरूपदुष्टजन्तुविशिष्ट इति भाव्यम्। गहने दुष्प्रवेशे 'कलिलं गहनं समे' इत्यमरः। अन्यत्र चेतोरूपे गहने सूक्ष्मार्थग्रहणायोग्ये मामके मदीये ममतायुक्ते 'मामको ममतायुक्तः' इति विश्वः। चेतसि मनसि उचितं योग्यं रजस्तमोहननरूपं मृगयाविहारमाखेटक्रीडामिच्छन् भवतीं पदाभ्यामादृत आदृतवान्। 'दृङ् आदरे' [इति धातोः] लिङ्। पादुकया सहितस्य भगवतो ध्यानेन रजस्तमोनिवृत्तिमवलम्ब्य स्वाभाविके पादुकादरणे रजस्तमोरूपहिंस्रमृगहननार्थमृगयाफलकत्वोत्प्रेक्षणादुत्प्रेक्षा, वाचकाभावाद्गम्या, श्लेषरूपकाभ्यां संकीर्णा च॥

क्षमया जगतामपि त्रयाणामवने देवि पदावनि त्वयैव।
अभिगम्यतमोऽपि संश्रितानामभिगन्ता भवति स्वयं मुकुन्दः॥ ५॥

**क्षमयेति**। हे देवि पदावनि, मुकुन्दः श्रीरङ्गनाथो निधिविशेषश्च। 'मुकुन्दकुन्दनीलाश्च' इत्यमरः। संश्रितानां सेवकानामभिगम्यतमोऽपि प्राप्यतमोऽपि त्रयाणां जगतामप्यवने रक्षणे क्षमया शक्तया त्वयैवाभिगन्ता आभिमुख्येन प्राप्तो भवति। संश्रितानामित्येव स्वसेवकानां दुर्लभोऽपि त्वत्सेवकानां सुलभो भवतीति भावः। त्वत्सेवकानां प्रार्थनीयो निधिः स्वयमेवागच्छतीति व्यज्यते। अत्राभिगन्तव्यस्याभिगन्तृत्ववर्णनाद्व्याघातालंकारः। 'स्याद्व्याघातोऽन्यथाकारि तथाकारि क्रियेत चेत्।' इति लक्षणात्॥

शिरसा भवतीं दधाति कश्चिद्विधृतः कोऽपि पदस्पृशा भवत्या।
उभयोर्मधुवैरिपादरक्षे त्वदधीनां गतिमामनन्ति सन्तः॥ ६॥

**शिरसेति**। हे मधुवैरिपादरक्षे, कश्चिदनिर्वचनीयपुण्यपरिपाकयुक्तो भवतीं शिरसा दधाति, कोऽप्यपरिच्छेद्यस्वरूपः श्रीरङ्गनाथः पदस्पृशा चरणस्पृशा भवत्या त्वया शिरसा विधृतः। सन्तस्तयोरुभयोरपि गतिं प्राप्यं पदसंचारं च त्वदधीनमामनन्ति। पादुकाभक्तानां प्राप्यं सुलभं भवति भगवतः सुसंचार इति भावः। तुल्ययोगितालंकारः। 'वर्ण्यानामितरेषां च धर्मैक्यं तुल्ययोगिता।' इति लक्षणात्॥

स्पृशतः शिरसा पदेन च त्वां गतिमुद्दिश्य मुकुन्दपादुके द्वौ।
अवरोहति पश्चिमः पदात्स्वादधिरोहत्यनघस्तदेव पूर्वः॥ ७॥

**स्पृशत इति**। हे मुकुन्दपादुके, द्वौ भक्तभगवन्तौ गतिं प्राप्यं गमनं चोद्दिश्य अपेक्ष्य शिरसा पदेन चरणेन च स्पृशतः। भक्तः शिरसा, भगवांस्तु चरणेनेति विवेकः।

पश्चिमः भगवान् स्वादात्मीयात् पदात् सिंहासनादवरोहति । सिंहासनस्थेन भगवता अवरुह्य पादुका गृह्यत इत्यर्थः । पूर्वो भक्तोऽनघः सन्नाश्लिष्टपूर्वोत्तरपापः सन् तदेव स्वं पदमेवाविर्भूतापहतपाप्मत्वादिगुणाष्टकविशिष्टात्मस्वरूपमेवाधिरोहत्यर्चिरादिमार्गेण परमपदमधिरुह्य प्राप्नोतीत्यर्थः । गतिमुद्दिश्येत्यत्र तुल्ययोगिता, गतिं पदमित्यत्र श्लेषः। अवरोहत्यधिरोहतीति व्यतिरेकः, भक्तभगवतोः स्वरूपनिरूपकधर्मानादरेण पर्यायतः कथनात् पर्यायोक्तिः, एषां यथासंभवमङ्गाङ्गिभावेन संकरः ॥

समयेष्वपदिश्य जैत्रयात्रां विविधान्तःपुरवागुराव्यतीतः ।
नियतं मणिपादुके भवत्या रमते वर्त्मनि रङ्गसार्वभौमः ॥ ८ ॥

**समयेष्विति** । हे मणिपादुके, रङ्गसार्वभौमो रङ्गविमानवर्ती सर्वभूमीश्वरः श्रीरङ्गनाथः समयेष्वसुरजयकालेषु जैत्रयात्रां युद्धार्थप्रयाणमपदिश्य व्याजीकृत्य विविधा बहुविधा अन्तःपुराणि । श्रीभूमिनीला इति यावत् । तानि वागुरा इव मृगबन्धिनीरिव । 'वागुरा मृगबन्धिनी' इत्यमरः । अन्तःपुरस्त्रीणां बहिर्गमनप्रतिबन्धकत्वात् वागुरासाम्यम् । व्यतीतो लङ्घितवान् सन् वर्त्मनि मार्गे भवत्या रमते क्रीडति । नियतम् । संकल्पमात्रेण रिपुहननशक्तस्य पादुकया बहिर्गमनं क्रीडार्थमित्युत्प्रेक्ष्यते । अपदिश्येत्युक्त्या सापह्नवा । लक्ष्म्यादिभ्योऽपि पादुकाया भगवत्प्रेयसीत्वप्रतीतेः समासोक्तिः । तथा च समासोक्त्यपह्नवाभ्यां संकीर्णा ॥

निजसंहननप्रसक्तलास्यं चरति त्वामधिरुह्य रङ्गनाथः ।
पदरक्षिणि पावनत्वमास्तां रसिकास्वादमतः परं न विद्मः ॥ ९ ॥

**निजेति** । हे पदरक्षिणि, रङ्गनाथो भगवान् । नटपरिवृढ इत्यपि गम्यते । त्वामधिरुह्य निजे संहनने दिव्यमङ्गलविग्रहे । 'गात्रं वपुः संहननम्' इत्यमरः । प्रसक्तमुद्भूतं लास्यं शृङ्गारनाट्यं चरत्याचरति । तस्य सलास्यसंचारस्य पावनत्वं प्रेक्षकपरिशुद्धिहेतुत्वं वास्तवमास्तां तिष्ठतु । इत्यनादरः । अतः परं भगवतस्त्वदधीनलास्यसंचारादन्यं रसिकानां नृत्तदर्शनजन्यरसानुभवपराणां भावुकानामास्वादमास्वाद्यम् । अनुभाव्यमित्यर्थः। 'स्वद आस्वादने' इति धातोरनुभवेऽर्थे सकर्मकात् 'अकर्तरि च कारके–३।३।१९' इति कर्मणि घञ् । न विद्मो न जानीमः। नृत्तदर्शनस्य निषिद्धत्वेऽपि त्वदधीनभगवन्नृत्तदर्शनस्य पावनत्वमाश्चर्यावहम् । अथापि ततोऽप्यद्भुतस्य सकलजनहृदयानन्दनत्वस्य लाभात् पावनत्वेनादरो युक्तः । अत एव श्रीपराशरभट्टार्यैरपि पावनत्वमुपेक्ष्य लास्ययुक्तभगवद्दिव्यमङ्गलविग्रहसेवैव प्रार्थिता—यथा—'अञ्जन्यस्तपदाब्जमञ्चितकटीसंवादिकौशेयकं किंचित्ताण्डवगन्धिसंहननकं निर्व्याजमन्दस्मितम् । चूडाचुम्बिमुखाम्बुजं निजभुजाविश्रान्तदिव्यायुधं श्रीरङ्गे शरदःशतं तत इतः पश्येम लक्ष्मीसखम् ॥' इति । तत्राभिमतस्योत्तरस्यापाततो निषेधाद्विशेषस्य रसिकास्वादस्याभीप्सितत्वाचाक्षेपालंकारः । 'उत्तरं वक्ष्यमाणस्य यो विशेषाभिधित्सया । निषेधाभाव आक्षेपः स द्विधा परिकीर्तितः ॥' इति लक्षणात् ॥

पदयोरनयोः परस्य पुंसस्तदनुग्राह्यविहारपद्धतेर्वा ।
शिरसो मणिपादुके श्रुतीनां मनसो वा मम भूषणं त्वमेका ॥ १० ॥

**पदयोरिति**। हे मणिपादुके, एका त्वं परस्य पुंसः श्रीरङ्गनाथस्यानयोः प्रत्येकतया सेव्यमानयोः पदयोः भूषणं वा, ताभ्यां परमपुरुषपादाभ्यामनुग्राह्यस्य विहारपद्धतेर्लीलासंचारमार्गस्य भूषणं वा, श्रुतीनां शिरसः उपनिषदो भूषणं वा । उपनिषद ऐदंपर्येण प्रतिपाद्यमानत्वादिति भावः । मम ध्यातुर्मनसश्चित्तस्य भूषणं वा । चित्तरञ्जकत्वादिति भावः । एकस्यानेकशोभावहत्वेन तत्तद्भूषणत्वं संदिह्यत इति संदेहालंकारः ॥

कृपया मधुवैरिपादरक्षे कठिने चेतसि मामके विहर्तुम् ।
मुकुटेषु दिवौकसां विधत्ते भवती रत्नविसंस्थुलेषु योग्याम् ॥ ११ ॥

**कृपयेति**। हे मधुवैरिपादरक्षे, भवती कठिने । रजस्तमःसान्द्रत्वेनातिसुकुमारस्य संचारानर्हत्वादिति भावः । मामके ममतायुक्ते मदीये चेतसि विहर्तुं चरितुम् । ध्यानविषयीभवितुमिति यावत् । रत्नैर्विसंस्थुलेषु विषमेषु दिवौकसां मुकुटेषु योग्यामभ्यासं विधत्ते । 'योग्या गुणनिकाभ्यासः' इत्यमरः । देवमुकुटनिवेशस्य कठिनध्यातृचित्तस्य निवेशयोग्यात्वेनोत्प्रेक्षणादुत्प्रेक्षा ॥

चरणद्वयमर्भकस्य शौरेः शरदम्भोरुहचातुरीधुरीणम् ।
शकटासुरताडनेऽपि गुप्तं तव शक्त्या किल पादुके तवासीत् ॥ १२ ॥

**चरणेति**। हे पादुके । अर्भकस्य शिशोः शौरेः शूरवंशावतीर्णस्य कृष्णस्य शरदम्भोरुहयोः शरत्कमलयोश्चातुर्याश्चतुरभावस्य धुरीणं धूर्वहम् । 'खः सर्वधुरात् ४।४।७८' इत्यत्र धुर इत्यनुवर्त्य ख इति योगविभागात् वहत्यर्थे खः । अत्यन्तसुकुमारमिति यावत् । तच्चरणद्वयं शकटरूपस्यासुरस्य ताडनेऽपि प्रहारेऽपि तव शक्त्या प्रभावेण किल गुप्तमासीत् रक्षितमासीत् । मृदुलेन बालकचरणेन तादृशदुर्भञ्जकशकटभञ्जनं त्वत्संश्लेषजनितातिशयेनेत्युत्प्रेक्षा गम्या ॥

उत्तस्थुषो रङ्गशयस्य शेषादास्थानसिंहासनमारुरुक्षोः ।
मध्येनिशान्तं मणिपादुके त्वां लीलापदन्याससखीं प्रपद्ये ॥ १३ ॥

**उत्तस्थुष इति**। हे मणिपादुके, शेषात् शयनीयादुत्तस्थुष उत्थितवतः सहसा आस्थानसिंहासनं पादपीठमारुरुक्षोः आरोढुमिच्छो रङ्गेशस्य मध्येनिशान्तं श्रीरङ्गायतनमध्ये। 'निशान्तवस्त्यसदनं भवनागारमन्दिरम् ।' इत्यमरः । 'पारे मध्ये षष्ठ्या वा २।१।१८' इत्यव्ययीभावः । लीलापदन्यासस्य विलाससंचारस्य सखीं सहायभूतां त्वां प्रपद्ये सेवे । सखीशब्दस्य भगवदन्तरङ्गतया सेवनं युक्तमित्यभिप्रायगर्भत्वात् परिकरः प्रेयश्च ॥

प्राप्ताधिकाराः पतयः प्रजानामुत्तंसितामुत्तमपादुके त्वाम् ।
रङ्गेशितुः स्वैरविहारकाले संयोजयन्त्यङ्घ्रिसरोजयुग्मे ॥ १४ ॥

**प्राप्तेति** । हे उत्तमस्य पुरुषोत्तमस्य पादुके, प्राप्ताधिकारा लब्धाधिपत्याः प्रजानां प्राणिनां पतयः कमलासनाद्या उत्तंसितां निजशिरोभूषणीकृतां त्वां रङ्गेशितुः श्रीरङ्गनाथस्य स्वैरविहारकाले स्वेच्छासंचारसमये अङ्घ्रिसरोजयुग्मे चरणकमलयुगले संयोजयन्ति । प्रेयोऽलंकारः ॥

त्वयानुबद्धां मणिपादरक्षे लीलागतिं रङ्गशयस्य पुंसः ।
निशामयन्तो न पुनर्भजन्ते संसारकान्तारगतागतानि ॥ १५ ॥

**त्वयेति** । हे मणिपादरक्षे, त्वयानुबद्धां रचितां रङ्गशयस्य पुंसः श्रीरङ्गनाथस्य लीलागतिं क्रीडासंचारं निशामयन्तः पश्यन्तः । जना इति शेषः । 'शपोऽदर्शने' इति मित्वाभावात् 'मितां ह्रस्वः ६।४।९२' इति ह्रस्वाभावः । संसाररूपे कान्तारे दुर्गवर्त्मनि गतागतानि जननमरणानि पुनः भूयो न भजन्ते । त्वदनुबद्धभगवत्संचारसेवकानां न पुनः संचारावाप्तिरिति भावः । गतिपरिशीलनस्य गत्यभावहेतुत्वोक्तेर्व्याघातालंकारः ॥

व्यूहानुपूर्वीरुचिरान्विहारान्पदक्रमेण प्रतिपद्यमाना ।
बिभर्षि नित्यं मणिपादुके त्वं मुरद्विषो मूर्तिरिव त्रिलोकीम् ॥ १६ ॥

**व्यूहेति** । हे मणिपादुके, व्यूहेन समूहतया । षोडशस्त्रीसहस्ररञ्जनादाविति भावः । आनुपूर्व्या रामकृष्णादिक्रमेण च, अन्यत्र वासुदेवादिव्यूहक्रमेण रुचिरान्विहारान् लीलासंचारान् लीलाश्च पदक्रमेण तत्तद्दिव्यमङ्गलविग्रहचरणानुगुणतया स्थानानुपूर्व्या च प्रतिपद्यमाना भजमाना त्वं मुरद्विषो रङ्गनाथस्य मूर्तिरिव त्रिलोकीं बिभर्षि पुष्णासि । 'डुभृञ् धारणपोषणयोः'। भगवानिव त्वमप्यनेकावतारेण जगद्रक्षसीति भावः । श्लेषानुप्राणितोपमालंकारः ॥

पदेषु मन्देषु महत्स्वपि त्वं नीरन्ध्रसंश्लेषवती मुरारेः ।
प्रत्यायनार्थं किल पादुके न स्वाभाविकं दर्पयसि प्रभावम् ॥ १७ ॥

**पदेष्विति** । हे मणिपादुके, त्वं मन्देष्वल्पेषु महत्सु पृथुलेषु पदेषु चरणेषु । वामनत्रिविक्रमाद्यवतारेष्विति भावः । नीरन्ध्रसंश्लेषवती सती निरन्तरसंबन्धवती सती नोऽस्माकं प्रत्यायनार्थं किल विश्वासनाय किल स्वाभाविकं नैसर्गिकम् । भव इत्यर्थेऽध्यात्मादित्वात् ठञ् । प्रभावं सामर्थ्यं दर्शयसि प्रकटयसि किल तत्तत्कालोचिताल्पत्वपरिग्रहस्य प्रभावप्रत्यायनफलत्वोत्प्रेक्षणात् फलोत्प्रेक्षा ॥

कृपाविशेषात्क्षमया समेतां प्रवर्तमानां जगतां विभूत्यै ।
अवैमि नित्यं मणिपादुके त्वामाकस्मिकीं रङ्गपतेः प्रसक्तिम् ॥ १८ ॥

**कृपेति** । हे मणिपादरक्षे, कृपाया विशेषादतिशयात् क्षमया भूम्या क्षान्त्या च समेतां जगतो विभूत्यै संपदे प्रवर्तमानां त्वां रङ्गपतेः श्रीरङ्गनाथस्याकस्मिकीमतर्कितहे-

तुकां प्रसक्तिं प्रसादमवैमि जाने । सकलजनसाधारण्येन प्रवृत्तेराकस्मिकत्वोक्तिः । श्लेषानुप्राणितोत्प्रेक्षा ॥

उपागतानामुपतापशान्त्यै सुखावगाहां गतिमुद्वहन्तीम् ।
पश्यामि शौरेः पदवाहिनीं त्वां निम्नेषु तुङ्गेषु च निर्विशेषाम् ॥१९॥

**उपागतानामिति** । हे पादुके, उपागतानां संनिहितानामुपतापशान्त्यै तापशमनाय सुखावगाहां सुखेनाश्रयणीयामन्यत्र सुखमज्जनयोग्यां गतिं संचारं प्राप्यं स्वर्गादिकं चोद्वहन्तीं बिभ्रतीं संपादयन्तीं च निम्नेषु नीचेष्वस्मदादिषु गभीरप्रदेशेषु च तुङ्गेषु महत्सु ब्रह्मादिषु उन्नतप्रदेशेषु च निर्विशेषां वैषम्यरहितां शौरेः श्रीरङ्गनाथस्य पदवाहिनीं पादुकां गङ्गां च त्वां पश्यामि । श्लेषालंकारः ॥

सह प्रयाता सततं प्रयाणे प्राप्तासने संश्रितपादपीठा ।
अलङ्घनीया सहजेन भूम्ना छायेव शौरेर्मणिपादुके त्वम् ॥ २० ॥

**सहेति** । हे मणिपादुके, सततं प्रयाणे यात्रायां सह प्रयाता गता । प्राप्तासने भगवतीति शेषः । संश्रितं पादपीठं यया सा । सहजेन भूम्ना महत्त्वेन बहुदेशाक्रमणेन चालङ्घनीया अतिशयितुमयोग्या अनतिक्रमणीया च । त्वं शौरेश्छायेवानातपरेखेवासि । श्लेषानुप्राणितोपमा ॥

पदस्पृशा रङ्गपतिर्भवत्या विचक्रमे विश्वमिदं क्षणेन ।
तदस्य मन्ये मणिपादरक्षे त्वयैव विख्यातमुरुक्रमत्वम् ॥ २१ ॥

**पदस्पृशेति** । हे मणिपादरक्षे, रङ्गपतिः श्रीरङ्गनायकः पदस्पृशा भवत्येदं विश्वं जगत् क्षणेनाल्पकालेन विचक्रमे विक्रान्तवान् । तत्तस्मादस्य विष्णोर्विख्यातमुरुक्रमत्वं महापदविक्षेपवत्त्वं त्वयैवेति मन्ये । आक्रमणीयसंसर्गस्य त्वयैव साक्षात् संभवात्, पदस्य तु त्वद्व्यवहितत्वादिति भावः । धर्मोत्प्रेक्षा । 'यस्योरुषु त्रिषु विक्रमणेष्वधिक्षयन्ति भुवनानि विश्वा, उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्वउत्सः, विष्णवुरुक्रमेषते सोमस्तं रक्षस्व' इत्येवमादिश्रुतिख्यातिः । 'त्रिविक्रम उरुक्रमः' इति वैजयन्त्याम् ॥

संचारयन्ती पदमन्वतिष्ठः सहायकृत्यं मणिपादरक्षे ।
मातस्त्वमेका मनुवंशगोप्तुर्गोपायतो गौतमधर्मदारान् ॥ २२ ॥

**संचारयन्तीति** । हे मातर्मणिपादरक्षे, त्वमेका त्वमेव मुख्या । 'एके मुख्यान्यकेवलाः' इत्यमरः । गौतमस्य मुनेर्धर्मदारान् भार्याम् । 'भार्या जायाथ पुंभूम्नि दाराः' इत्यमरः । गोपायतो रक्षिष्यतः । 'वर्तमानसामीप्ये वर्तमानवद्वा ३।३।१३१' इति लडिति शतृप्रत्ययः । मनुवंशगोप्तू रामस्य पदं चरणं संचारयन्ती सती सहायकृत्यं सहकारिकार्यमन्वतिष्ठः अनुष्ठितवती । सीतारूपलक्ष्मीसाहचर्याभावेऽपि विश्वामित्रेण सह मिथिलागमनसमये त्वत्साहचर्यस्याप्यभावेऽहल्यारक्षणं न स्यादिति भावः । अत्र पादुकाया अहल्याविषये

रिरक्षिषारूपाशयमहत्त्ववर्णनादुदात्तालंकारः । तेन पुरुषकारत्वे सीताव्यतिरेकव्यक्तेरलंकारेणालंकारध्वनिः ॥

त्वत्तस्त्रिविष्टपचरानसपत्नयिष्य-
न्नारुह्य तार्क्ष्यमवरुह्य च तत्क्षणेन ।
शुद्धान्तभूमिषु पुनर्मणिपादरक्षे
विश्राम्यति त्वयि विहारवशेन शौरिः ॥ २३ ॥

**त्वत्त इति** । हे मणिपादरक्षे, त्रिविष्टपचरान् देवानसपत्नयिष्यन् निःसपत्नान् करिष्यन् । असुरवधेनेति गम्यते । असपत्नशब्दात् करोत्यर्थे णिजन्ताल्लृटः शतृप्रत्ययः। शौरिः कृष्णस्त्वत्तोऽपादानात् । पञ्चम्यास्तसिल् । तार्क्ष्यं गरुडमारुह्य तत्क्षणेनाल्पेनैव कालेनावरुह्य च, तार्क्ष्यादित्युपस्कार्यम् । एतेन भगवतः पादुकाविश्लेषासहत्वं व्यज्यते। शुद्धान्तभूमिषु त्वयि (अधिकरणे) विहारवशेन लीलासंचारायत्ततया विश्राम्यति अध्वश्रमसपनुदति । तार्क्ष्यपादुकयोर्लीलासंचारहेतुत्वेऽपि तार्क्ष्यश्रमस्य पादुकायां तदपनोदनस्य च वर्णनाद्व्यतिरेकालंकारः ॥

विक्रम्य भूमिमखिलां बलिना प्रदिष्टां
देवे पदावनि दिवं परिमातुकामे ।
आसीदतो दिनकरस्य करोपतापा-
त्संरक्षितुं पदसरोजमुपर्यभूस्त्वम् ॥ २४ ॥

**विक्रम्येति** । हे पदावनि, त्वं देवे त्रिविक्रमे बलिना वैरोचनिना प्रदिष्टां दत्तामखिलां भूमिं विक्रम्य पदप्रक्षेपेण दिवमाकाशं परिमातुकामे परिमातुं विक्रमितुं कामो यस्य तस्मिन् सति । आसीदतः समीपमुपगच्छतो दिनकरस्य करेण किरणेन जनितादुपतापात् । 'भीत्रार्थानां भयहेतुः १।४।२५' इत्यपादानत्वात् पञ्चमी । पदसरोजं पदकमलं संरक्षितुमुपर्यूर्ध्वदेशे पदसरोजस्येति विपरिणामेन संबन्धः । अभूः आसीः । नैसर्गिकस्य पादुकोपादानस्योत्तानितभगवत्पदसरोजरक्षार्थत्वोत्प्रेक्षणात् फलोत्प्रेक्षा ॥

त्वत्सङ्गमान्ननु सकृद्विधिसंप्रयुक्ता
शुद्धिं परामधिजगाम शिवत्वहेतुम् ।
रङ्गाधिराजपदरक्षिणि कीदृशी सा
गङ्गा बभूव भवदीयगतागतेन ॥ २५ ॥

**त्वत्सङ्गेति** । ननु रङ्गाधिराजपदरक्षिणि, विधिना ब्रह्मणा संप्रयुक्ता संयोजिता गङ्गा सकृदेकवारं त्वत्सङ्गमात् तव संबन्धात् शिवत्वहेतुं गङ्गाधरस्य पावनत्वकारणं परामतिशयितां शुद्धिमधिजगाम प्राप्तवती । सा गङ्गा चित्रकूटगमनागमनकाले भवदीयेन

गतागतेन गमनागमनाभ्याम् । 'विप्रतिषिद्धं चानधिकरणवाचि २।४।१३' इति द्वन्द्वैकवद्भावः । किदृशी बभूव । काक्वा अवाङ्मनसगोचरपावनता प्रतीयते । प्राक्सिद्धायाः शुद्धेर्गतागतेनोत्कर्षणेनानुगुणालंकारः ॥

वृद्धिं गवां जनयितुं भजता विहारा-
न्कृष्णेन रङ्गरसिकेन कृताश्रयायाः ।
संचारतस्तव तदा मणिपादरक्षे
वृन्दावनं सपदि नन्दनतुल्यमासीत् ॥ २६ ॥

**वृद्धिमिति** । हे मणिपादरक्षे, गवां वृद्धिं जनयितुं विहारान् लीलासंचारान् भजता कृष्णेन कृष्णभूतेन रङ्गनाथेन कृतः आश्रयो यस्यास्तस्यास्तव संचारतः संचारेण तदा वृन्दावनसंचारकाले वृन्दावनं वृन्दावनाख्यं वनं सपदि शीघ्रं नन्दनतुल्यमिन्द्रोद्यानसममासीत् । पुष्पफलपर्णरसामोदभरितमभूदित्यर्थः । 'वृन्दावनं भगवता कृष्णेनाक्लिष्टकर्मणा । शुभेन मनसा ध्यानं गवां वृद्धिमभीप्सता ॥' इत्युक्तभगवत्संकल्पजनिताया वृन्दावनसमृद्धेः पादुकासंचारहेतुत्वोत्प्रेक्षणात् हेतूत्प्रेक्षा । नन्दनतुल्यमित्युपमानुप्राणितत्वादुपमासंकीर्णा ॥

मातस्त्रयीमयतया चरणप्रमाणे
द्वे विक्रमेषु विविधेषु सहायभूते ।
नाथस्य साधुपरिरक्षणकर्मणि त्वं
दुष्कृद्विनाशनदशासु विहङ्गराजः ॥ २७ ॥

**मातरिति** । हे मातः, त्रयीमयतया वेदप्रचुरत्वेन । बहुशो वेदप्रतिपाद्यत्वेनेति यावत् । अन्यत्र वेदात्मकतया 'सुपर्णोऽसि गरुत्मान्' इत्यादि श्रुतेः, 'वेदात्मा विहगेश्वरः' इत्यभियुक्तोक्तेश्च । नाथस्य चरणे पदे संचरणे हेतुभूतं च प्रमाणेयत्ताभूतं च । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ।' इत्यमरः । द्वे वस्तुनी विविधेषु विक्रमेषु संचारेषु पराक्रमेषु च सहायभूते सहकारिणी । कुत्र किमित्युत्प्रेक्षायामाह—नाथस्य साधूनां सतामहल्यादीनां परिरक्षणकर्मणि त्राणरूपे कार्ये त्वं सहायभूता, दुष्कृतां बाणनरकमाल्यवन्नक्रादीनां निरसनविनाशनदशासु कालेषु विहङ्गराजो गरुडः सहायभूतः । पादुकागरुत्मतोरेकधर्मसाम्येऽपि रक्षणविनाशनरूपकार्यमुखेन दयालुत्वकोपनत्वयोः प्रतिपादनाद्व्यतिरेकालंकारो दीपकसंकीर्णः ॥

पादावनि क्वचन विक्रमणे भुजानां
पञ्चायुधीकररुहैर्भजते विकल्पम् ।
नित्यं त्वमेव नियता पदयोर्मुरारे-
स्तेनासि नूनमविकल्पसमाधियोग्या ॥ २८ ॥

**पादावनीति** । हे पादावनि, भुजानां क्वचन विक्रमेण हिरण्यकशिपुवधसमये पञ्चायुधी पञ्चानामायुधानां समाहारः शङ्खचक्रादिसमूहः कररुहैर्नखैर्विकल्पं पाक्षिकत्वं भजते । हिरण्यवधे आयुधव्यापाराभावादिति भावः । मुरारेः पादयोश्चरणयोर्विक्रमणे संचारे तु नित्यं सदा त्वमेव नियता अविनाभूता । पादुकामन्तरेण संचरणविरहादिति भावः । तेन कारणेन त्वमविकल्पकसमाधेरपाक्षिकाङ्गीकारस्य निर्विकल्पकध्यानस्य च । 'अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः।' इत्यमरः । 'समाधिर्नियमे ध्याने' इति हलायुधश्च । योग्यासि अर्हा भवसि । नूनमित्युत्प्रेक्षा । अत्र संचारे पादुकैकोपादानमेव श्लेषेणास्त्रभूषणविग्रहव्यावृत्तशुद्धभावस्वरूपध्यानत्वेनोत्प्रेक्ष्यते । वस्तुतस्तु पादुकायाः सविकल्पकध्यानैकविषयतया निर्विकल्पकध्यानाविषयत्वमेव । अत एव नूनमित्युक्तम् ॥

अक्षेत्रविद्भिरधिगन्तुमशक्यवृत्ति-
मातस्त्वया निरवधिर्निधिरप्रमेयः ।
रथ्यान्तरेषु चरणावनि रङ्गसङ्गी
वात्सल्यनिघ्नमनसा जनसात्कृतोऽसौ ॥ २९ ॥

**अक्षेत्रेति** । हे मातश्चरणावनि, अक्षेत्रविद्भिः शरीरस्वभावज्ञानरहितैः । चिदचिद्विवेकधीमूढैरिति यावत् । केदारस्वभावानभिज्ञैश्च । 'क्षेत्रं शरीरे केदारे' इति विश्वः । 'चतुरः स्यात् क्षेत्रज्ञः कृतहस्तः कृतमुखश्च कृतकर्मा ।' इति हालयुधः । अचतुरैरिति वार्थः । अधिगन्तुं प्राप्तुमशक्या वृत्तिर्यस्य सः । निरवधिः परिच्छेदरहितोऽक्षयश्च । अप्रमेयः प्रमातुमशक्यः । रङ्गसङ्गी रङ्गविमानवर्ती । असौ निधिर्निधिवत्पुरुषार्थः । वात्सल्यनिघ्नं दयाधीनम् । 'अधीनो निघ्न आयत्तः' इत्यमरः । मनो यस्यास्तया त्वया । रथ्यान्तरेषु प्रतोल्यवकाशेषु । 'रथ्या प्रतोली विशिखा' इत्यमरः । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।' इत्यमरः । जनसात्कृतः प्रेक्षकजनाधीनः कृतः । 'तदधीनवचने ५।४।५४' इति सात्प्रत्ययः । व्याघातालंकारः; अक्षेत्रविदामनधिगम्यस्याधिगम्यत्वकथनात् । 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः प्रजाः सर्वा अहरहर्गच्छन्त्य एनं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति छान्दोग्येऽष्टमप्रपाठकेऽनधिगम्यत्वं श्रुतम् ॥

संपद्यते समुचितं क्रममाश्रयन्त्या
सद्वर्त्मना भगवतोऽपि गतिर्भवत्या ।
इष्टे पदावनि पुनः क इवेतरेषां
व्यावर्तनस्य विषमादपथप्रचारात् ॥ ३० ॥

**संपद्यत इति** । हे पदावनि, समुचितं योग्यं क्रमं चरणविक्षेपं शक्तिं च । 'शक्तौ चरणविक्षेपे परिपाट्यामपि क्रमः ।' इति नानार्थरत्नमालायाम् । आश्रयन्त्या भवत्या

भगवतोऽपि सद्वर्त्मना सन्मार्गेण गतिः संचरणं प्राप्यं च। संपद्यते भवति। इतरेषां भगवद्यतिरिक्तानां पुनस्त्वदर्थेऽविषमादननुगुणादपथप्रचारात् अमार्गसंचारात् निषिद्धानुष्ठानाच्च व्यावर्तनस्य। क इव को वा इष्टे समर्थो भवति। त्वदन्यो न कोऽपीत्यर्थः। 'अधीगर्थदयेशां कर्मणि २।३।५२' इति व्यावर्तनस्येति षष्ठी। काव्यार्थापत्तिरलंकारः॥

रङ्गेश्वरेण सह लास्यविशेषभाजो
लीलोचितेषु तव रत्नशिलातलेषु।
मध्ये स्थितानि कतिचिन्मणिपादरक्षे
सभ्यान्विशेषमनुयोक्तुमिदं प्रतीमः॥ ३१॥

**रङ्गेश्वरेणेति**। हे मणिपादुके, लीलायाः संचारक्रिडायाः। उचितेषु योग्येषु। रत्नशिलातलेषु मणिकुट्टिमेषु। रङ्गेश्वरेण भगवता। नटपरिवृढेनेत्यपि गम्यते। सह लास्यविशेषभाजः शृङ्गारनृत्तभेदवत्यास्तव। मध्ये गमनान्तरालसमये। कतिचित् स्थितानि काश्चन स्थितयः। तिष्ठतेर्भावे क्तः। सभ्यान् सामाजिकान्। विशेषमुत्कर्षम्। अनुयोक्तुं प्रष्टुम्। इति प्रतीमो जानीमः। 'अकथितं च १।४।५१' इत्यत्र पृच्छतेरर्थग्रहणाद्द्विकर्मकत्वम्। रङ्गायतनचत्वरेष्वेकान्तसेवाक्रममवेक्षणावस्थाने भगवत्पादुकयोर्नृत्ततारतम्यप्रश्नार्थत्वोत्प्रेक्षणात् फलोत्प्रेक्षा॥ ३१॥

नित्यं पदावनि निवेश्य पदं भवत्यां
निष्पन्दकल्पपरिमेयपरिच्छदानि।
शृङ्गारशीतलतराणि भवन्ति काले
रङ्गेश्वरस्य ललितानि गतागतानि॥ ३२॥

**नित्यमिति**। हे पदावनि, काले एकान्तसेवासमये। रङ्गेश्वरस्य कर्तुर्भवत्यां पदं चरणं निवेश्य निक्षिप्य। निष्पन्दकल्पा निश्चलसदृशाः परिमेयाः स्वल्पाः परिच्छदाश्छत्रचामरादयो येषु तानि ललितानि हृद्यानि गतागतानि गमनागमनानि नित्यमभीक्ष्णं शृङ्गारशीतलतराणि प्रेक्षणीयानि, अत्यानन्दावहानि च भवन्ति। पादुकासंबन्धेनानन्दोत्कर्षकथनादनुगुणालंकारः। 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः' इति लक्षणम्॥

भोगार्चनानि कृतिभिः परिकल्पितानि
प्रीत्यैव रङ्गनृपतिः प्रतिपद्यमानः।
पश्यत्सु नित्यमितरेषु परिच्छदेषु
प्रत्यासनं भजति काञ्चनपादुके त्वाम्॥ ३३॥

**भोगेति**। हे काञ्चनपादुके, कृतिभिः सद्भिः परिकल्पितानि भोगार्थान्यर्चनानि

प्रतिपद्यमानो गृह्णन् रङ्गनृपतिरितरेषु परिच्छदेषु छत्रचामरमन्त्रासनादिषु त्वां प्रीत्यैव; नत्वन्यथेति भावः । नित्यं भजति । शास्त्रसिद्धस्य प्रत्यासनं पादुकाग्रहणस्य प्रीतिमात्रहेतुकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा । देवा मातङ्गराजेनैरावतेन विधृतां त्वाम् । विधृतं चारु सितातपत्रं छत्रं यैस्ते सुभगाभ्यां चारुभ्यां चामराभ्यां लोलहस्ताः ( ते च ) सन्तोऽन्वासतेऽनुसरन्ति । उदात्तालंकारः ॥

विष्णोः पदं गतिवशादपरित्यजन्तीं
लोकेषु नित्यविषमेषु समप्रचाराम् ।
अन्वेतुमर्हति धृतामखिलैः सुरेन्द्रै-
र्गङ्गा कथं न गरुडध्वजपादुके त्वाम् ॥ ३४ ॥

विष्णोरिति । हे गरुडध्वजपादुके, विष्णोः पदं चरणं गगनं च गमनवशादपरित्यजन्तीं नित्यं विषमेषु सुखदुःखतारतम्यवत्सु लोकेषु जनेषु भुवनेषु च समः प्रचारः संचारो यस्यास्तामखिलैः सुरेन्द्रैर्धृतां त्वां गङ्गा कथं नु अन्वेतुमनुसर्तुमर्हति । न कथंचित्तव सदृशीत्यर्थः । भूगमनेन विष्णुपदत्यागात् विषमप्रदेशेषु कुटिलगतित्वाच्छिवमात्रं धृतत्वाच्च न तव सदृशी गङ्गेति श्लेषानुप्राणितव्यतिरेकालंकारः ॥

भिक्षामपेक्ष्य दनुजेन्द्रगृहं प्रयातु-
र्गुप्त्यै गवां विहरतो वहतश्च दूत्यम् ।
तत्तादृशानि चरणावनि रङ्गभर्तु-
स्त्वत्सङ्गमेन सुभगानि विचेष्टितानि ॥ ३५ ॥

भिक्षामिति । हे चरणावनि, भिक्षामपेक्ष्य दनुजेन्द्रस्य बलेर्गृहं प्रयातुर्गच्छतो गवां गुप्त्यै रक्षायै विहरन्तः संचरन्तो दूत्यं दूतकृत्यम् । 'दूतवणिग्भ्यां च' इति कर्मणि यत् प्रत्यय इति वृत्तिः । वहतश्च रङ्गभर्तुस्तत्तादृशानि विचेष्टितानि त्वत्संगमेन सुभगान्यभूवन्निति गम्यते । भिक्षाटनगोचारणपाण्डवदूत्यानामपि परमकृत्यानां हृद्यत्वं त्वत्संबन्धायत्तमिति पदार्थहेतुकं काव्यलिङ्गमलंकारः । सार्वभौमचिह्नभूतपादुकासंबन्धादनुचितानामपि कृत्यानामभिसंधिभेदमूलत्वं व्यज्यत इत्यलंकारेण वस्तुध्वनिः ॥

निर्व्यज्यमाननवताललयप्रथिम्ना
निर्यन्त्रणेन निजसंचरणक्रमेण ।
मृद्नासि रङ्गनृपतेर्मणिपादुके त्वं
दुःखात्मकान्प्रणमतां दुरितप्ररोहान् ॥ ३६ ॥

निर्व्यज्यमानेति । हे रङ्गनृपतेर्मणिपादुके, निर्व्यज्यमानः प्रकटीभवन् , नवोऽद्भुतः, तालस्य कालेन नृत्यगीतवाद्यक्रियापरिच्छेदस्य । 'तालः कालक्रियामानम्' इत्यमरः ।

लयस्य साम्यस्य । 'लयः साम्यम्' इत्यमरः । प्रथिमा पृथुत्वं येन तेन । नृत्तगीतवाद्यानुसारिणेति यावत् । निर्यन्त्रणेनाप्रतिबन्धेन निजेन संचरणक्रमेण गमनपरिपाट्या प्रणमतां नतानां जनानां दुःखात्मकान् प्रतिकूलरूपान् दुरितप्ररोहान् पापाङ्कुरान् मृद्गासि मर्दयसि । नृत्तानुगुणपादुकासंचारस्य दुरिताङ्कुरमर्दनत्वमुत्प्रेक्ष्यते ॥

नित्यं य एव जगतो मणिपादरक्षे
सत्तास्थितिप्रयतनेषु परं निदानम् ।
सोऽपि स्वतन्त्रचरितस्त्वदधीनवृत्तिः
का वा कथा तदितरेषु मितंपचेषु ॥ ३७ ॥

नित्यमिति । हे मणिपादरक्षे, य एव भगवान् जगतः सत्तोत्पत्तिः, स्थिती रक्षणम्, प्रयतनं हिताहितयोः प्रवृत्तिनिवृत्ती तेषु परमुत्कृष्टं निदानमादिकारणम् । स्वतन्त्रचरितः स्वाधीनव्यापारः सोऽपि नित्यं त्वदधीनवृत्तिस्त्वदधीनगमनव्यापारः । तदितरेषु ब्रह्मादिषु मितंपचेषु क्षुद्रेषु । 'क्षुद्रकिंपचानमितंपचाः' इत्यमरः । 'मितनखे च ३।२।३४।' इति पचः खश् 'अरुर्द्विषदजन्तस्य ८।३।६७।' इति मितशब्दस्य मुमागमः । का वा कथा । न कापि वार्तेत्यर्थः । स्वतन्त्रचरितस्य त्वदधीनवृत्तित्वे क्षुद्राणां तथा मनुक्षे (?) सिद्धमिति काव्यार्थापत्तिरलंकारः ॥

निर्विष्टनागशयनेन परेण पुंसा
न्यस्ते पदे त्वयि पदावनि लोकहेतोः ।
स्वर्गौकसां त्वदनुधावनतत्पराणां
सद्यः पदानि विपदामपदं भवन्ति ॥ ३८ ॥

निर्विष्टेति । हे पदावनि, निर्विष्टमनुभूतं नागरूपं शयनं येन तेन परेण पुंसा लोकहेतोर्लोकप्रयोजनार्थं त्वयि पदे चरणे न्यस्ते सति तवानुधावने तत्पराणां स्वर्गौकसां पदानि स्थानानि सद्यो विपदामापदामपदमस्थानं भवन्ति । असंगतिरलंकारः । 'विरुद्धभिन्नदेशत्वं कार्यहेत्वोरसंगतिः ।' इति लक्षणम् । स च पदशब्दश्लेषानुप्राणितः ॥

शरदुपगमकाले संत्यजन्योगनिद्रां
शरणमुपगतानां त्राणहेतोः प्रयास्यन् ।
जलधिदुहितुरङ्कान्मन्दमादाय देवि
त्वयि खलु निदधाति स्वं पदं रङ्गनाथः ॥ ३९ ॥

शरदिति । हे देवि, शरदः ऋतुभेदस्योपगमकाले आगमकाले आगमनसमये योगनिद्रां स्वात्मानुभवरूपां निद्रां संत्यजन् शरणमुपगतानामभयार्थिनां देवानां त्राणहेतो रिपुनिग्रहेण रक्षणार्थं प्रयास्यन् गमिष्यन् रङ्गनाथः स्वं पदं जलधिदुहितुः संवाहिकाया

लक्ष्म्या अङ्कादमन्दं शनैरादाय त्वयि खलु निदधाति निक्षिपति; नान्यत्र । पर्यायोऽलंकारः । 'पर्यायो यदि पर्यायेणैकस्यानेकसंश्रयः ।' इति लक्षणम् । तेन लक्ष्मीवद्दाक्ष्यं व्यज्यते । शरत्काले भगवतो योगनिद्रात्यागः पुराणप्रसिद्धः ॥

स्पृशसि पदसरोजं पादुके निर्विघातं
प्रविशसि च समस्तां देवि शुद्धान्तकक्ष्याम् ।
अपरमपि मुरारेः पूर्वमाभीरकन्या-
स्वभिसरणविधीनामग्रिमा साक्षिणी त्वम् ॥ ४० ॥

**स्पृशसीति** । हे देवि पादुके, त्वं मुरारेः पदसरोजं निर्विघातमप्रतिबन्धं यथा तथा स्पृशसि । समस्तां शुद्धां कक्ष्यामन्तःपुरावृतप्रदेशकोष्ठं प्रविशसि च । अपरमपि किंचेत्यर्थः । पूर्वं कृष्णावतारकाले आभीराणां गोपानां कन्यास्वभिसरणविधीनां रत्यर्थसंचारकृत्यानामग्रिमा प्रथमा साक्षिणी; साक्षाद्द्रष्टासीति गम्यते । कारकदीपकमलंकारः । 'क्रमिकैकगतानां तु गुम्फः कारकदीपकम् ।' इति लक्षणात् । तेन पादुकाया अन्तरङ्गसखीत्वं व्यज्यते ॥

प्रतिभवनमनन्ये पादुके त्वत्प्रभावा-
द्विविधवपुषि देवे विभ्रमद्यूतकाले
अभिलषितसपत्नीगेहयात्राविघातं
ग्लहयति रहसि त्वां षोडशस्त्रीसहस्रम् ॥ ४१ ॥

**प्रतिभवनमिति** । हे पादुके, अनन्येऽन्यत्वरहिते एकस्मिन् । अन्यशब्दस्य वृत्तिविषये भावप्रधानत्वे बहुव्रीहिः; तत्पुरुषत्वे तु सर्वनामतयानन्यस्मिन्निति प्रसज्यते । देवे लीलापरे श्रीकृष्णे त्वत्प्रभावात् तव शक्त्या विविधानि वपूंषि यस्य तस्मिन् सति विभ्रमद्यूतकाले क्रीडार्थाक्षदेवनकाले षोडशस्त्रीसहस्रं षोडशत्वयुक्तं स्त्रीणां सहस्रम् । अभिलषितः सपत्नीनां गेहस्य कर्मणो यात्रायाः प्रयाणस्य विघातः प्रतिबन्धो येन तत् सत् प्रतिभवन भवने भवने रहस्येकान्ते त्वां ग्लहयति पणीकरोति । पादुकायां ग्लहत्वेन गृहीतायां भगवतोऽनन्यगेहगमनं न स्यादित्याशयेन व्याजेनेष्टसाधनात् पर्यायोक्तमलंकारः । 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् ।' इति लक्षणम् ॥

तटभुवि यमुनायाश्छन्नवृत्ते मुकुन्दे
मुहुरधिगमहेतोर्मुह्यतां यौवनानाम् ।
शमयितुमलमासीच्छङ्खचक्रादिचिह्ना
प्रतिपदविचिकित्सां पादुके पद्धतिस्ते ॥ ४२ ॥

**तटभुवीति** । हे पादुके, यमुनायास्तटभुवि तीरदेशे मुकुन्दे छन्नवृत्ते सति शङ्खचक्रपद्मादिलाञ्छनवती ते पद्धतिरधिगमहेतोर्दर्शनार्थं मुहुः पुनः पुनर्मुह्यतामनुरागवताम् । 'अविद्यामूर्छयोर्मोहः प्रीतिभेदेऽपि' इति कविदर्पणे । यौवनानां युवतीसमूहानाम् । 'यु मिश्रणे' इति धातोः शत्रन्तात् 'उगितश्च ४।१।६।' इति ङीप् । समूहार्थे 'अनुदात्तादेरञ् ४।२।४४।' इति यौवतशब्दसिद्धिः । भिक्षादिषु पठितस्य युवतिशब्दस्य तु 'भस्याढे तद्धिते' इति पुंवद्भावे यौवनमिति स्यात् । गणपाठस्यान्यार्थत्वेन पुंवद्भावनिषेधे सामर्थ्याभावात् । प्रतिपदं पदे पदे विचिकित्सां संशयं शमयितुं निवर्तयितुमलं शक्तासीत् । शङ्खचक्रादिचिह्नितपादुकामार्गस्य छन्नभगवदनुमापकत्ववर्णनादनुमानालंकारः ॥

अधिगतबहुशाखान्मञ्जुवाचः शुकादी-
न्सरसिजनिलयायाः प्रीतये संग्रहीतुम् ।
प्रकटितगुणजालं पादुके रङ्गबन्धो-
रुपनिषदटवीषु क्रीडितं त्वत्सनाथम् ॥ ४३ ॥

**अधिगतेति** । हे पादुके, अधिगता अवगताः प्राप्ताश्च बह्वयः शाखा वेदप्रभेदाः पादपावयवाश्च यैस्तान् । 'शाखा तु पादे पक्षान्तरे भुजे । निकटे पादपाङ्गे च प्रभेदे छन्दसामपि ॥' इति नानार्थरत्नमालायाम् । मञ्जुवाचो मधुरालापान् शुकादीन् व्यासपुत्रादीन् विद्यानिष्ठान्, कीरशारिकादिपक्षिणश्च । सरसिजनिलयायाः श्रियः प्रीतये लक्ष्म्याः पुरुषकारत्वादन्यत्र लीलार्थत्वात् संग्रहीतुं स्वीकर्तुं प्रकटितुम् । गुणानां ज्ञानशक्त्यादिकल्याणगुणानां जालं समूहो यस्य तत्, अन्यत्र विस्तारितानाम् । 'मौर्वी सूदवृकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ । रागादौ सन्ध्यादौ त्यागादावप्रधानके च गुणः ॥' इति नानार्थरत्नमालायाम् । 'जालं स्यादानाये क्षारके चयः' इति कविदर्पणे । 'जालं जालकमित्येतौ गवाक्षानाययोर्गणे' । इति नानार्थरत्नमालायाम् । रङ्गभर्तुरुपनिषदटवीषु वेदान्तवनेषु क्रीडितं विहरणं त्वत्सनाथं त्वया सहितम् । वस्त्रभूषणादिवत्पादुकाया अपि ध्येयत्वादिति भावः । उपनिषदटवीविहारेऽपि त्वां विना न तिष्ठतीति वाल्लभ्यातिशयोक्त्या प्रेयसीत्वप्रतीतेः समासोक्तिः श्लेषरूपकानुप्राणिता ॥

मुनिपरिषदि गीतं गौतमीरक्षणं ते
मुहुरनुकलयन्तां मञ्जुवाचः शकुन्ताः ।
उषसि निजकुलायादुत्थिता दण्डकेषु
स्वयमपि पदरक्षे स्वैरमाम्रेडयन्ति ॥ ४४ ॥

**मुनीति** । हे पदरक्षे, मुनिपरिषदि गीतं ते तव गौतम्या अहल्याया रक्षणं मुहुः पुनः पुनरनुकलयन्तोऽनुवदन्तो मञ्जुवाचः शकुन्ताः शुकादिपक्षिणो दण्डकेषु दण्डकारण्येषूषसि प्रातर्निजकुलायात् स्वनीडात् । 'कुलायो नीडमस्त्रियाम्' इत्यमरः । उत्थिताः सन्तः

स्वयमपि स्वैरं यथेच्छमाम्रेडयन्त्यावर्तयन्ति । भाविकमलंकारः; वर्तमाननिर्देशेन भूतार्थसाक्षात्कारवर्णनात् ॥

यमनियमविशुद्धैर्यं न पश्यन्ति चित्तैः
श्रुतिषु चुलुकमात्रं दृश्यते यत्र भूमा ।
सुलभनिखिलभावं मांसदृष्टेर्जनस्य
स्वयमुपहरसि त्वं पादुके तं पुमांसम् ॥ ४५ ॥

यमेति । हे पादुके, यमैर्ब्रह्मचर्यादिभिः पञ्चभिर्नियमैः स्वाध्यायादिभिः पञ्चभिश्च विशुद्धैः शुद्धैश्चित्तैश्च यं पुमांसं न पश्यन्ति न साक्षात्कुर्वन्ति । योगिन इति शेषः । 'ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् । सेवेत योगी निष्कामो योग्यतां स्वं मनो नयेत् ॥ स्वाध्यायशौचसंतोषतपांसि नियमात्मवान् । कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥ एते यमाः सनियमाः पञ्च पञ्च च कीर्तिताः ॥' इति श्रीविष्णुपुराणे । यस्य भूमा महत्त्वं श्रुतिषु वेदेषु चुलुकमात्रं हस्तैकदेशपरिमितं यथा तथा दृश्यते 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेरप्युक्तिनिवृत्तेः । तं 'न मांसचक्षुरभिवीक्षते तम्' इत्युक्तम् । पुमांसं मांसदृष्टेर्जनस्य सुलभा निखिला भावाः स्वभावा विभूतयश्च यस्य तं तथाभूतं स्वयमुपहरस्युपहारीकरोषि । 'भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु । क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु ॥' इति विश्वः । व्याघातालंकारः ॥

निधिमिव निरपायं त्वामनादृत्य मोहा-
दहमिव मम दोषं भावयन्क्षुद्रमर्थम् ।
मयि सति करुणायाः पूर्णपात्रे त्वया किं
परमुपगमनीयः पादुके रङ्गनाथः ॥ ४६ ॥

निधिमिवेति । हे पादुके, निरपायमक्षयं निधिमिव स्थितां त्वामनादृत्य मोहादविवेकात्[1] क्षुद्रं हेयमर्थं सांसारिकसुखस्वरूपं प्रयोजनं भावयन्ननुभवन्नहमिव करुणाया दयायाः पूर्णपात्रेऽत्यन्तयोग्ये मयि सति मामनादृत्य । 'षष्ठी चानादरे २।३।३८।' इति सप्तमी । अत्यन्तदीनत्वादिति भावः । मम दोषं दुर्गुणं भावयन् पश्यन् रङ्गनाथस्त्वया परमदुष्टं पुरुषान्तरमुपगमनीयः किं प्रापणीयः किम्; न प्रापणीय इत्यर्थः । आक्षेपालंकारः ॥

कमपि कनकसिन्धोः सैकते संचरन्तं
कलशजलधिकन्यामेदिनीदत्तहस्तम् ।
अनिशमनुभवेयं पादुके त्वय्यधीनं
सुचरितपरिपाकं सूरिभिः सेवनीयम् ॥ ४७ ॥

---

१. 'अज्ञानात्' इति पाठान्तरम्.

कमपीति। हे पादुके, कनकसिन्धोः कावेर्याः सैकते पुलिने संचरन्तम्। कलशजलधिः क्षीरसागरः। 'क्षीराब्धिः कलशोदधिः' इति वैजयन्ती। अमृतमथनकाले कलशस्थानीयत्वात् तस्य कन्या लक्ष्मीः, मेदिनी भूमिस्ताभ्यां दत्तहस्तम्, सूरिभिर्विद्वद्भिः सेवनीयं भजनीयम्, त्वय्यधीनं त्वदायत्तम्, सुचरितस्य पुण्यस्य परिणामभूतं रङ्गनाथमनिशं सदानुभवेयं सेवेयम्। पर्यायोक्तमलंकारः॥

परिसरमुपयाता पादुके पश्य मातः
करणविलयखेदात्कांदिशीके विवेके।
पुरुषमुपनयन्ती पुण्डरीकाक्षमग्रे
पुनरुदरनिवासक्लेशविच्छेदनं वः॥ ४८॥

परिसरमिति। हे मातः हे पादुके, त्वं करणानां चक्षुरादीनां विलयजनितात् खेदात् विवेके कांदिशीके भयद्रुते सति। 'कांदिशीको भयद्रुतः' इत्यमरः। चरमसमय इति यावत्। पुनरुदरनिवासेन पुनरुत्पत्त्या जनितस्य क्लेशस्य विच्छेदनं विनाशनं पुण्डरीकाक्षं पुरुषमग्रे मत्पुरत उपनयन्ती परिसरं समीपमुपयाता च सती नोऽस्मान् पश्य। प्रेयोऽलंकारः॥

सा मे भूयात्सपदि भवती पादुके तापशान्त्यै
यामारूढो दिवमिव शुभैः सेव्यमानो मरुद्भिः।
सौदामिन्या सह कमलया सह्यजावृद्धिहेतुः
काले काले चरति करुणावर्षुकः कृष्णमेघः॥ ४९॥

सेति। हे पादुके, सा भवती मे मम सपदि तापशान्त्यै तापत्रयनिवारणाय भूयात्। दिवमाकाशमिव यां भवतीमारूढः शुभैर्मरुद्भिर्देवैर्वायुभिश्च सेव्यमानः सह्यजायाः कावेर्या वृद्धेर्हेतुः करुणावर्षुको दयावर्षी कृष्ण एव मेघः श्यामो मेघश्च काले कालेऽपेक्षितसमयेषु वर्षाकालेषु च कमलया श्रियैव सौदामिन्या विद्युता सह चरती सेत्यन्वयः। श्लेषानुप्राणितरूपकसंकीर्णः प्रेयोऽलंकारः॥ ५१॥

सत्याल्लोकात्सकलमहितात्स्थानतो वा रघूणां
शङ्के मातः समधिकगुणं सैकतं सह्यजायाः।
पूर्वं पूर्वं चिरपरिचितं पादुके यत्त्यजन्त्या
नीतो नाथस्तदिदमितरन्नीयते न त्वयासौ॥ ५०॥

सत्यादिति। हे पादुके, सह्यजायाः कावेर्याः सैकतं श्रीरङ्गक्षेत्ररूपं रघूणां स्थानतो वा अयोध्याया इव। 'वा स्याद्विकल्पोपमानयोः' इत्यमरः। महितात् सर्वपूजितात् सत्या-

१. 'मन्थोदधिस्तु क्षीराब्धिः क्षीरोदः कलशोदधिः' इति वैजयन्तीस्थः पाठः.

ल्लोकात् ब्रह्मलोकमपेक्ष्य समधिकगुणमुत्कर्षवदिति शङ्के मन्ये । यत् यस्मात्कारणात् चिरपरिचितं पूर्वं पूर्वं ब्रह्मलोकायोध्यारूपस्थानं त्यजन्त्या त्वयासौ नाथस्तदिदं सह्यजासैकतं नीतः इतरत् स्थानान्तरं न नीयते । तस्मादिति पूर्वेणान्वयः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

अग्रे देवि त्वयि सुमनसामग्रिमैरन्तरङ्गै-
र्विन्यस्तायां विनयगरिमावर्जितादुत्तमाङ्गात्[1] ।
दत्ते पादं दरमुकुलितं त्वत्प्रभावातिशङ्की
देवः श्रीमान्दनुजमथनो जैत्रयात्रास्वनन्यः ॥ ५१ ॥

**अग्र इति** । हे देवि, त्वयि सुमनसां देवानामग्रिमैः श्रेष्ठैरन्तरङ्गैराप्तैः परिजनैर्विनयस्य गरिम्णातिशयेनावर्जितान्नमितादुत्तमाङ्गाच्छिरसः सकाशादग्रे देवस्य पुरतो जैत्रयात्रासु जयार्थयात्राकालेषु विन्यस्तायां सत्यामनन्योऽसहायो दनुजमथनोऽसुरघाती श्रीमान् देवो रङ्गनाथस्तव प्रभावेन माहात्म्येनातिशङ्की संसर्गभीतः सन् पादं चरणं दरमीषद् मुकुलितं संकुचितं दत्ते ददाति । स्वाभाविकस्य पादाग्रसंकोचनपूर्वकाङ्गुलीयन्त्रिकाश्रयणस्य पादुकामाहात्म्यज्ञानजन्यभयायत्तसंकोचत्वोत्प्रेक्षणात्तत्सिद्धविषया हेतूत्प्रेक्षा वाचकाभावाद्गम्या ॥

पौरोदन्तान्परिकलयितुं पादुके संचरिष्णो-
र्व्यक्ताव्यक्ता वशिकविशिखावर्तिनी रङ्गभर्तुः ।
वेलानीतः श्रुतिपरिमलैर्व्यक्तिमभ्येति कल्ये
विन्यासैस्ते विबुधपरिषन्मौलिविन्यासदृश्यैः ॥ ५२ ॥

**पौरैरिति** । हे पादुके, पौरोदन्तान् नागरवृत्तान्तान् परिकलयितुं संचरिष्णो रङ्गभर्तुर्व्यक्ताव्यक्ता ज्ञाताज्ञाता 'क्तेन नञ्विशिष्टेनानञ् २।१।६०।' इति समानाधिकरणसमासः। वशिकानां जितेन्द्रियाणाम् । 'अत इनिठनौ ५।२।११५।' इति वशशब्दात् ठक्प्रत्ययः । विशिखा रथ्या सैव वर्तिनी एकपदी । वेलातीताः श्रुतय एव परिमलो येषां तैः श्रुत्युक्तशङ्खपद्मादिचिह्नदर्शनात् श्रुतिज्ञापकैर्विबुधपरिषदां देवस्तोमानां मौलिविन्यासेन किरीटनिवेशेन दृश्यैस्ते तव विन्यासैर्विक्षेपजनितरेखाभिः कल्ये प्रत्यूषे । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः। व्यक्तिं स्पष्टतामभ्येति प्राप्नोति । श्रुतिसिद्धशङ्खचक्रादिचिह्नैः पादुकासमानाकारैः पथि पादुकारेखासंनिवेशैस्तत्तत्प्रदेशवन्दारुदेवकिरीटविन्यासैश्च नैशः संचारो जनैरनुमीयत इत्युक्त्यानुमानालंकारः ॥

---

१. 'वर्जितैरुत्तमाङ्गैः' इति पाठान्तरम्.

आसंस्काराद्द्विजपरिषदा नित्यमभ्यस्यमाना
श्रेयोहेतुः शिरसि जगतः स्थायिनी स्वेन भूम्ना।
रङ्गाधीशे स्वयमुदयिनि क्षेप्तुमन्धं तमिस्रं
गायत्रीव त्रिचतुरपदा गण्यसे पादुके त्वम्॥ ५३॥

**आसंस्कारादिति।** हे पादुके, आसंस्कारात् तापादिसंस्कारपञ्चकादारभ्य, अन्यत्रोपनयनादारभ्य द्विजपरिषदा द्विजसमूहेन नित्यं प्रतिदिनमभ्यस्यमाना आवर्त्यमाना। पञ्चसंस्कारानन्तरमेवेज्याङ्गतया पादुकासमर्पणाभ्यासादिति भावः। श्रेयसां सुकृतानां हेतुः स्वेन भूम्ना माहात्म्येन जगतः शिरसि स्थायिनि, अन्यत्र, 'उत्तमे शिखरे देवि' इति मन्त्रलिङ्गादुन्नतभागस्थत्वेन ध्येया त्वं रङ्गाधीशेऽन्धंतमिस्रमविवेकापादकं पापं गाढान्धकारं च क्षेप्तुं स्वयमुदयिनि सति गायत्रीव नित्यजप्यमन्त्र इव त्रिचतुरपदा त्रीणि चत्वारि वा पदानि चरणविक्षेपास्त्रयश्चत्वारो वा पादा यस्याः सा। पादशब्दस्य 'संख्यासुपूर्वस्य ५।४।१४०।' इति समासान्तलोपे 'टाबृचि ४।१।९।' इति टाप्। गण्यसे गणनीया भवसि। सविलासमन्थरगमनवशेन पदविक्षेपा गणयितुं शक्यन्त इति भावः। गायत्री तु 'त्रिपदा गायत्री' इति प्रसिद्धा तुरीयगायत्र्या सह चतुष्पादा च जप्या। श्लेषानुप्राणित उपमालंकारः, रङ्गाधीशस्योदयोक्त्या सूर्यत्वं गम्यत इति रूपकम्॥

भवतीं परस्य पुरुषस्य रङ्गिणो
महिमानमेव मणिपादु मन्महे।
कथमन्यथा स्वमहिमप्रतिष्ठितः
प्रतितिष्ठति त्वयि पदात्पदं प्रभुः॥ ५४॥

**भवतीमिति।** हे मणिपादुके, भवतीं परस्य पुरुषस्य रङ्गिणो महिमानमेव माहात्म्यमेव मन्महे; अन्यथा त्वं माहात्म्यं न भवसि यदि स्वे महिम्नि प्रतिष्ठितः प्रभुरात्माधारो भगवान् पदान्निर्गत्य पदं पदे पदे (अत्यन्तसंयोगे द्वितीया) त्वयि कथं प्रतितिष्ठति। त्वदधीनतया कथं वर्तेत इत्यर्थापत्तिरलंकारः॥

तिथिरष्टमी यदवतारवैभवा-
त्प्रथमा तिथिस्त्रिजगतामजायत।
मणिपादुके तमुपनीय वीथिका-
स्वतिथीकरोषि तदनन्यचक्षुषाम्॥ ५५॥

**तिथिरिति।** हे मणिपादुके, अष्टमी तिथिर्यस्य श्रीकृष्णस्यावतारवैभवादाविर्भावमाहात्म्यात् त्रित्वयुक्तानां जगतां प्रथमा प्रतिपत् मुख्या च तिथिरजायत; तं कृष्णं वीथिकासु श्रीरङ्गरथ्यासूपनीय तस्मिन् श्रीकृष्णेऽनन्यस्मिन्नेकस्मिन् चक्षुर्दृष्टिर्येषां तेषां भगवदेकासक्तानामतिथीकरोषि निस्तिथीकरोषि; गोचरीकरोषीति परिहारः। विरोधालंकारः॥

भवतीं परस्य पुरुषस्य रङ्गिणो
महिमानमम्ब मणिपादु मन्महे ।
कथमन्यथा स्वमहिमप्रतिष्ठितः
प्रतितिष्ठति त्वयि पदात्पदं प्रभुः ॥ ५६ ॥

**भवतीमिति** । हे मणिपादुके, भवतीं परस्य रङ्गिणः महिमानमेव माहात्म्यमेव मन्महे । अन्यथा त्वं माहात्म्यं न भवसि यदि स्वे महिम्नि प्रतिष्ठितः प्रभुः आत्मा परः भगवान् पदान्निर्गत्य पदं पदे पदे । अत्यन्तसंयोगे द्वितीया । त्वयि कथं प्रतितिष्ठति त्वदधीनतया कथं वर्तेत इति । अर्थापत्तिरलंकारः ॥

तिथिरष्टमी यदवतारवैभवा-
त्प्रथमा तिथिस्त्रिजगतामजायत ।
मणिपादुके तमुपनीय वीथिका-
स्वतिथीकरोषि तदनन्यचक्षुषाम् ॥ ५७ ॥

**तिथिरिति** । हे मणिपादुके, तिथिरष्टमी तिथिर्यस्य श्रीकृष्णस्यावतारवैभवादाविर्भावमाहात्म्यात् त्रित्वयुक्तानां जगतां प्रथमा प्रतिपत् आद्या मुख्या च तिथिरजायत । तं कृष्णं वीथिकासु श्रीरङ्गरथ्यासूपनीय आनीय तस्मिञ्श्रीकृष्णे अनन्यस्मिन्नेकस्मिंश्चक्षुर्दृष्टिर्येषां तेषां भगवदेकासक्तामां अतिथीकरोषि गोचरीकरोषीति परिहारः । विरोधाभासः ॥

अपारप्रख्यातेरशरणशरण्यत्वयशसा
ननु त्वं रङ्गेन्दोश्चरणकमलस्यापि शरणम् ।
यया लभ्यः पङ्गुप्रभृतिभिरसौ रङ्गनगर-
प्रतोलीपर्यन्ते निधिरनघवाचां निरवधिः ॥ ५८ ॥

**अपारेति** । ननु पादुके, त्वमशरण्यानां रक्षकान्तररहितानां शरण्यत्वयशसा रक्षकत्वकीर्त्या अपारप्रख्यातेरनवधिकप्रसिद्धे रङ्गेन्दोश्चरणकमलस्यापि शरणं रक्षित्री । 'शरणं गृहरक्षित्रोः' इत्यमरः । यया त्वयानघवाचामदुष्टवचसां वेदानां निरवधिरक्षयो निधिर्निधिवद्गोप्यपुरुषार्थोऽसौ रङ्गेन्दो रङ्गनाथस्य प्रतोलीपर्यन्ते वीथिपरिसरे पङ्गुप्रभृतिभिः पादरहितैरपि लभ्यः प्राप्यः । वेदगोप्यस्य प्रतोलीसंबन्धस्यानुरूपस्य कथनाद्विषमभेदः ॥

तत्तद्वासगृहाङ्गणप्रणयिनः श्रीरङ्गशृङ्गारिणो
वाल्लभ्यादविभक्तमन्थरगतिस्त्वं मे गतिः पादुके ।
लीलापङ्कजहल्लकोत्पलगलन्माध्वीकसेकोत्थिता
यत्रामोदविकल्पना विवृणुते शुद्धान्तवारक्रमम् ॥ ५९ ॥

**तत्तदिति** । हे पादुके, तत्तद्वासगृहाङ्गणेषु लक्ष्म्यादिकेलिगृहचत्वरेषु प्रणयिनोऽनुरागवतः । संचरत इति यावत् । श्रीरङ्गशृङ्गारिणः श्रीरङ्गवासिनो यूनो वाल्लभ्याद्वल्लभतया अविभक्ताविकलिता मन्थरालसा गतिर्यस्याः सा त्वं मे गतिः प्राप्या । यत्र त्वयि लीलार्थपङ्कजात् श्रीहस्तधृतात् हल्लकात् रक्तसंध्यकात् भूमिविधृतादुत्पलात् कुवलयात् नीलापाणिधृतात् । श्रीभूमिनीलादेवीनां पद्महल्लककुवलयधारणं भगवच्छास्त्रसिद्धम् । गलतो माध्वीकस्य मकरन्दस्य सेकेनोत्थिता । आमोदानां गन्धानां विकल्पना पर्यायप्रसरणं शुद्धान्तानां लक्ष्म्याद्यन्तःपुराणां वारक्रमं विभक्तभोगकालानुपूर्व्यं विवृणुते व्याख्याति । सेति पूर्वेणान्वयः । लक्ष्म्यादीनां पङ्कजादिसुरभिलहस्तैः पादुकापरिचरणात्तत्तदासक्तगन्धेन तत्तद्वारक्रमोऽनुमीयत इति भावः । वारक्रमभाविभोगाभ्यो लक्ष्म्यादिभ्यो व्यतिरेकस्य सार्वकालिकभोगस्य शब्दशक्त्या प्रतीतेः समासोक्तिरलंकारः ॥

संभवतु पादरक्षे सत्यसुपर्णादिरौपवाह्यगणः ।
यात्रासु रङ्गभर्तुः प्रथमपरिस्पन्दकारणं भवती ॥ ६० ॥

**संभवत्विति** । हे पादरक्षे, रङ्गभर्तुर्यात्रासूत्सवेषु सत्यः सुपर्णश्चेत्यादिक औपवाह्यगणो राजवाहनसमूहः । गरुडस्य सत्यसुपर्णादिनामभेदेन बहुधावस्थानं भगवच्छास्त्रसिद्धम्—'श्रीसात्वत (?) । सत्यः सुपर्णो गरुडस्तार्क्ष्यश्च विहगेश्वरः ।' इति । संभवतु तिष्ठत्वित्यनादरः । भवती त्वमेव प्रथमपरिस्पन्दस्य कारणं हेतुः । प्रथमं पादुकामधिरुह्य बहिर्निर्गत्य वाहनाधिरोहणादिति भावः । आक्षेपालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका संचारपद्धतिरेकादशी ।

---

अथ द्वादशी पुष्पपद्धतिः ।

अथास्यां पद्धतौ पुष्पार्चनमवलम्ब्य पादुकां स्तौति—

शौरेः संचारकाले पुष्पवृष्टिर्दिवश्च्युता ।
पर्यवस्यति यत्रैव प्रपद्ये तां पदावनीम् ॥ १ ॥

**शौरेरिति** । शौरेः श्रीकृष्णस्य संचारकालेषु दिवश्च्युता पुष्पवृष्टिर्यत्रैव पादुकायामेव पर्यवस्यति तां पदावनीं प्रपद्ये । अवर्जनीयस्य पादमूलपुष्पपतनस्य पादुकोद्देशपुष्पवर्षत्वमुत्प्रेक्ष्यते । तथा च प्रेय उत्तम्भ्यत इति संकरः ॥

दैवतं मम जगत्त्रयार्चिता दिव्यदम्पतिविहारपादुका ।
पाणिपादकमलार्पणात्तयोर्या भजत्यनुदिनं सभाजनम् ॥ २ ॥

**दैवतमिति** । जगत्त्रयेणार्चिता दिव्ययोरप्राकृतयोर्दम्पत्योर्जायापत्योः लक्ष्मीभगवतोर्विहारार्था पादुका मम दैवतं परमोपेयमित्यर्थः । तयोर्दिव्यदम्पत्योः लक्ष्म्याः पाणिकमलयोर्भगवतः पादकमलयोश्च परिचरणसंचारकालेषु यथाक्रममर्पणादनुदिनं दिने दिने

सभाजनं पूजनं या भजति । सेति पूर्वेणान्वयः । यथासंख्यानुप्राणितपरिणामाङ्कः प्रेयोऽलंकारस्तेन दिव्यदम्पत्योरर्च्यत्वे किमुतेतरेषामिति काव्यार्थापत्तेर्व्यञ्जनादलंकारध्वनिः ॥

तव रङ्गराजमणिपादुके ततो विहितार्हणः सुरसरित्पयसा ।
अवतंसचन्द्रकलया गिरिशो नवकेतकीदलमिवार्चयति ॥ ३ ॥

तवेति । हे रङ्गराजमणिपादुके, ततो गिरिशः सुरसरितः शिरोलग्नगङ्गायाः पयसा विहितार्हणो दत्तार्घ्यजलः सन्नवतंसभूतया शिरोभूषणभूतया चन्द्रकलयेन्दुमण्डलेन प्रणामसमयलग्नेनेति भावः । तव नवकेतकींदलमर्पयतीव । प्रणामसमयलग्नगङ्गाचन्द्रकलयोः संबन्धस्यार्घ्यदानार्चनत्वमुत्प्रेक्ष्यते ॥

कुसुमेषु समर्थितेषु भक्तैस्त्वयि रङ्गेश पदावनि प्रतीमः ।
शठकोपमुनेस्त्वदेकनाम्नः सुभगं यत्सुरभित्वमस्य नित्यम् ॥ ४ ॥

कुसुमेष्विति । हे रङ्गनाथपदावनि, त्वयि भक्तैरर्चकैः कुसुमेषु समर्पितेषु दत्तेषु सत्सु तत्सुरभित्वं सौरभ्यं देवव्यावर्तकत्वं च नित्यं सदा प्रतीमः सदा त्वं देवेभ्यो विशिष्टेति जानीमः । यत् सुरभित्वम् सुरभेदकत्वं परापरव्यवस्थया देवव्यावर्तकत्वं सौरभं च त्वदेकनाम्नस्त्वदभिन्ननामधेयस्यास्येदानीमर्चारूपेण भगवत्संनिधौ सेव्यमानस्य संबन्धि । तदित्यध्याहृत्य पूर्वेणान्वयः । पाठकोपनिष्ठस्य पारम्यव्यवस्थापकत्वस्य श्लेषेण सौरभताध्यवसितस्याशेषार्चनव्यक्तपारम्यतया पादुकायाः कथनात् पदार्थवृत्तिनिदर्शनालंकारः श्लेषसंकीर्णः ॥

पदे परस्मिन्भुवने विधातुः पुण्यैः प्रसूनैः पुलिने सरय्वाः ।
मध्ये च पादावनि सह्यसिन्धोरासीच्चतुःस्थानमिवार्चनाते ॥ ५ ॥

पद इति । हे पादावनि, परस्मिन् पदे वैकुण्ठे विधातुर्भुवने सत्यलोके सरय्वाः पुलिनेऽयोध्यायां सह्यसिन्धोः कावेर्या मध्ये श्रीरङ्गेशपुण्यैर्मनोज्ञैः । 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः । 'पुण्यं तु चार्वपि' इत्यमरः । प्रसूनैः कुसुमैस्ते तवार्चनं चत्वारि स्थानान्यधिकरणानि यस्य तत् भगवतोऽर्चनमिवासीत् । वैकुण्ठसत्यलोकसाकेतश्रीरङ्गस्थानचतुष्टयार्चनं भगवच्छास्त्रसिद्धकुम्भाग्निस्थण्डिलबिम्बरूपस्थानचतुष्टयसंबन्धिभगवदर्चनसदृशमित्युक्तेरुपमालंकारः ॥

तवैव रङ्गेश्वरपादरक्षे सौभाग्यमव्याहतमाप्तुकामाः ।
सुरद्रुमाणां प्रसवैः सुजातैरभ्यर्चयन्त्यप्सरसो मुहुस्त्वाम् ॥ ६ ॥

तवैवेति । हे रङ्गेश्वरपादरक्षे, अप्सरसस्तवाव्याहतं शाश्वतं सौभाग्यमुत्कृष्टमीशत्वम् । 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । आप्तुकामः लब्धुमनस एव सत्यः सुरद्रुमाणां देवतरूणां सुजातैर्हृद्यैः प्रसवैः पुष्पैर्मुहुस्त्वामभ्यर्चयन्ति । अर्च-

नसौभाग्ययोः कारणकार्ययोः सह वर्णनाद्धेतुरलंकारः, 'हेतुहेतुमतोः सार्धं वर्णनं हेतुरिष्यते' इति लक्षणात् ॥

निवेशितां रङ्गपतेः पदाब्जे मन्ये सपर्यां मणिपादरक्षे ।
त्वदर्पणादापतितामपश्यद्गाण्डीवधन्वा गिरिशोत्तमाङ्गे ॥ ७ ॥

**निवेशितामिति** । हे मणिपादरक्षे, गाण्डीवधन्वा अर्जुनो रङ्गपतेः कृष्णत्वेनावतीर्णस्य पदाब्जे निवेशितां निक्षिप्तां गिरिशस्य शिवस्योत्तमाङ्गे शिरसि तव कर्मणः अर्पणात्क्षेपादापतितां गलितां सपर्यां पूजापुष्पमपश्यदिति मन्ये । भगवच्छक्त्यायत्तं स्वचरणारविन्दार्चितपुष्पस्य शिवशिरसि निधानं प्रसिद्धम् । भगवच्चरणसंसर्गात् पादुकानिपतितं पुष्पं पादुकासंबन्धाच्छिवशिरसि निपतितमित्युक्त्या अहेतोर्हेतुमत्कथनाद्धेतूत्प्रेक्षा । युद्धसमये भगवच्चरणार्पितं पुष्पं शिवशिरसि पार्थो दृष्टवानिति भारते प्रसिद्धम् ॥

पत्राणि रङ्गनृपतेर्मणिपादरक्षे
द्वित्राण्यपि त्वयि समर्प्य विभूतिकामाः ।
पर्यायलब्धपुरुहूतपदाः शचीनां
पत्राङ्कुराणि विलिखन्ति पयोधरेषु ॥ ८ ॥

**पत्राणीति** । हे रङ्गनृपतेर्मणिपादरक्षे, विभूतिकामाः पुरुषाः । द्वे वा त्रीणि वा द्वित्राणि । अपिर्विकल्पे । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । पत्राणि दलानि त्वयि समर्प्य पर्यायेण क्रमेण लब्धं पुरुहूतपदमिन्द्रस्थानं यैस्ते सन्तः शचीनामिन्द्राणीनाम् । नानाकल्पाभिप्रायेण बहुत्वोक्तिः । पयोधरेषु स्तनेषु पत्राङ्कुराणि तमालपत्राङ्कुरसदृशरेखाभेदान् विलिखन्ति । द्वित्रिपत्रसमर्पणादेव पुरुहूतस्थानावाप्तिकथनाद्विभावनालंकारः । 'हेतूनामसमग्रत्वे कार्योत्पत्तिर्विभावना' इति लक्षणात् ॥

निर्वर्तयन्ति तव ये निचितानि पुष्पै-
र्वैहारिकाण्युपवनानि वसुंधरायाम् ।
कालेन ते कमललोचनपादरक्षे
क्रीडन्ति नन्दनवने कृतिनः पुमांसः ॥ ९ ॥

**निर्वर्तयन्तीति** । हे कमलोचनपादरक्षे, तव कृतिनो ये पुमांसो वसुंधरायां पुष्पैर्निचितान्यास्तृतानि पूर्णानीति यावत् । वैहारिकाणि क्रीडाप्रयोजनान्युपवनान्यारामान्निर्वर्तयन्ति । ते कालेन सुकृतपरिपाककालेन नन्दनवने क्रीडन्ति । हेतुहेतुमतोः सहवर्णनाद्धेतुरलंकारः ॥

अर्चन्ति ये मधुभिदो मणिपादरक्षे
भावात्मकैरपि परं भवतीं प्रसूनैः ।

मन्दारदामसुभगैर्मुकुटैरजस्रं

वृन्दारकाः सुरभयन्ति पदं त्वदीयम् ॥ १० ॥

**अर्चन्तीति** । हे मधुभिदो मणिपादरक्षे, ये पुरुषा भावात्मकैः परं परैरेवापि प्रसूनैर्भवतीमर्चयन्ति पूजयन्ति ते त्वदीयं पदं चरणं वृन्दारका देवा मन्दारदामसुभगैर्देवतरुप्रसूनमालाकान्तैर्मुकुटैरजस्रं सदा सुरभयन्ति सुरभीकुर्वन्ति । प्रणमन्तीति भावः । विभावनाभेदो हेलसमप्रोक्तेः ॥

अस्पृष्टदोषपरिमर्षमलङ्घ्यमन्यै-

र्हस्तापचेयमखिलं पुरुषार्थवर्गम् ।

चित्रं जनार्दनपदावनि साधकानां

त्वय्यर्पिताः सुमनसः सहसा फलन्ति ॥ ११ ॥

**अस्पृष्टेति** । हे जनार्दनपदावनि, त्वय्यर्पिताः । साधकैरिति योज्यम् । सुमनसः पुष्पाणि साधकानां पूजकानामस्पृष्टो दोषस्य दुःखस्य परिमर्षः संवन्धो येन तम् , अन्यैर्देवतान्तराराधनायत्तैः फलैरलङ्घ्यमनतिक्रमणीयम्; एतदपेक्षया तेषामल्पत्वादिति भावः । हस्तैरपचेतुं योग्यं सुखलभ्यमिति यावत् । अखिलं निःशेषं पुरुषार्थवर्गं धर्मादिसमूहं सहसा फलन्ति । चित्रमाश्चर्यम् । पूर्ववद्विभावनाभेदः । तेन प्रसिद्धकुसुमापेक्षया व्यतिरेको व्यज्यते ॥

वन्दारुभिः सुरगणैस्त्वयि संप्रयुक्ता

माला विभाति मधुसूदनपादरक्षे ।

विक्रान्तविष्णुपदसंश्रयबद्धसख्या

भागीरथीव परिरम्भणकाङ्क्षिणी ते ॥, १२ ॥

**वन्दारुभिरिति** । हे मधुसूदनपादरक्षे, त्वयि वन्दारुभिः प्रणामशीलैः सुरगणैर्देवसमूहैः संप्रयुक्ता समर्पिता माला, विक्रान्तस्य ब्रह्मलोकविक्रान्तिमतो विष्णुपदस्य संश्रयेण संबन्धेन बद्धसख्या संपादितमैत्रीका ते तव परिरम्भणकाङ्क्षिण्यालिङ्गनेच्छावती भागीरथी गङ्गेव विभाति । उत्प्रेक्षा ॥

ये नाम रङ्गनृपतेर्मणिपादुके त्वा-

मभ्यर्चयन्ति कमलैरधिकर्तुकामाः ।

आरोपयत्यवहिता नियतिः क्रमात्ता-

न्कल्पान्तरीयकमलासनपत्रिकासु ॥ १३ ॥

**ये नामेति** । हे रङ्गनृपतेर्मणिपादुके, ये पुरुषा अधिकर्तुकामा अधिकारेच्छावन्तस्त्वां कमलैरभ्यर्चयन्ति तान्नियतिरभ्यर्चनजन्यं भागधेयम् । 'भाग्यं स्त्री नियतिर्विधिः-

इत्यमरः । अवहिता सावधाना सती कल्पान्तरीयासु कल्पान्तरहितासु । तस्मै हितमित्यर्थे 'प्राक्क्रीताच्छः । ५ । १ । १ ॥' कमलासनपत्रिकासु तत्तत्कल्पब्रह्मपरिगणनपत्रेषु क्रमादानुपूर्व्येणारोपयति । अर्चनजन्यादृष्टस्य नियतकालफलाभिमुख्यमेव पत्रिकालेखनत्वेनोत्प्रेक्ष्यत इत्यनुक्तविषया स्वरूपोत्प्रेक्षा वाचकाभावाद्गम्या ॥

त्वय्यर्पितानि मनुजैर्मणिपादरक्षे
दूर्वाङ्कुराणि सुलभान्यथवा तुलस्यः ।
साराधिकाः सपदि रङ्गनरेन्द्रशक्त्या
संसारनागदमनौषधयो भवन्ति ॥ १४ ॥

**त्वयीति** । हे मणिपादरक्षे, मनुजैर्मनुष्यैस्त्वय्यर्पितानि सुलभान्यल्पयत्नलभ्यानि दूर्वाङ्कुराण्यथवा तुलस्यो वा रङ्गनरेन्द्रस्य श्रीरङ्गनाथस्य विषवैद्यस्य च । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्ये च कथ्यते' इति विश्वः । शक्त्या साराधिका वीर्योत्तराः सत्यः संसाररूपस्य नागस्य सर्पस्य दमनौषधयः निग्राहकौषधयो भवन्ति । पादुकासमर्चनाद्भगवत्प्रसादेन संसारनिवृत्तिर्भवतीत्यमुमर्थमालम्ब्य वाक्यार्थयोः सदृशयोरैक्यारोपान्निदर्शनालंकारः ॥

आराध्य नूनमसुरार्दनपादुके त्वा-
मामुष्मिकाय विभवाय सहस्रपत्रैः ।
मन्वन्तरेषु परिवर्तिषु देवि मर्त्याः
पर्यायतः परिणमन्ति सहस्रनेत्राः ॥ १५ ॥

**आराध्येति** । हे देवि, असुरार्दनपादुके, मर्त्या आमुष्मिकायामुष्मिन् लोके भवाय परलोकानुभाव्यायेति यावत् । तत्र भव इत्यर्थे काशादिभ्यष्ठक् । तत्राकस्मादमुष्मिन्निति सविभक्तिकपाठसामर्थ्यात् विभक्त्यलोपः । विभवायैश्वर्याय त्वां सहस्रपत्रैः कमलैराराध्य परिवर्तिष्वावर्तमानेषु मन्वन्तरेषु मन्वन्तराधिकारकालेषु पर्यायतः क्रमेण सहस्रनेत्राः परिणमन्ति इन्द्रा भवन्ति, नूनं न संदेहः । कार्यकारणयोः सारूप्यनिबन्धनात् समानालंकारः । सहस्रपत्रार्चनस्य सहस्रनेत्रत्वफलोक्तेर्नात्रोत्प्रेक्षा; फलस्य सिद्धत्वेन संभावनीयत्वाभावात्, नूनमित्येतस्य शास्त्रप्रामाण्यायत्तनिश्चयदार्ढ्यजनकत्वादिति रहस्यम् ॥

धन्यैस्त्वयि त्रिदशरक्षकपादरक्षे
पुष्पाणि काञ्चनमयानि समर्पितानि ।
विस्रंसिना विनमतो गिरिशोत्तमाङ्गा-
दारग्वधेन मिलितान्यपृथग्भवन्ति ॥ १६ ॥

**धन्यैरिति** । हे त्रिदशरक्षणपादरक्षे, धन्यैः सुकृतिभिः । 'सुकृती पुण्यवान् धन्यः' इत्यमरः । त्वयि समर्पितानि काञ्चनमयानि स्वर्णमयानि पुष्पाणि विनमतः प्रणामं कुर्वतो

गिरिशोत्तमाङ्गाद्रुद्रशिरसो विस्रंसिना विगलितेनारग्वधेन राजवृक्षपुष्पेन मिलितानि सन्त्यपृथग्भवन्त्यभिन्नानि भवन्ति । इदं काञ्चनमिदमारग्वधमिति वेत्तुमशक्यानीति भावः । सामान्यालंकारः; आरग्वधसादृश्यात्काञ्चनपुष्पेषु विशेषास्फूर्तिवर्णनात्, 'सामान्यं यदि सादृशाद्विशेषो नोपलक्ष्यते' इति लक्षणात् ॥

विश्वोपसर्गशमनं त्वयि मन्यमानै-
वैमानिकैः प्रणिहितं मणिपादरक्षे ।
पद्मासहायपदपद्मनखार्चिषस्ते
पुष्पोपहारविभवं पुनरुक्तयन्ति ॥ १७ ॥

**विश्वेति** । हे मणिपादरक्षे, विश्वेषां समस्तानामुपसर्गाणामुपप्लवानाम् । 'उपसर्गः स्मृतो रोगे विघ्नोपप्लवयोरपि' इति विश्वः । शमनमुपशमनं त्वयि मन्यमानैस्त्वदायत्तं जानद्भिर्वैमानिकैः विमानैश्चरन्तीति वैमानिकाः । तेन चरतीति ठक् । तैः प्रणिहितं प्रयुक्तं ते तव पुष्पोपहारविभवं पुष्पोपदासंपदं पद्मासहायस्य श्रीपतेः पदपद्मयोर्नखार्चिषो नखदीप्तयः पुनरुक्तयन्ति पुनरुक्तं कुर्वन्ति । द्विगुणयन्तीत्यर्थः । बलिनिग्रहादिविश्वोपकारभगवत्क्रमेषु देवैः पुष्पवृष्टिः पादुकायां पर्यवसिता सादृश्यान्नखदीप्तिभिर्द्विगुणीक्रियत इत्युक्त्या प्राक्सिद्धस्वगुणोत्कर्षकथनादनुगुणालंकारः ॥

नाकौकसां शमयितुं परिपन्थिवर्गा-
न्नाथे पदं त्वयि निवेशयितुं प्रवृत्ते ।
त्वत्संश्रितां विजहतस्तुलसीं वमन्ति
प्रस्थानकाहलरवान्प्रथमं द्विरेफाः ॥ १८ ॥

**नाकेति** । हे पादुके, नाथे श्रीरङ्गनाथे नाकौकसां देवानां परिपन्थिवर्गान् शत्रुसमूहान् शमयितुं शमनार्थं त्वयि पदं निवेशयितुं प्रवृत्ते सति त्वत्संश्रितां तुलसीं विजहतः संत्यजन्तो द्विरेफा भ्रमराः प्रथमं काहलवाद्यकवादनात् पूर्वमेव प्रस्थानकाहलरवान् वमन्त्युद्गिरन्ति । भ्रमरशब्दस्य काहलरूपत्वमुत्प्रेक्ष्यत्वं वाचकाभावाद्गम्यते ॥

रङ्गेशपादपरिभोगसुजातगन्धां
संप्राप्य देवि भवतीं सह दिव्यपुष्पैः ।
नित्योपदर्शितरसं न किलाद्रियन्ते
नाभीसरोजमपि नन्दनचञ्चरीकाः ॥ १९ ॥

**रङ्गेशेति** । हे देवि पादुके, नन्दनस्थाश्चञ्चरीका भ्रमरा रङ्गेशपदयोः श्रीरङ्गनाथचरणयोः पूज्यस्य रङ्गनाथस्य च । 'पादः पर्यन्तलेशाङ्घ्रिपूज्यतुर्यांशकांशुषु' इति कवि-

---

१. 'नाशयितुम्' इति पाठान्तरम्.

दर्पणे। प्रशंसावचनैश्चेति समासः। परिभोगेनोपभोगेन सुजातः शोभनो गन्धो यस्यास्तां भवतीं दिव्यपुष्पैः सह संप्राप्य स्वर्गोद्यानकुसुमैः सार्धमधिगम्य नित्यमुपदर्शितो रसो मकरन्दो येन तन्नाभीसरोजं भगवन्नाभीपद्ममपि नाद्रियन्ते किल न गृह्णन्ति खलु। देवसमर्पितैः पुष्पैः सार्धमागमनान्नन्दनवनभृङ्गाः सततविकस्वरं भगवन्नाभीपद्ममपि न जिघ्रन्ति भगवच्चरणोपभोगसुरभिलपादुकासौरभासक्तिवशादिति योगेऽप्ययोगवर्णनात् संबन्धातिशयोक्तिरलंकारः। श्लेषार्थशक्तिमहिम्ना पादुकाया नायकोपभुक्तनायिकात्वप्रतीतेः समासोक्तिश्च॥

प्रागेव काञ्चनपदावनि पुष्पवर्षा-
त्संवर्तिते शमितदैत्यभयैः सुरेन्द्रैः।
पद्मेक्षणस्य पदपद्मनिवेशलाभे
पुष्पाभिषेकमुचितं प्रतिपद्यसे त्वम्॥ २०॥

**प्रागेवेति**। हे काञ्चनपदावनि, शमितानि दैत्येभ्यो भयानि येषां तैः सुरेन्द्रैरिन्द्रादिभिः पद्मेक्षणस्य भगवतः पुष्पवर्षात् प्रागेव पदपद्मयोर्भगवच्चरणयोरेवाब्जयोर्निवेशस्यावस्थानस्य लाभे प्राप्तौ संवर्तिते सत्युचितं योग्यं पुष्पाभिषेकं पादाब्जसंबन्धरूपं प्रतिपद्यसे प्राप्नोषि। असुरजयानन्तरं तार्क्ष्यादवतीर्णस्य भगवतश्चरणयोर्देवैः पादुकायां समर्पितायां भगवतः पुष्पवर्षात् प्रागेव पादुकायाः पद्मरूपितभगवत्पदसंबन्धरूपमेव योग्यपुष्पवर्षत्वेनोत्प्रेक्ष्यत इत्युत्प्रेक्षालंकारः रूपकसंकीर्णः॥

दिशि दिशि मुनिपत्न्यो दण्डकारण्यभागे
न जहति बहुमानान्नूनमद्यापि मूलम्।
रघुपतिपदरक्षे त्वत्परिष्कारहेतो-
रपचितकुसुमानामाश्रमानोकहानाम्॥ २१॥

**दिशिदिशीति**। हे रघुपतिपदरक्षे, दण्डकारण्यभागे दिशि दिशि विद्यमाना मुनिपत्न्यस्तव चित्रकूटस्थायाः परिष्कारहेतोरलंकरणार्थमपचितान्याभृतानि कुसुमानि येषां तेषामाश्रमानोकहानां स्वस्वावासवृक्षाणां मूलं बुध्नोपलक्षितप्रदेशम्। 'मूलं बुध्नोऽङ्घ्रिनामकः' इत्यमरः। बहुमानात् पूज्यताबुद्ध्यैवाद्यापि न जहति न त्यजन्ति नूनम्। 'ओहाक् त्यागे' इति धातोर्लट्प्रथमपुरुषबहुवचनम्। चित्रकूटस्थायाः पादुकायाः स्वस्वाश्रमात्पुष्पाण्याभृत्य दण्डकारण्यादागताभिर्मुनिपत्नीभिः समर्चनसंभवाद्दण्डकारण्ये कथं पादुकाप्रसक्तिरिति चोद्यस्य नावकाशः। नैसर्गिकमाश्रमद्रुममूलावस्थानं पादुकासंबन्धायत्तबहुमतिपूर्वकमित्युत्प्रेक्ष्यते॥

घटयसि परिपूर्णान्कृष्णमेघप्रचारे
कृतिभिरुपहितैस्त्वं केतकीगर्भपत्रैः।

वरतनुपरिमाणाद्वामतः श्यामलानां
प्रणतिसमयलग्नान्पादुके मौलिचन्द्रान् ॥ २२ ॥

**घटयसीति** । हे पादुके, त्वं कृष्णमेघस्य मेघसदृशस्य श्रीकृष्णस्य कालाम्बुदस्य च प्रचारे संचारे सति । भगवत्संचारकाले वर्षाकाल इत्यभिगम्यते । वर्षाकाले केतकीपुष्पसंभवादिति भावः । कृतिभिः सूरिभिरुपहृतैरानीय समर्पितैः केतकीकुसुमस्य गर्भपत्रैरन्तर्दलैः । धवलैरिति गम्यते । वरतनोः परिणामाद्वामतः सव्यभागे श्यामलानाम् । गौर्याः श्यामवर्णत्वादिति भावः। अर्धनारीश्वराणां रुद्राणाम् । कल्पभूयस्त्वाभिप्रायेण बहुत्वोक्तिः । प्रणतिसमये सेवाकाले लग्नान् मौलिचन्द्रान् शिरोभूषणचन्द्रखण्डान् परिपूर्णान् घटयसि । प्रणामोद्देशेन प्रवृत्तानां रुद्राणामशक्यपूर्णचन्द्रलाभोक्त्या विशेषभेदोऽकारः । 'किंचिदारम्भतो शक्यवस्त्वन्तरकृतिश्च सः ।' इति लक्षणात् ॥

परिचरणनियुक्तैः पादुके रङ्गभर्तुः
पवनतनयमुख्यैरर्पितां त्वत्समीपे ।
विनतविधिमुखेभ्यो निर्विशेषां द्विरेफाः
कथमपि विभजन्ते काञ्चनीं पद्मभक्तिम् ॥ २३ ॥

**परिचरणेति** । हे रङ्गभर्तुः पादुके, परिचरणे शुश्रूषणे नियुक्तैः । रामेणेति शेषः । पवनतनयमुख्यैर्हनुमदादिभिस्त्वत्समीपेऽर्पितां विनतस्य विधेर्ब्रह्मणो मुखेभ्यो वदनेभ्यो निर्विशेषां भेदकधर्मशून्यां काञ्चनीं हेमवर्णां मेरुप्रदेशेभ्यः समानीतां पद्मपङ्क्तिं सरसिजश्रेणीं द्विरेफाः कथमपि सौरभवैलक्षण्येन विभजन्ते विवेचयन्ति । पद्मसदृशानां प्रणतब्रह्मवचनानां हेमपद्मानां च सौरभवैलक्षण्येन विशेषस्फूर्तिकथनाद्विशेषकालंकारः । 'मीलितं यदि सादृश्याद्भेद एव न लक्ष्यते । सामन्यं यदि सादृश्याद्विशेषो नोपलक्ष्यते ॥' इति मीलितसामान्ययोर्लक्षणमुक्त्वा, 'भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ ।' इति विशेषकस्य लक्षणमुक्तम् ॥

विधिशिवपुरुहूतस्पर्शितैर्दिव्यपुष्पै-
स्त्वयि सह निपतन्तस्तत्तदुद्यानभृङ्गाः ।
मधुरिपुपदरक्षे मञ्जुभिः स्वैर्निनादै-
रविदितपरमार्थान्नूनमध्यापयन्ति ॥ २४ ॥

**विधीति** । हे मधुरिपुपदरक्षे, विधिशिवपुरुहूतैर्ब्रह्मरुद्रमहेन्द्रैः (कर्तृभिः) स्पर्शितैर्दत्तैः । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । दिव्यैः स्वर्गोद्भवैः पुष्पैः सह त्वयि निपतन्तस्तत्तदुद्यानानां तस्य तस्यारामाणाम् । वीप्सायां द्विरुक्तस्यापि तत्पदस्योत्तरपदवृत्तिविषये सुप्सुपेति समासः; तथा महाकवीनां प्रयोगात् । भृङ्गाः षट्पदा मञ्जुभिः स्वरैर्निनादैः । अविदितः परम उत्कृष्टः अर्थो वस्तु यैस्तान् भगवत्पारम्यानभिज्ञा-

निति यावत्। अध्यापयन्ति। वस्तुतत्त्वमिति शेषः। नूनमित्युत्प्रेक्षा। ब्रह्मादिभिः पादुकायामर्चितायां मध्यस्था भ्रमरा एवाचार्यकभावव्यवस्थया पारम्यं विवेचयन्तीवेत्युत्प्रेक्षा॥

प्रशमयति जनानां संज्वरं रङ्गभर्तुः
परिसरचलितानां पादुके चामराणाम्।
अनुदिनमुपयातैरुत्थितं दिव्यपुष्पै-
र्निगमपरिमलं ते निर्विशन्गन्धवाहः॥ २५॥

**प्रशमयतीति**। हे पादुके, अनुदिनं दिने दिने उपयातैर्दिव्यपुष्पैरुत्थितमुज्जृम्भितं ते तव निगमपरिमलं वेदार्थात्मकं परिमलं विमर्दोत्थसौरभम्। नागरसौरभ्यमिति गम्यते। निर्विशन्ननुभवन् श्रीरङ्गभर्तुः परिसरे समीपे चलितानां वीजितानां चामराणां बालव्यजनानां गन्धवाहः पवनो जनानां सेवमानानां संतापमाध्यात्मिकादिकं श्रान्तिजनितं प्रशमयत्यपनुदति। तापशान्त्या कार्येण सार्धं कारणस्य गन्धवाहस्योक्तेर्हेतुरलंकारः॥

अखिलभुवनरक्षानाटिकां दर्शयिष्य-
न्ननिमिषतरुपुष्पैरर्चिते रङ्गमध्ये।
अभिनयमनुरूपं शिक्षयत्यात्मना त्वां
प्रथमविहितलास्यः पादुके रङ्गनाथः॥ २६॥

**अखिलेति**। हे पादुके, अनिमिषाणां देवानां तरूणां मन्दारादीनां पुष्पैः प्रसूनै रङ्गमध्ये विमानान्तःप्रदेशे नाट्यस्थानमध्ये च। 'रङ्गं स्यान्नर्तनस्थानम्' इति हलायुधः। अर्चिते सति पुष्पाञ्जलिविकिरणानन्तरमखिलानां भुवनानां लोकानां रक्षणार्थं नाटिकां नृत्तम्। नटतेर्धात्वर्थनिर्देशे ण्वुल्‌ दर्शयिष्यत्। रङ्गनाथो नटः परिवृढश्च। आत्मना स्वयं प्रथमविहितलास्यः पूर्वमनुष्ठितनृत्तः सन् त्वामनुरूपं योग्यमभिनयं भावव्यञ्जकचेष्टां शिक्षयति शास्ति। अभ्यासयतीति यावत्। शास्तेरर्थग्रहणादकथितकर्मत्वम्। लास्यगन्धि श्रीरङ्गनाथचरणानुयायिचलनायाः पादुकाया लोकरक्षणार्थं महानटनपूर्वभाव्यभिनयशिक्षकत्वं भगवत्युत्प्रेक्ष्यते। तत्र श्लिष्टपरम्परितरूपकसंकरः॥

अगलितनिजरागां देवि विष्णोः पदं ते
त्रिभुवनमहनीयां प्राप्य संध्यामिव त्वाम्।
भवति विबुधमुख्यैः स्पष्टतारानुषङ्गं
परिसरयति तैस्ते पारिजातप्रसूनैः॥ २७॥

**अगलितेति**। हे पादुके, तत्प्रसिद्धं विष्णोः पदमङ्घ्रिरेव विष्णुपदं गगनम्। अग-

लितो निजानामात्मीयानां सेवकानां रागोऽनुरागो यस्याः सा, अन्यत्रानपेतस्वीयशोणिमानं त्रिभुवनस्य महनीयां पूज्यां त्वां संध्यामिव प्राप्य ते परिसरपतितैः समीपं प्राप्तैः पारिजातप्रसूनैः सष्टस्ताराणां नक्षत्राणामनुषङ्गः संबन्धो यस्य तद् भवति । आकाशस्य संध्यानन्तरं नक्षत्रानुषङ्गवत् पादुकासमर्पणानन्तरमलंकारासने भगवत्पदस्य पुष्पानुषङ्ग इति भावः । रूपकसंकीर्णोपमा ॥

व्यञ्जन्त्येते विभवमनघं रञ्जयन्तः श्रुतीर्नः
प्राध्वं रङ्गक्षितिपतिपदं पादुके धारयन्त्याः ।
नादैरन्तर्निहितनिगमैर्नन्दनोद्यानभृङ्गा
दिव्यैः पुष्पैः स्नपितवपुषो देवि सौस्नातिकास्ते ॥ २८ ॥

**व्यञ्जन्तीति** । हे देवि पादुके, एते पुरः स्थिता नन्दननामकदेवोद्यानसंबन्धिनो भृङ्गा एव सौस्नातिकाः । सुस्नातं पृच्छन्तीत्यस्मिन्नर्थे 'पृच्छतौ सुस्नातादिभ्यः' वा इति ठक् । स्नानसौष्ठवानुयोक्तारः अन्तर्हिता गर्भिता निगमा वेदा यैस्ते अव्यक्ताक्षरवेदपाठसदृशैरिति यावत् । नादैर्नोऽस्माकं श्रुती रञ्जयन्तः सन्त आकर्णनानुरागवतीः कुर्वन्तः सन्तो रङ्गक्षितिपतेः पदं चरणमेव स्थानं प्राध्वं यथा तथा । 'आनुकूल्यार्थकं प्राध्वम्' इत्यमरः । धारयन्त्या दिव्यैः पुष्पैः समकरन्दैः स्नपितमभिषिक्तं वपुर्यस्यास्तस्यास्ते तवानघं हृद्यं विभवं संपत्तिं व्यञ्जन्ति । रूपकमलंकारः । सिंहासनस्थस्याभिषिक्तस्य राज्ञो ब्राह्मणा यथा स्तवपरा भवन्ति तथेति रूपकेणोपमा व्यज्यते ॥

किं पुष्पैस्तुलसीदलैरपि कृतं दूर्वापि दूरे स्थिता
त्वत्पूजासु मुकुन्दपादु कृपया त्वं कामधेनुः सताम् ।
प्रत्यग्राहृतदर्भपल्लवलवग्रासाभिलाषोन्मुखी
धेनुस्तिष्ठतु सा वसिष्ठभवनद्वारोपकण्ठस्थले ॥ २९ ॥

**किमिति** । हे मुकुन्दपादु, सतां त्वत्पूजासु पुष्पैर्मल्लिकादिभिः किमित्यनादरः । तुलसीदलैरपि कृतमलम् तान्यपि मा भूवन् । वारणार्थयोगे तृतीया । दूर्वापि दूरे स्थिता । अस्त्विति शेषः । सापि मास्त्विति यावत् । त्वं भवती कृपया कामधेनुः त्वमेव त्वद्विषयसर्वविधपूजासाधनं पादुकापूजायाः शिरोवहनमात्रसाध्यत्वादिति भावः । सा कामप्रदत्वेन प्रसिद्धा धेनुस्तु प्रत्यग्रं नूतनं यथा तथा आहृतानां दर्भपल्लवानां बालतृणकिसलयानां लवानां लेशानां ग्रासे कवलनेऽभिलाषेण तृष्णयोन्मुखी उद्गतवदना सती वसिष्ठभवनस्य द्वारोपकण्ठस्थले प्रतीहारसमीपप्रदेशे तिष्ठतु इत्यनादरः । दर्भलवदानादिशुश्रूषासापेक्षा कामधेनुर्वसिष्ठस्यैव; नास्माकम् अनादरणीयेति भावः। आक्षेपालंकारः॥

---

१. 'अनभिव्यक्ताक्षर–' इति पाठान्तरम्.

चूडारग्वधरजसा चूर्णस्नानं विधाय ते पूर्वम् ।
रङ्गेशपादुके त्वामभिषिञ्चति मौलिगङ्गया शम्भुः ॥ ३० ॥

**चूडेति** । हे रङ्गेशपादुके, शम्भुर्हरस्ते तव चूडारग्वधस्य शिखागतराजवृन्तपुष्पस्य रजसा परागेण चूर्णस्नपनं स्नानीयानुलेपनं विधाय मौलिगङ्गया शिरोगतया सुरसरिता त्वामभिषिञ्चति । हरप्रणाम एवारग्वधपरागगङ्गासंबन्धाच्चूर्णस्नपनगङ्गाजलाभिषेकत्वेनोत्प्रेक्ष्यत इत्यनुक्तविषया स्वरूपोत्प्रेक्षा वाचकाभावाद्गम्या ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सव्याख्याने पुष्पपद्धतिर्द्वादशी ।

---

अथ परागपद्धतिस्त्रयोदशी प्रारभ्यते ।

अथास्यां पद्धत्यां पादुकापरागानालम्ब्य स्तौति—

पान्तु वः पद्मनाभस्य पादुकाकेलिपांसवः ।
अहल्यादेहनिर्माणपर्यायपरमाणवः ॥ १ ॥

**पान्त्विति** । अहल्याया गौतमपत्न्या देहनिर्माणे पर्यायाः पाक्षिकाः परमाणव उपादानभूताः । परागसंबन्धादहल्याशिलात्वनिवृत्तेरिति भावः । पद्मनाभस्य पादुकयोः केलिपांसवः क्रीडासंचारागता रेणवो वो युष्मान् पान्तु रक्षन्तु । पादुकपांसूनामहल्याशरीरसमवायिकारणपरमाणुभिर्विकल्पप्रतिपादनाद्विकल्पालंकारः ॥

तव संचरणाद्रजो विधूतं यदिदं रङ्गनरेन्द्रपादरक्षे ।
अलमेतदनाविलातिकर्तुं कतकक्षोद इवाशु मानसानि ॥ २ ॥

**तवेति**। हे रङ्गनरेन्द्रपादरक्षे, तव भवत्याः संचरणात् संचारात् विधूतमुत्थितं यदिदं रजोऽस्ति; एतद्रजः कतकक्षोद इव कतकवीजरेणुरिव सलिलानीति योज्यम् । मानसानि मनांस्यनाविलान्यकलुषाणि कर्तुमलं शक्तम् । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः ॥

पुनरुक्तपितामहानुभावाः पुरुषाः केचिदमी पुनन्ति विश्वम् ।
मधुवैरिपदारविन्दबन्धोरपरागास्तव पादुके परागैः ॥ ३ ॥

**पुनरुक्तेति** । हे पादुके, मधुवैरिपदारविन्दयोः मधुवैरिणः श्रीरङ्गनाथस्य पदारविन्दयोश्चरणयोर्बन्धोस्तव परागैः खलग्नपुष्परेणुभिः । 'परागः सुमनोरजः' इत्यमरः । संसर्गिभिः पुनरुक्तो द्विः कथितः पितामहस्य ब्रह्मणोऽनुभवो माहात्म्यं यैस्ते । अपरागा अपगतो रागो विषयेच्छा येषां ते परागरहिता इति विरोधोऽपि । ते ब्रह्मसदृशानुभावा इत्यर्थः । केचिद्दुर्लभा अमी परिदृश्यमानाः पुरुषा विश्वं प्रपञ्चं पुनन्ति । विरोधाभाससंसृष्टो विरोधाभासालंकारः ॥

अभियुक्तजनो निजार्भकाणां बहुशो रङ्गनरेन्द्रपादरक्षे ।
अवलेपपिशाचमोचनार्थं रजसा लिम्पति तावकेन देहान् ॥ ४ ॥

**अभियुक्तेति** । हे रङ्गनरेन्द्रस्य श्रीरङ्गनाथस्य पादरक्षे, अभियुक्तजनः पादुकादितत्परो जनः । 'अभियुक्तः परै रुद्धे तथा स्याददतितत्परः।' इति विश्वः। निजार्भकाणामात्मीयबालकानां देहान् । अवलेपो गर्व एव पिशाचस्तस्य मोचनार्थं तावकेन रजसा बहुशः बहुषु स्थलेषु लिम्पति उपदोग्धि । पादुकापरागसंसर्गेणानादिवासनागताहंकारो नश्यतीति भावः । हेतुना सह हेतुमतो वर्णनाद्धेतुरलंकारः ॥

शिरसा परिगृह्य लोकपालास्तव रङ्गेश्वरपादुके रजांसि ।
विषमेषु बलेषु दानवानां व्यपनीतान्यशिरस्त्रमाविशन्ति ॥ ५ ॥

**शिरसेति** । हे रङ्गेश्वरपादुके, लोकपाला इन्द्रादयस्तव रजांसि शिरसा परिगृह्य दानवानामसुराणां विषमेषु दुष्प्रवेशेषु बलेषु सेनासु व्यपनीतानि निरस्तान्यन्यानि शिरस्त्राणि शिरःप्रावरणानि यस्मिन्कर्मणि तद्यथा तथा आविशन्ति । तव रजांसि शिरसि कृत्वा, निजक्षत्यभावविषये विस्रब्धा गच्छन्तीति भावः । पदुकारजोरूपं विशेषमालम्ब्य शिरस्त्राणान्तरानादरोक्तेराक्षेपालंकारः ॥

कृतिनः शिरसा समुद्वहन्तः कतिचित्केशवपादुके रजस्ते ।
रजसस्तमसोऽपि दूरभूतं परिपश्यन्ति विशुद्धमेव सत्त्वम् ॥ ६ ॥

**कृतिन इति** । हे केशवपादुके, केचित् केचन कृतिनः कुशलास्ते तव रजः परागं रजोगुणश्च शिरसा समुद्वहन्तो रजसो रजोगुणस्य तमसस्तमोगुणस्य च दूरभूतमसंनिहितम् । राजसतामसपुरुषज्ञानस्यागोचरमिति यावत् । विशुद्धमस्पृष्टहेयं सत्त्वं सत्त्वगुणप्रधानं द्रव्यं शुद्धसत्त्वमयं भगवद्दिव्यमङ्गलविग्रहं भगवल्लोकं च । 'सत्त्वं गुणे पिशाचादौ जले द्रव्यस्वभावयोः ।' इति विश्वः । परिपश्यन्त्येव न पश्यन्तीति न । पादुकापरागसंबन्धात् सम्यग्ज्ञानहेतुभूतसत्त्वगुणोन्मेषवन्तो भवन्तीति भावः । रजोगुणवतां सम्यग्ज्ञानवत्त्वं विरुद्धमिति विरोधः, परागोक्त्याभासीक्रियत इति विरोधाभासालंकारः ॥

अधिकं पदमाश्रितोऽपि वेधाः प्रयतो रङ्गधुरीणपादरक्षे ।
अभिवाञ्छति सङ्गमं परागैरभिजातैस्तव देवि नाभिजातः ॥ ७ ॥

**अधिकमिति** । हे देवि रङ्गधुरीणस्य पादरक्षे, अधिकं पदं स्थानमाश्रितोऽपि नाभिजातोऽनभिजातो भगवन्नाभेर्जातश्च वेधाः प्रयतः सन्नभिजातैः कुलीनैः प्राप्तरूपैश्च । सुभगैरिति यावत् । 'अभिजातः स्थिते न्याये कुलीनप्राप्तरूपयोः।' इति विश्वः । तव परागैः संगममभिवाञ्छति काङ्क्षति । पादुकापरागसंबन्धेच्छायां श्लेषेणाकुलीनत्वरूपेणाध्यवसितस्य नाभिजन्यत्वस्याहेतोर्हेतुत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा, वाचकाभावाद्गम्या ॥

शुद्धसत्त्ववपुषैव भवत्या पादुके विरजसौ हरिपादौ ।
अस्तु किं पुनरिदं रजसा ते शुद्धसत्त्वमयता मनुजानाम् ॥ ८ ॥

**शुद्धसत्त्वमिति।** हे पादुके, शुद्धसत्त्वं केवलसत्त्वगुणद्रव्यं वपुर्यस्यास्तयैव सत्या भवत्या हरिपादौ भगवच्चरणौ विरजसौ रजोगुणरहितौ परागशून्यौ च । इत्येतदस्तु। अभ्युपगच्छाम इत्यर्थः । तव रजोगुणेन पांसुना च मनुजानां शुद्धसत्त्वमयता रजस्तमोगुणान्तरस्पृष्टसत्त्वगुणप्रचुरता भवतीति गम्यते इति । इदंपुनः एतत् किं प्रश्ने । न वै युक्तमन्यत्रायुक्तमिति हृदयम् । विरोधाभासालंकारः ॥

तद्रजस्तव तनोति पादुके मानसानि कठिनानि देहिनाम् ।
प्रस्तरस्य पदवीगतस्य यद्याचकार मुनिधर्मदारताम् ॥ ९ ॥

**तदिति।** हे पादुके, तव तद्रजो देहिनां प्राणिनां मानसानि मनांस्यकठिनानि मृदूनि, ऋजूनीति यावत् । तनोति विदधाति । यद्रजः पदवीगतस्य मार्गगतस्य प्रस्तरस्य पाषाणस्य मुनिधर्मदारतामृषिपत्नीत्वं व्याचकार व्याख्यातवत्; तदिति पूर्वेणान्वयः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

रङ्गेशयस्य पुरुषस्य जगद्विभूत्यै
रथ्यापरिक्रमविधौ मणिपादरक्षे ।
सीमन्तदेशमनवद्यसरस्वतीनां
सिन्दूरयन्ति भवतीचलिताः परागाः ॥ १० ॥

**रङ्गेशयस्येति।** हे मणिपादरक्षे, रङ्गेशयस्य पुरुषस्य जगतां लोकानां विभूत्यै संपदे रथ्यायां परिक्रमवीथौ परितः संचारकरणे भवत्या चलिता उत्थिताः । ठक् छलोपश्चेति नियमाद्भवतीशब्दस्य सर्वनामत्वेऽपि न पुंवद्भावः । परागा अनवद्यसरस्वतीनामदोषवाचां श्रुतिभगवच्छास्त्राणां सीमन्तदेशं शिरोमध्यदेशं सिन्दूरवन्तं कुर्वन्ति । परिष्कारचूर्णवन्तं कुर्वन्तीत्यर्थः । सिन्दूरवच्छब्दात् तत्करोतीति णिच् । णाविष्ठवद्भावे 'विन्मनोर्लुक्' इति मतुपो लुक् । वेदान्तवेद्यभगवत्संबन्धादुपनिषन्निष्ठानां पादुकापरागाणां शब्दशक्तिमहिम्ना स्त्रीत्वेन गम्यमाना श्रुतिशिरोऽलंकरणचूर्णत्वमुत्प्रेक्ष्यत इति समासोक्तिसंकीर्णेयमुत्प्रेक्षा ॥

मान्येन रङ्गनृपतेर्मणिपादरक्षे
चूडापदानि रजसा तव भूषयन्तः ।
कालक्रमेण भजतां कमलासनत्वं
नाभीसरोजरजसां निवसन्ति मध्ये ॥ ११ ॥

**मान्येति।** हे रङ्गनृपतेर्मणिपादरक्षे, मान्येन पूज्येन तव रजसा चूडापदानि शिरांसि

भूषयन्तः पुरुषाः कालक्रमेण कमलासनत्वं ब्रह्मत्वं भजतां चतुर्मुखशरीरतया परिणमतां नाभीसरोजस्य भगवन्नाभीपद्मस्य रजसां परागाणां मध्ये निवसन्ति । क्रमेण ब्रह्माणो भवन्तीति हृदयम् । पादुकापरागसंबन्धवतामनुरूपनाभीपद्मपरागसंबन्धोक्तेः समालंकारः; 'समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।' इति लक्षणम् ॥

मातर्मुकुन्दचरणावनि तावकीना-
श्चिन्तावशीकरणचूर्णविशेषकल्पाः ।
संचारपांसुकणिकाः शिरसा वहन्तो
विश्वं पुनन्ति पदपद्मपरागलेशैः ॥ १२ ॥

**मातरिति** । हे मातः मुकुन्दचरणावनि, चिन्तायाश्चित्तवृत्तेर्वशीकरणे स्वाधीनीकरणे चूर्णविशेषकल्पाः प्रसिद्धवशीकरणचूर्णसदृशास्तावकीनास्त्वदीयाः संचाराधीनाः पांसुकणिका रजोलेशाः शिरसा वहन्तः पुरुषाः पदपद्मानां निजचरणसरोजानां परागलेशैः रजःकणैर्विश्वं प्रपञ्चं पुनन्त्यकल्मषं कुर्वन्ति । उदात्तालंकारः, विशेषणस्य साभिप्रायत्वात्परिकरालंकारश्च, तयोः संकरः ॥

आयोजितान्यमलधीभिरनन्यलभ्ये
पादावनि श्रुतिवधूपटवासकृत्ये ।
त्वत्संचरप्रचलितानि रजांसि शौरेः
प्रख्यापयन्ति पदपद्मपरागशोभाम् ॥ १३ ॥

**आयोजितानीति** । हे पादावनि, अमलधीभिर्विशुद्धबुद्धिभिः सद्भिरनन्यलभ्ये पादुकापरागे इतरैरसाध्ये श्रुतीनामेव वधूनां पटवासकृत्ये पिष्टातकाधिवासने । 'पिष्टातः पटवासकः' इत्यमरः । आयोजितानि पटवासत्वेनोल्लिखितानीति यावत् । तव संचारे संचारप्रदेशे गोचरप्रदेशे 'गोचरसंचर—३।३।११९' इत्यादिनाधिकरणे घप्रत्ययान्तो निपातः । प्रचलितानि रजांसि शौरेः श्रीरङ्गनाथस्य पदयोरेव पद्मयोः परागशोभां रजःश्रियं प्रख्यापयन्ति प्रथयन्ति । अत्र पादुकारजसां श्रुतिवधूपटवासत्वेन शौरिपदपद्मपरागत्वे न वानेकधोल्लेखादुल्लेखालंकारः ॥

मूर्धानमम्ब मुरभिन्मणिपादरक्षे
येषां कदापि रजसा भवती पुनाति ।
त्वामेव ते सुकृतिनः स्नपयन्ति काले
मन्दारदामरजसा मकुटच्युतेन ॥ १४ ॥

**मूर्धानमिति** । हे अम्ब मुरभिन्मणिपादरक्षे, भवती रजसा येषां पुरुषाणां मूर्धानं कदापि सकृदपि पुनाति परिशुद्धं करोति ते सुकृतिनो धन्याः काले तत्फलभूतस्वाधिका-

रकाले मकुटच्युतेन मन्दारदाम्नो देवतरुपुष्पमालाया रजसा त्वामेव स्नपयन्ति। प्रणतिसमय इति भावः। परस्परोपकारकथनादन्योन्यालंकारः; 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्।' इति लक्षणात्॥

रथ्याविहाररजसा परिधूसराङ्गी
रङ्गेश्वरस्य ललितेषु महोत्सवेषु।
प्रस्फोटयत्यवनतो मणिपादुके त्वां
गौरीपतिः स्वयमिभाजिनपल्लवेन॥ १५॥

**रथ्येति।** हे मणिपादुके, गौरीपतिर्हरो रङ्गेश्वरस्य ललितेषु मनोज्ञेषु महत्सूत्सवेषु रथ्यायां विहारेण संचारेण जातेन रजसा परिधूसराङ्गी पांसुमसृणाङ्गी त्वामवनतो विनयनम्रः सन्निभाजिनपल्लवेन पल्लवसदृशेन गजचर्मणा प्रस्फोटयति निष्पांसूकरोति। उदात्तालंकारः; महापुरुषशिवचारित्रस्य पादुकामाहात्म्याङ्गत्वात्॥

नेदीयसां निजपरागनिवेशपूर्वं
स्पृष्ट्वा शिरांसि भवती भवरोग[1]भाजाम्।
गाढं निपीड्य गरुडध्वजपादरक्षे
मानग्रहं शमयतीव परैरसाध्यम्॥ १६॥

**नेदीयसामिति।** हे गरुडध्वजपादरक्षे, भवती नेदीयसामतिसमीपवर्तिनां भवः संसार एव रोगस्तद्भाजां नराणां जनानाम्। 'भवः संसारसंप्राप्तिश्रेयःशंकरजन्मसु।' इति नानार्थरत्नमालायाम्। शिरांसि मस्तकानि निजानां परागाणां निवेशो निक्षेपः पूर्वो यस्मिन् कर्मणि तद्यथा तथा स्पृष्ट्वा संस्पृश्य गाढं दृढं निपीड्य परैः पादुकेतरैरसाध्यमशक्यनिरासं मानमनादिवासनाजनितं शरीरात्मभ्रमरूपं गर्वमेव ग्रहं पिशाचम्। 'मानं स्त्रीणां कोपभेदे गर्वे चित्तोन्नतावपि।' इति नानार्थरत्न[2]मालायाम्। 'ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः॥' इति विश्वः। क्रियाविशेषणं वा। शमयतीव नाशयतीव। लोके यथा मान्त्रिकः पिशाचावेशजनितरोगवतां शिरसि भस्मादिकं निक्षिप्य रोगमूलभूतं पिशाचं निरस्यति; तद्वत् पादुकापि भवरोगिणां नतजनानां शिरसि स्वार्पणसमये स्वलग्नपुष्परेणुं निधाय स्वसङ्गेन गाढमापीड्य रोगनिदानभूतमहंकारपिशाचं निरस्यतीति भावः। परागपतनपूर्वकं शिरसि निक्षिप्तपादुकायाः संसारहेतुभूताहंकारापनयनं मान्त्रिककृत्यत्वेनोत्प्रेक्ष्यत इति रूपकसंकीर्णोत्प्रेक्षालंकारः॥

आपातबल्लवतनोरकुमारयूनः
पादावनि प्रविशतो यमुनानिकुञ्जान्।

१. 'भवभीतिभाजाम्' इति पाठान्तरम्. २. अपरस्मिन् पुस्तके 'रत्नमालायाम्' इत्येव पाठः.

आसीदनङ्गसमरात्पुरतः प्रवृत्तेः
सेनापराग इव ते पदवीपरागः ॥ १७ ॥

**आपातेति ।** हे पादावनि, ते तव पदवीपरागो मार्गरजः आपातेन तात्कालिकत्वेन 'आपातस्तत्काले पतनेऽपि च' इति विश्वः । वल्लवस्य गोपस्येव तनुर्यस्य । वस्तुनः परमात्मन इति भावः । तस्य यमुनाया निकुञ्जात् लतागृहाण्याविशतः कुमारयूनः कौमारावस्थाकृताज्ञानमननुभूय यौवनमभिनयतः । कौमार एव गोपिकाभिसरणादिति भावः । कृष्णस्य । अनङ्गस्य कामस्य समराद्रतिरूपात् पुरतः पूर्वं प्रवृत्त उत्थितः सेनापराग इव सैन्यरेणुरिवासीत् । आपातेत्यादिविशेषयोः पर्यायोक्तस्य कृष्णस्य गोपिकाभिरक्षणार्थं यमुनानिकुञ्जं गच्छतो भाविसुरतकलहाभेदेनाध्यवसाय पादुकापरागः कलहपूर्वभाविसेनापरागत्वेनोत्प्रेक्ष्यत इति पर्यायोक्तिसंसृष्टरूपकातिशयोक्तिसंकीर्णोत्प्रेक्षालंकारः ॥

गङ्गापगातटलतागृहमाश्रयन्त्याः
पादावनि प्रचलितं पदवीरजस्ते ।
प्रायेण पावनतमं प्रणतस्य शम्भो-
रुद्धूलनं किमपि नूतनमातनोति ॥ १८ ॥

**गङ्गापगेति ।** हे पादावनि, गङ्गानाम्न्या आपगाया नद्यास्तटे तीरे विद्यमानं निकुञ्जं भोगशयनाख्यस्य भगवतो बिन्दुमाधवस्य वा आवासभूताम् । काशीमिति यावत् । तत्र हि शम्भोरवस्थितिः प्रसिद्धा 'काश्यां तु भोगशयनम्' इत्युक्ता[त्त्या] । रामवनयात्रायां गङ्गातीरे कस्यांचिन्निशायां निवासात् काशीसामीप्याच्च तदानीं तत्र रुद्रागमनसंभवादिति भावः । आश्रयन्त्यास्ते तव प्रचलितमुत्थितं पदवीरजः प्रणतस्य शम्भोः पावनतममन्तःपरिशुद्धिहेतुं नूतनमपूर्वं प्राक्तनश्मशानभस्मोद्धूलनस्य परिशुद्धिहेतुत्वादिति भावः । किमप्युद्धूलनम् । उद्धूता धूलिरित्युद्धूलिः । तस्याः शरीरे कृतिं 'तत्करोति' इति ण्यन्ताद्भावे ल्युट् । प्रायेणातनोति भूम्ना करोति । अविमुक्तक्षेत्रे स्थितस्य भोगशयनाख्यस्य भगवतो बिन्दुमाधवस्य रामानुयात्रायां सविधमागतस्य वा सेवासमयलग्नपादुकारजः शिवस्य पावनतमोद्धूलनत्वेनोत्प्रेक्ष्यते ॥

अन्ते तदा त्वमपि लम्बितमानयन्ती
रङ्गाद्भुजङ्गशयनं मणिपादरक्षे ।
कामं निवर्तयितुमर्हसि संज्वरं मे
कर्पूरचूर्णपटलैरिव धूलिभिस्ते ॥ १९ ॥

**अन्ते इति ।** हे मणिपादरक्षे, त्वं तदा अन्ते तस्मिन्समये । रङ्गाच्छ्रीरङ्गविमानात् । भुजङ्गः शयनं यस्य तं श्रीरङ्गनाथमविलम्बितं शीघ्रमानयन्ती सती मे मम सं-

ज्वरमाध्यात्मिकादितापं तं तव धूलिभिरागमनोत्थितपरागैः कर्पूरचूर्णानां घनसारक्षोदानां पटलैः समूहैरिव । 'पटलं छदिषि व्रजे' इति विश्वः । कामं प्रकामं निवर्तयितुमपनेतुमर्हसि । उपमालंकारः ॥

रङ्गेशपादसहधर्मचरि त्वदीया-
न्मौलौ निवेश्य महितान्पदवीपरागान् ।
सन्तस्त्रिवर्गपदवीमतिलङ्घयन्तो
मौलौ पदं विदधते विबुधेश्वराणाम् ॥ २० ॥

**रङ्गेशेति** । रङ्गेशपादस्य मुकुन्दचरणस्य सहधर्मचरि, पत्युः पत्नीपदविनाभूतप्रचारे पादुके, सन्तो महान्तो महितान् पूजितान् त्वदीयान् पदवीपरागान् मार्गरजांसि मौलौ केशे निवेश्य त्रिवर्गस्य धर्मकामार्थसमूहस्य । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । पदवीं मार्गम् । अण्डान्तर्वर्तिलोकगतिमिति यावत् । अतिलङ्घयन्तोऽतिक्रान्ताः सन्तो विबुधेश्वराणां मौलौ पदं चरणं विदधते कुर्वन्ति । पादुकापरागसंबन्धेनाधिगतपरावरज्ञाना मुमुक्षवो दिक्पालैश्वर्यं न गणयन्तीति भावः । शिरसा रजोवहनेन तद्विपरीतशिरोवाह्यत्ववर्णनाद्विचित्रमलंकारः । 'विचित्रं तत्प्रयुक्तं चेद्विपरीतफलेच्छया' इति लक्षणम् ॥

मातस्तदा माधवपादरक्षे त्वयि प्रसक्तं त्वरयोपयान्त्याम् ।
परामृशेयं पदवीपरागं प्राणैः प्रयाणाय समुज्जिहानैः ॥ २१ ॥

**मातरिति** । हे मातर्माधवपादरक्षे, अहं तदा अन्तकाले प्रयाणाय मृत्वा गमनाय समुज्जिहानैर्गच्छद्भिः । 'ओहाङ् गतौ' इति धातोर्लटः शानच् । प्राणैः प्राणवातैस्त्वरया । शैघ्र्येणोपयान्त्यां समीपमायान्त्यां त्वयि प्रसक्तं लग्नं पदवीपरागं परामृशेयमपनयेयम् । प्रेयोऽलंकारः ॥

तथागता राघवपादरक्षे संपश्यमानेषु तपोधनेषु ।
आसीदहल्या तव पांसुलेशैरपांसुलानां स्वयमग्रगण्या ॥ २२ ॥

**तथेति** । हे राघवपादरक्षे, तथागता जारदोषेण तथा प्रसिद्धं पाषाणत्वं गता प्राप्ता। वृत्तिविषये भावप्रधानो निर्देशः । अहल्या तपोधनेषु मुनिषु संपश्यमानेषु प्रेक्षमाणेषु सत्सु । संपूर्वस्य दृशेरकर्मकत्वविवक्षायां 'दृशेरुपसंख्यानम्' इत्यात्मनेपदे लटः शानच् । 'पाघ्रा' इत्यादिना पश्यादेशः । तव पांसुलेशै रजःकणैः पांसुलानां पांसुसंबन्धरहितानाम्। सिध्मादित्वात् पांसुशब्दाच्च लप्रत्ययः । अपुंश्चलीनामित्यपि । पतिव्रतानामिति यावत् । 'पांसुलः पुंश्चले शम्भोः खङ्गाङ्गे पांसुला भुवि' इति विश्वः । स्वयं परागेतरानपेक्षयाग्रे प्रथमं गण्या गणनीया आसीत् । पादुकारेणुसंबन्धादहल्या पतिव्रतानां प्रथमं गण्या गणनीयासीदित्यर्थः । पांसुसंबन्धात् पांसुसंबन्धरहितेति विरोधः; पतिव्रतेति परिहारः । विरोधाभासोऽलंकारः ॥

पश्यामि पद्मेक्षणपादरक्षे भवाम्बुधिं पातुमिव प्रवृत्तान् ।
भक्तोपयानत्वरया भवत्या पर्यस्यमानान्पदवीपरागान् ॥ २३ ॥

**पश्यामीति** । हे पद्मेक्षणपादरक्षे, भवत्या भक्तोपयानत्वरया भक्तानामुपयाने समीपगमने त्वरया पर्यस्यमानानुत्क्षिप्यमाणान् पदवीपरागान् भवं संसारमेवाम्बुधिं समुद्रं पातुं शोषयितुं प्रवृत्तानिव पश्यामि मन्ये । शीघ्रगमनेन पादुकापर्यसितपांसूनां संसारं सागरत्वेन परिणमय्य तच्छोषणफलकत्वमुत्प्रेक्ष्यते । परिणामसंकीर्णे ॥

पञ्चायुधी भूषणमेव शौरेर्यतस्त्वैते मणिपादरक्षे ।
वितन्वते व्याप्तदिशः परागाः शान्तोदयांश्छत्रुचमूपरागान् ॥ २४ ॥

**पञ्चेति** । हे मणिपादरक्षे, शौरेः कृष्णस्य पञ्चानामायुधानां शङ्खचक्रादीनां समाहारः पञ्चायुधी सा भूषणमेव । असुरवधरूपफलाभावादलंकारमात्रमिति भावः । कुत इत्यत आह—यत इत्यादि । यतः कारणात् व्याप्ता आक्रान्ता दिशो यैस्ते तव एते परागाः शत्रूणामसुराणां चमूपरागान् सेनारेणून् शान्तो नष्ट उदय आविर्भावो येषां तान् वितन्वते कुर्वन्ति । पादुकापरागदर्शनमात्रेण दैत्यादिः परागत इति भयेनासुराणां पलायनाच्छत्रुसैन्यरेणुर्नोदेतीति भावः । अत इति पूर्वेण संबन्धः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः । उत्तरवाक्यार्थस्य पूर्ववाक्यार्थं प्रति हेतुत्वात् ॥

परिणतिमकठोरां प्राप्तया यत्प्रभावा-
दलभत शिलया स्वान्गौतमो धर्मदारान् ।
पुनरुपजनि शङ्कावारकं पादुके त-
त्प्रशमयति रजस्ते रागयोगं प्रजानाम् ॥ २५ ॥

**परिणतिमिति** । हे पादुके, गौतमो यस्यास्तव रजसो रजोगुणस्य प्रभावात् सामर्थ्यादकठोरां मृद्वीं परिणतिं परिणामं प्राप्तया शिलया पाषाणेन स्वान् धर्मदारान् । आत्मीयपत्नीमित्यर्थः । अलभत तस्यां पूर्ववदनुरक्तोऽभूदिति भावः । तद्गौतमधर्मदारप्रापकं ते तव रजः पांसू रजोगुणश्च प्रजानां सेवकानां पुनः उपजनेः उत्पत्तेः शङ्काया वारकं निवारकं तत् रागयोगं विषयलोभसंबन्धं प्रशमयति । निवृत्तिधर्मनिष्ठां जनयतीति यावत् । अहल्यापुनरुत्पत्तिर्गौतमदारहेतोः प्रजापुनरुत्पत्तिरागयोर्निवर्तकत्ववर्णनाद्विरोधः । पापनिवर्तकत्वं मोक्षहेतुत्वं चाविरुद्धमित्याभासीकरणाद्विरोधाभासालंकारः ॥

रजनिविगमकाले रामगाथां पठन्तः
कुशिकतनयमुख्याः पादुके भावयन्ते ।
उपलशकलसक्तैस्त्वत्परागैरकाण्डे
जनितमुनिकलत्रान्दण्डकारण्यभागान् ॥ २६ ॥

**रजनीति** । हे पादुके, कुशिकतनयमुख्या विश्वामित्रादयोऽहल्योत्पत्तिदर्शिनः तपोधना रजनेर्निशाया विगमकाले प्रभाते रामगाथां रामात्मनो भगवतश्चरित्रग्रन्थसंदर्भ पठन्तः सन्त उपलशकलेषु पाषाणखण्डेषु सक्तैस्त्वत्परागैरकाण्डे भगवत्संचारविहारकालेऽपि विभीषणेन श्रीरामदत्तश्रीरङ्गविमानाहरणकाल इति यावत् । दण्डकारण्यभागान् जनितानि कलत्राणि ऋषिपत्न्यो येषां तान् भावयन्ते चिन्तयन्ति । विभीषणेन श्रीरङ्गविमानानयनकाले तत्र गलितैः पादुकापुष्परजोभिः कति कति मुनिपत्न्यो जाता इत्यहल्यावृत्तान्तवेदिनो विश्वामित्रादयः प्रातः पठितरामकथाप्रसक्त्येदानीमपि चिन्तयन्तीति भावः । प्रेयोऽलंकारः ॥ यद्वा कुशिकतनयमुख्याः प्रातरुत्थाय रामकथां पठन्तः सन्त उपलशकलसक्तैस्त्वत्परागैरनवसरेऽतर्कितेऽकाले जनितं मुनेर्गौतमस्य कलत्रं येषु तान् दण्डकारण्यभागान् गौतमाश्रमोपलक्षितदण्डकारण्यप्रान्तान् त्वत्संबन्धबहुमानेन 'कोसलान् जनपदानुपास्महे' इतिवद्भावयन्ते निरन्तरं चिन्तयन्तीति ॥

शुभसरणिरजोभिः शोभयन्ती धरित्रीं
परिणतिरमणीयान्प्रक्षरन्ती पुमर्थान् ।
भवसि भुवनवन्द्या पादुके रङ्गभर्तुः
शरणमुपगतानां शाश्वती कामधेनुः ॥ २७ ॥

**शुभेति** । हे पादुके, शुभैः सरणिरजोभिर्मार्गरेणुभिर्धरित्रीं शोभयन्ती शोभनं कुर्वाणा । कामधेनुसंचारवत् पादुकासंचारस्यापि पावनत्वादिति भावः । परिणतिभिरागामितत्तदवस्थाभेदैर्दध्यादिपरिणामैश्च रमणीयान् हृद्यान् पुरुषैरर्थनीयान् धर्मादीन् क्षीरादींश्च प्रक्षरन्ती ददती दुहाना च भुवनानां वन्द्या सेव्या त्वं रङ्गभर्तुः शरणमुपगतानां रङ्गनाथसंबन्धिनां प्रपन्नां श्रीरङ्गदिव्यालयमुपगतानां च । 'शरणं गृहरक्षित्रोः' इत्यमरः । शाश्वती नित्या कामधेनुरभीष्टदोग्ध्री गौर्भवति । श्लेषानुप्राणितरूपकमलंकारः ॥

पवनतरलितस्ते पादुके रङ्गभर्तु-
र्विहरणसमयेषु व्याप्तविश्वः परागः ।
विषमविषयवर्त्मव्याकुलानामजस्रं
व्यपनयति जनानां वासनारेणुजालम् ॥ २८ ॥

**पवनेति** । हे पादुके, रङ्गभर्तुर्विहरणसमयेषु पवनेन तरलितश्चलितः । व्याप्तं विश्वं समस्तं येन[सः] तव परागो । विषमेषु निम्नोन्नतेषु विषयवर्त्मसु विषयमार्गेषु शब्दादिविषयमार्गेषु व्याकुलानां सीदतां जनानां वासनात्मकमनन्तविषयपरिचयरूपं रेणुजालं पांसुसमूहम् । 'अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् । मोहं श्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥' इति श्रीविष्णुपुराणोक्तं व्यपनयति परिमार्ष्टि । पांसुयुक्तेषु पुनः पांसुसंसर्गस्यानुकूलस्य पांसुव्यावर्तनरूपान्यथाकरणवर्णनाद्व्याघातालंकारः ॥

निष्प्रत्यूहमुपासिषीमहि मुहुर्निःशेषदोषच्छिदो
नित्यं रङ्गधुरंधरस्य निगमस्तोमार्चिते पादुके ।
धत्ते मूर्धभिरादिपद्मजनिता तत्तादृशी संतति-
र्यत्संचारपवित्रितक्षितिरजःपङ्क्तिं चतुःपञ्चषैः ॥ २९ ॥

**निष्प्रत्यूहमिति** । निःशेषं निरवशेषं कृत्स्नं यथा तथा दोषच्छिदः पापनिवर्तकस्य मोक्षप्रदस्य रङ्गधुरंधरस्य नित्यं सदा निगमस्तोमैर्वेदसमूहैरर्चिते पादुके, निष्प्रत्यूहं विघ्नाभावाय । भगवत्सेवाप्रतिबन्धकपापाभावायेति यावत् । अर्थाभावेऽव्ययीभावः । मुहुरुपासिषीमहि ध्येयास्म उपपूर्वात् 'आस उपवेशने' इति धातोराशिषि लिङुत्तमपुरुष-बहुवचनम् । आदिपद्मेन प्रपञ्चपरमकारणेनं भगवन्नाभिपद्मेन जनिता उत्पादिता तत्ता-दृशी प्रसिद्धस्वरूपानुभावा संततिश्चतुर्मुखरुद्रस्कन्दात्मिका यस्याः पादुकायाः संचारेण पवित्रितायाः क्षिते रजसां रेणूनां पङ्क्तिं परम्परां चतुष्पञ्चषैः चतुभिर्ब्रह्मणः, पञ्चभी रुद्रस्य, षड्भिः स्कन्दस्य, मूर्धभिः शिरोभिर्धत्ते वहति । ते पादुके इति पूर्वेणान्वयः प्रेयोऽलं-कारः ब्रह्मादिप्रेम्णां वक्तृप्रेमाङ्गत्वादादिपद्मजनिता चतुष्पञ्चषैरिति ब्रह्मरुद्रस्कन्दानां पर्यायोक्तिस्तत्संकीर्णः ॥

रजसां परोरजस्त्वन्न खलु न लङ्घ्येत भगवतोऽपि पदम् ।
किमुत हृदयं मदीयं भवती यदि नाम पादुके न स्यात् ॥ ३० ॥

**रजसेति** । हे पादुके, भवती यदि नाम न स्यात् न स्याचेत् परोरजः रजसः परो-वर्ति शुद्धसत्त्वात्मकम् अस्पृष्टपांसुकमित्यपि 'परोक्षेलिट्'इति निर्देशात् । वृत्तिविषये सान्त-परःशब्दः क्वाचित्को दृश्यते । भगवतः पदमपि चरणमपि रजसा रेणुना न लङ्घ्येतेति न-खलु । आक्रम्येतैवेत्यर्थः । मदीयं हृदयमनादि रजोगुणं रजसा आक्रम्येतेत्यत्र किमुत न वक्तव्यमित्यर्थः । त्वया मम हृदयं भगवत्पदं चास्पृष्टरजस्कमासीदिति भावः । रजः-संसर्गे मम हृदयस्य किमुतेति कैमुत्योक्त्या काव्यार्थापत्तिरलंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य
कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका परागपद्धतिस्त्रयोदशी ।

---

अथ नादपद्धतिश्चतुर्दशी ।

अथास्यां पद्धत्यां गर्भाश्मनादानालम्ब्य पादुकां स्तौति—

श्रुतीनां भूषणानां ते शङ्के रङ्गेन्द्रपादुके ।
मिथः संघर्षसंजातं रजः किमपि शिञ्जितम् ॥ १ ॥

**श्रुतीनामिति** । हे रङ्गेन्द्रस्य पादुके, ते तव शिञ्जितं भूषणीभवदन्तर्मणिरवम् । 'भूषणानां तु शिञ्जितम्' इत्यमरः । भूषणानां परिष्काराणां प्रतिपाद्यप्रतिपादकभाव-

संबन्धेन पादुकानिष्ठत्वात्तच्छोभावहत्वाच्च भूषणत्वोक्तिः । तासां श्रुतीनां मिथोऽन्योन्यम् । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । संघर्षेण स्पर्धया पादुकाभगवतोरुत्कर्षोपयातेन संमर्दजनितनिर्घोषणेन श्रुतीनामहमहमिकया पादुकोत्कर्षवर्णनप्रवृत्तेरिति भावः । संजातं किमप्यवाङ्मनोगोचरस्वरूपप्रकारं रजो रेणुं शङ्के मन्ये । श्रुत्येकदेशभूतस्य रजसः शब्दात्मकत्वात्तदात्मतया शिञ्जितमुत्प्रेक्ष्यते । भूषणस्वरूपणेन द्रव्यत्वोपचाराद्रजःसंभवः । पादुकारजःश्रुत्येकदेश इवेत्युपमा व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

मुरभिन्मणिपादुके भवत्याः स्तुतिमाकर्णयतां मया निबद्धाम् ।
अवधीरयसीव मञ्जुनादैरचमत्कारवचांसि दुर्जनानाम् ॥ २ ॥

**मुरभिदिति** । हे मुरभिन्मणिपादुके, मया निबद्धां स्तुतिं पादुकासहस्ररूपामाकर्णयतां शृण्वतां दुर्जनानां खलानामचमत्कारािण समर्थनशून्यानि । प्रतिज्ञामात्ररूपाणीति यावत् । वचांस्याक्षेपवचनानि मञ्जुभिर्मनोज्ञैर्नादैरवधीरयसीव निराकरोषीव । पादुकारवे असदाक्षेपतिरस्कारशब्दत्वमुत्प्रेक्ष्यते ॥

विहितेष्वभिवादनेषु वेदैर्गमनोदीरितगर्भरत्ननादा ।
मधुरं मधुवैरिपादरक्षे भवती प्रत्यभिवादनं विधत्ते ॥ ३ ॥

**विहितेष्विति** । हे मधुवैरिणः पादरक्षे, गमनेन संचारेणोदीरित उद्भूतो गर्भनिक्षिप्तानां रत्नानां नादो यस्याः सा भवती वेदैः ऋगादिभिर्मूर्तिमद्भिरभिवादनेषु । 'अहं ऋग्वेदोऽस्मि' इत्याद्युक्तिपूर्वकवन्दनेषु विहितेषु सत्सु मधुरं हृद्यं यथा तथा प्रत्यभिवादनं 'आयुष्मान्भव सौम्य' इत्यादिरूपमाशीर्वचनं विधत्ते । अत्र प्रत्यभिवादनत्वमुत्प्रेक्ष्यत इति वाचकाभावाद्गम्यते ॥

स्वदते किमिहैव रङ्गनाथो मयि तिष्ठन्यदि वा पदे परस्मिन् ।
इति पृच्छसि देवि नूनमस्मान्मधुरैस्त्वं मणिपादुके निनादैः ॥ ४ ॥

**स्वदत इति** । हे देवि मणिपादुके, रङ्गनाथः इह रङ्गायतन एव तिष्ठन् वर्तमानः स्वदते युष्मभ्यं रोचते किम् । यदि वा यद्वा मय्येव तिष्ठन् स्वदते किमित्येवंप्रकारेण त्वं मधुरैर्निनादैरस्मान् पृच्छसि । नूनमित्युत्प्रेक्षा । अनेन परमपदवर्तिनः सेवकदुर्लभत्वाच्छ्रीरङ्गवर्तिनः सुलभत्वेऽपि सेवकाभिगमनसाकाङ्क्षत्वाच्चानादरः । पादुकायां त्वागमय्याभिमुख्यकरणेनायत्नसेव्यत्वादादरश्च युक्त इत्युत्तरं व्यज्यते । आक्षिप्ताभ्यां श्रीरङ्गवैकुण्ठाभ्यां पादुकाया व्यतिरेको व्यज्यते ॥

अवरोधगतस्य रङ्गभर्तुर्गतिषु व्यञ्जितगर्भरत्ननादा ।
प्रतिसंलपसीव पादुके त्वं कमलानूपुरमञ्जुशिञ्जितानाम् ॥ ५ ॥

**अवरोधेति** । हे पादुके, अवरोधगतस्यान्तःपुरगतस्य रङ्गभर्तुर्गतिषु गमनेषु व्यञ्जितः प्रकाशितो गर्भरत्नानां नादो यया सा त्वं कमलाया लक्ष्म्या नूपुरयोर्मञ्जीरयोर्मञ्जूनां

शिञ्जितानां प्रतिसंलपसीव स्वागतादिप्रत्युत्तरं वदसीव । पादुकारवे श्रीनूपुरशब्दप्रत्युत्तरत्वमुत्प्रेक्ष्यते ॥

मुरभिच्चरणारविन्दरूपमहितानन्दमवाप्य पूरुषार्थम् ।
अनघैर्मणिपादुके निनादैरहमन्नाद इतीव गायसि त्वम् ॥ ६ ॥

**मधुभिदिति** । हे मणिपादुके, त्वं मुरभिदश्चरणारविन्दरूपं महितमानन्दमेव पुरुषार्थं प्रयोजनमवाप्यानघैर्व्यसनशून्यैर्निनादैरहमन्नाद इति गायसीव 'एतत्सामगायन्नास्ते, अहमन्नादोऽहमन्नादोऽहमन्नादः' इति श्रुतावुक्तं गानं करोषीव । अत्राधिगतभगवत्पादाब्जपुरुषार्थमुक्ताभेदं पादुकायामध्यवसाय तन्नादे मुक्तगानत्वमुत्प्रेक्ष्यते ॥

मधुवैरिपदाम्बुजं भजन्ती मणिपादावनि मञ्जुशिञ्जितेन ।
पठसीव मुहुः स्वयं प्रजानामपरोपज्ञमरिष्टशान्तिमन्त्रम् ॥ ७ ॥

**मधुवैरीति** । हे मणिपादावनि, त्वं मधुवैरिणः पदाम्बुजं भजन्ती संश्रयन्ती ध्यायन्ती च सती देवताविशेषचिन्तनपूर्वकं ध्यायन्तीत्यपि गम्यते । मञ्जुना शिञ्जितेन अपरोपज्ञं त्वदन्यैरदृष्टपूर्वकं प्रजानां प्राणिनामरिष्टस्याशुभस्य शान्त्यर्थं मन्त्रं स्वयं मुहुः पठसीव । पादुकानादे जगदरिष्टशान्त्यर्थमन्त्रपाठत्वमुत्प्रेक्ष्यते ॥

श्रुतिभिः परमं पदं मुरारेरनिदंकारमनेवमित्युपात्तम् ।
इदमित्थमिति ब्रवीषि नूनं मणिपादावनि मञ्जुभिः प्रणादैः ॥ ८ ॥

**श्रुतिभिरिति** । हे मणिपादावनि, श्रुतिभिर्वेदैरनिदंकारं इदंकृतिरहितं स्फुटविशेष्यावबोधशून्यमिति यावत् । 'त्वमेव त्वां वेत्थ योऽसि सोऽसि' 'सो अङ्ग वेद यदि वा न वेद' इत्याद्युक्तेः । अनेवंप्रकारेयत्ताशून्यम् । 'अथात आदेशो नेति नेति' 'यतो वाचो निवर्तन्ते' इत्युक्तेः । इत्यनेन प्रकारेण । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । उपात्तं गृहीतम् । प्रतिपादितमिति यावत् । मुरारेः परममुत्कृष्टं पदं स्वरूपं चरणं च इदमेवंस्वरूपम्, इत्थमेवंप्रकारं परिदृश्यमानमङ्गलविग्रहविशिष्टम् । अनुभूयमानवात्सल्यादिकल्याणगुणवच्चेत्यर्थः । इत्यनेन प्रकारेण मञ्जुभिः प्रणादैर्ब्रवीषि । नूनं पादुकानादेषु श्रुत्यपरिच्छिन्नस्वरूपप्रकारबोधकशास्त्रत्वमुत्प्रेक्ष्यते; तेन श्रुतिभ्यो व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

मुनयः प्रणिधानसंनिरुद्धे हृदि रङ्गेश्वररत्नपादुके त्वाम् ।
विनिवेश्य विभावयन्त्यनन्याः प्रणवस्य प्रणिधिं तव प्रणादम् ॥९॥

**मुनय इति** । हे रङ्गेश्वरस्य रत्नपादुके, मुनयो मननशीला योगिनः प्रणिधानेन यमनियमादिजन्येनैकाग्र्येण संनिरुद्धे सर्वविषयेभ्यो व्यावर्तिते हृदि मनसि त्वां निवेश्य विभाव्य, अनन्या देवतान्तरशून्याः सन्तस्तव प्रणादं प्रणवस्योपासनकरणमन्त्रस्य प्रणिधिं चरम् । उद्बोधकमिति यावत् । 'प्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः । विभावयन्ति

ध्यायन्ति । पादुकानादे प्रणवोद्बोधकशब्दत्वमुत्प्रेक्ष्यते प्रतिनिधिमिति वा । पादुकानादं श्रुत्वा तद्विदः प्रणवमपि न चिन्तयन्तीति भावः । प्रणवप्रतिनिधित्वं वोत्प्रेक्ष्यते ॥

मधुरं मणिपादुके प्रवृत्ते भवती रङ्गपतेर्विहारकाले ।
अभयार्थनया समभ्युपेता न विसंवादयतीव मञ्जुनादैः ॥ १० ॥

**मधुरमिति** । हे मणिपादुके, भवतीं रङ्गपतेर्विहारकाले लीलासंचारसमये प्रवृत्ते सत्यभयार्थनया भयाभावाशंसया समभ्युपेतानभिमुखमागतान् जनान् मञ्जुभिर्नादैर्मधुरं यथा तथा अविसंवादयतीव भयं त्यजतेति योग्यमुत्तरं वदतीव ॥

श्रवसोर्मम पारणां दिशन्ती मणिपादावनि मञ्जुलैः प्रणादैः ।
रमया क्षमया च दत्तहस्तं समये रङ्गधुरीणमानयेथाः ॥ ११ ॥

**श्रवसोरिति** । हे मणिपादावनि, त्वं मञ्जुलैर्मनोज्ञैः प्रणादैर्मम श्रवसोः कर्णयोः तत्त्वहितबोधकशब्दश्रवणाभावेनोपोषितयोः पारणामुपोषिताशनम् । आप्यायनमिति यावत् । दिशन्ती ददती सती रमया श्रिया क्षमया भूम्या च दत्तहस्तं समर्पितकरं रङ्गधुरीणं सिद्धोपायं समये चरमकाले आनयेथाः आगमयेः । लिण्मध्यमपुरुषैकवचनम् । प्रेयोऽलंकारः ॥

अनुयाति नित्यममृतात्मिकां कलां
तव रङ्गचन्द्रमणिपादु झंकृतम् ।
श्रवसा मुखेन परिभुज्य यत्क्षणा-
दजरामरत्वमुपयान्ति साधवः ॥ १२ ॥

**अनुयातीति** । हे रङ्गचन्द्रस्य मणिपादु, तव झंकृतं झङ्कारशब्दः अमृतात्मिकाममृतस्वरूपां कलां चन्द्रकलामनुयात्यनुसरति । साधवः सन्तः श्रवसा कर्णेनैव मुखेनास्येन यत् झंकृतं परिभुज्य निपीय क्षणादल्पकालेन अजरामरत्वं मोक्षं चोपयान्ति । तज्झंकृतमिति पूर्वेणान्वयः । 'प्रथमां पिबते वह्निः' इत्यादिनोक्तचन्द्रकलापानं यथा देवतानामजरामरत्वापादकं तथा पादुकानादश्रवणमपि मुक्त्यापादकमिति भावः । अनुयातीत्युक्त्योपमा रङ्गचन्द्रः श्रवसा मुखेनेत्यादिपदैरुक्तरूपकानुप्राणिता ॥

परुषैरजस्रमसतामनर्थकैः
परिवादपैशुनविकत्थनादिभिः ।
मधुकैटभारिमणिपादुके मम
श्रुतिदुष्कृतानि विनिवारय स्वनैः ॥ १३ ॥

**परुषैरिति** । हे मधुकैटभारेर्मणिपादुके, परुषैरसह्यैः, अनर्थकैः प्रयोजनशून्यैरसतां खलानामजस्रं सदा जायमानैः । परीवादोऽपवादः अविद्यमानदोषाभिधानम् , पैशुनं विद्य-

मानदोषाविष्करणम्, विकत्थनं व्यर्थोक्तिः; एतदादिभिः दुःशब्दैर्ज्ञातानि मम श्रुतिदुष्कृतानि श्रवणसंबन्धीनि पापानि तव स्वनैर्वेनिवारय निवर्तय । प्रेयोऽलंकारः ॥

पादुके परिजनस्य दूरतः सूचयन्ति खलु तावकाः स्वनाः ।
लीलया भुजगतल्पमुज्झतः श्रीमतस्त्रिचतुरान्पदक्रमान् ॥ १४ ॥

**पादुके इति ।** हे पादुके, तावकाः स्वना लीलया लीलासंचरणहेतोः भुजगरूपं तल्पं शय्यामुज्झतस्त्यजतः श्रीमतो रङ्गनाथस्य त्रिचतुरान् त्रीन् चतुरो वा पदक्रमान् चरणविक्षेपान् दूरतः स्थितस्य परिजनस्य सूचयन्ति खलु ज्ञापयन्ति किल । 'भगवानागच्छति सज्जीभव परिजन' इति कथयन्तीव पादुकास्वना इत्युत्प्रेक्षा वाचकाभावाद्गम्या ॥

देवि दैत्यदमनाय सत्वरं प्रस्थितस्य मणिपादुके प्रभोः ।
विश्वमङ्गलविशेषसूचकं शाकुनं भवति तावकं रुतम् ॥ १५ ॥

**देवीति ।** हे देवि मणिपादुके, तावकं त्वदीयं रुतं नादो दैत्यानामसुराणां निग्रहाय सत्वरं तूर्णं प्रस्थितस्य प्रयतस्य प्रभोः श्रीरङ्गनाथस्य विश्वेषां मङ्गलविशेषाणां शुभभेदानां सूचकं शाकुनं 'दर्शनाच्च स्वरो वरः' इत्युक्तं क्षेमकार्यादिसंबन्धि रुतं भवति । गम्योत्प्रेक्षा ॥

दातुमर्हसि तदा मम श्रुतौ देवि रङ्गपतिरत्नपादुके ।
विह्वलस्य भवदीयशिञ्जितं स्वादु कर्णरसनारसायनम् ॥ १६ ॥

**दातुमिति ।** हे देवि रङ्गपते रत्नपादुके, त्वं तदा चरमसमये विह्वलस्य शिथिलकरणस्य, रुग्णस्येत्यपि, मम श्रुतौ श्रोत्रे भवदीयं भवत्याः संबन्धि शिञ्जितमेव स्वादु रुच्यं कर्णस्यैव रसनाया रसायनं मध्वादिमधुरवस्तुमिश्रमौषधं दातुमर्हसि । परिणामालंकारः । शिञ्जितस्यैव रोगनिवर्तकत्वादौषधत्वेन परिणतस्य विह्वलाय दातव्याभिधानात् ॥

अहमुपरि समस्तदेवतानामुपरि ममैष विभाति वासुदेवः ।
तदिह परतरं न किंचिदस्मादिति वदसीव पदावनि प्रणादैः ॥१७॥

**अहमिति ।** हे पदावनि, समस्तदेवतानां ब्रह्मादीनामुपरि शिरोभागे, अहं तेभ्य उत्कृष्टेति यावत् । एष वासुदेवः परिदृश्यमानः श्रीरङ्गनाथो ममोपरि मम शिरसि मत्त उत्कृष्ट इत्यपि यावत् । तत्तस्मादिह प्रपञ्चेऽस्माद्वासुदेवात्परतरमुत्कृष्टं किंचिदपि नास्तीति त्वं प्रणादैर्वदसीव । सारालंकारसंकीर्णेयमुत्प्रेक्षा । पुष्पिताग्रावृत्तम् । 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणम् ॥

अवनतविबुधेन्द्रमौलिमाला मधुमदशिक्षितमन्थरप्रयाता ।
प्रथयसि परिरब्धशौरिपादा मणिकलहेन वियातजल्पितानि॥ १८॥

---

१. 'रङ्गनाथः' इति क. पुस्तके.

**अवनेति** । 'हे पादुके, अवन' इत्यध्याहार्यम् । अवनतानां विबुधेन्द्राणां मौलिषु स्थितानां मालाभिः मधुभिः पुष्परसैर्मद्यैश्च । 'मद्ये पुष्परसे मधु' इति विश्वः । जनितेन मदेन हर्षातिरेकेण शिक्षितमभ्यासितं मन्थरमलसं यथा तथा प्रयातं यस्याः सा । परिरब्धः परिष्वक्तः शौरेः पादश्चरणः पूज्यः शौरिरपि यया सा त्वं मणीनामन्तर्गतोपलानां कलहेन संघर्षजनितेन शब्देन वियातानि धृष्टानि जल्पितानि वचांसि प्रथयसि प्रख्यापयसि । अत्र विशेषणमहिम्ना पानासक्ताया नायिकाया व्यक्तेः समासोक्तिसंकीर्णेयमुत्प्रेक्षा ॥

आस्थानेषु त्रिदशमहितान्वर्तयित्वा विहारान्
स्थाने स्थाने निजपरिजनं वारयित्वा यथार्हम् ।
वासागारं स्वयमुपसरन्पादुके मञ्जुनादा-
मापर्यङ्कान्न खलु भवतीं रङ्गनाथो जहाति ॥ १९ ॥

**आस्थानेष्विति** । हे पादुके, आस्थानेषु सभासु त्रिदशैर्देवैर्महितान् पूजितान् विहारान् वर्तयित्वा स्थानेस्थाने तत्तदुचितकक्ष्यासु निजपरिजनं ब्रह्मादिकं यथार्हमौचित्यमनतिक्रम्य वारयित्वा निवर्त्य स्वयमद्वितीयं यथा तथा वासागारं शय्यागृहमुपसरन् गच्छन् रङ्गनाथो मञ्जुनादां भवतीमापर्यङ्कात् मञ्चमवधीकृत्य न जहाति खलु न त्यजति खलु । त्वन्मञ्जुनादश्रवणेच्छयेव न त्यजतीति भावः । अन्तरङ्गसखीकृत्यव्यञ्जनात्समासोक्तिरलंकारः ॥

अन्तर्न्यस्तैर्मणिभिरुदितं पादुके रङ्गबन्धौ
मन्दं मन्दं निहितचरणे मञ्जुलं ते निनादम् ।
पश्यन्त्यादिक्रमपरिणतेः प्राक्तनीं तां पराया
मन्ये मित्रावरुणविषयादुच्चरन्तीमवस्थाम् ॥ २० ॥

**अन्तर्न्यस्तैरिति** । हे पादुके, रङ्गबन्धौ मन्दं मन्दं शनैः शनैर्निहितचरणे निक्षिप्तपदे सति अन्तर्न्यस्तैर्गर्भनिक्षिप्तैर्मणिभी रत्नैरुदितं जातं मञ्जुलं ते तव निनादम् । पश्यन्त्यादिः पश्यन्तीसंज्ञिकशब्दावस्थाप्रभृतिः क्रमपरिणतिः, क्रमेण परिणामो यस्यास्तस्याः परायाः शब्दसूक्ष्मावस्थायाः संबन्धिनीं प्राक्तनीमाद्यां पश्यन्त्यात्मिकां मित्रावरुणयोः प्राणापानयोः । 'मित्रस्य भागोऽसि वरुणस्याधिपत्यम्' इति मन्त्रकरणकपाश्चात्येष्टकोपधानब्राह्मणे 'प्राणो वै मित्रोऽपानो वरुणः' इति प्राणापानयोर्मित्रावरुणशब्दाभ्यां निर्देशः श्रूयते । देवतावाचकशब्दस्यान्यत्रोपचारेण प्रयोगात् 'देवताद्वन्द्वे च' इत्यानजुपपद्यते । तयोर्विषयाद्देशात् । 'विषयो गोचरे देशे योऽज्ञातो यस्य तत्र न' इति नानार्थरत्नमालायाम् । नाभिप्रदेशादिति यावत् । उच्चरन्तीमुद्गच्छन्तीमवस्थां परिणतिंमन्यो हृदयारूढशब्दावस्थां भावयामीत्युत्प्रेक्षा । 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या

वदन्ति' इति शब्दचातुर्विध्यं श्रुतम् । उपबृंहितं च मन्त्रशास्त्रे "............... शब्दमात्रेण वर्जितान् । सचाभिमुखमायाति संकल्पादुत्थितस्य च । शब्दरूपपदार्थस्य शब्दस्य परमौजसः ॥ संकल्पपदवीरूढस्फुरन्त्यन्तस्फुटस्थितम् । पदार्थोपरि यः शब्दो मध्यमं विद्धि तं मुने॥हृत्पद्मकर्णिकासंस्था प्रयत्नपदवीषु च। विद्यासु करणोत्थासु यश्चाभिव्यक्तिमेव च ॥ वाच्यवाचकरूपेण स शब्दः स्थूल उच्यते। अतिस्थूलपरार्थेन स च वाग्विषये पुनः ॥ दृश्यादृश्येषु भावेषु अभिव्यक्तं परादि च। स हि स्थूलतरः शब्दो व्यवहारेऽखिले स्थितः ॥' इति श्रीभागवते 'स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य रूपं मात्राखरे वर्ण इति स्थविष्ठः ॥' इत्यस्य श्लोकस्य व्याख्यानावसरे श्रीधरेणोदाहृतमभियुक्तवचनम्—'या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं वर्णानत्र प्रकटकरणैः प्राणसङ्गात्प्रसूते । तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थां वाचं वक्त्रे करणविशदां वैखरीं च प्रपद्ये ॥' इति ॥

प्रख्यातानां परिषदि सतां कारयित्वा प्रतिज्ञां
प्रायेण त्वां प्रथितविभवां वर्णयन्ती मया त्वम् ।
पादन्यासक्रममनुगुणं प्राप्य रङ्गाधिराजा-
त्पद्यारम्भान्गणयसि परं पादुके स्वैर्निनादैः ॥ २१ ॥

**प्रख्यातानामिति** । हे पादुके, प्रख्यातानां प्रसिद्धानां सतां परिषदि समाजे । मयेत्याचार्योक्तिः। प्रयोज्यकर्त्रा प्रतिज्ञां पादुकासहस्रं करोमीति संविदं कारयित्वा प्रथितः प्रसिद्धो विभवः संपत्तिर्यस्यास्तां त्वां मया प्रयोज्यकर्त्रा वर्णयन्ती स्थापयन्ती । वर्णयतेश्चौरादिकात् ('हेतुमतश्च') ['हेतुमति च ३ । १ । २६ ॥'] इति प्रयोजकव्यापारे णिच् । त्वं रङ्गाधिराजात् श्रीरङ्गनाथसकाशात् । प्रातीतिकमपादानत्वमाश्रित्य पञ्चमी । अनुगुणमनुरूपं पादन्यासक्रमं पदविक्षेपपरिपाटीं प्राप्य स्वैर्निनादैः पद्यानां श्लोकानामारम्भानुपक्रमान् प्रायेण हेतुबाहुल्येन गणयसि परिगणयस्येव । पादुकाशब्दे क्रमभाविनि प्रतिज्ञातश्लोकसहस्रस्यैकं द्वे इत्यादिगणनरूपशब्दत्वमुत्प्रेक्ष्यते ॥

विष्णोरस्मिन्पदसरसिजे वृत्तिभेदैर्विचित्रै-
रैदंपर्यं निगमवचसामैककण्ठ्येन सिद्धम् ।
इत्थं पुंसामनिपुणधियां पादुके त्वं तदेव
स्पृष्ट्वा सत्यं वदसि नियतं मञ्जुना शिञ्जितेन ॥ २२ ॥

**विष्णोरिति** । हे पादुके, त्वं विष्णोः श्रीरङ्गनाथस्यास्मिन् दृश्यमाने पदसरसिजे चरणाम्बुजे निगमवचसां वेदरूपाणां वाचामैदंपर्यमेतत्पदसरसिजबोधकत्वं विचित्रैर्नानारूपैर्वृत्तिभेदैः शक्तिलक्षणागौणीव्यञ्जनारूपपदपदार्थसंबन्धविशेषैरैककण्ठ्येन परस्पराविरोधेन सिद्धं निष्पन्नमित्थमनेन प्रकारेण अनिपुणधियां मन्दबुद्धीनां पुंसां तदेव पद-

सरसिजमेव स्पृष्ट्वा मञ्जुना शिञ्जितेन सत्यं शपथम् । 'सत्यं च शपथे' इति विश्वः । वदसि ब्रवीषि । नियतमित्युत्प्रेक्षा । श्रीरङ्गनाथपदाब्ज एव वेदानां तात्पर्यमनेनैव शपे इति वदसीवेत्युत्प्रेक्षा ॥

आम्नायैस्त्वामनितरपरैः स्तोतुमभ्युद्यतानां
मध्ये भक्त्या मधुविजयिनः पादुके मोहभाजाम् ।
शिक्षातत्त्वस्खलितवचसां शिक्षयस्येव पुंसां
मात्रादीनि स्वयमनुपदं मञ्जुभिः स्वैर्निनादैः ॥ २३ ॥

**आम्नायैरिति** । हे मधुविजयिनः पादुके, त्वमनितरपदैरन्यतात्पर्यशून्यैः त्वदेकपरैरिति यावत् । आम्नायैर्वेदैस्त्वां भवतीं स्तोतुमभ्युद्यतानामुद्युक्तानां मध्ये स्तुतिमध्ये मोहभाजामबोधवतामत एव शिक्षायाः स्वरवर्णमात्रा शिक्षकशास्त्रस्य तत्त्वे याथार्थ्ये स्खलितवचसामवशोक्तीनां पुंसामनुपदं पदे पदे मात्रादीनि ह्रस्वदीर्घप्लुतोदात्तादीनि मञ्जुभिः स्वैर्निनादैः स्वयं स्वरवर्णमात्रा शिक्षयस्येव यथावद्वाचयस्येव । पादुकानादे स्वग्वर्णमात्रादिशिक्षावचनत्वमुत्प्रेक्ष्यते ॥

लक्ष्मीकान्तं कमपि तरुणं रथ्यया निष्पतन्तं
रागाद्द्रष्टुं त्वरितमनसां राजधानीवधूनाम् ।
प्रत्यादेशं भजति मधुरैः पादुके शिञ्जितैस्ते
चेतोहारी कुसुमधनुषः शिञ्जिनीमञ्जुनादः ॥ २४ ॥

**लक्ष्मीकान्तमिति** । हे पादुके, लक्ष्मीकान्तं श्रियः पतिं रथ्यया प्रतोल्या निष्पतन्तमागच्छन्तं कमप्यनिर्वचनीयसौन्दर्यादिगुणं तरुणं युवानं श्रीरङ्गनाथं रागात् प्रेम्णा द्रष्टुं प्रेक्षितुं त्वरितमनसां त्वरया युक्तमनसाम् । संभ्रान्तचेतसामिति वा 'रुष्यमत्वरसंघुषास्वनाम्' इति निष्ठायामिड्विकल्पः । राजधानीवधूनां श्रीरङ्गनगरस्त्रीणां चेतोहारी चित्ताकर्षकः कुसुमधनुषो मदनस्य शिञ्जिन्या मौर्व्या मञ्जुर्मनोज्ञो नादस्ते तव मधुरैः शिञ्जितैः प्रत्यादेशं निराकृतिम् । 'प्रत्यादेशो निराकृतिः' इत्यमरः । भजति । उपमेयेन पादुकानादेन उपमानस्य मदनज्याघोषस्य तिरस्कारवर्णनात्प्रतीपभेदोऽलंकारः ॥

रङ्गाधीशे सह कमलया सादरं यायजूकैः
सारं दिव्यं सवनहविषां भोक्तुमाहूयमाने ।
नेदीयोभिर्निगमवचसा नित्यमंहःप्रतीपैः
प्रत्यालापं दिशति भवती पादुके शिञ्जितैः स्वैः ॥ २५ ॥

**रङ्गाधीश इति** । हे पादुके, भवती यायजूकैरिज्याशीलैः कर्मयोगनिष्ठैः रङ्गाधीशे कमलया श्रिया सह दिव्यं वल्गु हृद्यमित्यर्थः । 'दिव्यं वल्गौ दिवि भवे' इति विश्वः ।

सवनहविषां यज्ञदेवतोद्देश्यकानां सारं श्रेष्ठांशं भोक्तुं सादरमादरसहितं यथा तथा आहूयमाने सति नेदीयोभिरतिनिकटवर्तिभिर्नित्यं सदा अंहसां दुष्कृतानां प्रतीपैर्विरोधिभिः स्वैरात्मीयैः शिञ्जितैर्निगमवचसामाह्वानपराणां प्रत्यालापमागतो भगवानिति प्रत्युत्तरं दिशसीवेति गम्यते । पादुकानादे भगवताह्वानपरवेदप्रत्युत्तरत्वमुत्प्रेक्ष्यते ॥

उपास्य नूनं मणिपादुके त्वां रङ्गेशपादाम्बुजराजहंसीम् ।
पत्युः प्रजानामलभन्त पूर्वं मञ्जु स्वनं वाहनराजहंसाः ॥ २६ ॥

उपास्येति । हे मणिपादुके, प्रजानां पत्युर्ब्रह्मणो वाहनभूता राजहंसाः पूर्वं पुरा रङ्गेशस्य पादाम्बुजयो राजहंसीम् । हंसानामम्बुजसाहचर्यादेवमुक्तिः । त्वामुपास्य आराध्य मञ्जुस्वनमलभन्त लब्धवन्तः । नूनमित्युत्प्रेक्षा । पादुकानादस्य राजहंसस्वनव्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

अनादिमायारजनीवशेन प्रस्वापभाजां प्रतिबोधनार्हाम् ।
पश्यामि नित्योदितवासरस्य प्रभातनान्दीमिव पादुके त्वाम् ॥ २७ ॥

अनादीति । हे पादुके, त्वाम् । शब्दायमानामिति लभ्यते । अनादेः पूर्वावधिविधुराया मायायाः प्रकृतेरेव रजन्या निशाया वशेनायत्तत्वेन प्रस्वापभाजामत्यन्ताबोधात्मकसुषुप्तिमतां जनानां प्रतिबोधनार्हामुद्बोधनयोग्यां नित्यं सदा उदितस्य संभवादिपरिणामशून्यस्य वासरस्य दिवसस्यामोक्षकालस्येति यावत् । प्रभातनान्दीमिव प्रातःपठनीयमङ्गलगाथामिव पश्यामि । रूपकसंकिर्णेयमुत्प्रेक्षा ॥

शृणोतु रङ्गाधिपतिः प्रजानामार्तध्वनिं क्वापि समुज्जिहानम् ।
इतीव मत्वा मणिपादुके त्वं मन्दप्रचारैर्मृदुशिञ्जितानि ॥ २८ ॥

शृणोत्विति । हे मणिपादुके, त्वं रङ्गाधिपतिः क्वापि यत्र कुत्रापि समुज्जिहानमुद्गच्छन्तं प्रजानामार्तध्वनिं दीनशब्दं शृणोत्वाकर्णयत्विति मत्वेव ज्ञात्वेव मन्दप्रचारैर्मृदुसंचारैर्मृद्वनुच्चं शिञ्जितं यस्याः सा असि । लीलागमनेषु मन्दः पादुकानादो दीनशब्दश्रवणाप्रतिबन्धह्वानहेतुक इत्युत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥

अन्ते ममार्तिं शमयिष्यतस्त्वामग्रे सरण्या पततो मुरारेः ।
श्रमोपपन्नः शृणुयां भवत्याः शीतानि पादावनि शिञ्जितानि ॥ २९ ॥

अन्त इति । हे पादावनि, अन्ते चरमकाले श्रमेणोपपन्नः श्रान्तोऽहं ममतां प्रसिद्धामार्तिं पीडां शमयिष्यतः सतः । शमयितुमित्यर्थः । आपतत आगच्छतो मुरारेरग्रेसराणि वीचीतरङ्गन्यायेन पुरोगाणि । एतेन भगवतोऽपि त्वच्छिञ्जितानां रक्षा त्वरातिशयोऽस्तीति भावो व्यज्यते । शीतान्याह्लादनानि भवत्याः शिञ्जितानि शृणुयामाकर्णयेयम् । प्रेयोऽलंकारः ॥

स्वादूनि रङ्गेश्वरपादरक्षे श्रोत्रैः पिबन्तस्तव शिञ्जितानि ।
पचन्त्यविद्योपचितानशेषानन्तर्गतानात्मविदः कषायान् ॥ ३० ॥

**स्वादूनीति** । हे रङ्गेश्वरपादरक्षे, स्वादूनि रसावहानि शिञ्जितानि रसायनानीति व्यज्यते । श्रोत्रैः श्रवणैर्जिह्वाभिरिति व्यज्यते । पिबन्तः । श्रवणमेव पानत्वेनाध्यवसीयते । आत्मविदश्चिदचिद्विवेकवन्तः । शरीरस्वभावाभिज्ञा इत्यपि गम्यते । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च ।' इत्यमरः । अन्तर्गतानन्तःकरणाश्रितान्, आस्यान्तर्गतानित्यपि । अविद्यया अज्ञानेन प्रकृत्या चोपचितान् वर्धितानशेषान् सर्वान् कषायान् विषयानुरागान् । 'कषायो रसभेदे स्यादनुरागे विलेपने' इति विश्वः । तुवराख्यरसभेदानित्यपि । पचन्ति शमयन्ति । श्लेषानुप्राणितमेकदेशविवर्तिरूपकमलंकारः ॥

अवैमि रङ्गाधिपतेः सकाशादवेक्षमाणेषु जनेषु रक्षाम् ।
उदारनादां मणिपादुके त्वामोमित्यनुज्ञाक्षरमुद्गिरन्तीम् ॥ ३१ ॥

**अवैमीति** । हे रङ्गेश्वरपादरक्षे, जनेषु । दीनेष्विति गम्यते । रङ्गाधिपतेः सकाशात् रक्षां रक्षणमपेक्षमाणेषु सत्सु । उदारनादां दक्षिणशब्दाम् । अपेक्षितकार्यक्षमनादामिति यावत् । 'दक्षिणे सरलोदारौ' इत्यमरः । ओमित्यनुज्ञाक्षरमभ्युपगमशब्दम् । 'ओमिति ब्रह्मप्रसौति, 'ओमित्यग्निहोत्रमनुजानाति—' इत्यादावनुज्ञार्थतया ओंकारः श्रूयते, 'ओङ्कारः स्यादनुमतौ परमात्मन्युपागमे' इति नानार्थरत्नमालायाम् । उद्गिरन्तीमुच्चारयन्तीमवैमीत्युत्प्रेक्षास्मानिति दीनोक्तौ ओमित्यभ्युपगच्छन्तीति भावः ॥

मधुद्विषः स्वैरविहारहेतून्मञ्जुस्वनाञ्शिक्षयसीव मातः ।
पर्यन्तभाजोर्मणिपादरक्षे पद्माधरण्योर्मणिनूपुराणि ॥ ३२ ॥

**मधुद्विष इति** । हे मातर्मणिपादरक्षे, मधुद्विषः श्रीरङ्गनाथस्य स्वैरविहारहेतुः स्वच्छन्दसंचारकारणं त्वं पर्यन्तभाजोः पार्श्ववर्तिन्योः पद्माधरण्योः श्रीभूम्योः मणिमयानि नूपुराणि मञ्जीरान् मञ्जुस्वनान् मनोज्ञशब्दान् शिक्षयसीव प्राहयसीवेत्युत्प्रेक्षा । तथा श्रीभूमिनूपुररवापेक्षया पादुकानादस्य व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

प्रास्थानिकेषु समयेषु समागतेषु
प्राप्ता पदं परिचितं द्विजपुंगवेन ।
पुष्णासि रङ्गनृपतेर्मणिपादुके त्वं
पुण्याहघोषमिव गर्भमणिप्रणादैः ॥ ३३ ॥

**प्रास्थानिकेष्विति** । हे मणिपादुके, रङ्गनृपतेः प्रास्थानिकेषु यात्रार्हेषु 'तदर्हम्' इति ठञ् । समयेषु समागतेषु सत्सु द्विजपुंगवेन पक्षिराजेन ब्राह्मणोत्तमेन च परिचितमाश्रितं पदं चरणं स्थानं च प्राप्ता त्वं गर्भमणिप्रणादैः पुण्याहघोषं स्वस्तिशब्दं पुष्णासीव पोषय-

सीव । द्विजपुंगवेन परिचितं पदमित्युक्त्या पुरोहितभावः पादुकायां व्यज्यते । श्लेषानुप्राणितोत्प्रेक्षा ॥

आर्तध्वनेरुचितमुत्तरमन्तकाले
कर्णेन मञ्जुनिनदेन करिष्यसीति ।
वासं भजन्ति कृतिनो मणिपादरक्षे
पुण्येषु देवि पुलिनेषु मरुद्वृधायाः ॥ ३४ ॥

**आर्तस्वनैरिति** । हे देवि मणिपादरक्षे, कृतिनः कुशलाः सन्तस्त्वमन्तकाले मृतिसमये आर्तध्वनेर्दीनशब्दस्योचितं योग्यमुत्तरं माभैष्टेति प्रतिवचनं कर्णेषु श्रवणेषु मञ्जुना निनदेन करिष्यसीति पुण्येषु मरुद्वृधायाः कावेर्याः पुलिनेषु सैकतेषु वासं स्थितिं भजन्ति । पादुकानादे मृतिकालवाक्योत्तरत्वमुत्प्रेक्ष्यत इति द्वयोः संकरः ॥

दूत्ये बलेर्विमथने शकटस्य भङ्गे
यात्रोत्सवेषु च विभोः प्रतिपन्नसख्या ।
वीरायितानि विरुदोपहितानि नूनं
मञ्जुस्वनैः प्रथयसे मणिपादुके त्वम् ॥ ३५ ॥

**दूत्य इति** । हे मणिपादुके, विभोः श्रीरङ्गनाथस्य दूत्ये पाण्डवदूतकर्मणि बलेर्वैरोचनेर्विमथने निग्रहे वामनत्रिविक्रमकृत्ये शकटस्यासुरस्य भङ्गे ताडने यात्रासु प्रयाणेषूत्सवेषु च चैत्रोत्सवादिषु च प्रतिपन्नसख्या प्राप्तमैत्रीका । अविनाभूतेति यावत् । त्वं विरुदेषु दयादानविक्रमादिख्यापकपद्येषूपहितानि प्रथितानि वीरायितानि वीरकृत्यानि । दयावीरकृत्यं दूत्ये, शकटासुरभङ्गादौ रणवीरकृत्यम् , उत्सवेषु दानवीरकृत्यमिति विवेकः । 'दानवीरो दयावीरो रणवीरश्च स त्रिधा ।' इत्यभियुक्ताः । वीरशब्दात्क्यजन्तात् भावे क्तः । मञ्जुभिः स्वनैः प्रथयसे प्रख्यापयसि । नूनमित्युत्प्रेक्षा ॥

स्तोतुं प्रवृत्तमपि मां निगमस्तुतां त्वां
व्यासज्यमानकरणं विषयेष्वजस्रम् ।
अन्तर्मणिध्वनिभिरच्युतपादुके त्वं
संबोधयस्यनुकलं सहजानुकम्पा ॥ ३६ ॥

**स्तोतुमिति** । हे अच्युतपादुके, सहजानुकम्पा निसर्गतो दयालुस्त्वं निगमैर्वेदैः स्तुतामपि त्वां स्तोतुं प्रवृत्तमजस्रं सदा विषयेषु शब्दादिषु व्यासज्यमानानि व्यासङ्गवन्ति करणानि श्रोत्रादीनि यस्य तं मामन्तर्मणिजन्यैर्ध्वनिभिरनुकलं प्रतिक्षणं संबोधयसि सावधानयसि । अत्र संबोधनशब्दत्वमुत्प्रेक्ष्यते ॥

देवस्य दानवरिपोर्मणिपादरक्षे
प्रस्थानमङ्गलविधौ प्रतिपन्ननादाम् ।
माभैष्ट माधव इति स्वयमालपन्तीं
जाने जगत्त्रितयरक्षणदीक्षितां त्वाम् ॥ ३७ ॥

**देवस्येति** । हे मणिपादरक्षे, दानवानां रिपोर्देवस्य श्रीरङ्गिणः प्रस्थानरूपे प्रयाणात्मके मङ्गलविधौ शुभकृत्ये प्रतिपन्ननादां प्राप्तस्वनां जगत्त्रितयस्य त्रैलोक्यस्य रक्षणे दीक्षितामङ्गीकृतनियमां हे माधव माभैष्ट भयं त्यजेति स्वयमालपन्तीं वदन्तीं जाने । उत्प्रेक्षालंकारः ॥

स्वच्छन्दविभ्रमगतौ मणिपादुके त्वं
पादारविन्दमधिगम्य परस्य पुंसः ।
जातस्वना प्रतिपदं जपसीव सूक्तं
विद्रावणं किमपि वैरिवरूथिनीनाम् ॥ ३८ ॥

**स्वच्छन्देति** । हे मणिपादुके, त्वं परस्य पुंसः स्वच्छन्दविभ्रमगतौ स्वैरलीलासंचारे पादारविन्दमधिगम्य प्राप्य जातस्वना सती वैरिवरूथिनीनां शत्रुसेनानां विद्रावणं पलायनसाधनं किमपि प्रसिद्धलक्षणं सूक्तं मन्त्रं प्रतिपदं पदे पदे क्षणे क्षणे च जपसीव । पादुकाशब्दश्रवणेन शत्रुसेनापलायनात्तन्नादे सूक्तमन्त्रत्वमुत्प्रेक्ष्यते ॥

रक्षार्थमाश्रितजनस्य समुज्जिहाने
रङ्गेश्वरे शरदि शेषभुजङ्गतल्पात् ।
नादास्तव श्रुतिसुखा मणिपादरक्षे
प्रस्थानशङ्खनिनदात्प्रथमे भवन्ति ॥ ३९ ॥

**रक्षार्थमिति** । हे मणिपादरक्षे, रङ्गेश्वरे क्षीराब्धिशायिनि शरदि ऋतावाश्रितजनस्य प्रपन्नजनस्य रक्षार्थं शेषसंज्ञिकभुजङ्गरूपाच्छयनात् समुज्जिहाने उत्तिष्ठति सति । शरद्यावस्यां क्षीराब्धिशायिन उत्थानं शास्त्रसिद्धम् । श्रुतिसुखाः श्रवणमनोहरास्तव नादाः प्रस्थानार्थाच्छङ्खनिनादात् प्रथमे पुरोभाविनः श्रेष्ठाश्च भवन्ति । 'प्रथमचरम १।१।३३' इत्यादिना जसः शीभावः । पादुकानादे प्रस्थानार्हवाद्यघोषत्वमुत्प्रेक्ष्यते ॥

नित्यं पदाम्बुरुहयोरिह गोपिकां त्वां
गोपीजनप्रियतमो मणिपादरक्षे ।
संपन्नघोषविभवां गतिभिर्निजाभिः
प्रीत्यैव न त्यजति रङ्गसमाश्रितोऽपि ॥ ४० ॥

**नित्यमिति ।** हे मणिपादरक्षे, गोपीजनानां बल्लवीनां प्रियतमो भगवान् इह अनयोः । सप्तमीद्विवचनान्तादिदंशब्दात् 'इदमो हः ५ । ३ । ११' इति हप्रत्ययः । इदम इशादेशश्च । पदाम्बुरुहयोः परिदृश्यमानभगवच्चरणारविन्दयोर्विषय इत्यर्थः । नित्यं सदा गोपिकां रक्षिकामेव बल्लवीं निजाभिरात्मीयाभिर्गतिभिः संचारैरुपायैश्च । 'गतिर्मार्गे दशायां च ज्ञाने यात्राभ्युपाययोः ।' इति विश्वः । संपन्नः संजातो घोषस्य नादस्य आभीरपल्ल्याश्च । 'घोषो ध्वनिर्मेघनादः स एवाभीरपल्लवी ।' इति नानार्थरत्नमाला । विभवो निर्वृतिर्धनं च । 'विभवो निर्वृतौ धने' इति विश्वः । संपत्तिर्यस्यास्तां त्वां रङ्गसमाश्रितोऽपि श्रीरङ्गविमाननिष्ठोऽपि नर्तनस्थानाश्रितोऽपि प्रीत्येव गोपीजनप्रेम्णेव न त्यजति न जहाति । श्लेषानुप्राणितरूपकसंकीर्णेयमुत्प्रेक्षा ॥

प्रायः पदावनि विभोः प्रणतार्तिहन्तुः
प्रस्थानमङ्गलविधौ प्रथमोद्यतानि ।
त्वच्छिञ्जितानि सपदि स्वयमारभन्ते
कालोचितान्कनककाहलशङ्खनादान् ॥ ४१ ॥

**प्राय इति ।** हे पदावनि, प्रणतानामार्तेर्दैन्यस्य हन्तुर्निवर्तकस्य विभोः प्रस्थानमङ्गलविधौ निमित्ते यात्रोचितमङ्गलविधानार्थम् । 'निमित्तात्कर्मयोगे' इति सप्तमी । प्रथमोद्यतानि पूर्वज्ञातानि त्वच्छिञ्जितानि कर्तॄणि कालोचितान् यात्रासमयार्हान् कनकमयानां काहलानां शङ्खानां च नादान् सपदि स्वयं प्रायः हेतुबाहुल्येन आरभन्ते । वीचीतरङ्गन्यायेन पादुकानादजनिते शब्दे मङ्गलार्थकाहलरवत्वमुत्प्रेक्ष्यते ॥

आम्रेडितश्रुतिगणैर्निनदैर्मणीना-
माम्नायवेद्यमनुभावमभङ्गुरं ते ।
उद्गास्यतां नियतमिच्छसि सामगानां
तानप्रदानमिव शौरिपदावनि त्वम् ॥ ४२ ॥

**आम्रेडितेनेति ।** हे शौरिपदावनि, त्वमाम्नायैर्वेदैर्वेद्यं (वेदनीयं) ज्ञेयमभङ्गुरं पूर्णं ते तवानुभावं माहात्म्यमुद्गास्यतामुच्चैर्गातुमुपक्रममाणानां सामगानां छन्दोगानामाम्रेडितः । 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः । श्रुतिगणो वेदसमूहो येषां तैः । वेदसदृशैरिति यावत् । सामगानामध्ययनेन पदवर्णावृत्तिदर्शनाच्च तथोक्तिः । मणीनामन्तर्गतानां निनदैर्गानस्य विवक्षितगानानुगुणस्तोमाक्षरगानस्य प्रदानं वितरणं नियतं व्यावृत्तं यथातथा तत्तद्रीत्यानुगुण्येनेति यावत् । इच्छसीव नियतमित्युक्तार्थस्यैव दार्ढ्यापादकं वा । उत्प्रेक्षा ॥

रथ्यासु रङ्गनृपतेर्मणिपादरक्षे
त्वद्गर्भरत्नजनितो मधुरः प्रणादः ।

संदर्शनोत्सुकधियां पुरसुन्दरीणां
संपद्यते श्रवणमोहनमन्त्रघोषः ॥ ४३ ॥

**रथ्यास्विति** । हे मणिपादरक्षे, त्वद्गर्भरत्नैर्जनितो मधुरः प्रणादः रथ्यासु रङ्गनृपतेः संदर्शने उत्सुका इच्छावती धीर्यासां तासां पुरसुन्दरीणां श्रीरङ्गनगरवनितानां श्रवणानां श्रोत्राणां मोहनः प्रेमावेशजनकः । आकर्षक इति यावत् । मन्त्रघोषः संपद्यते जायते । भगवन्तं द्रष्टुमागता नार्यो मन्त्रवशीकृता इव पादुकानादासक्ताविषयान्तरं परित्यजन्तीति भावः । उत्प्रेक्षालंकारः ॥

आकस्मिकेषु समयेष्वपवार्य भृत्या-
नन्तःपुरं विशति रङ्गपतौ सलीलम् ।
व्यामोहनेन भवती सुदृशामधीते
मञ्जुस्वनेन मदनोपनिषद्रहस्यम् ॥ ४४ ॥

**आकस्मिकेष्विति** । हे पादुके, भवती रङ्गपतावाकस्मिकेषु समयेष्वप्राप्तकालेषु हठादिति यावत् । भृत्यान् परिजनान् परिवार्य निवर्त्य अन्तःपुरं विशति सति व्यामोहनेन प्रेमावेशजनकेन मञ्जुना स्वनेन सुदृशां लक्ष्म्यादीनां मदनोपनिषदः कामशास्त्रस्य रहस्यं गुप्तप्रमेयम् । रतिकर्तव्यत्वमिति यावत् । अधीते उपदिशतीत्यर्थः । पादुकानादश्रवणाद्रत्युत्सुकाः सुदृश इति भावः । अत्र रत्युपदेशत्वमुत्प्रेक्ष्यते ॥

यात्राविहारसमयेषु समुत्थितं ते
रङ्गाधिपस्य चरणावनि मञ्जु नादम् ।
पर्याकुलेन्द्रियमृगग्रहणाय पुंसां
संमोहनं शबरगीतमिव प्रतीमः ॥ ४५ ॥

**यात्रेति** । हे चरणावनि, रङ्गाधिपस्य यात्रारूपस्योत्सवरूपस्य विहारस्य संचारस्य 'यात्रानुयापनोपाये गतौ देवार्चनोत्सवे ।' इति विश्वः । समयेषु समुत्थितं ते तव मञ्जुनादं पुंसां पुरुषाणामिन्द्रियसंबन्धिनां ( ननु ग्रहणकर्तृणां ) पर्याकुलानां संभ्रान्तानामिन्द्रियाणां चक्षुरादीनामेव मृगाणां ग्रहणाय संमोहनमासक्तिजनकं शबरगीतं किरातगीतमिव प्रतीम इत्युत्प्रेक्षा । शबरगानश्रवणान्मृगा इव पादुकानादश्रवणासक्तेषु पुंसां श्रोत्रेष्वितरेन्द्रियाण्यपि स्तब्धानि भवन्तीति भावः ॥

प्रायेण सह्यदुहितुर्नदराजकन्या
जामातुरागमनसूचनमीहमाना ।
मञ्जुप्रणादसुभगैर्मणिपादुके त्वा-
मन्तर्युतामकृत यौतकरत्नखण्डैः ॥ ४६ ॥

**प्रायेणेति** । हे मणिपादुके, नदराजस्य सागरस्य कन्या श्रीः सह्यदुहितुः कावेर्या जामातुः दुहितृपतेः । कावेरीनद्याः सागरपत्नीत्वात् सागरकन्यापतेः श्रीरङ्गनाथस्य कावेरीजामातृत्वं युक्तमिति भावः । आगमनसूचनमागतिज्ञापकमीहमाना इच्छती सती त्वां मञ्जुप्रणादैः सुभगास्त्वैः परस्पराभिघातेन नादसंभवादिति भावः। यौतकैः पित्रादिदत्तस्त्रीधनै रत्नखण्डैर्मणिशकलैरन्तर्गर्भै युतां मिश्रां प्रायेण हेतुबाहुल्येन अकृत कृतवती। लक्ष्मीः रत्नाकरस्य स्वपितुर्गृहादागते रत्नखण्डैः पादुकागर्भे नादार्थं निक्षिप्तैर्मणिभिर्मात्रे कावेर्यै तव जामाता भगवानागत इति सूचयति । पादुकां प्रेरितवतीवेति भावः । पादुकानादे कावेर्यै भगवदागमसूचकत्वमुत्प्रेक्ष्यते । एतच्च कावेरीतीरे भगवदागमनकाल इति मन्तव्यम् ॥

नित्यं विहारसमये निगमानुयातै-
विक्षेपताण्डवितगर्भमणिप्रसूनैः ।
नादैः स्वयं नरकमर्दनपादरक्षे
नादावसाननिलयं वदसीव नाथम् ॥ ४७ ॥

**नित्यमिति** । हे नरकासुरमर्दनस्य पादरक्षे, त्वं विहारसमये लीलासंचारकाले नित्यं सदा निगमैर्वेदैरनुयातैरनुसृतैः । वेदसदृशैरिति यावत् । विक्षेपेण चरणोत्क्षेपणेन ताण्डवितैश्चलितैर्गर्भनिक्षिप्तमणिभिः प्रसूनैरुत्पादितैर्नादैर्नाथं श्रीरङ्गनाथं नादावसाने पादुकाशब्दोपरतिकाले विलयोऽवस्थानं यस्य तमेव । अवस्थिते भगवति पादुकाशब्दनिवृत्तेरिति भावः । नादावसानसमये योगदशायां प्राणवायुशब्दनिवृत्तिकाले निलयः प्रकटतयावस्थानं यस्य तं तथाभूतं स्वयं वदतीव । पादुकाशब्दनिवृत्तिकाले भगवदवस्थानमेव योगशास्त्रसिद्धप्राणनादावसानकालीनावस्थानतया श्लेषेणाध्यवसीयते । निगृहीतेन्द्रियस्य योगिनोऽन्तःश्रूयमाणप्राणशब्दनिवृत्तौ भगवत्स्वरूपप्रकाशो भवतीति तद्विदः । श्लेषानुप्राणितोत्प्रेक्षालंकारः ॥

साधारणेषु युवयोर्मणिपादरक्षे
देवस्य दानवरिपोस्त्रिषु विक्रमेषु ।
अद्यापि शिञ्जितवशादनुवर्तमानं
न्यूनाधिकत्वविषयं कलहं प्रतीमः ॥ ४८ ॥

**साधारणेष्विति** । हे मणिपादरक्षे, संबोधनद्विवचनम् । दानवरिपोर्देवस्य युवयोः साधारणेषु विशेषहेतुभावेन सामान्येषु त्रिषु विक्रमेषु भूमानार्थपदन्यासेषु न्यूनाधिकत्वविषयं मम अधिकम्, तव न्यूनमित्येतद्गोचरं कलहं वाग्युद्धमद्यापि शिञ्जितमिषान्नादव्याजेनानुवर्तमानं संतन्यमानं प्रतीम इत्युत्प्रेक्षा । त्रयाणां विक्रमाणां द्वयोः पादुकयोः समविभागासंयोगान्न्यूनाधिकभावेन जातः कलहो नादव्याजेनाद्याप्यनुवर्तत इत्यपह्नवगर्भोत्प्रेक्षा ॥

प्रायः पदावनि विभोः प्रणयापराधे
मानग्रहं शमयितुं महिषीजनानाम् ।
उच्चारयन्ति निनदैस्तव गर्भरत्ना-
न्युद्धातमक्षरमुपाश्रयभारतीनाम् ॥ ४९ ॥

**प्राय इति ।** हे पदावनि, तव गर्भस्थानि रत्नानि विभोः कर्तुः प्रणयजनितेऽपराधे आगसि सति महिषीजनानां लक्ष्म्यादीनां मानमेव प्रणयकोपमेव ग्रहं पिशाचं शमयितु-मुच्चारयितुं निनदैरुपाश्रयाणां स्वप्रतिपादकत्वेन समीपवर्तिनीनां भारतीनां वेदानामुद्धात-मुपक्रमस्थमक्षरं प्रणवं प्रायः उच्चारयन्ति गृणन्ति । 'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोंकृतं पूर्वं पुरस्ताच्च विशीर्यते[1] ॥' इति स्मृतिरत्र भाव्या । पिशाचनिवर्तक-मान्त्रिको यथा स्वमन्त्रारम्भे प्रणवं वदति तथा रत्नान्यपीति तन्नादप्रणवत्वमुत्प्रेक्ष्यते । उद्धातमक्षरमुपाश्रयभारतीनामिति पर्यायोक्तेस्तदपि संगृह्यते । रूपकं तु संकीर्यते ॥

अन्तश्चरेषु पवनेषु जितेष्वभिज्ञाः
प्रत्यङ्मुखीं परिणमय्य मनःप्रवृत्तिम् ।
आस्वादयन्ति सरसं मणिपादरक्षे
नादावसानसमये भवतीनिनादम् ॥ ५० ॥

**अन्तरिति ।** हे मणिपादरक्षे, अभिज्ञा योगिनः अन्तश्चरेषु शरीरान्तःसंचारिषु पव-नेषु प्राणादिवातेषु जितेषु वशीकृतेषु सत्सु नादावसानसमये प्राणाद्यभिघातजन्य-शब्दोपरतिकाले मनःप्रवृत्तिं चित्तव्यापारं प्रत्यङ्मुखीं प्रतीच्यात्मनि मुखमाभिमुख्यं यस्यास्ताम् । स्वाभिगोचरामिति यावत् । मुखस्यास्वाङ्गत्वात्प्रत्यङ्मुखामिति पाठः समी-चीनः । फलमुखीतिवद्वा निर्वाहः । फलमुखयति कर्मण्यण्, 'टिड्ढाणञ् ४।१।१५' इत्यादिना ङीष् । प्रत्यङ्मुखयति गोचरयतीति प्रत्यङ्मुखीम् । परिणमय्य संपाद्य भवत्या ध्येयपरमात्मचरणसंश्लिष्टाया निनादं सरसं प्रीतियुक्तं यथा तथा आस्वादयन्त्यनुभवन्ति । एतादृशहृदयंगमनादविशिष्टपादुकायुक्तं भगवन्तं चिन्तयन्तीति भावः । प्रेयोऽलंकारः ॥

दाक्षिण्यमत्र नियतं नियता सुधासि-
न्नित्युद्गतो नियतमच्युतपादरक्षे ।
प्रत्येकसंश्रितपदस्तुतये भवत्योः
संघर्षवाद इव मध्यमणिप्रणादः ॥ ५१ ॥

**दाक्षिण्यमिति ।** हे अच्युतपादरक्षे, द्विवचनम् । भवत्योर्युवयोः मध्यनिष्ठानां

---

१. मनुस्मृतौ तु 'विशीर्यति' इति पाठः.

मणीनां प्रणादः प्रत्येकमेकैकधा संश्रितयोः पदयोर्भगवच्चरणयोः स्तुतये उत्कर्षकथनाय । अत्र दक्षिणपदे दाक्षिण्यं दक्षिणत्वं सव्येतरत्वं सारल्यं परच्छन्दानुवर्तित्वं च । 'दक्षिणः सरलावामपरच्छन्दानुवर्तिषु ।' इति विश्वः । नियतमविनाभूतम् । अस्मिन् वामपादे सुधा अमृतं सुखनिधानं सुखास्वाद्यत्वं च नियता ।'डुधाञ् धारणपोषणयोः', 'धेट् पाने' अनयोः 'आतश्चोपसर्गे ३।३।१०६' इति भावे अङ्प्रत्ययः । भगवद्वामपादाङ्गुष्ठविनिःसृतया अमृतधारयेति नित्योक्तिरत्र भाव्या । इति अनेन प्रकारेण नियतं यथा तथा । सदेत्यर्थः । उद्गतो जातः संघर्षवाद इव स्पर्धोक्तिरिव । उत्प्रेक्षालंकारः ॥

संचारकेलिकलहायितगर्भरत्ना
सांसिद्धिकं सकलजन्तुषु सार्वभौमम् ।
रक्षार्थिनां प्रथयसीव पदावनि त्वं
रङ्गेश्वरस्य निरवग्रहमानृशंस्यम् ॥ ५२ ॥

**संचारेति** । हे पदावनि, संचारकेल्या कलहायितानि कृतकलहानि गर्भस्थानि रत्नानि यस्याः सा त्वम् । सांसिद्धिकं नैसर्गिकम् । अध्यात्मादित्वात् ठक् । सार्वभौमं सर्वासु भूमिषु विदितम् । 'तत्र विदित इतिच । ५।१।४३' अत्र सर्वभूमिशब्दादण् । निरवग्रहमप्रतिबन्धं रङ्गेश्वरस्य सकलेषु जन्तुषु आनृशंस्यं कारुण्यं रक्षार्थिनां प्रथयसीव प्रख्यापयसीव । सर्वत्रावैलक्षण्येन दयालुरयं भगवानागच्छतीति संश्रयेतेति रक्षापेक्षिजनान्प्रति वदसीवेत्युत्प्रेक्षा ॥

प्राप्तुं परं पुरिशयं पुरुषं मुनीना-
मभ्यस्यतामनुदिनं प्रणवं त्रिमात्रम् ।
श्रीरङ्गराजचरणावनि शिञ्जितं ते
शङ्के समुन्नयनसामविशेषघोषम् ॥ ५३ ॥

**प्राप्तुमिति** । हे श्रीरङ्गराजस्य चरणावनि, ते तव शिञ्जितं परं परिशुद्धात्मस्वरूपादप्युत्कृष्टं पुरिशयं 'पूः प्राणिनः सर्वगुहाशयस्य' इत्यन्तर्यामिणः पुरत्वेन निर्दिष्टेषु प्राणिषु शयमन्तर्यामितया शयानं भगवन्तं पुरुषम् । 'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने ॥' इति निरुपाधिकशब्दवाच्यं वासुदेवं प्राप्तुमधिगन्तुं त्रिमात्रं मात्रात्रययुक्तं प्रणवमोंकारं मन्त्रं दिने दिने अभ्यस्यतां जपतां मुनीनां मननशीलानां योगिनाम् । पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीतेति प्रतिपादितध्यानवतामित्यर्थः । समुन्नयस्य ब्रह्मलोकप्रापकस्य सामविशेषस्य ऋगक्षराभिव्यञ्जकगीतिभेदस्य घोषं ध्वनिं शङ्के । 'स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा निर्मुच्यते एवं हैव स पाप्मना विनिर्मुक्तः स एतस्माज्जीवघनात्परात्पुरिशयं पुरुषमीक्षितः स सामभिरुन्नीयते ब्रह्मलोकम् ॥' इति श्रुतिरत्र भाव्या ॥

नित्यं समाहितधियामुपदर्शयन्ती
नागेशयं किमपि धाम निजोर्ध्वभागे ।
हृत्कर्णिकामनुगता मणिपादुके त्वं
मञ्जुस्वना स्फुरसि वाग्भ्रमरी परेव ॥ ५४ ॥

**नित्यमिति** । हे मणिपादुके, समाहितधियामवहितबुद्धीनां पुरुषाणां हृदो मनसः पद्मस्य कर्णिकां बीजकोषम् । हृदयान्तःप्रदेशमिति यावत् । अनुगता प्राप्ता नागेशयं शेषशायिनम् । भ्रमरीपक्षे मेघे विद्यमानम् । 'नागः पन्नगमातङ्गक्रूराचारिषु तोयदे ।' इति विश्वः । किमप्यणोरणीयांसमनिर्वचनीयं धाम तेजः श्रीरङ्गनाथरूपम्, भ्रमरीपक्षे तु ईषन्नैल्यमिति यावत् । 'गृहे देहे प्रभायां च धाम' इत्यमरः । निजे आत्मीये ऊर्ध्वभागे उपरिदेशे शिरोभागे उपनिषदि उपदर्शयन्ती अनुभावयन्ती मञ्जुस्वना हृद्यनादा त्वं परा उत्कृष्टा वाक् श्रुतिरेव भ्रमरी भृङ्गी सेव स्फुरसि भासि । श्लेषानुप्राणितेयमुत्प्रेक्षा । वागेव भ्रमरीति व्यस्तरूपकम् । संभावनायामिवशब्दः । पादुका स्वोपरिभागे रङ्गनाथं तेजोमयं दर्शयति । श्रुतिस्तु स्वशिरोरूपायामुपनिषदि श्रीरङ्गनाथं 'अथ यदतः परोज्योतिः' इति तेजस्त्वेन प्रतिपादयति । भ्रमरी तु स्वोपरिभागे स्वभ्रमणवेगप्रसूतां नीलकान्तिं दर्शयतीति विवेकः । 'नागेशयं किमपि धाम' इत्यत्र पर्यायतः कथनात्पर्यायोक्त्यलंकारोऽप्यत्र संकीर्यते ॥

मानेषु दानवरिपोर्मणिपादरक्षे
त्वामाश्रितेषु निगमेष्ववधीरितेषु ।
मञ्जुस्वनैर्वदसि मैवमितीव मात-
र्वेलां लिलङ्घयिषतो मनुजान्निरोद्धुम् ॥ ५५ ॥

**मानेष्विति** । हे मातः अम्ब, दानवरिपोः श्रीरङ्गिणो मणिपादरक्षे त्वामाश्रितेषु त्वत्तात्पर्यकेषु निगमेष्वेव मानेषु प्रमाणेषु अवधीरितेष्ववज्ञातेषु सत्सु वेलां मर्यादां लिलङ्घयिषतो लङ्घितुमतिक्रमितुमिच्छतो मनुजान्मनुष्यान्निरोद्धुं वारयितुं मञ्जुस्वनैर्मैवमित्थं मास्त्वित्यनेन प्रकारेण वदसीवेत्युत्प्रेक्षा ॥

क्रन्दत्सु कातरतया करणव्यपाये
रङ्गोपशल्यशयितेषु जनेष्वलक्ष्यम् ।
आसीदसि त्वरितमस्खलितानुकम्पा
मातेव मञ्जुनिददा मणिपादुके त्वम् ॥ ५६ ॥

**क्रन्दत्स्विति** । हे मणिपादुके, त्वं रङ्गोपशल्येषु रङ्गविमानविशेषितनगरसीमान्तेषु । 'सीमान्त उपशल्यं स्यात्' इत्यमरः । शयितेषु संविष्टेषु जनेषु प्राणिषु करणानामिन्द्रि-

याणां व्यपाये निर्गमकाले चरमसमये कातरतया भीरुतया अलक्ष्यं निर्विषयं यथा तथा । कंचन रक्षितारमनुद्दिश्येत्यर्थः । क्रन्दत्सु अस्खलिता अविच्छिन्ना अनुकम्पा दया यस्याः सा मञ्जुस्वना आर्तशब्दनिवारकहृद्यरवा भवती मातेव जननीव त्वरितं शीघ्रमासीदसि आगच्छसि । इयमुत्प्रेक्षा । संभावनायामिवशब्दः ॥

भास्वत्सुवर्णवपुषा मणिपादरक्षे
पद्मासहायपदपद्मविभूषणानाम् ।
मञ्जीरशिञ्जितविकल्पितमञ्जुनादा
मञ्जूषिकेव भवती निगमान्तवाचाम् ॥ ५७ ॥

**भास्वदिति ।** हे मणिपादरक्षे, मञ्जीरस्य नूपुरस्य शिञ्जितेन शब्देन विकल्पितः पाक्षिकः कृतः । सदृश इति यावत् । मञ्जुर्नादो यस्याः सा भवती भास्वन्ति प्रभावन्ति दीप्यमानानि च सुवर्णानि हेमानि शुभाक्षराणीव वपूंषि शरीराणि येषां कनकमणीनाम् । अक्षरात्मनां चेत्यर्थः । पद्मासहायस्य श्रीसखस्य पदपद्मयोर्विभूषणानामलंकाराणाम् । अतिशयप्रतिपादकानामिति यावत् । निगमान्तवाचामुपनिषद्वचसां मञ्जूषिकेव पेटिकेव । प्रमेयभूतभगवच्चरणरक्षणात् तादृशसंनिवेशवत्त्वाच्चेति भावः । उत्प्रेक्षा ॥

रङ्गेशपादकमला त्वदधीनवृत्ते-
रन्येषु केषुचिदलक्ष्यमनन्यवेद्यम् ।
आम्नायगूढमबहिर्मणिभिः क्वणद्भि-
र्नेदीयसां प्रथयसीव निजानुभावम् ॥ ५८ ॥

**रङ्गेशेति ।** हे पादुके, त्वमित्यध्याहार्यम् । त्वदधीनवृत्तेस्त्वदायत्तस्थिते रङ्गेशस्य पादकमलादन्येष्वितरेषु केषुचित्पुरुषेषु अलक्ष्यमदृश्यमनन्यवेद्यमात्मनैव ज्ञेयम् । आम्नायेषु वेदेषु गूढं गुप्तं निजमात्मीयमनुभावं प्रभावं नेदीयसामतिनिकटवर्तिनां सेवकानां क्वणद्भिः शब्दायमानैरबहिर्मणिभिरन्तस्थितरत्नैः प्रथयसीव प्रख्यापयसीव । मदाश्रितानां कदाचिदपि न च्युतिरित्यादिक्रमेण वदसीव ॥

कालोपपन्नकरणात्ययनिर्विचेष्टे
जातश्रमे मयि जनार्दनपादरक्षे ।
आश्वासनाय पुरतः प्रसरन्तु मात-
र्वार्ताहरास्तव रवाः शमितार्तयो मे ॥ ५९ ॥

**कालेति ।** हे मातर्जनार्दनस्य पादरक्षे, तव रवा एव वार्ताहरा दूताः काले मरणसमये उपपन्नेन जातेन करणानामिन्द्रियाणामत्ययेन विगमेन निर्विचेष्टे निर्व्यापारे मयि ज्ञातश्रमे उत्पन्नश्रमे सति शमिता निवारिता आर्तयः पीडा यैस्ते सन्तः । मे मम आश्वा-

सनाय धैर्यसंपादनाय पुरतोऽग्रे प्रसरन्तु प्रवर्तन्ताम् । रवाणां दूतत्वेन परिणतानामेवाश्वासनहेतुत्वात्परिणामालंकारः । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।' इति लक्षणात् ॥

संरक्षणाय समये जगतां त्रयाणां
यात्रासु रङ्गनृपतेरुपतस्थुषीषु ।
संपत्स्यते श्रुतिसुखैर्मणिपादरक्षे
मङ्गल्यसूक्तिरनघा तव मञ्जुनादैः ॥ ६० ॥

**संरक्षणायेति** । हे मणिपादरक्षे, रङ्गनृपतेः श्रीरङ्गनाथस्यैव राज्ञस्त्रयाणां जगतां संरक्षणायावनार्थं यात्रासु प्रयाणेषु उपतस्थुषीषु आगतासु सतीषु श्रुतिसुखैः श्रोत्रानन्दैस्तव मञ्जुनादैरनघा मनोज्ञा मङ्गल्यसूक्तिः शुभार्थाशीर्वादः संपत्स्यते संभविष्यति । इतः परमप्रीतिभावः । मङ्गल्यमित्यत्र 'तत्र साधुः ४।४।९८' इति साध्वर्थे यत्प्रत्ययः । मङ्गल्यसूक्तितया परिणतानामेव नादानां यात्रोपयोगित्वात्पूर्ववत्परिणामः ॥

गर्भोपलैर्गमनवेगवशाद्विलोलै-
र्वाचालिता मधुभिदो मणिपादरक्षे ।
प्रस्तौषि भावितधियां पथि देवयाने
प्रस्थानमङ्गलमृदङ्गविशेषघोषम् ॥ ६१ ॥

**गर्भेति** । हे मणिपादुके, त्वं गमनवेगवशाद्विलोलैरन्तस्थितरत्नैः । 'उपलः प्रस्तरे रत्ने' इति विश्वः । वाचालिता वाचालीकृता । सनादीकृतेति यावत् । वाचा लातीति वाचाला । 'आतोऽनुपसर्गे कः ३।२।३' ततो णिचि कर्मणि क्तः । सा सती देवयाने पथि अर्चिरादिमार्गे भावितधियां प्रसक्तबुद्धीनां मुमुक्षूणां प्रस्थाने प्रयाणे मङ्गलार्थस्य मृदङ्गस्य वाद्यविशेषस्य । मृदङ्गा वाद्यविशेषाः । 'मृदङ्गा मुरजाभेदाः' इत्यमरः । तद्विशेषस्य तेषु च विलक्षणस्य घोषं ध्वनिं प्रस्तौषि उपक्रमसे । पूर्ववत्परिणामः ॥

पर्यङ्कमाश्रितवतो मणिपादुके त्वं
पादं विहाय परिकल्पितमौनमुद्रा ।
श्रोतुं प्रभोरवसरं दिशसीव मात-
र्नाभीसरोजशयितार्भकसामगीतिम् ॥ ६२ ॥

**पर्यङ्कमिति** । हे मणिपादुके, त्वं पर्यङ्कं मञ्चमाश्रितवतोऽधिगतस्य प्रभोः श्रीरङ्गनाथस्य पादं चरणं विहाय विसृज्य परिकल्पिता मौनमुद्रा निःशब्दमर्यादा यया सा । असंचारकाले नादाभावाद्भिति भावः । नाभीसरोजे नाभिपद्मे शयितस्यार्भकस्य बालस्य । ब्रह्मण इत्यर्थः । सामगीतिं सामगानं श्रोतुमाकर्णयितुमवसरं कालं दिशसीव ददासीव । मौनमेव बालगानश्रवणावसरदानत्वेनोत्प्रेक्ष्यते । नादाभावे प्रतियोगित्वेन नादस्य संबन्धान्नादपह्नुतौ संगतिः । एवमन्यत्रापि द्रष्टव्यम् ॥

भोगाय देवि भवती मणिपादरक्षे
पद्मासहायमधिरोप्य भुजङ्गतल्पे ।
विश्वस्य भुक्तिमधिकृत्य विहारहीना
वाचंयमा किमपि चिन्तयतीव कार्यम् ॥ ६३ ॥

**भोगायेति** । हे देवि मणिपादरक्षे, विहारहीना लीलासंचारहीना भवती पद्मासहायं श्रीविशिष्टं श्रीरङ्गनाथं भुजङ्गतल्पे शेषशय्यायां भोगाय सुखानुभवाय अधिरोप्य वाचंयमा अनुच्चारणव्रतवती । अशब्दायमाना सतीत्यर्थः । 'वाचि यमो व्रते' इति यमेः खच् । 'वाचंयमपुरंदरौ च' इत्यमन्तो निपातः । विश्वस्य जगतो गुप्तिं रक्षामधिकृत्य प्रस्तुत्य किमपि किंचित्कार्यं विधेयं चिन्तयतीव ध्यायतीव आलोचयतीव । पूर्ववदुत्प्रेक्षा ॥

नित्यप्रबोधसुभगे पुरुषे परस्मि-
न्निद्रामुपेयुषि तदेकविहारशीला ।
मञ्जुस्वनेषु विरतेष्वपि विश्वमेत-
न्मौनेन हन्त भवती मुखरीकरोति ॥ ६४ ॥

**नित्येति** । हे मणिपादुके, मञ्जुस्वनं विजहती परित्यजन्ती चरणयोरन्तिके वर्तमाना परं विधृता नित्येन सदातनेन प्रबोधेन ज्ञानेन निद्राभावेन च सुभगे मनोज्ञे परस्मिन्पुरुषे निद्रां स्वापमुपेयुषि । शयाने सतीत्यर्थः । तेन एकोऽद्वितीयः विहारः शीलं स्वभावो यस्याः सा सती । तदपृथक्सिद्धगतियुक्तेत्यर्थः । संवेशं स्वापं शयनम् । 'स्वापः स्वप्नः संवेश इत्यपि' इत्यमरः । इच्छसि । ( परम् ) । उत्प्रेक्षालंकारः । नित्यप्रबोधवतो निद्रावत्त्वोक्त्या विरोधाभासश्च । तथा च तयोः संसृष्टिः । पादुकायास्तदेकविहारशीलेति विशेषणमहिम्ना विशेषणान्तरोपस्कारेण च पत्नीत्वं व्यज्यत इति समासोक्तिरपीत्यलं बहुना ॥

लास्यं विहाय किमपि स्थितमाश्रयन्ती
रङ्गेश्वरेण सहिता मणिमण्डपेषु ।
मञ्जुस्वनेषु विरतेष्वपि विश्वमेत-
न्मौनेन हन्त भवती मुखरीकरोति ॥ ६५ ॥

**लास्यमिति** । हे मणिपादुके, इत्युपस्कार्यम् । मणिमयेषु मण्डपेषु रङ्गेश्वरेण श्रीरङ्गनाथेन सूत्रधारेण च सहिता भवती लास्यं नृत्तम् । संचारमेव लास्यत्वेनाध्यवसीयते । विहाय त्यक्त्वा किमप्यनिर्वचनीयगुणं स्थितमवस्थानं नृत्तावसानसमयजमाश्रयन्ती सती मञ्जुस्वनेषु विरतेषु उपरतेषु सत्स्वपि एतत्पुरोवर्ति विश्वं समस्तजनं मौनेन त्वदीयेन मननेन । नैःशब्द्येनेत्यर्थः । मुखरीकरोति श्लाघाशब्देन वाचालीकरोति । यद्यपि 'दुर्मुखे मुखराबद्धमुखौ' इति विशेष्यनिघ्ने; तथापि 'मुखरः शब्दवत्यपि' इति रेफान्तो दृश्यते । अत एव

'मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ।' इति गोदास्तुतावाचार्यैः प्रयुक्तम् । त्वन्नादनिवृत्तिस्त्वल्लास्यप्रेक्षकजनश्लाघाघोषहेतुरभूदित्यर्थः । हन्त हर्षे । शब्दे विरतेऽपि शब्दोत्पत्तिरिति विरोधः । जनश्लाघनेन परिहार इति विरोधाभासालंकारः । शब्दवृत्तिमहिम्ना नटीवृत्तान्तप्रतीतेः समासोक्तिरपि । लास्यमिति निगरणाद्रूपकातिशयोक्तिरपीत्यलम् ॥

विस्मापितेव भवती मणिपादरक्षे
वैरोचनेर्वितरणेन तथाविधेन ।
एतावतालमिति देवि गृहीतपादा
नाथं त्रिविक्रममवारयतेव पादैः ॥ ६६ ॥

**विस्मापितेति** । हे देवि मणिपादरक्षे, भवती तथाविधेन त्रैलोक्यदानरूपेण शुक्रादिनिवारणेऽपि प्रवृत्तेन वैरोचनेर्विरोचनपुत्रस्य बलेर्वितरणेन दानेन (प्रयोजककर्त्रा) विस्मापितेव प्रापितविस्मयेव । 'नित्यं स्मयतेः' इति णिच्यात्वम् । आदन्तत्वात्पुगागमः । त्रिविक्रमं त्रयो विक्रमाः पादविक्षेपा यस्य तम् । नाथं श्रीरङ्गनाथं गृहीतपादा उपात्तचरणा सती । चरणग्रहणपूर्वमिति भावः । एतावतेत्यनेनाक्रमणकृत्येन अलम् । नत्वितः परमपि पीडनीयो बलिरिति भावः । इत्यनेन प्रकारेण नादैरवारयतेव निवारयतीव । उत्प्रेक्षा ॥

सामानि रङ्गनृपतिः सरसं च गीतं
लीलागतेषु विनिवारयति स्वतन्त्रः ।
श्रोतुं तव श्रुतिसुखानि विशेषवेदी
मञ्जूनि काञ्चनपदावनि शिञ्जितानि ॥ ६७ ॥

**सामानीति** । हे काञ्चनपदावनि, स्वतन्त्रोऽनन्याधीनो विशेषवेदी तारतम्याभिज्ञो रङ्गनृपतिर्लीलागतेषु विलाससंचारेषु एकान्तसेवाकालेषु श्रुतिसुखानि श्रवणानन्दकराणि तव शिञ्जितानि श्रोतुं सामानि ऋगारूढगीतिः सरसं हृद्यं गीतं गानं च विनिवारयति । एकान्तसेवाकालेषु वैदिकलौकिकयोर्गानयोर्निवारणमत्यर्थमधुरपादुकाशिञ्जितश्रवणार्थमित्युत्प्रेक्ष्यते । फलोत्प्रेक्षालंकारः । विशेषवेदीत्यस्य विशेषणस्य साभिप्रायत्वात्परिकरालंकारश्च ॥

तत्तादृशीं प्रथयता रुचिरां स्वरेखां
वर्णाधिकेन मधुसूदनपादरक्षे ।
पश्यन्ति चित्तनिकषे विनिवेश्य सन्तो
मञ्जुस्वनेन तव नैगमिकं सुवर्णम् ॥ ६८ ॥

**तत्तादृशीमिति** । हे मधुसूदनस्य पादरक्षे, सन्तो योगिनो नैगमिकं निगमस्य वे-

दस्य नगरस्य चार्हम् । निगममर्हतीत्यर्थे 'तदर्हति ५।१।६३' इत्यार्हीयष्ठक् । सुवर्णम् 'आप्रणखात्सुवर्ण एव सः' इति हेमरूपतया कमनीयवर्णवत्त्वेन च श्रुतिसिद्धं भगवन्तं कनकं च चित्ते हृदये एव निकषे कषणोपले विनिवेश्य निधाय निघृष्य च तत्तादृशीमनिर्वचनीयस्वरूपप्रकारां रुचिरां हृद्यां दीप्तां च स्वरेखां निजावलिम् । ध्वनिपरम्परामित्यर्थः । 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी रेखास्तु राजयः ।' इत्यमरः । अन्यत्र स्वकीयां निकषोपलनिघर्षणजनितां लेखां च प्रथयता प्रख्यापयता वर्णाधिकेन अक्षरात्मकशब्दादप्यधिकेन, अन्यत्र अत्यन्तभास्वरस्वरूपवता तव मञ्जुना स्वनेन सह । सुवर्णेनेति गम्यते । पश्यन्ति तारतम्यं विवेचयन्तीत्यर्थः । 'सहयुक्तेऽप्रधाने २।३।१९' इति सहशब्दाप्रयोगेऽपि तृतीया । श्लेषानुप्राणितमेकदेशविवर्तिरूपकमलंकारः । उत्तमानुत्तमस्वर्णं वणिजो यथा निकषोपले निघृष्य पश्यन्ति तथेति भावः ॥

मुग्धस्य हन्त भवतीं स्तुवतो ममैता-
न्याकर्ण्य नूनमयथायथजल्पितानि ।
इत्थं वद त्वमिति शिक्षयितुं प्रणादा-
न्मञ्जूनुदीरयसि माधवपादुके त्वम् ॥ ६९ ॥

**मुग्धस्येति** । हे माधवस्य पादुके, त्वं भवतीं त्वां मोहात्त्वन्माहात्म्यापरिज्ञानेन स्तुवतः प्रशंसतो ममैतानि श्रूयमाणानि अयथायथान्यसंगतानि । 'यथास्वे यथायथम् ८ । १।१४' इति स्वनति ग्रामे(?)निपातः । ततो नञ्समासः । जल्पितानि निन्द्यवचनानि आकर्ण्य श्रुत्वा त्वमित्थं मदीयशिञ्जितवद्वद भणेति मां शिक्षयितुमभ्यासयितुं मञ्जून्प्रणादानुदीरयसि वदसि । उत्पादयसीत्यर्थः । हन्त हर्षे । नूनमित्युत्प्रेक्षा ॥

आदौ सहस्रमिति यत्सहसा मयोक्तं
तुष्टूषता निरवधिं महिमार्णवं ते ।
आम्रेडयस्यथ किमेतदमृष्यमाणा
मञ्जुस्वनेन मधुजिन्मणिपादरक्षे ॥ ७० ॥

**आदाविति** । हे मधुजितो मणिपादरक्षे, आदौ पादुकास्तुत्यभ्यनुज्ञाकाले निरवधिं परिच्छेदरहितं ते तव महिमानं माहात्म्यमेवार्णवं समुद्रं तुष्टूषता स्तोतुमिच्छता मया सहस्रमिति संख्यानमुक्तम्; एतत्तत्संख्यानममृष्यमाणा असहमाना सती । अथानन्तरम् । प्रतिज्ञानन्तरमित्यर्थः । मञ्जुना स्वनेनाम्रेडयसि पुनः पुनर्वदसि किम् । सहस्रं सहस्रमिति काव्यस्यानवधित्वसूचनया परिहससीत्यर्थः । पादुकानादे क्रियासमभिहारेण परिहासोक्तित्वमुत्प्रेक्ष्यते ॥

परिमितपरिबर्हे पादुके संचरिष्णौ
त्वयि विनिहितपादे लीलया रङ्गनाथे ।

नियमयति विपञ्चीं नित्यमेकान्तसेवी
निशमयितुमुदारान्नारदस्ते निनादान् ॥ ७१ ॥

**परिमितेति** । हे पादुके, नित्यं सदा एकान्तसेवी रहःसेवनशीलो नारदस्त्वयि विनिहितपादे रङ्गनाथे परिमितपरिवर्हं स्वल्पपरिच्छदं यथा तथा लीलया संचरिष्णौ संचारशीले सति उदारान्महतः । गुणोत्कृष्टानित्यर्थः । 'उदारो दातृमहतोः' इत्यमरः । ते तव निनादान्निशमयितुं श्रोतुं विपञ्चीं वीणां नियमयति । निजवीणां न वादयतीत्यर्थः । तथा च नारदवीणानादादपि पादुकानादो हृद्यतर इति भावः । फलोत्प्रेक्षा ॥

विहरति विशिखायां रङ्गनाथे सलीलं
गमनवशविलोलैर्गर्भरत्नैः क्वणन्त्याः ।
मणिवलयनिनादैर्मञ्जुलैस्ते दिशन्ति
प्रतिवचननिनादं पादुके पौरनार्यः ॥ ७२ ॥

**विहरतीति** । हे पादुके, पौरनार्यो रङ्गनाथे विशिखायां श्रीरङ्गनगरवीथिकायां सलीलं यथा तथा विहरति सति गमनवशेन विलोलैः संचलैर्गर्भरत्नैरन्तर्गतमणिभिः क्वणन्त्याः शब्दायमानायास्ते तव मञ्जुलैर्मनोज्ञैर्मणिमयानां वलयानां कटकानां गतिवशेन शब्दायमानानां निनादैः प्रतिवचनं प्रत्युत्तरं दिशन्ति ददति । पादुकानादप्रत्युत्तरत्वं पौरनारीवलयनादेषूत्प्रेक्ष्यते । वाचकाभावाद्गम्योत्प्रेक्षा ॥

अनुकृतसवनीयस्तोत्रशस्त्रां निनादै-
रनुगतनिगमां त्वामास्थितो रङ्गनाथः ।
अनितरविबुधार्हं सव्यमास्वादयिष्य-
न्दिशति चरणरक्षे यज्ञवाटं द्विजानाम् ॥ ७३ ॥

**अनुकृतेति** । हे चरणरक्षे, निनादैरनुकृतानि सवनीयानि प्रातःसवनादिसवनत्रयाङ्गतयानुष्ठेयानि । 'तस्मै हितम् ।५।१।५' इति प्राग्घितीयश्छः । स्तोत्राणि प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानानि उद्गातृगणसाध्यानि, शस्त्राणि अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानानि श्रोतृगणकार्याणि यया ताम्, अनुगता निगमा यस्यास्ताम्, त्वामास्थितो रङ्गनाथः इतरेषां विबुधानां देवानामर्हं योग्यं न भवति यत्तद् हव्यं हविः पुरोडाशादि । भगवत एवाशेषदेवतान्तरात्मतया सर्वहविःशेषित्वादिति भावः । आस्वादयिष्यन् सन् द्विजानां यज्ञवाटं यागशालां विशति । उदात्तमलंकारः । स्तोत्रशस्त्रब्राह्मणभागवेद्यो भगवांस्तत्सदर्शीं त्वामारुह्यागच्छतीत्युक्त्योपमालंकारसंकीर्णः । तत्र वेदभागवेद्यत्ववत्पादुकारोहोऽपि हविर्भोगित्वहेतुरिति साधारणधर्मः ॥

चरणकमलमेतद्रङ्गनाथस्य नित्यं
शरणमिति जनानां दर्शयन्ती यथावत् ।

प्रतिपदमपि हृद्यं पादुके स्वादुभावा-
दनुवदति परं ते नादमाम्नायपङ्क्तिः ॥ ७४ ॥

**चरणेति** । हे पादुके, आम्नायानां वेदानां पङ्क्तिरावली रङ्गनाथस्यैतत्परिदृश्यमानं चरणकमलं जनानां प्राणिनां नित्यं सदा शरणं रक्षितृ इति यथावत् यथार्हम् । 'तदर्हम् ।५।१।११७' इत्यर्हार्थे वतिः । दर्शयन्ती सती प्रतिपदं पदेपदेऽपि स्वादुभावात् दृश्यत्वात् हृद्यं ते तव नादमनुवदति परमनुवदत्येव । पादुकानादो यथा पुरोवर्ति भगवच्चरणं शरणमिति वदति तथा वक्तृत्वमुत्प्रेक्षयाध्यवस्य तथा श्रुतिरपीत्युपमीयते । अतः कविप्रौढोक्तिसिद्धेयमुपमा । यद्वा पादुकानादेन प्रथमावगते भगवच्चरणस्य शरणत्वे श्रुतेरनन्तरप्रवृत्तिमभिप्रेत्यानुवादत्वमुत्प्रेक्ष्यते । तदा परमित्येतत् ध्रुवादिशब्दवदनुगुणं भवति ॥

रहितभुजगतल्पे त्वत्सनाथे प्रजानां
प्रतिभयशमनाय प्रस्थिते रङ्गनाथे ।
प्रथममुदयमानः पादुके तूर्यघोषा-
त्प्रतिफलति निनादः पाञ्चजन्ये त्वदीयः ॥ ७५ ॥

**रहितेति** । हे पादुके, रहितं त्यक्तं भुजगतल्पं शेषशय्या येन तस्मिन् । त्वत्सनाथे त्वया सहिते रङ्गनाथे जनानां प्रतिभयानां भयहेतूनामसुरादीनाम् । 'भयंकरं प्रतिभयम्' इत्यमरः । शमनाय विनाशनाय प्रस्थिते सति प्रयाणवति सति तूर्यघोषात् परिजनकर्तृकात् प्रथमं पुरा उदयमान उद्भवन् त्वदीयो निनादः पाञ्चजन्ये भगवच्छङ्खे प्रतिफलति प्रतिध्वनिं जनयति । माङ्गलिकशब्दघोषस्य पादुकानादप्रतिफलनेनैव कथनात्समाधिरलंकारः । 'समाधिः कार्यसौकर्यं करणान्तरसंनिधेः ।' इति लक्षणम् ॥

बकुलधरतनुस्त्वं संहितां यामपश्यः
श्रुतिपरिषदि तस्याः सौरभं योजयन्ति ।
हरिचरणसरोजामोदसंमोदितायाः
प्रतिपदरमणीयाः पादुके ते निनादाः ॥ ७६ ॥

**बकुलेति** । हे पादुके, हरेश्चरणसरोजयोरामोदेन सौरभेण संमोदितायाः संतोषितायास्ते प्रतिपदं पदे पदे प्रतिपदेन व्याख्येयपर्यायपदेन रमणीया निनादाः । बकुलपुष्पाभरणा तनुः शरीरं यस्याः सा शठकोपत्वेनावतीर्णा त्वम् । बकुलेति, हरिचरणेति विशेषणद्वयं मूलतद्विवरणावस्थयोर्मानससमुल्लासार्थम् । यां द्रमिडोपनिषदात्मिकां संहितां संदर्भमपश्यः प्रेक्षितवती । तस्या द्रमिडोपनिषदः सौरभं परिमलम् । 'इगन्ताच्च लघुपूर्वात् ।५।१।१३१' इति भावे ष्यङपवादोऽण् । श्रुतिपरिषदि संस्कृतवेदसमूहे योजयन्ति संघटयन्ति । यथा भगवच्चरणारविन्दानुभवपरद्विजा द्वावपि संस्कृतद्रविडवेदावाम्रेडयन्ति तथा पादुकापि स्वयं व्याख्यात्री सती नादेन संस्कृतद्रमिडवेदौ संकलय्य पठित्वा द्रमिडो-

पनिषत्सौरभ्यं भगवत्पादप्रतिपादकत्वं भोग्यत्वापरपर्यायो वा। संस्कृतवेदेऽपि स्वोक्तद्रमिडोपनिषत्प्रमेयसंवादेन निदर्शयतीति निर्गमः । उत्प्रेक्षालंकारो वाचकाभावाद्गम्यः । यद्वा संहितादृष्ट्या पादुकायां संहितासमानाधिकरणानां नादानां तत्सामानाधिकरण्यायत्ततत्सौरभ्यवतां वेदेषु प्रतिपाद्यतालक्षणसंबन्धेनावस्थितानां द्रमिडोपनिषत्सौरभासङ्गकत्वमुत्प्रेक्ष्यते । द्रमिडोपनिषत्प्रतिपाद्यपादुकाप्रतिपादकतया संस्कृतवेदस्य भोग्यत्वमिति भावः ॥

दनुतनयनिहन्तुर्जैत्रयात्रानुकूले
शरदुपगमकाले सह्यजामापतन्ती ।
श्रुतिमधुरमुदारं शिक्षितुं ते निनादं
परिहृतनिजवासाः पादुके राजहंसाः ॥ ७७ ॥

**दनुतनयेति** । हे पादुके, राजहंसाः 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।' इत्यमरः । दनुतनयानां दानवानां निहन्तुः श्रीरङ्गनाथस्य जैत्रयात्राया जयशीलयात्राया अनुकूले योग्ये शरदः ऋतुभेदस्योपगमकाले आगमनसमये श्रुतीनां श्रोत्राणां मधुरं प्रियमुदारमुत्कृष्टगुणकं ते तव निनादं शिक्षितुमभ्यसितुं परिहृता निजवासा मानससरःप्रभृतयो यैस्ते सन्तः सह्यजां कावेरीमापतन्ति । शरदागमनकाले कावेर्यां हंसागमनं पादुकानादाभ्यासार्थमित्युत्प्रेक्ष्यते । तेन हंसरवापेक्षया पादुकानादस्योत्कर्षरूपो व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

विहरणसमयेषु प्रत्यहं रङ्गभर्तु-
श्चरणनखमयूखैः सोत्तरीया विशुद्धैः ।
परिणमयसि नादं पादुके गर्भरत्नै-
र्दमयितुमिव शिष्यान्दीर्घिकाराजहंसान् ॥ ७८ ॥

**विहरणेति** । हे पादुके, त्वं रङ्गभर्तुः प्रत्यहमहरहः विहरणसमयेषु लीलासंचारकालेषु विशुद्धैश्चरणयोर्नखानां मयूखैः किरणैः सोत्तरीया उपरिपरिधानांशुकविशिष्टा सती शिष्यान् शिक्षणीयान् दीर्घिकासु श्रीरङ्गनगरवापीषु स्थितान् राजहंसान् दमयितुं शिक्षयितुमिव गर्भरत्नैर्नादं परिणमयसि उत्पादयसि । यथोपाध्यायः आचारप्राप्तमुत्तरीयं दधानः शिष्यान् शिक्षयितुं खण्डिकां वक्ति तथा पादुकापि हंसान् शिक्षयितुं नादमुत्पादयतीत्यर्थः । फलोत्प्रेक्षालंकारः पूर्ववत् ॥

परिषदि विरतायां पादुके रङ्गभर्तुः
परिजनमपवार्य प्रस्थितस्यावरोधात् ।
मणिनिकरसमुद्यन्मञ्जुनादापदेशा-
दभिलपसि यथार्हं नूनमालोकशब्दम् ॥ ७९ ॥

**परिषदीति** । हे पादुके, त्वं परिषदि गोष्ठ्यां विरतायामुपरतायां सत्यां परिजनं परिचारकजनमपवार्य बहिर्निषिध्यावरोधानन्तःपुराणि प्रस्थितस्य प्रयातुमुद्यतस्य रङ्गभर्तुर्मणिनिकरेणान्तः स्थितेन समुद्यतां मञ्जुनादानामपदेशाद्व्याजात् यथार्हं प्रभोः श्रीरङ्गनाथस्य योग्यमालोकशब्दमभिलपसि नूनम् । कैतवापह्नुतिसंकीर्णेयमुत्प्रेक्षा ॥

गुरुजननियतं तद्गोपिकानां सहस्रं
दिनकरतनयायाः सैकते दिव्यगोपः ।
वशमनयदयत्नाद्वंशनादानुयातै-
स्तव खलु पदरक्षे तादृशैर्मञ्जुनादैः ॥ ८० ॥

**गुरुजनेति** । हे पदरक्षे, दिव्यगोपः श्रीकृष्णो गुरुजनैः पितृश्वशुरादिभिर्नियतं प्रतिरुद्धं तद्गोपिकानां वल्लवीनां सहस्रम् । अनेकसहस्रोपलक्षणमेतत् । दिनकरतनयाया यमुनायाः सैकते पुलिने वंशनादेन वेणुरवेणानुयातैरनुगतैस्तादृशैस्तव मञ्जुनादैरयत्नादनायासेन वशमनयदायत्तमकरोत् । खल्विति प्रसिद्धौ । समाधिरलंकारः ॥

निजपदविनिवेशान्निर्विशेषप्रचारा-
न्परिणमयति भक्तान् रङ्गनाथो यथा माम् ।
इति विहरणकाले मञ्जुशिञ्जाविशेषै-
र्हितमुपदिशसीव प्राणिनां पादुके त्वम् ॥ ८१ ॥

**निजेति** । हे पादुके, त्वं रङ्गनाथो यथा तथा भक्तान् निजपदे स्वीयचरणे, अन्यत्र शुद्धसत्त्वस्थाने विनिवेशान्निधानात् निर्विशेषो वैलक्षण्यरहितः प्रचारः आवरणं गमनं च येषां तान् परिणमयति इत्यनेन प्रकारेण विहरणकाले संचारकाले मञ्जुभिः शिञ्जाविशेषैः प्राणिनां हितमुपदिशसीव । 'संपद्याविर्भावः स्वेनशब्दात् निरञ्जनः परमं साम्यमुपैति जक्षन् क्रीडन् रममाणः कामान्नीकामरूप्यनुसंचरन्' इत्यादिकमत्रानुसंधेयम् । स्वनिष्ठक्रियया सदर्थबोधनान्निदर्शनाभेदानुप्राणितेयमुत्प्रेक्षा । निदर्शनायां च यथा मामित्युपमाकबलनादुपमासंकीर्णा सा ॥

अयमयमिति तैस्तैः कल्पितानध्वभेदा-
न्प्रतिपदमवलोक्य प्राणिनां व्याकुलानाम् ।
चटुलमणिकलापैः शौरिपादावनि त्वं
मुखरयसि विहारैर्मुक्तिघण्टापथाग्र्यम् ॥ ८२ ॥

**अयमयमिति** । हे शौरेः पादावनि, त्वमयमयमित्येष एष इति तैस्तैः शंकरादिभिः कल्पितानन्नुनीतान् अध्वभेदान्मार्गविशेषान् प्रतिपदं पदे पदेऽवलोक्य वीक्ष्य अनिर्धारणेन व्याकुलानां संभ्रान्तमनस्कानां प्राणिनां मुक्तेर्मोक्षस्य घण्टापथाग्र्यं बहुजनप्रणतमा-

र्गविशेषं भगवच्चरणारविन्दरूपं चटुलाश्चञ्चला मणिकलापा रत्नविकारा यैस्तैर्विहारैर्मुखरय-स्युद्घोषयसि। गम्योत्प्रेक्षा। भगवच्चरणारविन्दमेव सर्वेषां मुक्त्युपाय इति वदसीवेत्यर्थः॥

पदकमलमुदारं दर्शयन्ती मुरारेः
कलमधुरनिनादा गर्भरत्नैर्विलोलैः।
विषमविषयतृष्णाव्याकुलानि प्रजाना-
मभिमुखयसि नूनं पादुके मानसानि॥ ८३॥

**पदकमलमिति**। हे पादुके, उदारं महत् सर्वाभीष्टदं वा मुरारेः पदकमलं पादाब्जमेव कमलं जलं हरिणं च। 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगप्रभेदे कमलः कमला श्रीपरस्त्रियोः॥' इति विश्वः। 'स्यात्कुरङ्गेऽपि कमलः' इत्यमरः। तदानीमुदारमपरिक्लिष्टत्वेन महान्तमिति कमलविशेषणम्। दर्शयन्ती पिपासुमृगग्रहणाय जलं प्रदर्शन्तीयम्। व्याकुलमृगग्रहणाय सजातीयो मृगो दर्शनीयस्तद्वदिति भावः। विलोलैर्गर्भरत्नैः कलाः अव्यक्तमधुराः प्रियनिनादा यस्याः सा। अभिमुखीकरणाय। सूचकशब्दस्य प्रयोज्यत्वादिति भावः। कर्णावतंसकरिकलभादिवन्मधुरशब्दसंनिधानेन केवलाव्यक्तपरः कलः। 'ध्वनौ तु मधुरास्फुटे' इत्यमरः। त्वं विषमेषु तारतम्यवत्सु अनन्यगुणेषु निम्नोन्नतेषु च विषयेषु शब्दादिषु देशेषु च तृष्णया स्पृहया, अन्यत्र मृगतृष्णया पिपासुतया च। मृगतृष्णयेत्यत्र नामैकदेशग्रहणम्। व्याकुलानि विह्वलानि। 'विह्वलव्याकुलौ समौ' इत्यमरः। प्रजानां मानसानि मनांसि। मृगानीति गम्यते। अभिमुखयसि स्वाभिमुखीकरोषि नूनम्। श्लेषानुप्राणितैकदेशविवर्तिरूपकसंकीर्णेयमुत्प्रेक्षा॥

मधुरिपुपदरक्षे मन्दबुद्धौ मयि त्वा-
मनवधिमहिमानं त्वत्प्रसादात्स्तुवाने।
मणिनिकरसमुत्थैर्मञ्जुनादैः कवीना-
मुपरमयसि तांस्तान्नूनमुत्सेकवादान्॥ ८४॥

**मध्विति**। हे मधुरिपोः पदरक्षे, त्वं मन्दबुद्धावल्पप्रज्ञे मयि त्वत्प्रसादात् अनवधिर्निष्परिच्छेदो महिमा यस्यास्तां त्वां स्तुवाने वर्णयति सति मणिनिकरेण समुत्थैर्मञ्जुभिर्नादैः कवीनां तांस्तान् मदन्यः कविर्नास्तीत्येवंरूपानुत्सेकवादान् गर्वोक्तिरूपानुपरमयसि। अपुनरुत्पादाय नाशयसीत्यर्थः। नूनमित्युत्प्रेक्षा॥

शरणमुपगते त्वां शार्ङ्गिणः पादरक्षे
सकृदिति विधिसिद्धं त्यक्तुकामेऽपि मोहात्।
प्रचलितमणिजालव्यञ्जितैः शिञ्जितैः स्वै-
रलमलमिति नूनं वारयस्यादरेण॥ ८५॥

**शरणमिति ।** हे शार्ङ्गिणः पादरक्षे, त्वां शरणमुपगते उपायत्वेनाश्रिते पुरुषे सकृदेकदा न तु पुनः पुनः इति विश्वसिद्धं 'सकृदेव प्रपन्नाय' इति विधायकशास्त्रबोधितमपुनरनुष्ठेयत्वं विमोहादज्ञानेन त्यक्तुं कामो यस्य तस्मिन् सति । विद्यात्वेन आप्रयाणादनुवर्तनीयत्वं प्रतीत्य पुनरनुष्ठानेनेति भावः । प्रचलितानां मणीनां जालेन व्यञ्जितैः प्रकाशितैः शिञ्जितैः अलमलमिति (वीप्सायां द्विरुक्तिः ।) आदरेण वारयसि निषेधयसि । पुनः पुनर्वचनमादरातिशयायत्तमिति भावः । नूनमित्युत्प्रेक्षा ॥

विकलकरणवृत्तौ विह्वलाङ्गे विलक्षं
विलपति मयि मोहाद्बिभ्रती शौरिपादम् ।
परिसरमधिगन्तुं पश्य पादावनि त्वं
प्रतिभयमखिलं मे भर्त्सयन्ती निनादैः ॥ ८६ ॥

**विकलेति ।** हे पादावनि, विकलानामुपरतानां करणानां चक्षुरादीन्द्रियाणां वृत्तिर्व्यापारो यस्य तस्मिन् विह्वलाङ्गे भयालसशरीरे मयि मोहादज्ञानात् विलक्षं लक्ष्यशून्यं यथा तथा विलपति परिदेवयति सति नादैरखिलं समस्तं प्रतिभयं भयहेतुं यमदूतादिकं भर्त्सयन्ती भर्त्स्यत इति भर्त्सः । 'तर्ज भर्त्स तर्जने' इति धातोः कृदन्तात्तत्करोतीति ण्यन्ताच्छतरि ङीपि रूपम् । तेना(न)कस्मादात्मनेपदिन इति चोद्यस्य नावकाशः । त्वं शौरेः पादं चरणं शौरिपूज्यपुरुषं च बिभ्रती सती । परिसरं समीपम् । मे इत्यनुषङ्गः । अधिगन्तुं प्राप्तुं पश्य संकल्पय । प्रेयोऽलंकारः ॥

करणविगमकाले कालहुंकारशङ्की
द्रुतपदमुपगच्छन्दत्तहस्तः प्रियाभ्याम् ।
परिणमयतु कर्णे रङ्गनाथः स्वयं नः
प्रणवमिव भवत्याः पादुके मञ्जुनादम् ॥ ८७ ॥

**करणेति ।** हे पादुके, करणानामिन्द्रियाणां विगमकाले उपरतिसमये कालस्य यमस्य हुंकारं भर्त्सनरवं शङ्कितुं संभावयितुं शीलं यस्य स तथोक्तः प्रियाभ्यां दत्तहस्तः समर्पितालम्बनहस्तो द्रुतपदं शीघ्रचरणविक्षेपं यथा तथा उपगच्छन् समीपमागच्छन् रङ्गनाथो नोऽस्माकं कर्णे श्रोत्रे भवत्या मञ्जुनादं प्रणवमिव ओंकारमिव परिणमयतु । स्वस्वरूपपरस्वरूपज्ञापनाय प्रणवमिव त्वन्नादं श्रावयत्वित्यर्थः । उपमानुप्राणितः प्रेयोऽलंकारः ॥

कमलवनसखीं तां कौमुदीमुद्वहन्तं
सविधमुपनयन्ती तादृशं रङ्गचन्द्रम् ।
प्रलयदिनसमुत्थान्पादुके मामकीनान्प्रशमय परितापाञ्शीतलैः शिञ्जितैः स्वैः ॥ ८८ ॥

**कमलेति**। हे पादुके, त्वं कमलवनस्य पद्मषण्डस्य सखीं वयस्यां तां प्रसिद्धां कौमुदीं चन्द्रिकाम्। श्रियमिति यावत्। प्रसिद्धा कौमुदी कमलवनविरोधिनी, इयं तु श्रीरूपा कमलाश्रयत्वात्तदुल्लासिकेति व्यतिरेकः। 'भास्करेण प्रभा यथा' इत्युक्तरील्या नित्यसंबन्धोऽभिप्रेतः। उद्वहन्तं तादृशं तापत्रयनिवर्तकं रङ्गे विद्यमानं भगवन्तमेव चन्द्रम्। सकलजनोल्लासकतया चन्द्रिकाचन्द्रत्वोक्तिः। सविधं निकटमुपनयन्ती आगमयन्ती सती प्रलयदिने चरमकाले समुत्थानुद्भूतान् मामकीनान्मदीयान् परितापान् स्वैर्निजैः शिञ्जितैः। आप्यायकैरित्यर्थः। शिञ्जितैरमृतैरिति व्यज्यते। प्रशमय शामय। एकदेशविवर्तिरूपकसंकीर्णः प्रेयोऽलंकारः॥

प्रशमयतु भयं नः पश्चिमश्वासकाले
रहसि विहरणं ते रङ्गनाथेन सार्धम्।
नियतमनुविधत्ते पादुके यन्निनादो
निखिलभुवनरक्षाघोषणाघोषलीलाम्॥ ८९॥

**प्रशमयत्विति**। हे पादुके, रहसि एकान्ते रङ्गनाथेन सार्धं ते तव विहरणं लीलासंचारो नोऽस्माकं पश्चिमश्वासकाले भयं प्रशमयतु। यस्य विहरणस्य संबन्धिनिनादो निखिलानां भुवनानां लोकानां रक्षार्थाया घोषणाया डिण्डिमाख्यवाद्यविशेषस्य रक्षाघोषणाख्यप्रबन्धविशेषस्य वा घोषस्य शब्दस्य लीलां विलासमनुविधत्ते अनुकरोति नियतम्। नात्र संदेह इत्यर्थः। निदर्शनानुप्राणितं काव्यलिङ्गमलंकारः॥

त्रिकविनिहितहस्तं चिन्तयित्वा कृतान्तं
गतवति हृदि मोहं गच्छता जीवितेन।
परिकलयतु बोधं पादुके शिञ्जितं ते
त्वरयितुमिव सज्जं त्वद्विधेयं मुकुन्दम्॥ ९०॥

**त्रिकेति**। हे पादुके, त्वद्विधेयं तव वश्य मुकुन्दं त्वरयितुं शीघ्रं प्रवर्तयितुं सज्जं संनद्धमिव स्थितं ते तव शिञ्जितं (कर्तृ) गच्छता गमनोन्मुखेन जीवितेनोपलक्षिते हृदि। ममेति शेषः। कृतान्तं यमम्। त्रिके गले विनिहितो हस्तो येन तं तथा चिन्तयित्वा मोहं मूर्च्छां गतवति सति बोधं ज्ञानं परिकलयतु विदधातु। व्यामुग्धं हृदयमुद्बोधयतु। प्रेयोऽलंकारः॥

उपघ्नं संवित्तेरुपनिषदुपोद्घातवचनं
तव श्रावं श्रावं श्रुतिसुभगमन्तर्मणिरवम्।
विजृम्भन्ते नूनं मधुमथनपादावनि मम
द्रवीभूतद्राक्षामधुरिमधुरीणा भणितयः॥ ९१॥

**उपघ्नमिति** । हे मधुमथनस्य पादावनि, मम भणितय उक्तयः संवित्तेः समीचीनज्ञानस्योपघ्नमाश्रयमुपनिषदां वेदान्तानामुपोद्घातवचनं प्रस्तावकवाक्यं श्रुतीनां श्रोत्राणां सुभग प्रियतमं तवान्तर्मणीनां रवं श्रावं श्रावं श्रुत्वा श्रुत्वा । 'आभीक्ष्ण्ये णमुल् च ३।४।२२' इति णमुल् 'नित्यवीप्सयोः ।८।१।४' इति द्विर्वचनम् । स्वनिष्ठं श्रोतृत्वं भणितिष्वारोप्यते । द्रवीभूतायाः परिपाकवशाद्विलीनाया द्राक्षाया मृद्वीकाफलस्य मधुरिम्णो माधुर्यस्य धुरीणा धूर्वहा विजृम्भन्ते परिणमन्ति । नूनमित्युत्प्रेक्षा । त्वदीयशिञ्जितश्रवणवासनया मम भणितयो द्राक्षाफलवन्मधुरतमाः परिणमन्तीति भावः । उपघ्नमुपोद्घातवचनमित्येकस्यानेकधोल्लेखादुल्लेखालंकारश्च ॥

विलासैः क्रीणन्तो निखिलजनचेतांसि विविधा
विहारास्ते रङ्गक्षितिरमणपादावनि मुहुः ।
विगाहन्तामन्तर्मम विलुठदन्तर्मणिशिला-
खलात्कारव्याजक्षरदमृतधाराधमनयः ॥ ९२ ॥

**विलासैरिति** । हे रङ्गक्षितिरमणपादावनि, विलासैर्विभ्रमैर्निखिलानामशेषाणां जनानां चेतांसि मनांसि क्रीणन्तः । क्रयलब्धद्रव्यवद्वशीकुर्वन्त इत्यर्थः । विविधा अनेकप्रकारा विलुठतां परिवर्तमानानामन्तर्मणिशिलानामन्तर्गतरत्नाश्मनां खलात्कारस्य शब्दविशेषस्य । खलादिति शब्दानुकारः । व्याजेन छद्मना क्षरन्त्याः स्रवन्त्या अमृतधारायाः सुधाधोरण्या धमनयो नाडीवद्धारकाः । 'नाडी तु धमनिः शिरा' इत्यमरः । ते तव विहारा लीलासंचारा मम अन्तः हृदये मुहुः पुनः पुनर्विगाहन्तां निमज्जन्तु । दृढं विषयीभवन्त्विति यावत् । प्रेयोऽलंकारः । व्याजादित्यत्र कैतवापह्नुतिरलंकारः ॥

श्रुतिश्रेणीस्थेयश्रुतिसुभगशिञ्जामुखरितां
भजेम त्वां पद्मारमणचरणत्रायिणि परम् ।
न मुद्रानिद्राणद्रविणकणविश्राणनदशा-
विशालाहंकारं कमपि घनहुंकारपरुषम् ॥ ९३ ॥

**श्रुतीति** । हे पद्मारमणस्य चरणत्रायिणि, श्रुतिश्रेण्या वेदपङ्क्तेः स्थेयया विवादपदनिर्णेत्र्या श्रुतीनां श्रवणानां सुभगया मधुरया शिञ्जयान्तर्मणिरवेण मुखरितां त्वां परं त्वामेव 'केवले परमव्ययम्' इति विश्वः । भजेम सेवेमहि । 'भज सेवायाम्' इति धातोर्लिङुत्तमपुरुषबहुवचनम् । मुद्रया यथावस्थितिज्ञापकजातुषादिचिह्नेन निद्राणस्य निर्व्यापारतया स्थितस्य द्रविणस्य धनस्य कणस्य लेशस्य विश्राणनस्य दानस्य दशायां, समये विशालः पृथुलोऽहंकारो गर्वो यस्य तम् । घनेन सान्द्रेण हुंकारेण तर्जनवाग्व्यापारेण परुषं क्रूरं कमप्यनामधेयं क्षुद्रपुरुषं न भजेम । हेतुरलंकारः । क्षुद्रसेवाभावेन

कार्येण साकं कारणस्य पादुकासेवाया वर्णनाद्रूक्षाक्षराश्रवणं पादुकानादश्रवणफलं क्षुद्रदानापात्रत्वं भगवच्चरणरक्षकपादुकासंबन्धफलमिति विवेकः ॥

तवैतच्छ्रीरङ्गक्षितिपतिपदत्रायिणि नृणां
भवत्यागश्चिन्तारणरणकभङ्गाय रणितम् ।
शरीरे स्वं भावं प्रथयति यदाकर्णनवशा-
न्न नः कर्णे भावी यममहिषघण्टाघणघणः ॥ ९४ ॥

**तवेति** । हे श्रीरङ्गक्षितिपतेः पदत्रायिणि, तवैतच्छ्रूयमाणं रणितं नादः (कर्तृ) नृणां मानवानामागसोऽपराधस्य चिन्तया विमर्शेन । भगवदपचारादिविमर्शेनेत्यर्थः । जनितस्य रणरणकस्य भयानुस्यूतेर्भङ्गाय निवर्तनाय भवति । यस्य रणितस्याकर्णनवशाच्छ्रवणवशाद्धेतोः शरीरे कलेवरे स्वमात्मीयं भावं धर्मं विशरणवत्त्वम् । नाशमिति यावत् । शीर्यत इति शरीरम् । 'शॄ विशरणे' इति धातोरौणादिक ईरन् प्रत्ययः । यद्वा 'शॄ हिंसायाम्' इति धातोः 'कॄ-शॄ-पॄ-कटी-पटी-शौटिभ्य ईरन्' इति ईरन्प्रत्ययः । तथा च शरीरे स्वशब्दार्थं विशरणकर्तृत्वं हिंसाकर्मत्वं वा स्वासाधारणधर्मं प्रथयति ख्यापयति सति । नश्यति सतीत्यर्थः । यममहिषस्य कृतान्तवाहनसैर(रि)भस्य घण्टानां कण्ठभूषणकिङ्किणीनां घणघणः शब्दविशेषः । घणघण इत्यनुकारः । अस्माकं कर्णे न भावी न भविष्यति । यमवश्यता नास्माकमिति भावः । तदिति पूर्वेणान्वयः । काव्यलिङ्गमलंकारः । शरीरशब्दार्थनिर्वचनान्निरुक्तिरलंकारः संसृज्यते ॥

परित्रस्ताः पुण्यद्रवपतनवेगात्प्रथमतः
क्षरद्भिः श्रीरङ्गक्षितिरमणपादावनि तदा ।
विदामासुर्देवा बलिमथनसंरम्भमनघैः
प्रणादैस्ते सद्यः पदकमलविक्रान्तिपिशुनैः ॥ ९५ ॥

**परित्रस्ता इति** । हे श्रीरङ्गक्षितिरमणस्य पादावनि, तदा बलिराज्यसमये परित्रस्ता बलेर्भीता देवाः पुण्यद्रवस्य ब्रह्मकमण्डलुगतधर्मस्य प्रस्रावस्य भगवच्चरणक्षालनार्थस्य । 'धर्माशपुष्पस्वर्णेषु पुण्यं धर्मवति त्रिषु ।' 'द्रवः प्रस्रावगमनरसविभ्रमनर्मसु ।' इत्युभयत्रापि नानार्थरत्नमाला । भगवत्पादप्रक्षालनसमये ब्रह्मकमण्डलुगतं पुण्यमेव गङ्गाजलतया द्रवीभूतमिति भगवच्छास्त्रे । पतनवेगात् पतनजवात् प्रथमतः पूर्वं क्षरद्भिः स्यन्दमानैः । वीचीतरङ्गन्यायेन शीघ्रमागच्छद्भिरित्यर्थः । अनघैर्मनोज्ञैः सद्यो विक्रान्तिक्षण एव पदकमलस्य भगवच्चरणारविन्दस्य विक्रान्तौ पदविक्षेपे विषये पिशुनैः सूचकैस्ते प्रणादैर्बलिमथने महाबलिनिग्रहे संरम्भमुद्योगं विदामासुर्ज्ञातवन्तः । 'उषविदजागृभ्योऽन्यतरस्याम्' इत्याम्प्रत्ययः । ब्रह्मार्पितभगवत्पादजलभूतगङ्गापतनात्प्रागेव शीघ्रमागच्छद्भिः पादुकाशब्दैरेव बलिनिग्रहं ज्ञातवन्तो देवा इ-

त्युक्त्वा ज्ञापनकारणान्तरसंनिधानेन ज्ञानस्य कार्यस्य सौकर्यवर्णनात्समाधिरलंकारः । पादुकानादस्य बलिनिग्रहानुमापकत्वादनुमानालंकारः ॥

स्वेषु स्वेषु पदेषु किं नियमयस्यष्टौ दिशामीश्वरा-
न्स्वैरालापकथाः प्रवर्तयसि किं त्रय्या सहासीनया ।
रङ्गेशस्य समस्तलोकमहितं प्राप्ता पदाम्भोरुहं
मा भैषीरिति मामुदीरयसि वा मञ्जुस्वनैः पादुके ॥ ९६ ॥

**स्वेष्विति** । हे पादुके, त्वं रङ्गेशस्य समस्तलोकैर्महितं पदाम्भोरुहं प्राप्ता सती । ब्रह्मादिवत्पद्मासननिष्ठेत्यपि गम्यते । मञ्जुस्वनैरष्टौ दिशामीश्वरानिन्द्रादीन् स्वेषु स्वेषु निजेषु निजेषु पदेषु स्थानेषु नियमयसि किम् । अनतिलङ्घनेन व्यवस्थापयसि किमित्यर्थः । सह स्वेन सार्धमासीनया भगवत्पदप्रतिपादकतया त्रय्या वेदत्रयेण स्वैरालापकथाः स्वेच्छया मिथोभाषणपरम्पराः प्रवर्तयसि किम् । मां माभैर्षीः न भीतो भवेत्युदीरयसि वा वदसि किम् । संदेहालंकारः ॥

रङ्गे देवि रथाङ्गपाणिचरणस्वच्छन्दलीलासखि
स्तोकस्पन्दितरम्यविभ्रमगतिप्रस्तावकं तावकम् ।
कालोपागतकालकिंकरचमूहुंकारपारम्परी-
दुर्वारप्रतिवावदूकमनघं श्रोष्यामि शिञ्जारवम् ॥ ९७ ॥

**रङ्ग इति** । हे देवि, रथाङ्गपाणेश्चरणयोः स्वच्छन्दलीलायाः स्वेच्छाविहारस्य सखि वयस्ये इति संबुद्धिः । रङ्गे स्तोकस्पन्दितेन इषच्चलनेन रम्याणां विभ्रमगतीनां भगवतो लीलासंचरणानां प्रस्तावकं प्रारम्भकं काले चरमकाले उपागतानां कालस्य यमस्य किंकराणां चम्वाः सेनाया हुंकाराणां भर्त्सनवाग्व्यापाराणां पारम्पर्याः परम्परायाः । स्वार्थे ङीष् । दुर्वारं दुर्जयं प्रतिवावदूकं प्रतिवादिनम् । पादुकानादेन यमकिंकरनादस्यैव पराभवादिति भावः । अनघं मनोज्ञं तावकं शिञ्जारवं श्रोष्यामि । चरमसमय इति शेषः । प्रेयोऽलंकारः ॥

त्वच्छिञ्जारवशर्करारससदास्वादात्सतामुन्मदा
मातर्माधवपादुके बहुविदां प्रायः श्रुतिर्मुह्यति ।
सारासारसकृद्विमर्शनपरिम्लानाक्षरग्रन्थिभि-
र्ग्रन्थैस्त्वामिह वर्णयाम्यहमतस्त्रासत्रपावर्जितः ॥ ९८ ॥

**त्वदिति** । हे मातः माधवपादुके, बहुविदां बहुश्रुतानां सतां श्रुतिः श्रोत्रं तव शिञ्जारवस्यैव शर्करारसस्य सदास्वादान्निरन्तरानुभवादुन्मदा हर्षोद्रेकवती सती प्रायः प्रायेण मुह्यति । प्राय इत्युत्प्रेक्षा । विषयान्तरग्रहणशून्या भवति । अतो हेतोरहं त्रासत्रपावर्जितो भयलज्जारहितः सन् इह रङ्गास्थान्यां सारासारयोर्गुणदोषयोर्विषये सकृद्विमर्श-

नस्य एकवारविचारणस्य परिम्लानाः कृशाः । सकृद्विमर्शनस्याप्यलाभेन कृशा इत्यर्थः । अविचारिता इति यावत् । अक्षरग्रन्थयो रङ्गादिग्रन्थिवद्दुःसहविन्यासाक्षरसमूहा येषां तैः ग्रन्थैः संदर्भैस्त्वां वर्णयामि स्तौमि । सतां पादुकानादासक्तत्वात्प्रकृतग्रन्थे गुणदोषविचारप्रसक्तेर्यथाकथंचिद्वर्णनेऽपि न भयलज्जासंक्तिरिति भावः । उत्प्रेक्षासंकीर्णं काव्यलिङ्गमलंकारः ॥

तवाम्ब किल खेलतां गतिवशेन गर्भाश्मनां
रमारमणपादुके किमपि मञ्जुभिः शिञ्जितैः ।
पदस्तुतिविधायिभिस्त्वदनुभावसिद्धान्तिभिः
सयूथ्यकलहायितं श्रुतिशतं समापद्यते ॥ ९९ ॥

**तवेति** । हे अम्ब रमारमणस्य पादुके, श्रुतिशतं बहुविधाः श्रुतयस्तव गतिवशेन खेलतां चलतां गर्भाश्मनामन्तर्गतरत्नानां मञ्जुभिः शिञ्जितैरेव पदस्तुतिविधायिभिर्भगवच्चरणस्तावकैस्तवानुभावे विषये सिद्धान्तिभिर्निर्णायकैः पुरुषैः सह किमपि परस्परमात्रविदितं सयूथ्यकलहायितम् । समानानां यूथं सयूथम्, तत्रभवाः सयूथ्याः । 'सगर्भसयूथसनुताद्यत् ४।४।११४' इत्यत्रैव निपातनात्समानस्य सभावः । अस्य छान्दसत्वेऽपि 'समानोदर्यसोदर्यसगर्भ्यसहजाः समाः' इति भाषायामपि सगर्भ्यशब्दप्रयोगादाचार्यैरपि सयूथ्यशब्दः प्रयुक्तः । तैः कलहायितं कलहकृत्यं समापद्यते प्राप्नोति । उत्प्रेक्षा । श्रुतीनामपि भगवत्पादस्तावकत्वात्पादुकामाहात्म्यप्रतिष्ठापकत्वाच्च तथात्वेन रूपितैः पादुकानादैः परस्परजिजीषया कलहो जात इवेति भावः ॥

क्षिपति मणिपादरक्षे नादैर्नूनं समाश्रितत्राणे ।
रङ्गेश्वरस्य भवती रक्षापेक्षाप्रतीक्षणविलम्बम् ॥ १०० ॥

**क्षिपतीति** । हे मणिपादरक्षे, भवती नादैः रङ्गेश्वरस्य समाश्रितानां त्राणे रक्षणे रक्षापेक्षया वैषम्यनैर्घृण्यनिवर्तकस्य समाश्रितकर्तृकरक्षाप्रार्थनस्य प्रतीक्षणेनाभ्यर्थनेन विलम्बं कालक्षेपम् । 'संसारतन्त्रवाहित्वाद्रक्षापेक्षां प्रतीक्षते ।' इत्युक्तम् । क्षिपति निवर्तयति । नूनमित्युत्प्रेक्षा । अज्ञानेन स्वरक्षणप्रार्थनारहितान् जन्तून् रक्षेति भगवन्तं पादुकानादैः प्रेरयति वेति भावः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सटीका नादपद्धतिश्चतुर्दशी ॥

---

रत्नसामान्यपद्धतिः ।

अथास्यां पद्धत्यां पादुकावयवप्रत्युप्तानि रत्नानि सामान्यतो वर्णयति—

उदर्चिषस्ते रङ्गेन्द्रपादावनि बहिर्मणीन् ।
अन्तर्मणिरवं श्रुत्वा मन्ये रोमाञ्चिताकृतीन् ॥ १ ॥

**उदर्चिष इति।** हे रङ्गेन्द्रपादावनि, उदर्चिष उद्गता अर्चिषो दीप्तयो येषां तान् ते तव बहिर्मणीन् बाह्यावयवप्रत्युप्तरत्नानि अन्तर्मणिरवं श्रुत्वा हर्षातिरेकेण रोमाञ्चिताः संजातपुलकाः आकृतय आकारा येषां तान् मन्ये । बहिर्मणिदीप्तिष्वन्तर्मणिरवश्रवणजनितरोमाञ्चत्वमुत्प्रेक्ष्यते ॥

विधेहि शौरेर्मणिपादुके त्वं विपद्यमाने मयि रश्मिजालैः ।
आसीदतामन्तककिंकराणां वित्रासनान्वेत्रलताविशेषान् ॥ २ ॥

**विधेहीति ।** हे शौरेर्मणिपादुके, त्वं मयि विपद्यमाने विपदं प्राप्नुवति सति रश्मिजालैः किरणसमूहैरासीदतां मम समीपमागच्छतामन्तककिंकराणां वित्रासनान् भीतिजनकान् वेत्रलताविशेषान् वेत्रवल्लीभेदान् विधेहि । आपत्समये मम समीपं गतायास्तव किरणान्वेत्रलतात्वेन प्रतीत्य यमकिंकराः पलायन्तामिति भावः । उत्प्रेक्षालंकारः ॥

मुकुन्दपादावनि मध्यनाड्या मूर्धन्यया निष्पततो मुमुक्षोः ।
आब्रह्मलोकादवलम्बनार्थं रत्नानि ते रश्मिगणं सृजन्ति ॥ ३ ॥

**मुकुन्देति ।** हे मुकुन्दपादावनि, मूर्धन्यया मूर्ध्नि भवया । 'शरीरावयवाच्च ।४।३।५५।' इति भावे यत् । मध्यनाड्या हृदयसंबन्धिन्या धमन्या 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति श्रुतिप्रसिद्धया सुषुम्णाख्यया निष्पततो निर्गच्छतो मुमुक्षोरासन्नमोक्षस्य । आशंसायां सन् । आब्रह्मलोकात् परमपदपर्यन्तमवलम्बनार्थं रश्मिगणं किरणसमूहं रश्म्यनुसारीति सूत्रितं सृजन्ति उत्पादयन्ति । 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति गतिसाधनत्वेनोक्तसूर्यरश्मिभ्यः प्रकृष्टान्ब्रह्मलोकव्यापिनः किरणान् सृजन्तीति भावः । उत्प्रेक्षा । अत्युक्तिव्यतिरेकावपि संकीर्येते ॥

असूर्यभेद्यां रजनीं प्रजानामालोकमात्रेण निवारयन्ती ।
अमोघवृत्तिर्मणिपादरक्षे मुरद्विषो मूर्तिमती दया त्वम् ॥ ४ ॥

**असूर्येति ।** हे मणिपादरक्षे, असूर्यभेद्यां सूर्यनिवर्तनीयरजनीभिन्नाम्, असूरिभिरज्ञैरनिवर्तनीयां च प्रजानां रजनीं संसारात्मिकामालोकमात्रेणोद्द्योतेनैव भगवत्कटाक्षमात्रेण च । 'आलोकौ दर्शनोद्द्योतौ' इत्यमरः । निवारयन्ती अमोघा अप्रतिबन्ध ।

वृत्तिर्व्यापारो यस्याः सा त्वं मुरद्विषः श्रीरङ्गनाथस्य मूर्तिमती शरीरिणी दया अनुकम्पा भवसीति गम्यते । रूपकातिशयोक्तिश्लेषाभ्यामनुप्राणितेयमुत्प्रेक्षा ॥

रङ्गेशपादावनि तावकानां रत्नोपलानां द्युतयः सरन्ति ।
श्रेयःफलानां श्रुतिवल्लरीणामुपघ्नशाखा इव निर्व्यपायाः ॥ ५ ॥

**रङ्गेशेति** । हे रङ्गेशपादावनि, तावकानां त्वदीयानां रत्नोपलानां द्युतयो दीप्तयः । श्रेयांसि धर्मादीनि फलानि साध्यान्येव फलानि यासां तासां श्रुतीनामेव वल्लरीणां वल्लीनां मञ्जरीणाम् । 'वल्लरिर्मञ्जरिः स्त्रियाम्' इत्यमरः । निर्व्यपाया अनपायाः । उपघ्नशाखा इव आश्रयदारूणीव स्फुरन्ति । उत्प्रेक्षासंभावनायामिवशब्दः ॥

कस्यापि पुंसः कनकापगायाः पुण्ये सलीलं पुलिने शयालोः ।
समीपवृत्तिर्मणिपादुके त्वं संवाहयन्तीव पदं करैः स्वैः ॥ ६ ॥

**कस्येति** । हे मणिपादुके, त्वं कनकापगायाः कावेर्याः पुण्ये चारुणि । 'पुण्यं तु चार्वपि' इत्यमरः । पुलिने सैकते शयालोः शयनशीलस्य । आलुचि शीङ्ग्रहणं कर्तव्यमित्यालुच् । कस्याप्यनिर्वचनीयमहिम्नः पुंसः श्रीरङ्गनाथस्य । इति पर्यायोक्तिः । पदं चरणं समीपवृत्तिर्निकटस्थिता सती स्वैरात्मीयैः करैः किरणैरेव हस्तैः । 'बलिहस्तांशवः कराः' इत्यमरः । संवाहयन्ती मृदु मर्दयन्तीव । श्लेषरूपकसंकीर्णेयमुत्प्रेक्षा ॥

दिदृक्षमाणस्य परं निधानं स्नेहान्विते योगदशाविशेषे ।
संवित्प्रदीपं मणिपादरक्षे संधुक्षयन्तीव मरीचयस्ते ॥ ७ ॥

**दिदृक्षमाणस्येति** । हे मणिपादरक्षे, ते तव मरीचयो रत्नकिरणाः परमुत्कृष्टं निधानं निधिं श्रीरङ्गनाथं दिदृक्षमाणस्य द्रष्टुमिच्छतः । 'ज्ञाश्रुस्मृदृशां सनः ।१।३।५७' इति सन्नन्ताद्दृशेरात्मनेपदम् । लटः शानच् । योगिनः स्नेहेन ध्येयविषयकप्रीत्या तैलेन च । 'अविशेषगुणस्नेहस्तैलसौहार्दयोश्च सः ।' इति नानार्थरत्नमालायाम् । अन्विते योगदशाविशेषे ध्यानावस्थितिभेदे दीपवर्तिकाभेदे च 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः । 'दशा वर्त्यामवस्थायां वस्त्रान्ते स्युर्दशा अपि ।' इति विश्वः । संविदेव ज्ञानमेव प्रदीपं संधुक्षयन्ति संदीपयन्तीव । 'धुक्षधिक्ष संदीपनक्लेशनजीवनेषु ।' ततो हेतुमण्णिच् । विषयदर्शने दीपवद्भगवद्दर्शनानुकूलयोगे त्वन्मरीचय अनुकूला इति भावः । श्लेषानुप्राणितेयमुत्प्रेक्षा ॥

समाधिभाजां तनुते त्वदीया रङ्गेशपादावनि रत्नपङ्क्तिः ।
स्थानं प्रयातुं तमसः परं तत्प्रदीपकृत्यं प्रभया महत्या ॥ ८ ॥

**समाधिभाजामिति** । हे रङ्गेशपादावनि, त्वदीया रत्नानां पङ्क्तिर्महत्या विस्तृतप्रभया रुचा समाधिभाजां तमसस्तमोगुणप्रचुरायाः प्रकृतेरन्धकाराच्च । 'तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे ।' इति विश्वः । परमुत्तरं तत्प्रसिद्धं स्थानं परमपदं

प्रयातुं प्रदीपस्य कृत्यं कार्यं तनुते । यथा दीपवशेन तमसः परं वस्तु प्राप्नुवन्ति तथा त्वद्रत्नकिरणसंबन्धात्प्रकृतिमण्डलमतीत्य परमपदं लभन्ते योगिन इति भावः । निदर्शना-भेदोऽलंकारः ॥

बध्नासि रङ्गेश्वरपादरक्षे मन्ये यथार्हं मणिरश्मिजालैः ।
सेवानतानां त्रिदशेश्वराणां शेषापटीं शेखरसंनिविष्टाम् ॥ ९ ॥

**बध्नासीति** । हे रङ्गेश्वरपादरक्षे, त्वं मणिरश्मिजालैः सेवार्थमानतानां त्रिदशेश्वराणामिन्द्रादीनां शेखराणामापीडानां संनिकृष्टां समीपस्थां शेषाख्यां पटीं यथार्हं यथा-योग्यं बध्नासि । प्रसृता नानावर्णरत्नदीप्तयस्तत्तद्देवचूडासु नानाविधशेषापटं बध्नन्तीवेति भावः । उत्प्रेक्षालंकारः ॥

भजन्ति रङ्गेश्वरपादरक्षे प्रकल्पयन्तो विविधान्पुमर्थान् ।
उदर्चिषश्चिन्तयतां जनानां चिन्तामणित्वं मणयस्त्वदीयाः ॥ १० ॥

**भजन्तीति** । हे रङ्गेश्वरपादरक्षे, उदर्चिषः उद्गतदीप्तयस्त्वदीया मणयश्चिन्तयतां पादुकां ध्यायतां जनानां विविधान् पुमर्थान् पुरुषार्थान् धर्मादीन्प्रकल्पयन्तः सन्तश्चि-न्तामणित्वं चिन्तामणिसंज्ञकरत्नविशेषत्वं भजन्ति प्राप्नुवन्ति । चिन्ताफलदो मणि-श्चिन्तामणिरिति निरुक्त्यलंकारेण चिन्तामण्यभेदाध्यवसायान्निरुक्तिसंकीर्णरूपकालंकारः ॥

नाथस्य दत्ते नदराजकन्या पातुं शुभान्पादनखेन्द्ररश्मीन् ।
मणिप्रभाभिः प्रतिपन्नपक्षां लीलाचकोरीमिव पादुके त्वाम् ॥ ११ ॥

**नाथस्येति** । हे पादुके, नदराजस्य क्षीरसमुद्रस्य कन्या श्रीः मणिप्रभाभी रत्नदी-प्तिभिः प्रतिपन्नौ प्राप्तौ पक्षौ पार्श्वभागावेव गरुतौ यस्यास्तां त्वां नाथस्य श्रीरङ्गनाथस्य शुभान् शुद्धान् पादयोर्नखानामेवेन्दूनां रश्मीन् किरणान् पातुमास्वादयितुं लीलाचकोरी-मिव चन्द्रिकाप्रियस्त्रियमिव । 'चकोरस्तु चलच्चञ्चुरुत्पीडश्चन्द्रिकाप्रियः ।' इति वैज-यन्ती । दत्ते ददाति । श्रिया समर्पितायां पादुकायां नखचन्द्रिकापिपासुचकोरीत्व-मुत्प्रेक्ष्यते ॥

जनस्य रङ्गेश्वरपादुके त्वं जातानुकम्पा जनयस्ययत्नात् ।
आकृष्य दूरान्मणिरश्मिजालैरनन्यलक्षाणि विलोचनानि ॥ १२ ॥

**जनस्येति** । हे रङ्गेश्वरपादुके, त्वं जातानुकम्पा सती मणीनां रश्मिसमूहैरेव जालै-रानायैः । 'जालं गवाक्ष आनाये कोरके दम्भवृन्दयोः ।' इति विश्वः । जनस्य लोकस्य विलोचनानि चक्षूंषि दूरात् दर्शनविप्रकृष्टप्रदेशादाकृष्य अयत्नादनायासेन अनन्य-लक्षाणि स्वमात्रगोचराणि जनयसि । करोषीत्यर्थः । जननयनेषु जालाकृष्टत्वमुत्प्रे-क्ष्यते । तत्र च जालैरिति श्लिष्टरूपकम् ॥

रङ्गेशपादावनि तावकीनैः स्पृष्टाः कदाचिन्मणिरश्मिपाशैः ।
कालस्य घोरं न भजन्ति भूयः कारागृहान्तेषु कशाभिघातम् ॥ १३ ॥

**रङ्गेशेति ।** हे रङ्गेशपादावनि, तावकीनैस्त्वदीयैः । मणीनां रश्मय एव पाशा रज्जवस्तैः । कदाचित्स्पृष्टा एकदा स्पृष्टा जनाः कालस्य यमस्य कारागृहान्तेषु बन्दीगृहान्तेषु । 'कारा स्याद्बन्धनालये' इत्यमरः । भूयः पुनः कशाभिघातं ताडनरज्जुप्रहारं न भजन्ति न प्राप्नुवन्ति । कारागृहे कशाभिघातान्निषिध्यात्र रत्नरश्मिपादाभिघातवर्णनात्परिसंख्याभेदः । 'परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणात् ।' इति लक्षणात् ॥

रत्नानि रङ्गेश्वरपादरक्षे त्वदाश्रितान्यप्रतिघैर्मयूखैः ।
आसेदुषीणां श्रुतिसुन्दरीणां वितन्वते वर्णनिचोललक्ष्मीम् ॥ १४ ॥

**रत्नानीति ।** हे रङ्गेश्वरपादरक्षे, त्वदाश्रितानि रत्नानि अप्रतिघैरप्रतिबन्धैः । 'प्रतिघः प्रतिघाते च रोषे च' इति विश्वः । मयूखैः किरणैरासेदुषीणामासन्नानां श्रुतीनामेव सुन्दरीणां सेवनाय मूर्तिमतीनां वर्णयुक्तनिचोलानां कुङ्कुमाद्यालेपनवतां कूर्पासकानाम् । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ रूपे यशोऽक्षरे । विलेपने कुथायां च' इति विश्वः । 'कूर्पासस्तु निचोलकः' इति यादवः । लक्ष्मीं शोभां वितन्वते । उत्प्रेक्षालंकारः ।

निद्रारसप्रणयिनो मणिपादरक्षे
रङ्गेश्वरस्य सविधं प्रतिपद्यमाना ।
शय्याफणीन्द्रमभितो भवती विधत्ते
रत्नांशुभिर्यवनिकामिव दर्शनीयाम् ॥ १५ ॥

**निद्रेति ।** हे मणिपादरक्षे, निद्रारसे योगनिद्रास्वादे प्रणयिनः । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुवारिदे ॥' इति विश्वः । रङ्गेश्वरस्य सविधं प्रतिपद्यमाना भवती रत्नांशुभिः शय्यारूपं फणीन्द्रं शेषमभितः शेषस्योभयपार्श्वेऽपीत्यर्थः । 'अन्यत्रापि दृश्यते' इति द्वितीया । दर्शनीयां मनोज्ञामिति यावत् । यवनिकां तिरस्करिणीं विधत्ते । इवेत्युत्प्रेक्षा ॥

सद्यस्त्वदुद्वहदशानमिताकृतीनां
स्रस्तांसकं निजरुचा मणिपादुके त्वम् ।
पद्मासहायपरिवारविलासिनीनां
पट्टांशुकैरिव पयोधरमावृणोषि ॥ १६ ॥

**सद्य इति ।** हे मणिपादुके, त्वं निजरुचा स्वदीप्त्या तवोद्वहदशायामुपादानकाले आनमिताः प्रह्वीकृता आकृतयो यासां तासां पद्मासहायस्य परिवारविलासिनीनां परिजनवनितानां स्रस्तं गलितमंसकमुत्तरीयं यस्मात्तं पयोधरं स्तनं पट्टांशुकैरावृणोषीव विदधासीव इत्युत्प्रेक्षा ॥

देवस्य रङ्गवसतेः पुरतः प्रवृत्तै-
रुद्धूतविश्वतिमिरां मणिरश्मिजालैः ।
मन्ये मदीयहृदयायतनप्रवेश-
माङ्गल्यदीपकणिकां मणिपादुके त्वाम् ॥ १७ ॥

**देवस्येति** । हे मणिपादुके, रङ्गवसतेर्देवस्य पुरतोऽग्रे प्रवृत्तैर्मणिरश्मिजालैरुद्धूतविश्वतिमिरां निरस्तसमस्तान्धकारां त्वां मदीयहृदयायतनस्य मनोरूपस्य प्रवेशे माङ्गल्यां मङ्गलार्हाम् । 'तत्र साधुः । ४ । ४ । ९८' इति यत् । दीपकणिकां सूक्ष्मदीपिकामन्तर्याम्यनुगुणां मन्ये । उत्प्रेक्षा ॥

आकीर्णरत्ननिकरां मणिपादुके त्वां
रङ्गेश्वरस्य ललितां विपणिं प्रतीमः ।
यत्संश्रयेण भवति स्थिरभक्तिमूल्यं
कैवल्यमत्र जगतां क्रयविक्रयार्हम् ॥ १८ ॥

**आकीर्णेति** । हे मणिपादुके, आकीर्णः प्रत्युप्तः प्रसारितश्च रत्नानां मणीनां श्रेष्ठवस्तूनां च । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । निकरो यस्यास्तां त्वां रङ्गेश्वरस्य वणिजो ललितां मनोज्ञां विपणिं पण्यवीथिकाम् । 'विपणिः पण्यवीथिका' इत्यमरः । अत्र श्रीरङ्गे यस्याः पादुकायाः संश्रयेण स्थिरा अप्रतिबन्धभक्तिरेव मूल्यं क्रयसाधनद्रव्यं यस्य तत् । कैवल्यं मोक्षम् । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्रेयसामृतम् ।' इत्यमरः । जगतां क्रयविक्रयार्हमुपादानवितरणार्हं भवति । तामिति पूर्वेणान्वयः । उत्प्रेक्षा ॥

व्यक्तुं क्षमो भगवतो जगदीश्वरत्वं
वज्राङ्कुशध्वजसरोरुहचक्रचिह्नम् ।
आश्लिष्य निर्भररुचिं मणिपादुके त्वा-
मासीदनाभरणसुन्दरमङ्घ्रिपद्मम् ॥ १९ ॥

**व्यक्तुमिति** । हे मणिपादुके, जगदीश्वरत्वं सर्वनियन्तृत्वं व्यक्तुं प्रकाशयितुं क्षमं योग्यं वज्रं कुलिशम्, अङ्कुशं सृणिः, ध्वजः, सरोरुहं पद्मम्, चक्रं रथाङ्गम् (इत्येतानि रेखारूपाणि ।) चिह्नानि लक्षणानि यस्य तत् । अङ्कुशादिरेखावनः सार्वभौमत्वम् । 'शङ्खातपत्रवाजिकुञ्जरधनुःश्रीवत्सयूपेषुभिर्मालाकुण्डलचामराङ्कुशयवैः शैलध्वजैस्तोरणैः । मध्यस्वस्तिकवेदिकाव्यजनकैः शङ्खातपत्राम्बुजैः पादे पाणितलेऽथवा नृपतितां यान्ति, स्त्रियो राज्ञिताम् ॥' इत्युत्पलपरिमलेऽभिहितम् । अङ्घ्रिपद्मं भगवतः पादाब्जं निर्भररुचिं पूर्णदीप्तिं पूर्णानुरागं च । 'रुचिर्मयूखे शोभायामभिषङ्गाभिलाषयोः' इति विश्वः । त्वामाश्लिष्य परिरभ्य अनाभरणमाभरणाभावेन सुन्दरं चारु आसीत् ।

नायिकाश्लेषणे भूषणस्य विरुद्धत्वादिति भावः । अत्र वज्रचक्राद्यायुधशब्दैः सार्वभौमत्वस्य पादपद्मे प्रतीते रुच्याश्लेषशब्दाभ्यां पादुकाया नायिकात्वप्रतीतेश्च समासोक्तिरलंकारः । आभरणेन कारणेन विना कार्यस्य सौन्दर्यस्योक्तेर्विभावनापि । तयोः संसृष्टिः ॥

रत्नप्रभापटलचक्रमनोहरा त्वं
पद्मारुणं पदमिदं त्वयि रङ्गभर्तुः ।
मन्ये तदेतदुभयं मणिपादरक्षे
चक्राब्जमण्डलमकिंचनरक्षणार्थम् ॥ २० ॥

**रत्नप्रभेति** । हे मणिपादरक्षे, त्वं रत्नानां प्रभापटलस्य द्युतिसमूहस्य चक्रेण चक्राकारेण । मण्डलीभावेनेति यावत् । मनोहरा हृद्या पद्मवत् कोकनदवत् अरुणं रक्तं रङ्गभर्तुरिदं पदं त्वयि तदेतदुभयं उक्तं परिदृश्यमानमुभयं त्वं पदाब्जं च अकिंचनानां भगवदर्चनोपायशून्यानां रक्षणार्हं भगवदर्चनाधिकारसंपादनेन त्राणयोग्यं चक्राब्जमण्डलं चक्राकारमण्डलरेखावृतमब्जाकारमण्डलरेखासंनिवेशं मन्ये । पादुकारत्नप्रभामण्डलमेव बहिश्चक्ररेखात्वेन भगवत्पादाब्जमेवान्तरब्जरेखात्वेनोत्प्रेक्ष्यते । भगवच्छास्त्रेऽर्चकाचार्यकसंपादकचक्राब्जमण्डलदीक्षाप्रकरणे चक्राब्जमण्डलरेखाविन्यासः सप्रपञ्चः प्रतिपादितः ॥

त्रासात्स्वयं प्रणमतां दनुजेश्वराणां
सङ्ख्येऽवलूनशिरसामपि मौलिरत्नैः ।
आयोजयन्त्यनुकलं मणिपादुके त्वां
सैरन्ध्रिकेव मुरवैरिकृपाणधारा ॥ २१ ॥

**त्रासादिति** । हे मणिपादुके, मुरवैरिणः कृपाणस्य खड्गस्य धारा नेमिः त्रासाद्भयात् स्वयमात्मना प्रणमतां प्रह्वीभवतां सङ्ख्ये युद्धेऽवलूनशिरसां छिन्नशिरसामपि दनुजेश्वराणामसुरप्रभूणां मौलिरत्नैः किरीटमणिभिस्त्वामनुकलं क्षणे क्षणे सैरन्ध्रिकेव अलंकारिकेव आयोजयन्ति घटयन्ति । उपमालंकारः । प्रणमतां किरीटमणिभिः स्वतः संसर्गः । इतरेषां तु किरीटमुत्पाट्य पादुकायां घटनादिति भावः ॥

आस्कन्दनानि विबुधेन्द्रशिखामणीनां
त्वामाश्रितान्यसुरसूदनपादरक्षे ।
रत्नानि ते स्तुतिसुवर्णपरीक्षणार्थं
नूनं भजन्ति निकषोपलतां कवीनाम् ॥ २२ ॥

**आस्कन्दनानीति** । हे असुरसूदनस्य पादरक्षे, विबुधेन्द्राणामिन्द्रादीनां शिखामणीनां चूडारत्नानामास्कन्दनानि अयस्कान्तादिवदाकर्षकाणि । तेषां प्रणामादिति भावः ।

त्वामाश्रितानि रत्नानि कवीनां संदर्भयितॄणां ते तव स्तुतेर्वर्णनस्य शोभनानि वर्णान्येवाक्षराणि सुवर्णानि हेमानि तेषां परीक्षणार्थं सौष्ठवासौष्ठवशोधनाय निकषोपलतां निकषाश्मतां भजन्ति । नूनमित्युत्प्रेक्षा । पादुकारत्नवर्णनेनैव कवीनां तारतम्यव्यक्तिर्भवतीति भावः ॥

पादावनि प्रणयिनां प्रतिपादितार्थां
क्रीडासरोजमिव शौरिपदं भजन्तीम् ।
प्रत्युप्तरत्ननिकरप्रतिपन्नशोभां
पश्यामि रोहणगिरेरधिदेवतां त्वाम् ॥ २३ ॥

**पादावनीति** । हे पादावनि, प्रणयिनां भक्तिमतां याचकानां च । 'प्रणयास्त्वमी । विस्रम्भयाञ्चाप्रेमाणः ।' इत्यमरः । प्रतिपादितो विश्राणितोऽर्थः प्रयोजनं धनं च यया ताम् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ।' इत्यमरः । क्रीडासरोजमिव लीलापद्ममिव स्थितं शौरिपदं वहन्तीं प्रत्युप्तेन रत्ननिकरेण प्रतिपन्ना प्राप्ता शोभा यस्यास्तां त्वां रोहणगिरे रत्नाकरपर्वतस्याधिष्ठात्रीं देवतामिव । पादुकायां रत्नखनिदेवतात्वमुत्प्रेक्ष्यते ॥

यामेव रत्नकिरणैर्मणिपादरक्षे
चूडापदे तनुभृतां भवती विधत्ते ।
शक्रादिदैवतशिखामणिरज्यमानै-
स्त्वामेव ते प्रकटयन्ति पदैरभिख्याम् ॥ २४ ॥

**यामेवेति** । हे मणिपादरक्षे, भवती तनुभृतां चूडापदे शिरसि रत्नकिरणैर्यामेवाभिख्यां शोभां विधत्ते ते तनुभृतः शक्रादीनां देवतानां शिखामणिभी रज्यमानैर्वर्णान्तरवत्तया क्रियमाणैः पदैरङ्घ्रिभिस्तामेवाभिख्यां प्रकटयन्ति । पर्यायेणैकस्याः शोभायाः शिरसि पादे च वर्णनात्पर्यायभेदोऽलंकारः ॥

रत्नाङ्कुरैरविरला मणिपादरक्षे
पाकोन्मुखैः परिगता पुरुषार्थसस्यैः ।
देवेन रङ्गपतिना जगतां विभूत्यै
केदारिकेव कृपया परिकल्पिता त्वम् ॥ २५ ॥

**रत्नाङ्कुरैरिति** । हे मणिपादरक्षे, रत्नैरेवाङ्कुरैरविरला सान्द्रा पाके परिणामे उन्मुखैरुद्युक्तैः । संनिहितसाध्यैरित्यर्थः । पुरुषार्थैरेव सस्यैः शाल्यादिफलैः परिगता व्याप्ता त्वं रङ्गपतिना देवेन राज्ञा । 'देवासुरे घने राज्ञि' इति विश्वः । जगतां लोकानां विभूत्यै संपदे कृपया केदारिकेव क्षेत्रभूमिरिव परिकल्पिता कृता । उत्प्रेक्षा ॥

निर्धूतमोहतिमिरास्तव रत्नदीपै-
र्निर्विश्यमानविभवं नदराजपुत्र्या ।

प्रत्यक्षयन्ति निगमान्तनिगूढमर्थं
पादावनि त्वयि निवेशितभावबन्धाः ॥ २६ ॥

**निर्धूतेति।** हे पादावनि, त्वयि निवेशिता विन्यस्ता भावबन्धा अभिप्रायसंबन्धा यैस्ते भक्तास्तव रत्नान्येव दीपास्तैर्निर्धूतो मोहोऽज्ञानमेव तिमिरं तमो येषां ते सन्तो नदराजपुत्र्या लक्ष्म्या निर्विश्यमानः संभुज्यमानो विभवो विभूतिर्धनं च यस्य तम्। निगमान्ते वेदान्ते नगरप्रान्ते च निगूढं सिद्धं गुप्तं च अर्थं श्रीरङ्गनाथरूपमेव वस्तु रायं च प्रत्यक्षयन्ति साक्षात्कुर्वन्ति। दीपेन तिमिरमपवार्य पृथिव्यन्तर्गुप्तं निधिं प्रेक्षन्ते यथा तद्वदिति भावः। रूपकमलंकारः श्लेषानुप्राणितः॥

रत्नोपलप्रकरसंभव एष दूरा-
द्रङ्गाधिराजचरणावनि तावकीनः।
आर्द्रापराधपरिखिन्नधियां प्रजाना-
माश्वासनार्थ इव भाति करप्रसारः॥ २७ ॥

**रत्नेति।** हे रङ्गाधिराजचरणावनि, रत्नोपलानां प्रकरैः संभवो जातस्तावकीनस्त्वदीयो दूरादसंनिकृष्टः। 'दूरान्तिकार्थेभ्यो द्वितीया च २। ३। ३५।' इत्यत्र चकारानुकृष्टा प्रातिपदिकार्थे पञ्चमी। एषः पुरोवर्ती करस्यैव किरणस्यैव हस्तस्य प्रसारः प्रसरणमार्द्रागसा सद्यस्तनागसा। अयं च समीपानागमने हेतुः। परिखिन्ना दीना धीर्यासां तासां प्रजानामाश्वासनार्थं इव धैर्यसंपादनायैव भाति। यथा लोके जना अपराधिनः करं प्रसार्याश्वासयन्ति तथेति भावः। उत्प्रेक्षालंकारः श्लेषानुप्राणितः॥

व्यामुह्यतो विषयिबालमृगान्मदीया-
न्संसारघर्मजनितासु मरीचिकासु।
पादावनि प्रगुणरत्नमयूखजालै-
राकृष्य विश्रमय केशवकान्तिसिन्धौ॥ २८ ॥

**व्यामुह्यत इति।** हे पादावनि, संसार एव घर्मो निदाघस्तेन जनितासु मरीचिकासु सुखत्वेन भ्राम्यमाणेषु दुःखेष्वेव मृगतृष्णासु। 'मृगतृष्णा मरीचिका' इत्यमरः। व्यामुह्यतोऽनुकूलत्वेन भ्राम्यतो मदीयान् विषयीन्द्रियाण्येव बालमृगान् हरिणशावान्। 'हृषीकं विषयीन्द्रियम्' इत्यमरः। 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः।' इति चामरः। बालत्वमतिचापलसूचनाय। प्रगुणैरुत्कृष्टैः प्रकृष्टतन्तुकृतैश्च। 'मौर्वीसूदव्रकोदरतन्त्वावृत्तीन्द्रियेषु रूपादौ। सत्त्वादौ संध्यादौ त्यागादावप्रधानके च गुणे॥' इति नानार्थरत्नमाला। प्रकृष्टवर्णैश्च रत्नमरीचीनां जालैः समूहैरेव आनायैराकृष्य क्रोडीकृत्य केशवस्य कान्तौ दिव्यमङ्गलप्रभायामेव सिन्धौ समुद्रे नद्यां वा विश्रमय आप्यायय। रूपकमलंकारः प्रेयश्च॥

अन्तर्निधाय मुनिभिः परिरक्ष्यमाणा-
मात्मीयरश्मिगुणितां मणिपादरक्षे ।
रङ्गेशपादकमलप्रतिपन्नमुद्रां
नीवीमवैमि भवतीं निगमान्तवाचाम् ॥ २९ ॥

**अन्तरिति** । हे मणिपादरक्षे, मुनिभिर्योगिभिरन्तः हृदये गृहगर्भादिगुप्तप्रदेशे च निधाय निक्षिप्य परिरक्ष्यमाणां दुर्बुद्धिभिरनभिभाव्यतया चिन्त्यमानाम्, अन्यत्र दस्युभ्यस्त्रायमाणां च आत्मीयै रश्मिभिः किरणैर्वृद्धिभिश्च गुणितां बहुलीकृतां रङ्गेशस्य पादकमले प्रतिपन्ना प्राप्ता मुद्रा मर्यादा यस्यास्ताम्, अन्यत्र पद्माकाररेखायुक्तां च निगमान्तवाचां वेदान्तवाक्यानाम्, अन्यत्र निगमेषु नगरेष्वन्ता मनोहरा वाचो येषाम् । चतुरोक्तीनां वणिजामिति यावत् । नीवी मूलधनमवैमि । 'नीवी परिपणो मूलधनम्' इत्यमरः । पादुकां प्रतिपाद्य श्रुतयो हृष्यन्तीति भावः । श्लेषसंकीर्णोत्प्रेक्षालंकारः ॥

रामस्य रङ्गवसतेश्चरणानुषङ्गा-
त्काष्ठां गतां भुवनपावनतां दधाना ।
पादावनि प्रचुररत्नशिलानिबद्धा
संसारसंतरणसेतुरसि प्रजानाम् ॥ ३० ॥

**रामस्येति** । हे पादावनि, रङ्गवसते रामस्य चरणानुषङ्गात् पादाविनाभावात् संचारसंबन्धेन च काष्ठामुत्कृष्टतां गतां प्राप्ताम्, भुवनानां लोकानां पावनतां पापनिवर्तकतां दधाना, अन्यत्र काष्ठां दक्षिणदिशं गतेति विपरिणामः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । भुवनस्य समुद्रजलस्य पावनतां दधाना पोषयन्ती । 'डुधाञ् धारणपोषणयोः' इति धातुः । 'विष्टपं भुवनं जगत्', 'जीवनं भुवनं वनम्' इत्युभयत्राप्यमरः । प्रचुराभिर्भूरिभी रत्नशिलाभिः श्रेष्ठपाषाणैश्च निबद्धा त्वं प्रजानां संसारसंतरणस्य समुद्रसदृशभवोत्तारणस्य सेतुरसि । समुद्रोत्तारस्य नलसेतुरिवासीति भावः । श्लेषालंकारसंकीर्णेयमुत्प्रेक्षा ॥

दिविषन्मुकुटेषु संचरन्त्याः प्रचुरस्ते मणिपादुके प्रकाशः ।
दिवि रङ्गपतेर्महोत्सवार्थे वितता वन्दनमालिकेव भाति ॥ ३१ ॥

**दिविषदिति** । हे मणिपादुके, दिविषदां देवानां मुकुटेषु किरीटेषु संचरन्त्यास्ते प्रचुरो बहुलः प्रकाशः नवरत्नजनितः । रङ्गपतेर्महोत्सवार्थे दिवि आकाशे वितता विस्तृता वन्दनमालिकेव तोरणमालिकेव भाति । वन्दनमालिका चित्रपटशकलविरचिता वेद्या । 'बुधैर्वन्दनमाला तु तोरणं परिकीर्तितम् ।' इति हलायुधः । उत्प्रेक्षा । संभावनायामिवशब्दः ॥

प्रभवन्ति दवीयसां स्वभावात्तव रत्नानि मुकुन्दपादरक्षे ।
अयसामिव हन्त लोहकान्ताः कठिनानां मनसां विकर्षणाय ॥ ३२ ॥

**प्रभवन्तीति** । हे मुकुन्दपादरक्षे, तव रत्नानि दवीयसामत्यन्तदूरवर्तिनाम्, स्वभावात्कठिनानामवशंवदानां मनसां लोहकान्ता अयस्कान्तशिला अयसां लोहभेदानामिव विकर्षणायाकर्षणाय प्रभवन्ति शक्ता भवन्ति । हन्त इति हर्षे । भक्त्यभावेऽपि सौन्दर्यातिशयेन मनांसि सज्जन्त इति भावः । उपमालंकारः ॥

परिपश्यति देवि रङ्गनाथे रहसि त्वं सविधे निविश्य लक्ष्म्याः ।
परिपुष्यसि रत्नधामभिः स्वैरनसूयेव मनोज्ञमङ्गरागम् ॥ ३३ ॥

**परिपश्यतीति** । हे देवि पादुके, रङ्गनाथस्य महिषी अपि गम्यते । 'देवी कृताभिषेकायाम्' इत्यमरः । रहस्येकान्ते रङ्गनाथे परिपश्यति सति सविधे समीपे निविश्य निषद्य स्वैरात्मीयै रत्नानां धामभिः प्रभाभिरनसूयेव अत्रिपत्नीव लक्ष्म्याः, अन्यत्र सीतारूपाया मनोज्ञं हृद्यमङ्गरागमनुलेपनम् । 'अङ्गरागोऽनुलेपनम्' इति हलायुधः । 'रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु ।' इति विश्वः । परिपुष्यसि पोषयसि । अनसूयाङ्गरागार्पणं रामायणे—'इदं दिव्यं परं माल्यं वस्त्रमाभरणानि च । अङ्गरागं च वैदेहि महार्हमनुलेपनम् ॥ मया दत्तमिदं सीते तव गात्राणि शोभयेत् ॥' इति । उपमालंकारः श्लेषानुप्राणितः ॥

तव रत्नकरार्पितं नवीनं परिगृह्य स्थिरमंशुकं मनोज्ञम् ।
जरदंशुकवत्सुखेन देहं कृतिनः केशवपादुके त्यजन्ति ॥ ३४ ॥

**तवेति** । हे केशवपादुके, कृतिनस्तव रत्नानां करैः किरणैरेव हस्तैरर्पितं दत्तं नवीनं नूतनं स्थिरमनेककालवर्ति मनोज्ञमंशुकं स्वशरीरलग्नकिरणमेव वस्त्रं परिगृह्य देहं शरीरं जरदंशुकवत् जीर्णवस्त्रवत् सुखेनाक्लेशेन त्यजन्ति । रूपकसंकीर्णोपमा ॥

अभितो मणिपादुके निबद्धैः कृतसंस्कारविशेषमात्मरत्नैः ।
कुरुते भवती पदं मुरारेः कठिनेऽस्मिन्हृदये निवेशयोग्यम् ॥ ३५ ॥

**अभित इति** । हे मणिपादुके, भवती अभितो निबद्धैः प्रत्युप्तैरात्मरत्नैः कृतसंस्कारविशेषं कृतालंकरणमपूर्वशक्तियुक्तं च मुरारेः पदं कठिने कर्कशे मेऽस्मिन् हृदि चित्ते निवेशयोग्यं निक्षेपार्हं कुरुते । रत्नपरिष्कारवशाद्ध्येयसौन्दर्यायत्तध्यानसौकर्यं लभ्यत इति भावः । भगवच्चरणस्य रत्नशिलासु निक्षेपः कठिनमनःसंचारार्थोऽभ्यासत्वेनोत्प्रेक्ष्यते ॥

निजरत्नकराञ्चलैर्मदीयानपराधानवधूय दत्तसाम्या ।
रमया सहितस्य रङ्गभर्तुः पदयोरर्पय पादुके स्वयं माम् ॥ ३६ ॥

**निजेति** । हे पादुके, त्वं निजानां रत्नानां कराणां किरणानामेव हस्तानामञ्चलैरग्रैर्मदीयानपराधान् वैधर्म्यापादकदुष्कर्मभेदानेव पूर्वावस्थितवर्णभेदानवधूय निमृज्य दत्तसाम्या विश्राणितनिजसाधर्म्या । साधर्म्यमेकवर्णत्वम्, भगवत्कैङ्कर्ययोग्यत्वं च । सा सती रमया श्रिया सहितस्य रङ्गभर्तुः पादयोश्चरणयोर्मां स्वयमर्पय । परिचरणयोग्यं कुर्वित्यर्थः । करेत्यत्र श्लिष्टरूपकम् । अपराधानित्यत्रैकदेशविवर्तिसाम्येत्युपमा, उत्तरार्धे मुक्तेः पर्यायोक्तिः, श्लोकप्रधानतया पर्यायश्चेत्येतेषां यथायथमङ्गाङ्गिभावेन संकरः ॥

रश्मिजालपरिवेषबन्धुरा रङ्गभूमिपतिरत्नपादुके ।
विश्वलोचनविहङ्गहारिणी वागुरेव वितता विराजसे ॥ ३७ ॥

**रश्मीति** । हे रङ्गभूमिपतिरत्नपादुके, रश्मीनां किरणानां जालं समूह एव रज्जुरचितानायस्तस्य परिवेषेण मण्डलेन बन्धुरा मनोज्ञा त्वं विश्वेषां लोचनान्येव विहङ्गाः पक्षिणस्तान् हरतीति तथोक्ता । 'बहुलमाभीक्ष्ण्ये । ३ । २ । ८१ ।' इति णिनिः । वितता विस्तृता वागुरा मृगबन्धिनीव विराजसे । तिर्यङ्मात्रग्रहणसाधने स्थितौ लाक्षणिकौ जालवागुराशब्दौ । उत्प्रेक्षा ॥

मानसाम्बुजविकासहेतुभिः सेविता मणिगणैः प्रभाकरैः ।
पादुके वहसि सद्भिराश्रितां देवि विष्णुपदसंपदं नवाम् ॥ ३८ ॥

**मानसाम्बुजेति** । हे देवि पादुके, मानसस्येवाम्बुजस्य विकासहेतुभिरुल्लासकरैर्मणिगणैरेव प्रभाकरैः सूर्यैः । द्वादशादित्यविवक्षया बहुत्वम् । सेविता त्वं सद्भिः साधुभिरेव नक्षत्रैराश्रितां नवामपूर्वां विष्णुपदसंपदं हरिचरणश्रियमेव प्रकाशश्रियं वहसि । रूपकानुप्राणितः पदार्थनिदर्शनवर्तिरूपकालंकारः । तत्र श्लेषोऽप्यङ्गं भवति ॥

अधिशयितफणीश्वरस्य शौरेः स्वयमधिरूढपदोपधानपार्श्वा ।
मणिवलयजुषा करेण मन्दं स्पृशसि पदावनि पादयोर्युगं तत् ॥ ३९ ॥

**अधिशयितेति** । हे पदावनि, त्वमधिशयितः शयनक्रियया प्रकान्तः । 'अधिशीङ्स्थासां कर्म । १ । ४ । ४६' इति 'शीङ् स्वप्ने' इति धातोरधिकरणस्य कर्मसंज्ञायां कर्मणि क्तः । स फणीश्वरः शेषो येन तस्य शेषशायिनः शौरेः स्वयमधिरूढमात्मनारूढं पदोपधानस्य चरणोपबर्हस्य । 'उपधानं चोपबर्हः' इत्यमरः । पार्श्वं भागो यया सा सती तत्पादयोर्युगं युग्मं मणिवलयं रत्नजालं रत्नकटकं च जुषते सेवत इति तथोक्तेन करेण किरणेनैव हस्तेन मन्दं शनैः स्पृशसि । संवाहयसीत्यर्थः । चरणसंवाहकनायिकात्वव्यक्तेः समासोक्तिः ॥

भवत्यन्ते त्वां प्रणतस्य जन्तोस्तदोकोऽग्रज्वलनं त्वत्प्रकाशैः ।
यतो नाड्या मध्यमया विनिर्यन्गतिं विन्देत्केशवपादरक्षे ॥ ४० ॥

**भवतीति** । हे केशवपादरक्षे, प्रणतस्य प्रणतवतश्चलनपूर्वकाधोदेशसंयोगस्य नमत्यर्थत्वात् 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । ३ । ४ । ७२' इति कर्तरि क्तः । यद्वा नन्तुं प्रक्रान्तवतः 'आदिकर्मणि क्तः कर्तरि वा ।३।४।७१' इत्यादिना क्तः कर्तरि । जन्तोः प्राणिनः त्वत्प्रकाशैस्तव रत्नप्रभाभिस्तदोकः तत्प्रसिद्धमोकः स्थानं हृदयमग्रज्वलनमग्रे ज्वलनं प्रकाशो यस्य तत् भवति । यतोऽग्रज्वलनादोकसः मध्यमया नाड्या सुषुम्नाख्यया धमन्या विनिर्यन् जन्तुः गतिं प्राप्य भूमिं परमं पदं विन्देत् लभेत । तदिति पूर्वेणान्वयः । उत्क्रान्तिकाले भगवत्संकल्पायत्तं हृदयाग्रप्रकाशनं पादुकारत्नप्रकाशजन्यत्वेनोत्प्रेक्ष्यते । 'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारा विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया' इति सूत्रमत्रानुसंधेयम् । त्रिष्टुप्छन्दसि प्रस्तारिको वृत्तभेदः । 'मुरभृत्पादरक्षे' इति पाठे समवृत्तम्, 'केशवपादरक्षे' इति पाठे तु विषममिति विवेकः ॥

अशिथिलपरिणद्धा रश्मिजालैर्मणीनां
दुरधिगमतमं नः पारमारोपयन्ती ।
कमलनयनमाद्यं कर्णधारं दधाना
भवसि भवपयोधेः पादुके पोतपात्री ॥ ४१ ॥

**अशिथिलेति** । हे पादुके, मणीनां रश्मीनां किरणानां जालैः समूहैरशिथिलं दृढं यथा तथा परिणद्धा संबद्धा संयता च नोऽस्मान् दुरधिगमं दुष्प्रापतमं पारं तमसः पारं परमपदमुत्तरकूलं च आरोपयन्ती प्रापयन्ती कमलनयनं भगवन्तमाद्यं कर्णधारं नाविकाग्रगण्यं दधाना त्वं भवपयोधेः संसारसागरस्य पोतपात्री पोतरूपा पात्री । 'यानपात्रं तु पोतोऽब्धिभवे त्रिषु' इत्यमरः । भवसि । सावयवरूपकमलंकारः । स च श्लेषानुप्राणितः ॥

मणिकिरणगणैस्ते कल्पिते गुल्मभेदे
मृगयुरिव कुरङ्गीं त्वां पुरस्कृत्य भव्याम् ।
हरति चरणरक्षे भक्तिपाशावरुद्धं
हृदयहरिणयूथं प्राणिनां रङ्गनाथः ॥ ४२ ॥

**मणीति** । हे चरणरक्षे, ते तव मणिकिरणगणैर्गुल्मभेदे स्तम्बविशेषे । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । कक्ष इत्यर्थः । कल्पिते सति । किरणसमूहस्य गुल्मवत्प्रतीतेरिति भावः । मृगयुर्व्याधो भव्यां योग्यां कुरङ्गीं हरिणीमिव रङ्गनाथो भव्यां शुभाम् । 'भव्यं सत्ये शुभे चाथ भेद्यवद्योग्यभाविनोः ।' इति विश्वः । त्वां पुरस्कृत्य अग्रेकृत्वा प्राणिनां भक्तिभिरेव पाशैरवरूढं हृदयानामेव हरिणानां मृगानां यूथं कुलं हरति

गृह्णाति । लोके गुल्मच्छन्नः कांचिच्छिक्षितां मृगीमग्रे प्रदर्श्य अन्यान्मृगान् जालादिभिर्गृह्णाति तद्वदिति भावः । रूपकानुप्राणितोपमालंकारः ॥

परिचितपदमूला पादुके रङ्गिणस्त्वं
प्रभवति भुजमध्ये कौस्तुभोऽयं तथापि ।
भवति भृशमधस्तात्तेजसा भव्यभूम्ना
शलभितदुरितानां तावकानां मणीनाम् ॥ ४३ ॥

**परिचितेति** । हे रङ्गिणः पादुके, त्वं परिचितपदमूला भगवत्पादाधःप्रदेशे नित्यासक्तेत्यर्थः । अयं कौस्तुभस्तु भुजमध्ये भगवदुरःस्थले प्रभवति प्रौढतया प्रकाशते । तथापि कौस्तुभो भव्यभूम्ना शोभनवैपुल्यवता तेजसा प्रभया शलभितानि पतङ्गकीटवद्भस्मीकृतानि दुरितानि दुष्कर्माणि यैस्तेषां तावकानां त्वदीयानां मणीनां गृहमधस्ताद्भवति । ऊर्ध्वस्थितस्याधःस्थितिरिति विरोधः । दुरितनिवर्तकतयोत्कृष्टेभ्यः पादुकारत्नेभ्यो वक्षःस्थलस्थितस्य कौस्तुभस्य दुरितानिवर्तकतया निकर्ष इति परिहारः । विरोधाभासालंकारः ॥

कल्पश्रेणीदिनपरिणतौ जन्तुजाले प्रसुप्ते
विष्वग्व्याप्ते जगति तमसा पादुके तादृशेन ।
स्त्यानालोकैस्तव मणिगणैर्वासगेहप्रदीपाः
संपद्यन्ते सह कमलया जागरूकस्य यूनः ॥ ४४ ॥

**कल्पश्रेणीति** । हे पादुके, कल्पश्रेण्या ब्रह्मदिनसमूहस्यैव । 'कल्पः स्यात्प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ ।' इति विश्वः । दिनस्य भगवद्दिनस्य । कल्पौ तु तौ नृणामिति ब्रह्मदिनरात्र्योर्मनुष्यापेक्षया कल्पद्वयत्वमुक्तममरेण । परिणतौ सायंसमये । ब्रह्मप्रलय इत्यर्थः । जन्तुजाले प्राणिसमूहे प्रसुप्ते । नष्ट इत्यर्थः । तादृशेन 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।', 'तम आसीत्तमसा गूढमग्रे प्रकेतम्' इति श्रुतिस्मृतिप्रसिद्धेन तमसान्धकारेण जगति विष्वक् समन्तात् व्याप्ते आक्रान्ते सति कमलया श्रिया सह जागरूकस्य जागरणशीलस्य यूनः श्रीरङ्गनाथस्य स्त्यानाः सान्द्रा आलोका दीप्तयो येषां तैस्तव मणिगणैर्वासगेहस्य शय्यागृहस्य प्रदीपा दीपाः संपद्यन्ते । रत्नालोका एव दीपा भवन्तीत्यर्थः । उत्प्रेक्षा ॥

श्रीरङ्गेन्दोश्चरणकमलद्वन्द्वसेवावलेपा-
दारूढायां त्वयि मखभुजामानतान्मौलिभागान् ।
तेषां चूडामणिभिरनघैस्तावकानां मणीनां
केशाकेशि प्रभवति मिथस्त्रासलेशोज्झितानाम् ॥ ४५

**श्रीरङ्गेन्दोरिति** । हे पादुके, इत्युपस्कार्यम् । त्वयि श्रीरङ्गेन्दोश्चरणकमलद्वन्द्वस्य सेवया प्रत्यासत्त्या जनितादवलेपात् गर्वात् मखभुजां देवानामानतान् नम्रान् मौलिभागान् किरीटदेशान् आरूढायां सत्यां त्रासो रत्नदोषः भयं च । 'त्रासो भीर्मणिदोषयोः' इति विश्वः । तस्य लेशेन लवेनोज्झितानां त्यक्तानां तावकानां मणीनामनघैर्मनोज्ञैः, अव्यसनैरित्यपि गम्यते । तेषां देवानां चूडामणिभिः शिरोरत्नैः सह केशाकेशि केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं केशाकेशि प्रभवति जायते । केशाकेशीत्यत्र 'तत्र तेनेदमिति सरूपे २ । २ । २७ ॥' इति बहुव्रीहिः । 'इच् कर्मव्यतिहारे । ५ । ४ । १२७' इति इच् प्रत्ययः । तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वम् । लोके केनचिदवलिप्तेन प्रभौ न्यक्कृते पार्श्वस्थानां परिजनानां कलहो भवतीति भावः । देवचूडारोहस्यावलेपमूलत्वं परस्पररत्नकिरणसंसर्गस्य कचाकचित्वं चोत्प्रेक्ष्यते ॥

त्वद्रत्नोपलरश्मिपञ्जरतनुत्राणं स्थिरं बिभ्रतो
मातर्माधवपादुके न तु पुनर्हस्तैः स्पृशन्त्याकुलैः ।
दूरोत्सिक्तदुराढ्यजिह्मगबिलद्वाःपालकोपानल-
ज्वालामित्रकठोरवेत्रलतिकादत्तार्धचन्द्रं वपुः ॥ ४६ ॥

**त्वद्रत्नेति** । हे मातर्माधवपादुके, स्थिरं तव रत्नोपलानां रश्मयः पञ्जरमिव कुलाय इव । 'कुलायस्तु पञ्जरं नीडमस्त्रियाम्' इति वैजयन्ती । त एव तनुत्राणं कञ्चुकं बिभ्रतः पुरुषा दूरं भृशमुत्सिक्तानां गर्वितानां दुराढ्यानां दुष्टधनिकानामेव जिह्मगानां सर्पाणां बिलद्वारः गृहद्वारस्यैव वल्मीकरन्ध्रमुखस्य । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । पालाना रक्षिणामेव रक्षकसर्पाणां कोपानलज्वालाया वह्निज्वालासदृशकोपस्य मित्रेण सदृश्यां कठोरया वेत्रलतिकया कशया दत्तोऽर्धचन्द्रो गलहस्तो न्यक्कार इति यावत् । 'गलहस्ते बाणभेदेऽप्यर्धचन्द्रः' इति विश्वः । वपुः पुनः भूयः आकुलैः संभ्रान्तैर्हस्तैर्न तु स्पृशन्ति । तादृशशरीरसंस्पर्शेऽपि जुगुप्सन्ते । तादृशन्यक्कारसंसर्गस्तु दूरत एव । कञ्चुकाढ्यशरीरे वेत्रलताप्रहारादिन्यक्कारस्यानवकाशादिति भावः । मुक्ता भवन्तीति भावः । पर्यायोक्तिरलंकारो रूपकसंकीर्णः ॥

संवर्तोदितसूर्यकोटिसदृशीं रङ्गेशपादावनि
प्रस्तौषि प्रतियत्नरत्ननिकरज्योतिश्छटामुद्भटाम् ।
तन्मन्ये तदनन्यसूरिपरिषन्मध्येनिवेशाय न-
स्तादृग्वासरसेऽपि भेत्तुमचिरादस्माकमन्धं तमः ॥ ४७ ॥

**संवर्तेति** । हे रङ्गेशपादावनि, त्वं संवर्ते प्रलये उदितायाः सूर्यकोट्याः अनेकेषां रवीणां सदृशीमुद्भटामधिकां प्रतियत्नरत्नानां परिष्कारमणीनां निकरस्य ज्योतिश्छटां तेजःसमूहं प्रस्तौषि प्रारभसे इति यत्तत् ज्योतिरुत्पादनं नोऽस्मान् तादृशेऽतिहेयतया

प्रसिद्धे वक्तुमपि जुगुप्सिते वासे प्रकृतिमण्डलवासे रसेऽपि प्रीत्यामपि त्वयि विषयेऽनन्यानामाश्रयणीयान्तररहितानाम् । त्वदेकान्तिनामिति यावत् । सूरीणामनन्तशठकोपादीनां परिषदो गोष्ठ्या मध्येऽचिरात् झटिति निवेशायावस्थापनाय अन्धं तमो गाढान्धकारम् । अज्ञानमिति यावत् । भेत्तुं नाशयितुमिति मन्ये । उत्प्रेक्षा ॥

सलीलं विन्यस्य त्वयि चरणरक्षे निजपदं
यदृच्छानिष्क्रान्ते विहरति हरौ रङ्गरसिके ।
दिशासौधानष्टौ जनयसि तदा निर्भरमिल-
न्मणिच्छायामायाघनघटितकेतुव्यतिकरान् ॥ ४८ ॥

**सलीलमिति** । हे चरणरक्षे, यदृच्छानिष्क्रान्ते रङ्गरसिके हरौ त्वयि निजपदं विन्यस्य सलीलं यथा तथा विहरति सति अष्टौ दिश एव सौधास्तान् निर्भरमधिकं मिलन्तीनां सान्द्रीभवन्तीनां मणिच्छायानां रत्नप्रभाणां मायया व्याजेन घनं सान्द्रं यथा तथा घटितानां निबद्धानां केतूनां ध्वजानां व्यतिकराः संपर्का येषां तान् जनयसि । तथा करोषीत्यर्थः । उत्सवेषून्नतगृहशिखरेषु ध्वजानां स्थापनं कुर्वन्तीति भावः ॥

महार्घैराश्लिष्टा मणिभिरवधूतद्युमणिभिः
कथंचित्क्षेत्रज्ञैरधिगतपदामम्ब भवतीम् ।
मुकुन्देन त्रातुं पदकमलमूले विनिहितां
निराबाधां मन्ये निधिमनघवाचां निरवधिम् ॥ ४९ ॥

**महार्घैरिति** । हे अम्ब पादुके, महार्घैर्बहुमूल्यैरवधूता निराकृता द्युमणयः सूर्या यैस्तैर्मणिभिराश्लिष्टां संबद्धां क्षेत्रज्ञैः पुरुषैः देशविशेषाभिज्ञैश्च कथंचित् यत्नेनाधिगतं ज्ञानं पदं स्वरूपं स्थानं च यस्यास्ताम् । मुकुन्देन (कर्त्रा) अन्यत्र मुकुन्दसंज्ञकेन निधिना साकम् । सहार्थे तृतीया । त्रातुं पदं निधिं चेति शेषः । पदकमलयोर्मूलेऽधस्तात् चिह्नभूतजलजस्याधस्तात् विनिहितां निक्षिप्ताम्, अत एव निराधारां भवतीमनघवाचां वेदानां कल्याणोक्तीनां पुरुषाणां च निरवधिमक्षयं निधिं शेवधिं मन्ये । श्लेषानुप्राणितेयमुत्प्रेक्षा ॥

तापत्रयं निरुन्धे पचति कषायान्विशोषयति पङ्कम् ।
तेजस्त्रितयमिदं ते शङ्के रङ्गेन्द्रपादुके तेजः ॥ ५० ॥

**तापेति** । हे रङ्गेन्द्रपादुके, ते तव तेजः प्रभा तापत्रयमाध्यात्मिकाधिदैविकाधिभौतिकरूपम्, अन्यत्र वसन्तग्रीष्मशरद्रूपऋतुत्रयसंबन्धि सौरालोकजनितशरीरतापं निरुन्धे । नाशयतीत्यर्थः । एतेन चन्द्रत्वमुक्तम् । कषायान् पापानि व्याधिं च पचति

नाशयति परिणमयति वेत्यर्थः । एतेनाङ्गित्वमुक्तम् । पङ्कं पापं कर्दमं च विशोषयति नाशयति । एतेन सूर्यत्वमुक्तम् । अत इदं तेजः ( कर्म ) तेजस्त्रितयं चन्द्राग्निसूर्यरूपं शङ्के जानामि । उत्प्रेक्षालंकारः श्लेषसंकीर्णः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सव्याख्याने रत्नसामान्यपद्धतिः पञ्चदशी ॥

---

बहुरत्नपद्धतिः षोडशी ॥

अथास्यां संकीर्णवर्णयुक्तानि[रत्नानि] समालम्ब्य पादुकां वर्णयति—

मुखबाहूरुपादेभ्यो वर्णान्सृष्टवतः प्रभोः ।
प्रपद्ये पादुकां रत्नैर्व्यक्तवर्णव्यवस्थितिम् ॥ १ ॥

**मुखेति** । मुखं च बाहुश्च ऊरुश्च पादश्च मुखबाहूरुपादम् । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावे सति एकशेषः । तथाच 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' इति भगवतो मुखादिबाहुल्यश्रुतिः । तेभ्यो वर्णान् ब्राह्मणादीन् सृष्टवत उत्पादितवतः । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतेः । प्रभोः श्रीरङ्गनाथस्य रत्नैर्मुक्तापद्मरागादिभिर्व्यक्ता प्रकटा वर्णव्यवस्थितिः शुक्लादिरूपासंकरो यस्यास्ताम् । स्वस्वधर्मनिष्ठब्राह्मणादियुक्तामित्यपि गम्यते । पादुकां प्रपद्ये । समालंकारः । भगवतः पादुकायाश्च व्यवस्थितवर्णत्वेनानुरूप्यावगमात् । स च श्लेषमूलकः । वाच्यं तु प्रेयः तस्य च परिकरोऽङ्गम् ॥

मणिभिः सितरक्तपीतकृष्णैर्भवती काञ्चनपादुके विचित्रा ।
युगभेदविकल्पितं मुरारेर्युगपद्दर्शयतीव वर्णभेदम् ॥ २ ॥

**मणिभिरिति** । हे काञ्चनपादुके, भवती सितैः रक्तैः, पीतैः हरिद्रावर्णैः कृष्णैश्च । 'वर्णो वर्णेन' इति समासः । मणिभिर्मौक्तिकपुष्परागपद्मरागेन्द्रनीलैर्विचित्रा कर्बुरा सती युगभेदेन कृतयुगादिना विकल्पितं व्यवस्थितं मुरारेर्वर्णभेदं रूपविशेषं युगपदेकदा दर्शयतीवेत्युत्प्रेक्षा । युगपदित्युक्तेर्व्यतिरेको गम्यते । 'आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥' इति सभापर्वणि ॥

नवरत्नविचित्रिता मुरारेः पदयोस्त्वं मणिपादुके विभासि ।
नवखण्डवती वसुंधरेव प्रणयाज्जन्मभुवं समाश्रयन्ती ॥ ३ ॥

**नवरत्नेति** । हे मणिपादुके, नवरत्नैर्मौक्तिकपद्मरागमरकतेन्द्रनीलवैडूर्यगोमेदकपुष्परागप्रवालहेमभिर्विचित्रिता कर्बुरिता त्वं मुरारेः पदयोर्नवखण्डवती भारतकिंपुरुषहरिवर्षेलावृतभद्राश्वकेतुमालरम्यहिरण्मयकुरुसंज्ञकखण्डवती प्रणयादुत्पत्तिजातप्रीत्या जन्मभुवं

जन्मस्थानं भगवच्चरणम् । 'पद्भ्यां भूमिः' इति श्रुतेः । समाश्रयन्ती वसुंधरा भूमिरिव विभासि । उत्प्रेक्षा ॥

सहसा विनिवेद्य सापराधांस्त्वदधीनस्वपदे मुकुन्दपादे ।
अरुणोपलसक्तमौक्तिकश्रीः स्मयमानेव विभासि पादुके त्वम् ॥ ४ ॥

**सहसेति** । हे पादुके, अरुणोपलेषु पद्मरागेषु सक्ता मौक्तिकानां श्रीः प्रभा यस्याः सा त्वं सापराधान् सागसः पुरुषान् त्वदधीनं स्वपदं स्वरक्षणं स्वव्यवसायश्च यस्य तस्मिन् मुकुन्दपादे भगवच्चरणे सहसा झटिति आर्द्रापराधानेवेत्यर्थः । विनिवेद्य एतान् रक्षेति विज्ञाप्य स्मयमानेव ईषद्धसन्तीव विभासि । स्वरक्षणीये विषये इमं रक्षेति विनयोक्तिर्हासास्पदमिति भावः । पादुकायामप्रस्तुतलक्ष्मीवृत्तान्तप्रतीतेः समासोक्तिसंकीर्णोत्प्रेक्षा ॥

बहुरत्नसमुद्भवं मयूखं तव मन्ये मणिपादुके मुरारेः ।
चरणोपगतं मयूरपिच्छं मकुटारोहणसाहसं प्रमार्ष्टुम् ॥ ५ ॥

**बह्विति** । हे मणिपादुके, तव बहुरत्नसमुद्भवं मयूखं किरणं मुरारेः कृष्णस्य बालक्रीडाकाले मकुटारोहणं शिरस्त्राधिरोहणमेव साहसं धृष्टकृत्यमपराधमिति यावत् । प्रमार्ष्टुमपनेतुं चरणोपगतं पादपतितं मयूरपिच्छं शिखिबर्हं मन्ये । उत्प्रेक्षालंकारः ॥

प्रभया हरिनीलमौक्तिकानां विकसन्त्या दिशसीव पादुके त्वम् ।
मधुभिच्चरणारविन्दलक्ष्म्याः स्रजमिन्दीवरपुण्डरीकबद्धाम् ॥ ६ ॥

**प्रभयेति** । हे पादुके, त्वं विकसन्त्या प्रसरन्त्या हरिनीलमौक्तिकानां प्रभया मधुभिदश्चरणारविन्दयोर्लक्ष्म्याः शोभाया एव देवताया इन्दीवरैर्नीलोत्पलैः पुण्डरीकैः सिताम्भोजैश्च । 'पुण्डरीकं सिताम्भोजम्' इत्यमरः । बद्धां स्रजं मालां दिशसीव । उत्प्रेक्षालंकारः ॥

तव माधवपादुके मणीनां प्रभया देवि सितासितारुणानाम् ।
वहते गिरिशस्य मौलिगङ्गा कुमुदेन्दीवरपद्मकाननानि ॥ ७ ॥

**तवेति** । हे देवि माधवपादुके, सिता असिता नीला अरुणाश्च तेषां तव मणीनां प्रभया गिरिशस्य रुद्रस्य मौलिगङ्गा शिरःस्थिता गङ्गा कुमुदानां सितोत्पलानाम्, इन्दीवराणां नीलोत्पलानां, पद्मानां कोकनदानां काननानि समूहान् वहते । गम्योत्प्रेक्षालंकारः । तेन च शिवनिरन्तरप्रणामत्वं व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

पृथग्विधानां द्युतिभिर्मणीनां त्वां पादुके लोहितशुक्लकृष्णाम् ।
विहारहेतोरिह रङ्गभर्तुः पादानुषक्तां प्रकृतिं प्रतीमः ॥ ८ ॥

**पृथगिति** । हे पादुके, पृथग्विधानां नानाप्रकाराणां मणीनां द्युतिभिर्लोहितां शुक्लां कृष्णां च । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुत्युक्तसत्त्वरजस्तमोगुणयुक्तां च त्वां

रङ्गभर्तुरिह विहारहेतोः लीलार्थं पादे चरणे । 'पादोऽस्य विश्वा भूतानि' इत्युक्तेः एकदेशे च अनुषक्तां संबद्धां प्रकृतिं प्रधानम् । 'प्रधानं प्रकृतिः स्त्रियाम्' इत्यमरः । प्रतीमः । उत्प्रेक्षालंकारः ॥

तमालनीलद्युतिमिन्द्रनीलैर्मुक्तानुविद्धां मणिपादुके त्वाम् ।
अवैमि रङ्गेश्वरकान्तिसिन्धोर्वेलामविश्रान्तगतागतार्हाम् ॥ ९ ॥

**तमालनीलेति** । इन्द्रनीलैस्तमालवत्तापिच्छवत् तमालैश्च नीला द्युतिर्यस्यास्तां मुक्ताभिरनुविद्धां त्वां रङ्गेश्वरस्य कान्तेः प्रभाया एव सिन्धोः समुद्रस्य अविश्रान्तं संततं गतागतयोर्भगवद्गमनागमनयोः, अन्यत्र अधिकगमनागमनयोरर्हां योग्यां वेलां तटभुवमवैमि । अधिकगमनागमनयोग्यसमुद्रतीरे तमालाश्च मौक्तिकानि च सन्ति, अविश्रमेण संचारश्च भवतीति भावः । उत्प्रेक्षालंकारः ॥

अवैमि रङ्गेश्वरपादुकाभ्यामकालकाल्यं विभवं विधातुम् ।
वज्रेन्द्रनीलव्यपदेशदृश्यं बन्दीकृतं नूनमहस्त्रियामम् ॥ १० ॥

**अवैमीति** । रङ्गेश्वरस्य पादुकाभ्यां (कर्तृभ्यां) अकालकाल्यं कालविधेयभिन्नम् । 'न कालस्तत्र वै प्रभुः' इति स्मृतेः । विभवं मुक्तिरूपैमश्वर्यं विधातुम् । स्वसेवकानामिति शेषः । वज्रेन्द्रनीलयोर्हीरहरिनीलयोर्व्यपदेशेन व्याजेन दृश्यं प्रेक्ष्यं अहस्त्रियाममहश्च त्रियामा च तयोर्द्वन्द्वैकवद्भावः । बन्दीकृतं नूनम् । बलान्निरुद्धमित्यर्थः । नूनमित्युत्प्रेक्षा कैतवापह्नवगर्भा ॥

पदस्य गोप्त्री भवती मुरारेर्मणिस्पृशा मौक्तिकरत्नभासा ।
अन्तर्दृशं साञ्जनया मुनीनामनक्ति कर्पूरशलाकयेव ॥ ११ ॥

**पदस्येति** । हे पादुके इत्यध्याहार्यम् । मुरारेः पदस्य व्यवसायस्येत्यपि गम्यते । गोप्त्री भवती मणिस्पृशा हरिनीलसंसर्गवत्या । सामान्यशब्दोऽत्र विशेषपरः । मौक्तिकानामेव रत्नानां भासा साञ्जनया नयनकज्जलवत्या कर्पूरशलाकया घनसारलिप्ततूलिकया मुनीनामन्तर्दृशं मनोरूपं नयनमनक्ति अञ्जनयुक्तं करोति । इवेत्युत्प्रेक्षा । सैरंध्रिका कर्पूरयुक्तया तूलिकया अञ्जनवत्या चक्षुरनक्तीति भावः। पदगोप्त्रीति विशेषणस्य ज्ञानरक्षणाभिप्रायगर्भत्वात्परिकरः । अन्तर्दृशमिति रूपकातिशयोक्तिरित्यलम् ॥

मुक्तामयूखप्रकरैः सुभद्रा कृष्णा महेन्द्रोपलरश्मिजालैः ।
मान्या मुरारेर्मणिपादुके त्वं विहारयुक्ता विजयं वृणोषि ॥ १२ ॥

**मुक्तेति** । हे मणिपादुके, मुक्तानां मयूखानां मौक्तिककिरणानां प्रकरैः सुभद्रा अतिभव्या, सुभद्राख्या कृष्णस्य स्वसापि गम्यते । महेन्द्रोपलानां रश्मिजालैः कृष्णा नीला । द्रौपदीत्यपि गम्यते। मुरारेर्मान्या बहुमन्तव्या त्वं विहारेण संचारेण विलासेन वा

युक्ता सती विजयमुत्कर्षम्, अन्यत्र अर्जुनं च वृणोषि उपादत्से । पतित्वेन वरयसीत्यपि गम्यते । विशेषणमहिम्ना सुभद्राद्रौपदीविवाहप्रतीतेः समासोक्तिरलंकारः ॥

विचित्रवर्णां मणिपादुके त्वां छन्दोमयीं सामनिबद्धगीतिम् ।
मुनीन्द्रजुष्टां द्विपदां मुरारेः प्रत्यायिकां कांचिदृचं प्रतीमः ॥ १३ ॥

**विचित्रेति** । हे मणिपादुके, विचित्रवर्णां कर्बुररूपाम्, अन्यत्र नानाविधाक्षराम् । छन्दोमयीं स्वैरसंचारप्रचुराम्, अन्यत्र त्रिष्टुबादिवृत्तात्मिकाम् । 'छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः ।' इति विश्वः । सामनि सान्त्ववादनविषये निबद्धा शरणागतैः पद्यादिरूपेण निबद्धा गीतिर्गानं यस्यास्ताम्, अन्यत्र साम्ना स्वरविशेषेण निबद्धगीर्तिं गानयुक्ताम् । मुनीन्द्रैर्योगीश्वरैर्जुष्टां सेविताम्, अन्यत्र विश्वामित्रादिऋषिभिर्युक्ताम् । द्विपदां भगवच्चरणयुगलयुक्ताम्, अन्यत्र द्वौ पादौ यस्यास्ताम् । 'टाबृचि १।४।९ ॥' इति टाप् । पादः पत् । त्वां मुरारेः प्रत्यायिकां बोधिकां कांचित् ऋचं ऋग्मन्त्रं प्रतीमः । इत्युत्प्रेक्षा श्लेषानुप्राणिता ॥

प्रसेदुषी गोत्रभिदः प्रणामैः पुष्णासि रङ्गेश्वरपादुके त्वम् ।
मणिप्रभासंचलनापदेशात्प्रायस्तदर्हाणि शरासनानि ॥ १४ ॥

**प्रसेदुषीति** । हे रङ्गेश्वरपादुके, त्वं गोत्रभिद इन्द्रस्य प्रणामैः प्रसेदुषी प्रसन्ना सती मणीनामिन्द्रनीलमरकतपद्मरागमौक्तिकानां प्रभासंवलनस्य किरणसंसर्गस्यापदेशाद्व्याजात् तदर्हाणीन्द्रस्य योग्यानि शरासनानि धनूंषि पुष्णासि पोषयसि । प्राय इत्युत्प्रेक्षा । नानारत्नप्रभासंसर्ग इन्द्रचापवद्वर्तत इति भावः ॥

शोणाश्मनां नवहरिन्मणिरश्मिभिन्नं
बालातपं बलिविमर्दनपादरक्षे ।
श्यामीकृतं शुकशकुन्तगणप्रवेशा-
च्छङ्के सतां किमपि शालिवनं विपक्वम् ॥ १५ ॥

**शोणेति** । हे बलिविमर्दनस्य पादरक्षे, तव हरिन्मणीनां मरकतानां रश्मिभिर्भिन्नं संसृष्टम्, शोणाश्मनां पद्मरागाणां बालातपमक्षीणकिरणसमूहं (कर्म) शुकशकुन्तानां कीरपक्षिणां गणस्य प्रवेशात् श्यामीकृतं विपक्वं परिणतं किमपि विलक्षणं सतां शालिवनं व्रीहिभेदसमूहं शङ्के मन्ये ॥

संभिद्यमानमणिमौक्तिकविद्रुमश्रीः
सैरंध्रिकेव भवती मणिपादरक्षे ।
प्रस्तौति रङ्गनृपतेश्चरणारविन्दे
कस्तूरिकाघुसृणचन्दनपङ्कचर्चाम् ॥ १६ ॥

**संभिद्यमानेति** । हे मणिपादरक्षे, संभिद्यमाना परस्परसंवन्धवती मणीनां नीलानां विद्रुमाणां प्रवालानां मौक्तिकानां च श्रीः प्रभा यस्याः सा भवती सैरंध्रिकेव अलंकारशिल्पकारिकेव रङ्गनृपतेश्चरणारविन्दे कस्तूरिकाया मृगमदस्य घुसृणस्य कुङ्कुमस्य चन्दनस्य च । पङ्कशब्दः प्रत्येकमन्वेति । पङ्केन चर्चा स्थासकं प्रस्तौति प्रारभते । वर्णसाम्येन नीलादिरत्नकिरणेषु मृगमदादिलेपनत्वमुत्प्रेक्ष्यते । मण्यादीनां कस्तूरिकादीनां च यथासंख्यमन्वयाभिप्रायेणोद्देशाद्यथासंख्यमलंकारः । उत्प्रेक्षाङ्गम् ॥

आतन्वतीमसुरमर्दनपादरक्षे
शुद्धान्तपक्ष्मलदृशां मदनेन्द्रजालम् ।
वैहारिकीं विविधरत्नमयूखलक्ष्या-
न्मन्ये समुद्वहसि मोहनपिच्छिकां त्वम् ॥ १७ ॥

**आतन्वतीमिति** । हे असुरमर्दनपादरक्षे, त्वं विविधानां रत्नमयूखानां लक्ष्याद्व्याजात् शुद्धान्तपक्ष्मलदृशां भगवदन्तःपुरवनितानां मदननिर्मितमिन्द्रजालं व्यामोहककलाविशेषमातन्वतीम् । भगवद्विषयप्रेमावेशजनिकामित्यर्थः । वैहारिकीं विहारप्रयोजनाम् । 'प्रयोजनम् । ५।१।१०९।' इति ठक् । प्राग्घितीयष्ठञ् । मोहनपिच्छिकां चित्तव्यामोहनार्थां पिच्छिकां मयूरबर्हगुच्छं समुद्वहसि । मन्य इत्युत्प्रेक्षा । ऐन्द्रजालिकः प्रभूणां विनोदनाय करधृतपिच्छिकाभ्रमणेन सामाजिकान् व्यामोहयतीति भावः ॥

रत्नैर्व्यवस्थितसितासितशोणवर्णै-
रालोकवद्भिरजहच्छ्रुतिसंनिकर्षैः ।
द्रष्टुं मुकुन्दचरणावनिमेषदृश्यौ
संदृश्यसे जननि संभृतनेत्रपङ्क्तिः ॥ १८ ॥

**रत्नैरिति** । हे जननि मुकुन्दचरणावनि, व्यवस्थिता असंकीर्णतया स्थिताः सितासितशोणवर्णाः शुक्लकृष्णरक्तरूपाणि येषां तैः, अन्यत्र गोलकनीनिकाप्रान्ताद्यवयवेषु व्यवस्थितशुक्लकृष्णरक्तादिरूपैः आलोकवद्भिः द्योतयुक्तैः, अन्यत्र दर्शनक्रियोद्युक्तैः अजहत् अत्यजन् श्रुतेर्वेदस्य संनिकर्षः प्रतिपाद्यप्रतिपादकत्वसंबन्धो येषां तैः, अन्यत्र आकर्णमायतै रत्नैरनिमेषं यथा स्यात्तथा अनिमेषैर्देवैश्च दृश्यौ प्रेक्ष्यौ ज्ञेयौ च मुकुन्दचरणौ द्रष्टुं संभृता संपादिता नेत्रपङ्क्तिर्नयनश्रेणी यस्याः सा सती संदृश्यसे प्रेक्ष्यसे । बहुविलोचनैरनिमेषतया प्रेक्षणीयं भगवच्चरणारविन्दसौन्दर्यं द्रष्टुं पादुका तादृशसंनिवेशविशिष्टैर्नानारत्नैश्चक्षूंषि संपादितवतीति भावः । उत्प्रेक्षालंकारः श्लेषानुप्राणितः ॥

गारुत्मतान्तरितमौक्तिकपङ्क्तिलक्ष्या-
द्दूर्वामधूकरचितं दुरितोपशान्त्यै ।

मातः स्वयं वहसि मुग्धधियां प्रजानां
मङ्गल्यमाल्यमिव माधवपादुके त्वम् ॥ १९ ॥

**गारुत्मतेति ।** हे माधवपादुके, त्वं गारुत्मतैर्मरकतैरन्तरितानां पर्यायतो व्यवस्थितानां मौक्तिकानां पङ्क्तेः श्रेण्या लक्ष्याद्व्याजात् मुग्धधियामविवेकिनां प्रजानां दुरितस्यानिष्टस्योपशान्तये निवर्तनाय दूर्वया मधूकेन गुडपुष्पाख्यतरुपुष्पेण च रचितं निबद्धं मङ्गल्यमाल्यं शुभार्थमालां स्वयं वहसीव । दुरितोपशमनाय प्रजाभिवहनीयस्याचारप्राप्तदूर्वामिश्रमधूकमालावहनस्य पादुकया करणं करुणयेति भावः । उत्प्रेक्षालंकारः ॥

रङ्गाधिराजपदरक्षिणि राजते ते
वज्रोपसंघटितमौक्तिकविद्रुमश्रीः ।
सक्ता चिरं मनसि संयमिनां निवासा-
त्सूर्येन्दुवह्निमयमण्डलवासनेव ॥ २० ॥

**रङ्गेति ।** हे रङ्गाधिराजपदरक्षिणि, ते तव वज्रेण हीरमणिना उपसंघटिता समीपतः प्रान्ते श्लिष्टा मौक्तिकान्तर्गतविद्रुमाणां श्रीः कान्तिः संयमिनां योगिनां मनसि चिरं निवासादनेककालावस्थानात् सक्ता लग्ना सूर्येन्दुवह्निमयस्य रविसोमाग्निसदृशहृदयावयवात्मकस्य मण्डलस्य वासनेव अनुस्मृतिरिव राजते । मैत्रायणीयोपनिषदि हृदयमधिकृत्यात्रोदाहरन्ति—'रविमध्ये स्थितः सोमस्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥' इति । अधस्ताच्च ततः परमाकाशस्तत्र हि सौरसौम्याग्नेयसात्त्विकानि मण्डलानि । उत्प्रेक्षा ॥

आसक्तवासवशिलाशकलास्त्वदीयाः
पद्मासहायपदरक्षिणि पद्मरागाः ।
प्रत्यक्षयन्ति कमपि भ्रमराभिलीनं
पादारविन्दमकरन्दरसप्रवाहम् ॥ २१ ॥

**आसक्तेति ।** हे पद्मासहायपदरक्षिणि, आसक्ताः समीपश्लिष्टाः पद्मरागाः कमपि विलक्षणं भ्रमरैर्भृङ्गैरभितो लीनं परिचुम्बितं पादयोरेवारविन्दयोः मकरन्दरसानां मधुद्रवाणां प्रवाहं प्रत्यक्षयन्ति प्रदर्शयन्ति । उत्प्रेक्षा ॥

अन्तःपुराणि समयेष्वभिगन्तुमेका
रङ्गेशितुर्व्रजपयसीव पदावनि त्वम् ।
मुक्तांशुजालमिलनाद्रुचिरैः प्रवालै-
र्बिम्बाधरं स्मितविशेषयुतं प्रियाणाम् ॥ २२ ॥

**अन्तःपुराणीति** । हे पदावनि, त्वमेका जनान्तररहिता मुक्तानामंशुजालैर्मिलनात्संश्लेषात् । मिलनशब्दे लघूपधगुणाभावः संज्ञापूर्वकस्य विधेरनित्यत्वात् । 'परिमिलनमप्राप्य हरितम्' इति प्रयोगोऽपि । रुचिरैर्वर्णोत्कर्षेण शोभमानैः प्रवालैर्विद्रुमैः समयेषु रतियोग्यकालेषु रङ्गेशितू रङ्गभर्तुरन्तःपुराण्यभिगन्तुं प्राप्तुं स्मितविशेषैर्मन्दहासभेदैर्युतं प्रियाणां लक्ष्म्यादीनां बिम्बाधरं बिम्बफलसदृशमधरं ज्ञपयसि स्मरयसि । 'ज्ञपमिच्च'इति चौरादिको धातुर्ज्ञापनार्थः । मित्त्वादुपधाह्रस्वः । मौक्तिकप्रभायुक्तविद्रुमस्य स्मितयुक्ताधरस्मारकत्वं वर्णसाम्यादिति भावः । इवेत्युत्प्रेक्षा ॥

रङ्गेश्वरस्य मृगयोश्चरणावसक्तां
रक्षःकपीन्द्रमकुटेषु निवेशयोग्याम् ।
मन्ये पदावनि निबद्धविचित्ररत्नां
मायामृगस्य रचितामिव चर्मणा त्वाम् ॥ २३ ॥

**रङ्गेश्वरस्येति** । हे पदावनि, निबद्धानि विचित्राणि नानावर्णानि रत्नानि यस्यास्तां त्वां मृगयोर्मारीचमृगहर्तू रङ्गेश्वरस्य चरणावसक्तां रक्षःकपीन्द्राणां विभीषणसुग्रीवादीनां मकुटेषु किरीटेषु निवेशयोग्यां निक्षेपणार्हां मायामृगस्य मारीचस्य चर्मणा अजिनेन रचितां पादुकामिव मन्ये । अरण्यगमनकाले रामस्य पादुकाविरहेऽपि विभीषणसुग्रीवादिमौलिषु निधानाय मारीचमृगचर्मणा रचितान्या पादुकेयमित्युत्प्रेक्ष्यते । मारीचमृगशरीरं नानारत्नवर्णमिति रामायणे ॥

बध्नासि रङ्गपतिविभ्रमपादुके त्वं
मायाकिरातमकुटेन च बर्हमालाम् ।
आकृष्टवासवधनुःशकलैर्मणीना-
मन्योन्यसंघटितकर्बुरितैर्मयूखैः ॥ २४ ॥

**बध्नासीति** । हे रङ्गपतिविभ्रमपादुके, त्वमाकृष्टान्यपहृतानि वासवधनुष इन्द्रचापस्य शकलानि खण्डानि यैः । इन्द्रचापशकलसदृशवर्णैरित्यर्थः । अन्योन्यं परस्परं संघटनेन कर्बुरितैर्विचित्रितैर्मणीनां मयूखैर्मायाकिरातस्य किरातवेषधारिणः शम्भोर्मकुटे नवां बर्हमालां मयूरपिच्छपुञ्जं बध्नासि । उत्प्रेक्षा ॥

अन्योन्यबन्धुरहरिन्मणिपद्मरागा
रङ्गेश्वरस्य चरणावनि राजसे त्वम् ।
आत्मोपमानविभवाच्चरितार्थयन्ती
शैलात्मजागिरिशयोरिव मूर्तिमेकाम् ॥ २५ ॥

**अन्योन्येति** । हे रङ्गेश्वरस्य चरणावनि, अन्योन्यं वन्धुरा वर्णोत्कर्षेण शोभमाना हरिन्मणयो मरकतानि पद्मरागाश्च यस्याः सा त्वमेकामभिन्नां शैलात्मजागिरिशयोः पार्वतीशिवयोर्मूर्तिमर्धनारीश्वरशरीरमात्मना पादुकयोपमानविभवात्सादृश्यसंपत्त्या चरितार्थयन्ती कृतार्थीकुर्वाणेव राजसे । पाद्मे ज्ञानपादे तृतीयाध्याये—'समुत्पन्नः सदा रुद्रो युगान्ताग्निसमप्रभः ।' इति रुद्रस्य गौरत्वात्पार्वत्याः श्यामत्वाच्च वर्णसाम्यमिति भावः । उत्प्रेक्षालंकारः ॥

तापत्रयप्रशमनाय समाश्रितानां
संदर्शितारुणसितासितरत्नपङ्क्तीः ।
पुष्णासि रङ्गनृपतेर्मणिपादुके त्वं
प्रायः सरोजकुमुदोत्पलकाननानि ॥ २६ ॥

**तापेति** । हे रङ्गनृपतेर्मणिपादुके, त्वं संदर्शिता अरुणानां सितानामसितानां च रत्नानां पङ्क्तीर्यया सा सती समाश्रितानां तापत्रयप्रशमनाय सरोजानां कुमुदानामुत्पलानां च काननानि पुष्णासि । प्राय इत्युत्प्रेक्षा । तापातुरास्तापप्रशमनाय शरीरेषु पद्मादिदलानि विदधते तथा पादुका विश्वसेवकानां शैत्योपचारं करोतीति भावः । तापत्रयस्य पद्मादिवनत्रयमित्यानुरूप्यात्समालंकारः । स्फुरति मणीनां पद्मादीनां च ········ यथासंख्यालंकारोऽपि ॥

देहद्युतिं प्रकटयन्ति महेन्द्रनीलाः
शौरेः पदाम्बुजरुचिं तव पद्मरागाः ।
अन्योन्यलब्धपरभागतया त्वमीषा-
माभाति कान्तिरपरा मणिपादरक्षे ॥ २७ ॥

**देहेति** । हे मणिपादरक्षे, तव महेन्द्रनीलाः पद्मरागाः शौरेर्देहद्युतिं प्रकटयन्ति पदाम्बुजरुचिं प्रकटयन्ति । पादस्यारुणत्वादिति भावः । अमीषामिन्द्रनीलपद्मरागाणामन्योन्यं लब्धपरभागतया प्राप्तवर्णोत्कर्षेण तु तवापरा शौरिकान्तिविलक्षणा तत्कान्तिः प्रभाति । उपमासंसृष्टभेदकातिशयोक्त्यलंकारः । 'भेदकातिशयोक्तिः स्यात्तस्यैवान्यत्ववर्णनम् ।' इति लक्षणम् । अनया च निरुपमत्वं व्यज्यते ॥

आकीर्णमौक्तिकहरिन्मणिपद्मरागा-
मम्भोजलोचनपदावनि भावये त्वाम् ।
तत्पादविश्रमजुषां श्रुतिसुन्दरीणां
वर्णोपधानमिव मौलिनिवेशयोग्यम् ॥ २८ ॥

**आकीर्णेति**। हे अम्भोजलोचनपदावनि, आकीर्णाः परस्परं संश्लिष्टा मौक्तिकहरिन्मणिपद्मरागा यस्यास्तां त्वां तस्य श्रीरङ्गिणः पादे विश्रमं श्रमापनोदनं जुषां तत्र शयानानामिति गम्यते । श्रुतीनामेव सुन्दरीणां मौलिनिवेशस्य शिरोनिधानस्य योग्यं वर्णोपधानं चित्रपटनिर्मितमुपबर्हमिव भावये मन्ये । उत्प्रेक्षा । सा च रूपकानुप्राणिता ॥

आसन्नवासवशिलारुचिरास्त्वदीयाः
पद्मेक्षणस्य पदरक्षिणि पद्मरागाः ।
संभावयन्ति समये क्वचिदुष्णभानोः
सद्यःप्रसूतयमुनासुभगामवस्थाम् ॥ २९ ॥

**आसन्नेति**। हे पद्मेक्षणस्य पदरक्षिणि, आसन्नाभिर्वासवशिलाभिरिन्द्रनीलै रुचिरास्त्वदीयाः पद्मरागाः क्वचित्समये सद्यःप्रसूतयोत्पादितया यमुनया कालिन्द्या सुभगां रम्यामुष्णभानोरवस्थां दशां संभावयन्ति बहु मानयन्ति । तत्तुल्या इति यावत् । उपमाभेदः ॥

मुक्तेन्द्रनीलमणिभिर्विहिते भवत्याः
पङ्क्ती दृढे परमपूरुषपादरक्षे ।
मन्ये समाश्रितजनस्य तवानुभावा-
दुन्मोचिते सुकृतदुष्कृतशृङ्खले द्वे ॥ ३० ॥

**मुक्तेति**। हे परमपूरुषपादरक्षे, भवत्या मुक्तामणिभिरिन्द्रनीलमणिभिश्च विहिते दृढे पङ्क्ती तवानुभावात्प्रभावादुन्मोचिते ततोऽवमुच्य स्वाङ्गीकृते द्वे समाश्रितजनस्य सुकृतदुष्कृते पुण्यपाप एव शृङ्खले निगले(डे) मन्ये इत्युत्प्रेक्षा । पुण्यपापयोः सत्त्वतमोगुणमूलत्वेन सितनीलरूपवत्त्वमध्यवसाय वर्णतो मौक्तिकनीलरत्नसाम्यमुक्तम् ॥

उद्गीर्णगाढतमसो हरिनीलभङ्गा-
स्ताराविशेषरुचिराणि च मौक्तिकानि ।
त्वत्संगमात्सरसिजेक्षणपादरक्षे
संयोजयन्ति निशया भवमौलिचन्द्रम् ॥ ३१ ॥

**उद्गीर्णेति**। हे सरसिजेक्षणपादरक्षे, उद्गीर्णानि बहिर्विस्तारितानि गाढतमांसि नीलकान्तय एव यैस्ते हरिनीलभङ्गा नीलमणिखण्डानि ताराविशेषवन्नक्षत्रभेदवद्रुचिराणि मौक्तिकानि च सेवासमये त्वत्समागमात् भवमौलिचन्द्रं निशया संयोजयन्ति । मौक्तिकसंसृष्टा नीलकान्तिर्नक्षत्रयुक्तरात्रितया वर्णतोऽध्यवसीयते । गम्योत्प्रेक्षा ॥

विष्णोः पदेन घटिता मणिपादुके त्वं
व्यक्तेन्द्रनीलरुचिरुज्ज्वलमौक्तिकश्रीः

कालेषु दीव्यसि मरुद्भिरुदीर्यमाणा
कादम्बिनीव परितः स्फुटवारिबिन्दुः ॥ ३२ ॥

**विष्णोरिति** । हे मणिपादुके, विष्णोः पदेन हरिचरणेनाकाशेन च घटिता युक्ता व्यक्ता इन्द्रनीलस्य रुचिर्यस्याः सा उज्ज्वला मौक्तिकानां श्रीर्यस्याः सा त्वं कालेषु भगवतः संचारकालेषु वर्षास्वपि मरुद्भिर्देवैर्वायुभिश्चोदीर्यमाणा स्तूयमाना प्रेर्यमाणा च परितः सर्वतः स्फुटा वारिबिन्दवो यस्याः सा कादम्बिनीव मेघमालेव 'कादम्बिनी मेघमाला' इत्यमरः । दीव्यसि क्रीडसि । संचारोऽपि गम्यते । श्लेषानुप्राणितेयमुपमा ॥

भासा स्वया भगवतो मणिपादरक्षे
मुक्ताञ्चिता मरकतोपलपद्धतिस्ते ।
नित्यावगाहनसहं सकलस्य जन्तो-
र्गङ्गाञ्चितं जनयसीव समुद्रमन्यम् ॥ ३३ ॥

**भासेति** । हे भगवतो मणिपादरक्षे, मुक्ताभिरञ्चिता ते तव मरकतोपलपद्धतिः सकलस्य जन्तोर्नित्यावगाहनसहं नित्यसेवायोग्यं नित्यस्नानक्षममित्यपि । समुद्रस्य सर्वदा न स्नानयोग्यत्वम्, अपर्वणि निषेधादिति व्यतिरेकोऽपि । गङ्गयाञ्चितमन्यं विलक्षणं समुद्रं जनयति सृजतीव । मौक्तिकनीलरत्नसंसर्गो गङ्गासागरसंबन्धवद्भातीति भावः । उत्प्रेक्षालंकारः ॥

सूर्यात्मजा हरिशिलामणिपङ्क्तिलक्ष्या-
त्त्वां नित्यमाश्रितवती मणिपादरक्षे ।
आदौ जनार्दनपदे क्षणमात्रलग्ना-
मासन्नमौक्तिकरुचा हसतीव गङ्गाम् ॥ ३४ ॥

**सूर्येति** । हे मणिपादरक्षे, सूर्यात्मजा यमुना हरिशिलामणिपङ्क्तिलक्ष्यादिन्द्रशिलामणिपङ्क्तिव्याजात् त्वां नित्यमाश्रितवती सती आदौ पूर्वं जनार्दनपदे क्षणमात्रं लग्नां सक्तां गङ्गामासन्नानां मौक्तिकानां रुचा दीप्त्या हसतीव परिहसतीव । सापह्नवोत्प्रेक्षा ॥

पर्यन्तसंघटितभासुरपद्मरागाः
पद्मोदरभ्रमरकान्तिमुषस्त्वदीयाः ।
त्वत्संश्रयेण चरणावनि शक्रनीलाः
पीताम्बरेण पुरुषेण तुलां लभन्ते ॥ ३५ ॥

**पर्यन्तेति** । हे चरणावनि, पर्यन्तेषु प्रान्तप्रदेशेषु संघटिता भासुराः पद्मरागा येषां ते पद्मोदरे सरसिजमध्ये विद्यमानानां भ्रमराणां कान्तिं मुष्णन्त्यपहरन्तीति तथो-

कास्तत्सदृशा इति यावत् । शक्रनीलास्त्वत्संश्रयेण त्वामाश्रितेन पीताम्बरवता पुरुषेण भगवता तुलां साम्यं लभन्ते । भगवतो नीलत्वात्पीताम्बरस्य रक्तत्वादिति भावः । रूपकसंसृष्टोपमालंकारः ॥

शङ्के पदावनि सदा परिचिन्वती त्वं
रङ्गेशितुश्चरणपङ्कजसौकुमार्यम् ।
अग्रे महोभिररुणोपलमौक्तिकानां
प्राज्यां विनिक्षिपसि पल्लवपुष्पपङ्क्तिम् ॥ ३६ ॥

**शङ्के इति ।** हे रङ्गेशितुः पदावनि, चरणपङ्कजयोः सौकुमार्यं मार्दवं परिचिन्वती बहुशोऽनुभवन्ती अरुणोपलानां पद्मरागाणां मौक्तिकानां च महोभिः प्राज्यां बहुलां पल्लवानां पुष्पाणां च पङ्क्तिमग्रे भगवतः पुरतः सदा भगवत्संचारकालेषु विनिक्षिपस्यास्तृणोषि । भगवच्चरणारविन्दस्य कठिनस्थलविक्षेपासहत्वादिति भावः । पल्लवपुष्पास्तरणत्वं पद्मरागमौक्तिककिरणेषूत्प्रेक्ष्यते ॥

निर्गच्छता चरणरक्षिणि नीयमाना
रङ्गेश्वरेण भवती रणदीक्षितेन ।
सूते सुरारिसुभटीनयनाम्बुजानां
ज्यौत्स्नीं निशामिव सितासितरत्नभासा ॥ ३७ ॥

**निर्गच्छतेति ।** हे चरणरक्षिणि, रणदीक्षितेन युद्धोद्युक्तेन निर्गच्छता रङ्गेश्वरेण नीयमाना भवती सितासितरत्नानां मौक्तिकेन्द्रनीलानां भासा सुरारिसुभटीनां दैत्ययोधवनितानां नयनानामेवाम्बुजानां ज्यौत्स्नीं ज्योत्स्नावतीं चन्द्रिकायुक्ताम् । ( ज्योत्स्नादिभ्य उपसंख्यानम् ) इति मत्वर्थेऽण् । निशां रात्रिं सूत इव जनयतीव । रात्र्याः श्यामवर्णत्वाच्चन्द्रिकायाः सितत्वादिति भावः । चन्द्रिकाया निशायाः संबन्धेन पद्मसंशोषणवत् पादुकामणिकिरणादर्शनेनासुरस्त्रीनयनसंशोषणादिति भावः ॥

मरकतहरिताङ्गी मेदुरा पद्मरागै-
रभिनवजलबिन्दुव्यक्तमुक्ताफलश्रीः ।
कलयसि पदरक्षे कृष्णमेघप्रचारा-
त्कनकसरिदनूपे शाद्वलं सेन्द्रगोपम् ॥ ३८ ॥

**मरकतति ।** हे पदरक्षे, मरकतैर्हरितं श्याममङ्गं यस्याः सा पद्मरागैर्मेदुरा सान्द्राभिनवजलबिन्दुवत् व्यक्ता प्रकाशमाना मुक्ताफलानां श्रीर्यस्याः सा । अभिनवजलबिन्दुभिर्व्यक्तमुक्ताफलश्रीरित्यपि । त्वं कृष्णस्यैव कालमेघस्य प्रचारात्कनकहरितः कावेर्या अनूपे कच्छभूमौ । 'जलप्रायमनूपं स्यात्कच्छः' इत्यमरः । सेन्द्रगोपमिन्द्रगोपाख्यकीट

युक्तं शाद्वलं बालतृणहरितप्रदेशम्। 'शाद्वलः शादहरिते' इत्यमरः। कलयसि। मेघप्रचारकाले कच्छेषु नवजलबिन्दव इन्द्रगोपकीटा बालतृणानि च संभवन्तीति भावः। रूपकानुप्राणितेयमुत्प्रेक्षा॥

विरचितसुरसिन्धोर्विष्णुपादारविन्दा-
त्समधिकमनुभावं पादुके दर्शयन्ती।
बलभिदुपलमुक्तापद्मरागप्रकाशैः
परिणमयसि नूनं प्राप्तशोणं प्रयागम्॥ ३९॥

**विरचितेति**। हे पादुके, विरचितोत्पादिता सुरसिन्धुर्गङ्गा येन तस्मात् विष्णुपादारविन्दादपि समधिकमनुभावं प्रभावं दर्शयन्ती त्वं बलभिदुपलानामिन्द्रनीलानाम्, मुक्तानाम्, पद्मरागाणां च प्रकाशैः प्रभाभिः प्राप्तः शोणो नदीभेदो येन तम्। शोणनदीसंसृष्टमित्यर्थः। प्रयागं गङ्गायमुनासंगमं परिणमयस्युत्पादयसि। नूनमित्युत्प्रेक्षा। भगवत्पदं गङ्गामात्रमजनयत्, पादुका तु सितासितरक्तवर्णाभिः प्रभाभिर्गङ्गायमुनाशोणाः सृजतीत्यनुभावाधिक्यम्॥

विविधमणिमयूखैर्व्यक्तपक्षां विचित्रै-
र्जलनिधिदुहितुस्त्वां वेद्मि लीलाचकोरीम्।
अनिशमविकलानां पादुके रङ्गभर्तु-
श्चरणनखमणीनां चन्द्रिकामापिबन्तीम्॥ ४०॥

**विविधेति**। हे पादुके, विचित्रैर्नानावर्णैर्विविधमणीनां मयूखैर्व्यक्तौ प्रकाशमानौ पक्षौ पार्श्वौ गरुतौ च यस्यास्तां त्वामविकलानां पूर्णानां रङ्गभर्तुश्चरणयोर्मुक्तामणिसदृशनखानाम्। चन्द्राणामिति गम्यते। चन्द्रिकां प्रभामनिशमापिबन्तीमास्वादयन्तीं जलनिधिदुहितुर्लक्ष्म्या लीलार्थां चकोरीं चन्द्रिकाप्रियाख्यपक्षिभेदस्त्रियं वेद्मीत्युत्प्रेक्षा॥

चरणकमलसेवासङ्गिनां रङ्गभर्तु-
र्विनयगरिमभाजां वर्जितैरातपत्रैः।
पुनरपि पदरक्षे पुष्यसि त्वं सुराणां
बहुविधमणिकान्त्या बर्हिपिच्छातपत्रम्॥ ४१॥

**चरणेति**। हे पदरक्षे, त्वं विनयगरिमभाजां प्रश्रयातिशयवतां वर्जितैरातपत्रैश्छत्रैरुपलक्षितानां रङ्गभर्तुश्चरणकमलयोः सेवायामासङ्गिनां तत्पराणां सुराणां बहुविधानां मणीनां कान्त्या बर्हिपिच्छातपत्रं मयूरकलापनिर्मितातपत्रं पुनरपि पुष्यसि। उत्प्रेक्षा॥

मरकतरुचिपत्रा मौक्तिकस्मेरपुष्पा
स्फुटकिसलयशोभा भासुरैः पद्मरागैः।

फलमखिलमुदारा रङ्गनाथस्य पादे
कलयति भवती नः कल्पवल्लीव काचित् ॥ ४२ ॥

**मरकतेति** । हे पादुके, इत्यध्याहार्यम् । मरकतरुचिरेव पत्रं पर्णं यस्याः सा भासुरैः पद्मरागैः स्फुटा किसलयशोभा यस्याः सा उदारा महती दात्रीव भवती काचित्कल्पवल्लीव रङ्गनाथस्य वृक्षस्येत्यपि गम्यते । पादे चरणे । मूल इत्यपि गम्यते । नोऽस्माकमभीप्सितमखिलं फलं प्रयोजनं च कलयति जनयति । रूपकानुप्राणितोत्प्रेक्षा ॥

बहुमणिरुचिराङ्गीं रङ्गनाथस्य पादा-
न्निजशिरसि गिरीशो निक्षिपन्पादुके त्वाम् ।
सरति ललितमन्तर्लालनीयं भवान्या-
स्तरलघनकलापं षण्मुखस्यौपवाह्यम् ॥ ४३ ॥

**बह्विति** । हे पादुके, गिरीशो रुद्रो बहुभिर्मणिभी रुचिरमङ्गं यस्यास्तां त्वां रङ्गनाथस्य पादादादाय निजशिरसि निक्षिपन्सन् ललितं मनोज्ञं भवान्या अन्तः अन्तःपुरे लालनीयं तरलाश्चञ्चला घना निबिडाश्च कलापा बर्हाणि यस्य तं षण्मुखस्य सुब्रह्मण्यस्यौपवाह्यं वाहनं मयूरं स्मरसि । स्मृतिरलंकारः ॥

विविधमणिसमुत्थैर्व्यक्तमापादयन्ती
दिवसरजनिसंध्यायौगपद्यं मयूखैः ।
उपनिषदुपगीतां पादुके रङ्गिणस्त्वा-
मघटितघटनार्हां शक्तिमालोचयामः ॥ ४४ ॥

**विविधेति** । हे पादुके, विविधमणिसमुत्थैर्मौक्तिकेन्द्रनीलपद्मरागनिर्गतैर्मयूखैर्दिवसस्य रजन्या रात्र्याश्च, एतयोः सन्ध्यायाश्च यौगपद्यमेककालमेलनं व्यक्तं यथा तथा आपादयन्तीं कुर्वाणां त्वामुपनिषदा 'परास्य शक्तिर्विविधैव श्रूयते' इत्यनयोपगीतामघटितानां वस्तूनां घटने संयोजनेऽर्हां योग्यां रङ्गिणः शक्तिं सामर्थ्यमालोचयामश्चिन्तयामः । उत्प्रेक्षा ॥

सकलमिदमवन्ध्ये शासने स्थापयन्ती
मुरमथनपदस्था मौक्तिकादिमकारा ।
प्रकटयसि विशुद्धश्यामरक्तादिरूपान्
फलपरिणतिभेदान्प्राणिनां पादुके त्वम् ॥ ४५ ॥

**सकलमिति** । हे पादुके, मुरमथनस्य पादे चरणे तेन दत्तेऽधिकारस्थाने च तिष्ठतीति तथोक्ता सकलमिदं जगदवन्ध्येऽमोघे शासने आज्ञायां स्थापयन्ती नियमयन्ती मौक्ति-

क्ादिप्रकारा मौक्तिकनीलपद्मरागयुक्तशरीरा त्वं धर्मदेवतेति व्यज्यते । विशुद्धं दुःखाश्लिष्टममलं सितं च श्यामं नीलं तमोमूलत्वेन कृष्णवर्णं च । दुःखरूपमिति यावत् । रक्तं लोहितं रजोमूलत्वेन रक्तवर्णं दुःखाश्लिष्टमिति यावत् । एवमादिरूपं शुक्लादिस्वरूपं च येषां तान् । प्राणिनां फलानां परिणतिभेदान् परिपाकविशेषान् मोक्षस्वर्गानिरयात्मकान् प्रकटयसि । धर्माधिष्ठाता भगवान् सात्त्विकराजसतामसधर्मनिष्ठानां मोक्षस्वर्गनरकादिफलानि प्रयच्छतीति भावः । फलेषु सत्त्वादिमूलत्वेन सितत्वादिव्यवहारः । समासोक्तिसंकीर्णेयमुत्प्रेक्षा ॥

प्रदिशति मुदमक्ष्णोः पादुके देहभाजां
शतमखमणिपङ्क्तिः शार्ङ्गिणस्तुल्यवर्णा ।
परिसरनिहितैस्ते पद्मरागप्रदीपै-
र्घनतरपरिणद्धा कज्जलश्यामिकेव ॥ ४६ ॥

**प्रदिशतीति** । हे पादुके, शार्ङ्गिणस्तुल्यवर्णा सदृशरूपा ते तव शतमखमणीनामिन्द्रनीलानां पङ्क्तिः परिसरे समीपे निहितैः पद्मरागैरेव प्रदीपैर्घनतरमतिसान्द्रं यथा तथा परिणद्धा जनिता कज्जलस्याञ्जनस्य श्यामिकेव नीलिमेव । मनोज्ञादित्वाद्भावे वुञ् । देहभाजां प्राणिनामक्ष्णोः । प्रत्येकापेक्षया द्वित्वम् । मुदं हर्षं प्रदिशति ददाति । उपमासंसृष्टोत्प्रेक्षा ॥

कलयापि हानिरहितेषु सदा
तव मौक्तिकेषु परितः प्रथते ।
उपरज्यमानहरिणाङ्कतुला
हरिपादुके हरिशिलामहसा ॥ ४७ ॥

**कलयेति** । हे हरिपादुके, सदा कलयापि लेशेनापि हानिरहितेष्वपकर्षरहितेषु पूर्णेषु तव मौक्तिकेषु हरिशिलाया इन्द्रनीलस्य महसोपरज्यमानस्य राहुणा गृह्यमाणस्य हरिणाङ्कस्य चन्द्रस्य तुला साम्यं परितः सर्वमौक्तिकेष्वपि प्रथते । इन्द्रनीलसंनिकृष्टेषु मौक्तिकेषु राहुग्रस्तचन्द्रसाम्यमुच्यत इत्युपमालंकारः ॥

मरकतपत्त्रला रुचिरविद्रुमपल्लविता
पृथुतरमौक्तिकस्तबकिता निगमैः सुरभिः ।
उपवनदेवतेव चरणावनि रङ्गपते-
रभिलषतो विहारमधिगम्य पदं स्पृशसि ॥ ४८ ॥

**मरकतेति** । हे चरणावनि, मरकतैः पत्त्रला पत्त्रयुक्ता । सिध्मादित्वाल्लच् । रुचिरैर्विद्रुमैः पल्लविता संजातपल्लवा । तारकादित्वादितच् । पृथुतरैर्मौक्तिकैः स्तबकिता संजा-

तगुच्छा । 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । निगमैर्वेदैः सुरभिः सौरभवती त्वमुपवनस्योद्यानस्य देवतेव विहारमुद्यानं क्रीडामभिलषतो रङ्गपतेः पदमभिगम्यागत्य स्पृशसि । पादुका भगवन्तमुपवनविहारार्थमाह्वयितुमागतोद्यानदेवतेवेत्युत्प्रेक्ष्यते । तत्र च रूपकमङ्गम् ॥

सदोत्तुङ्गे रङ्गक्षितिरमणपादप्रणयिनि
त्वदालोके तत्तन्मणिकिरणसंभेदकलुषे ।
प्रतिस्रोतोवृत्त्या प्रथितरुचिभेदं न सहते
नवाम्भःस्वाच्छन्द्यं नमदमरकोटीरमकरः ॥ ४९ ॥

**सदेति** । हे रङ्गक्षितिरमणस्य पादप्रणयिनि, नमताममराणां कोटीरेषु किरीटेषु विद्यमानो मकरः प्रतिमारूपो मत्स्यविशेषः स एव जीवन्मकरः सदोत्तुङ्गे उत्कृष्टे उन्नतप्रदेशवर्तिनि च तत्तन्मणीनां पादुकानिष्ठमौक्तिकपद्मरागादिरत्नानां संभेदेन संसर्गेण कलुषे शवले कपिले च त्वदालोके तवोद्द्योते । प्रवाह इत्यपि गम्यते । नवानां नूतनानामम्भसां स्वाच्छन्द्यं स्वैरगमनं (कर्म) प्रथितः प्रख्यातो रुचीनां मकररत्नकिरणानां भेदो विशेषो यस्मिन् कर्मणि तद्यथा भवति तथा, अन्यत्र प्रथितः प्रख्यातो रुचिभेदो रसभेदो यस्मिन् कर्मणि तद्यथा तथा । प्रतिस्रोतसोऽभिमुखप्रवाहस्य वृत्त्या व्यापारेण । प्रतिप्रवाह इवेत्यर्थः । न सहते न क्षमते । रुणद्धीवेत्यर्थः । मकरो नवीनजलप्रवाहेऽभिमुखतया गच्छन् तं रुणद्धि तथा प्रतिमामकरोऽपीति भावः । रूपकानुप्राणितोत्प्रेक्षालंकारः ॥

जनयसि पदावनि त्वं मुक्ताशोणमणिशक्रनीलरुचा ।
नखरुचिसंततिरुचिरां नन्दकनिस्त्रिंशसंपदं शौरेः ॥ ५० ॥

**जनयसीति** । हे पदावनि, त्वं मुक्तानां मौक्तिकानां शोणमणीनां पद्मरागाणां शक्रनीलानामिन्द्रनीलानां च रुचा प्रभया शौरेः नखानां रुचिसंतत्या किरणश्रेण्या रुचिरां नन्दकाख्यस्य निस्त्रिंशस्य । कनकमयत्सरुमत इत्यपि गम्यते । अन्यथा पद्मरागवर्णानन्वयात्। यद्वा नखकान्तेः श्वेतरक्तोभयवर्णात्मकपाटलरूपत्वान्मुक्ताशोणाश्मनोरुपादानम् । संपदं शोभां जनयसि । गम्योत्प्रेक्षा ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे बहुरत्नपद्धतिः षोडशी ।

---

पद्मरागपद्धतिः सप्तदशी ।

अथास्यां पद्धत्यां पद्मरागरत्नमालालंकृतां पादुकां वर्णयति—

प्रपद्ये रङ्गनाथस्य पादुकां पद्मरागिणीम् ।
पदैकनियतां तस्य पद्मवासामिवापराम् ॥ १ ॥

**प्रपद्य इति ।** पद्मरागिणीं पद्मरागयुक्ताम्, अन्यत्र पद्मे सरसिजे रागिणीं धार्यत्वेन स्थानत्वेन च स्नेहयुक्तां तस्य श्रीरङ्गनाथस्य पदे एकस्मिन् नियतां नित्यं वर्तमानाम् । प्रसिद्धायास्तु वक्षःस्थलवृत्तित्वेन पदनैरन्तर्यं नास्तीति भावः । पदैकनियतामिति शिवभागवतादिवत्समासः । अपरामन्यां पद्मवासां लक्ष्मीमिव स्थितां रङ्गनाथस्य पादुकां प्रपद्ये । श्लेषानुप्राणितेयमुत्प्रेक्षा । प्रेयोऽलंकारोऽङ्गम् ॥

अतिवाङ्मनसं विचिन्त्य शौरेः पदरक्षे पदपद्मसौकुमार्यम् ।
परिपुष्यसि पद्मरागभासा पदवीमाहितपल्लवामिव त्वम् ॥ २ ॥

**अतिवाङ्मनसमिति ।** हे पदरक्षे, त्वं शौरेः पदपद्मयोः सौकुमार्यं मार्दवमतिवाङ्मसं वाचो मनसश्चागोचरं विचिन्त्य पद्मरागाणां भासा पदवीं भगवतः संचारमार्गमाहितानि निक्षिप्तानि पल्लवानि यस्यां तां परिपुष्यसीव । तथा करोषीवेत्यर्थः । पूर्वं पुष्पसंवलितास्तरणत्वमुक्तम्, इदानीं केवलपल्लवास्तरणत्वमुत्प्रेक्ष्यत इति विशेषः ॥

पदपल्लवसङ्गिभिः प्रदीप्तैरधिकोल्लासिभिरम्ब पद्मरागैः ।
अनले शयनं क्वचिन्मुरारेरविसंवादयसीव पादुके त्वम् ॥ ३ ॥

**पदेति ।** हे अम्ब पादुके, त्वं पदपल्लवयोः सङ्गिभिः सक्तैः, अतएवाधिकमुल्लसन्ति प्रभाद्वारा प्रसरन्तीति तथोक्तैः पद्मरागैर्मुरारेः क्वचित् क्वाप्यनलेऽग्नौ शयनमविसंवादयसीव यथार्थीकरोषीव । शास्त्रीयमग्नौ शयनं प्रत्यक्षतया दर्शयसीवेत्युत्प्रेक्षा । भगवच्छास्त्रे पौष्करे । 'युगान्तेषु च संहारं यः करोति च सर्वदा । शङ्कराख्यो महारुद्रः प्रादुर्भावान्तरं हि तत् ॥ देवस्यानलशायोवैं सर्वायुःसंस्थितस्य वा ॥' इति ॥

विवृणोति रङ्गपतिरत्नपादुके त्वयि पद्मरागमणिपद्धतिः शुभा ।
निबिडोरुसंघटनपीडनक्षरन्मधुकैटभक्षतजपङ्कवासनाम् ॥ ४ ॥

**विवृणोतीति ।** हे रङ्गपतिरत्नपादुके, त्वयि (अधिकरणे) शुभा पद्मरागमणिपद्धतिः पद्मरागपङ्क्तिः निबिडं दृढं यथा भवति तथोर्वोः संघटनेन जनितेन पीडनेन संमर्देनेन क्षरतः स्रवतो मधुकैटभयोरसुरयोः क्षतजपङ्कस्य रक्तकर्दमस्य वासनामनुवृत्तिं विवृणोति व्याख्याति । भगवतोरुभ्यां मधुकैटभवधे क्रियमाणे ततः स्रस्तं रक्तं पादुकायां पतितमिदानीमपि वर्तत एवेत्युत्प्रेक्षा ॥

प्रतियन्ति रङ्गपतिपादुके जनास्तव पद्मरागमणिरश्मिसंततिम् ।
अभिजग्मुषां त्वदनुभावखण्डितादघसंचयाद्विगलितामसृक्छटाम् ५

**प्रतियन्तीति ।** हे रङ्गपतिपादुके, जनास्तव पद्मरागमणीनां रश्मिसंततिं तवानुभावेन खण्डिताद्दलितादभिजग्मुषां त्वां शरणागतानामघसंचयात्पापसमूहात् । अघसंज्ञासुरादिति च गम्यते । विगलितां क्षरितामसृक्छटां शोणितधारां प्रतियन्ति जानन्ति । इत्युत्प्रेक्षा ॥

पश्यन्ति रङ्गेश्वरपादुके त्वां पौराङ्गनास्पर्शितरागबन्धाम् ।
शृङ्गारयोनेर्ज्वलनस्य दीप्तैरङ्गारजालैरिव पद्मरागैः ॥ ६ ॥

**पश्यन्तीति** । हे रङ्गेश्वरपादुके, पौराङ्गनाः श्रीरङ्गनगरनार्यस्त्वां शृङ्गारयोनेः कामस्य । 'कामः शम्बरसूदनो मधुसखः शृङ्गारयोनिः स्मृतः ।' इति हलायुधः । तस्यैव ज्वलनस्याग्नेर्दीप्तैरङ्गारजालैरग्नियुक्तकाष्ठखण्डैरिव स्थितैः पद्मरागैः स्पर्शितो दत्तो रागबन्धो रक्तिमयोगोऽनुरागबन्धश्च यस्यास्तां पश्यन्ति तथोत्प्रेक्षन्ते । पद्मरागेषु मदनाङ्गारत्वमुत्प्रेक्ष्यते । तत्र च श्लेषाङ्गम् ॥

अवैमि दोषापगमस्य हेतुं तमोऽपहां संभृतपद्मरागाम् ।
अशेषवन्द्यां मणिपादुके त्वां रङ्गेशसूर्योदयपूर्वसंध्याम् ॥ ७ ॥

**अवैमीति** । हे मणिपादुके, दोषाणां रागद्वेषादीनामपगमस्य नाशस्य हेतुम्, अन्यत्र रात्रेरपगमहेतुं तमः शोकमन्धकारं चापहन्तीति तथोक्ताम् । 'तमोऽन्धकारे स्वर्भानौ तमः शोके गुणान्तरे ।' इति विश्वः । 'अपे क्लेशतमसोः ३।२।५० ॥' इति डः । संभृताः पद्मरागा यस्यास्ताम्, अन्यत्र संभृताः पद्मेषु रागा विकासजनितमध्यशोणिमानो यया ताम् । अशेषवन्द्यां त्वां रङ्गेशस्यैव सूर्यस्योदयस्य सूचिकां पूर्वसन्ध्यां प्रातःसन्ध्यामवैमि । श्लेषानुप्राणितोत्प्रेक्षा ॥

अवाप्य पादावनि रङ्गभर्तुः पदाम्बुजे पल्लवसंस्तराभाम् ।
त्वत्पद्मरागद्युतयो भजन्ते कालानलत्वं कलुषाम्बुधेर्नः ॥ ८ ॥

**अवाप्येति** । हे पादावनि, तव पद्मरागाणां द्युतयो रङ्गभर्तुः पदाम्बुजेऽम्बुजमिव पादे पल्लवसंस्तरस्य किसलयास्तरणस्याभां शोभामवाप्य नोऽस्माकं कलुषाम्बुधेः पापसमुद्रस्य । 'कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम् ।' इत्यमरः । कालानलत्वं संवर्ताग्नित्वं भजन्ते प्राप्नुवन्ति । पल्लववत्सुखावहस्याग्निवच्छोषकत्वकथनाद्व्याघातालंकारः ॥

निसर्गसिद्धं मणिपादरक्षे देवस्य रङ्गावसथप्रियस्य ।
बालार्कवर्णाः पदपद्मरागं त्वत्पद्मरागाः पुनरुक्तयन्ति ॥ ९ ॥

**निसर्गेति** । हे मणिपादरक्षे, बालार्कवर्णा उदयसूर्यद्युतयस्तव पद्मरागा रङ्गावसथप्रियस्य देवस्य श्रीरङ्गनाथस्य निसर्गेण स्वभावेन सिद्धं वर्तमानं पदपद्मयो रागं शोणिमानम् । पद्मरागमिति च प्रतीयते । पुनरुक्तयन्ति द्विगुणयन्ति । पद्मरागद्वयवदिति च गम्यते । अनुगुणभेदोऽलंकारः ॥

पदेन विश्वं मणिपादरक्षे पत्न्या समं पालयतो मुरारेः ।
यशःपयोधौ परिकल्पयन्ति प्रवालशोभां तव पद्मरागाः ॥ १० ॥

**पदेनेति** । हे मणिपादरक्षे, तव पद्मरागाः पत्न्या लक्ष्म्या समं सार्धं पदेन चरणेन

व्यवसायेन च विश्वं जगत् पालयतो मुरारेर्यशस्येव पयोधौ प्रवालशोभां विद्रुमलताश्रियं परिकल्पयन्ति । 'विद्रुमः पुंसि प्रवालं पुंनपुंसकम्' इत्यमरः । रूपकसंकीर्णोत्प्रेक्षा ॥

अर्चिष्मती काञ्चनपादरक्षे प्रस्तौति ते पाटलरत्नपङ्क्तिः ।
रेखा रथाङ्गस्य महःप्रपञ्चं रङ्गेशपादाम्बुजमध्यभाजम् ॥ ११ ॥

**अर्चिष्मतीति** । हे काञ्चनपादरक्षे, अर्चिष्मती दीप्तिमती । ज्वालाविशिष्टेत्यपि गम्यते । ते तव पाटलानां रत्नानाम् । पद्मरागाणामित्यर्थः । पङ्क्तिः रङ्गेशस्य पादाम्बुजमध्यम् । पद्मासनमित्यपि गम्यते । तं भजतीति तथोक्तस्य रेखारूपस्य रथाङ्गस्य चक्रस्य महःप्रपञ्चं तेजोविस्तारं प्रस्तौति प्रारभते । संपादयतीति यावत् । उत्प्रेक्षा ॥

त्वयैव पादावनि शोणरत्नैर्बालातपं नूनमुदीरयन्त्या ।
पद्मापतेः पादतलप्ररूढं रेखाम्बुजं नित्यमभूदनिद्रम् ॥ १२ ॥

**त्वयेति** । हे पादावनि, शोणरत्नैः पद्मरागैर्बालातपं तेजःसमूहमेव सूर्यकिरणमुदीरयन्त्योत्पादयन्त्या त्वयैव पद्मापतेः श्रीरङ्गनाथस्य पादतले जलस्याधस्तादित्यपि गम्यते । प्ररूढं दृढतया वर्तमानम्, उत्पन्नमित्यपि । रेखाम्बुजं रेखारूपं पद्मं, नित्यं सदा अनिद्रमन्यानभिभूतम्, विकस्वरमित्यपि । अभूत् । नूनं बालातपसंनिधानात्पद्मविकासो भवतीति भावः ॥

नित्यं निजालोकपथं गतानां श्रेयो दिशन्तीं श्रितपद्मरागाम् ।
महीयसीं माधवपादरक्षे मन्यामहे मङ्गलदेवतां त्वाम् ॥ १३ ॥

**नित्यमिति** । हे माधवपादरक्षे, नित्यं सदा निजानामालोकानामुद्द्योतानां कटाक्षाणां च पन्थानम् । 'ऋक्पूरब्धूःपथा—५।४।७४' इत्यकारप्रत्ययः । गतानां पुंसां श्रेयो मोक्षमैश्वर्यं च दिशन्तीम् । 'मुक्तिः कैवल्यनिर्वाणश्रेयोनिश्रेयसामृतम् ।' इत्यमरः । 'श्रेयस्तु मङ्गले धर्मे' इति विश्वः । श्रितः पद्मरागः पद्मस्नेहश्च यया तां महीयसीमत्युत्कृष्टां त्वां मङ्गलानां देवतामधिष्ठात्रीमेव मङ्गलदेवतां लक्ष्मीम् । 'रमा मङ्गलदेवता' इत्यमरः । मन्यामहे जानीमः । श्लेषानुप्राणितस्वरूपोत्प्रेक्षा ॥

देवस्य रङ्गरसिकस्य विहारहेतो-
रात्मानमङ्घ्रिकमले विनिवेद्य पूर्वम् ।
प्रायो निवेदयसि शोणमणिप्रकाशैः
प्रत्यूषपद्मकलिकां पदरक्षिणि त्वम् ॥ १४ ॥

**देवस्येति** । हे पदरक्षिणि, त्वं रङ्गरसिकस्य नृत्यप्रियस्य सभानायकस्य देवस्य रङ्गनाथस्य । राज्ञ इत्यपि गम्यते । विहारहेतोः संचारार्थं लीलार्थमित्यपि । पूर्वं वृत्तात्पूर्वमित्यपि । आत्मानं स्वमङ्घ्रिकमले विनिवेद्य समर्प्य देवं श्रीरङ्गनाथं प्रणम्येत्यपि ।

प्रसृमरस्य प्रसरणशीलस्य । विश्वं व्याप्नुवत इत्यर्थः । कलेर्युगस्य कलियुगस्य श्रीरङ्गसीम्नि प्रवेशं संसर्गं संप्रति निवारयितुं निरोद्धुमग्निमयं प्राकारं वरणम् । 'प्राकारो वरणः सालः' इत्यमरः । प्रायेण हेतुभूतेनेत्युत्प्रेक्षाद्योतकशब्दः । आरभते उत्पादयति । भगवत्संनिधानायत्ता कलियुगधर्मनिवृत्तिः पद्मरागप्रभावरणनिरोधकृतेत्युत्प्रेक्ष्यते ॥

लीलागृहान्तरविहारिणि रङ्गनाथे
लाक्षारसैररुणरक्तमयूखलक्ष्यैः ।
प्रायेण रञ्जयति पादसरोजयुग्मं
सैरन्ध्रिकेव भवती मणिपादरक्षे ॥ २१ ॥

**लीलेति** । हे मणिपादरक्षे, भवती रङ्गनाथे लीलागृहान्तरे क्रीडाभवनमध्ये विहारिणि सति संचरति सत्यरुणरत्नानां पद्मरागाणां मयूखा एव लक्ष्यं व्याजो येषां तैर्लाक्षारसैरलक्तकद्रवैः सैरन्ध्रिकेव प्रसाधिकेव पादसरोजयोर्युग्मम् । श्रीरङ्गनाथस्येत्याक्षिप्यते । प्रायेण रञ्जयति रक्तं करोति । अनुलिम्पतीत्यर्थः । उत्प्रेक्षा । उपमानुप्राणिता सापह्नवा च ॥

रङ्गेशितुर्विहरतो मणिपादरक्षे
रथ्यान्तरे सुमनसः परिकीर्यमाणाः ।
त्वत्पद्मरागकिरणस्फुरणाद्भजन्ते
संध्यातपान्तरिततारकपङ्क्तिलक्ष्मीम् ॥ २२ ॥

**रङ्गेशितुरिति** । विहरतो रङ्गेशितू रथ्यान्तरे प्रतोलीमध्ये परिकीर्यमाणाः । जनैरिति शेषः । सुमनसः पुष्पाणि तव पद्मरागकिरणानां छुरणाद्व्यापनात् संध्यातपैः संध्याकालरक्तसूर्यप्रभाभिरन्तरिताया अनुलिप्तायास्तारकपङ्क्तेर्नक्षत्रश्रेण्या लक्ष्मीं शोभां भजन्ते । निदर्शनालंकारः ॥

रङ्गाधिराजपदरक्षिणि बिभ्रतस्त्वां
गङ्गातरङ्गविमले गिरिशस्य मौलौ ।
संवर्धयन्ति महसा तव पद्मरागाः
शैलात्मजाचरणयावकपङ्कलक्ष्मीम् ॥ २३ ॥

**रङ्गाधिराजेति** । हे रङ्गाधिराजपदरक्षिणि, तव पद्मरागा महसा प्रभया (करणेन) त्वां बिभ्रतो वहतो गिरिशस्य शिवस्य गङ्गातरङ्गैर्विमले परिशुद्धे । इदं च पादुकावहनयोग्यतासंपादकं विशेषणम् । मौलौ शिरसि शैलात्मजाया गौर्याश्चरणयोर्यावकपङ्कस्य लाक्षारसस्य मानापनोदनार्थं प्रणतिसमयलग्नस्य लक्ष्मीं शोभां संवर्धयन्ति पुष्णन्ति । उत्प्रेक्षा ॥

शरणमुपगतानां शर्वरीं मोहरूपां
शमयितुमुदयस्थान्मन्महे बालसूर्यान् ।
पदसरसिजयोगाद्रङ्गनाथस्य भूयः
परिणमदरुणिम्णः पादुके पद्मरागान् ॥ २४ ॥

**शरणमिति** । हे पादुके, रङ्गनाथस्य पदसरसिजयोर्निसर्गरक्तयोर्योगात् संपर्कात् भूयः पुनरपि परिणमन् जायमानोऽरुणिमा येषां तान् पद्मरागान् शरणमुपगतानां प्रपन्नानाम् । गृहवर्तिनामित्यपि गम्यते । मोहरूपामज्ञानात्मिकां शर्वरीं रात्रिं शमयितुं नाशयितुमुदयस्थानुदयोन्मुखान् । पूर्वपर्वतान्तर्वर्तिन इति गम्यते । 'उदयः पूर्वपर्वतः' इत्यमरः । बालसूर्यानुदयद्भास्वरान् मन्महे मन्यामहे । इत्युत्प्रेक्षा श्लेषानुप्राणिता ॥

हरिपदरुचिराणां पादुके तावकाना-
मरुणमणिगणानां नूनमर्धेन्दुमौलिः ।
प्रणतिसमयलग्नां वासनामेव धत्ते
कलमकणिशकान्तिस्पर्धिनीभिर्जटाभिः ॥ २५ ॥

**हरिपदेति** । हे पादुके, अर्धेन्दुमौलिः शिवः कलमकणिशस्य व्रीहिविशेषमञ्जर्याः । 'कणिशं सस्यमञ्जरी' इत्यमरः। कान्त्या दीप्त्या स्पर्धितुं कलहायितुं शीलमासामिति तथोक्ताभिः । कलममञ्जरीवद्रक्तवर्णाभिरित्यर्थः । जटाभिः स्वकेशसंघातैर्हरेर्भगवतो । भगवच्चरणवद्रुचिराणां तावकानां त्वदीयानामरुणमणिगणानां पद्मरागनिकराणां प्रणतिसमये वन्दनकाले लग्नां सक्तां वासनां प्रभानुसृतिमेव धत्ते न त्वरुणवर्णमिति भावः । शिवस्य जटागतमरुणत्वं सेवासमयलग्नपादुकापद्मरागकिरणानुसृतित्वेनोत्प्रेक्ष्यते ॥

प्रतिविहरणमेते पादुके रङ्गभर्तुः
पदकमलसगन्धाः पद्मरागास्त्वदीयाः ।
तरुणतपनमैत्रीमुद्वहद्भिर्मयूखैः
स्थलकमलविभूतिं स्थापयन्त्यव्यवस्थाम् ॥ २६ ॥

**प्रतिविहरणमिति** । हे पादुके, रङ्गभर्तुः पदकमलयोः सगन्धाः संबन्धिनः । सदृशा इत्यर्थः । एते त्वदीयाः पद्मरागास्तरुणतपनेन मैत्रीम् । सादृश्यमिति यावत् । उद्वहद्भिर्मयूखैः किरणैः प्रतिविहरणं प्रतिसंचारम् । वीप्सायामव्ययीभावः । अव्यवस्थामनियतदेशां स्थलकमलानां विभूतिं संपदं स्थापयन्ति । संपादयन्तीत्यर्थः । पद्मरागप्रभा भगवत्संचारमार्गेष्वनियतस्थलकमलत्वेनोत्प्रेक्ष्यते ॥

अयमतितरभोगात्रञ्जयन्वीतरागां-
स्तरुणमणिगणानां तावकानां प्रकाशः ।

मधुरिपुपदरक्षे मङ्क्षु जाज्वल्यमानः
शलभयति जनानां शाश्वतं पापराशिम् ॥ २७ ॥

**अयमिति ।** हे मधुरिपुपदरक्षे, अनितरभोगान् पादुकामात्रानुभवासक्तान् वीतरागान् विषयानुरागरहितान् रञ्जयन्नाह्लादयन् । रागं कुर्वन्नित्यपि विरोधः प्रतीयते । तावकानामरुणमणिगणानां पद्मरागसमूहानामयं परिदृश्यमानः प्रकाशो जाज्वल्यमानो देदीप्यमानो ज्वालाविशिष्टोऽग्निश्च सन् जनानां शाश्वतं पापराशिं मङ्क्ष्वाशु शलभयति । शलभमिव दहतीत्यर्थः । परिणामालंकारः श्लिष्टपरम्परितरूपकानुप्राणितः ॥

प्रचुरनिगमगन्धाः पादुके रङ्गभर्तुः
पदकमलसमृद्धिं प्रत्यहं भावयन्तः ।
दधति शकलयन्तो गाढमन्तस्तमिस्रं
समुचिततरुणत्वं तावकाः पद्मरागाः ॥ २८ ॥

**प्रचुरेति ।** हे पादुके, प्रचुरो भूयिष्ठो निगमगन्धो वेदसौरभ्यं येषां ते । अन्यत्र 'वेदैरशून्यस्त्रिभिरेति सूर्यः' इति श्रुत्युक्तबहुभेदसंबन्धवानित्यर्थः । 'गन्धो गन्धक आमोदे लेशे संबन्धगर्वयोः ।' इति विश्वः । प्रचुरो निगमस्य गन्धः सौरभ्यं यस्यास्तामिति समृद्धिविशेषणं वा । प्रत्यहं प्रतिदिनं रङ्गभर्तुः पदयोरेव कमलयोः समृद्धिं पुष्टिं भावयन्तो जनयन्तः, अन्यत्र पद्मविकासमित्यर्थः । गाढं सान्द्रमन्तस्तमिस्रं चित्तावरकतमोगुणं शकलयन्तः, अन्यत्रान्धकारं निराकुर्वन्त इत्यर्थः । तावकाः पद्मरागाः समुचितमुक्ताकाराणां साम्यात् योग्यमित्यपि । अरुणत्वं रक्तवर्णविशिष्टत्वं सूर्यत्वं च । 'मिहिरारुणपूषणः' इत्यमरः । दधति वहन्ति । श्लेषानुप्राणितं रूपकमलंकारः ॥

लाक्षालक्ष्मीमधररुचके रङ्गिणः पादरक्षे
वक्त्राम्भोजे मदपरिणतिं पद्मरागद्युतिस्ते ।
कर्णोपान्ते किसलयरुचिं देवि सेवानतानां
सीमन्ते च त्रिदशसुदृशां सौति सिन्दूरशोभाम् ॥ २९ ॥

**लाक्षेति ।** हे देवि रङ्गिणः पादरक्षे, ते तव पद्मरागाणां द्युतिर्दीप्तिः सेवानतानां सेवार्थं प्रह्वीभूतानां त्रिदशसुदृशां देवस्त्रीणामधररुचके रुचकसदृश ओष्ठे । मल्लादीनां कण्ठस्थमोष्ठसदृशसंनिवेशमाभरणं रुचकशब्दार्थः । 'रुचकं मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः ।' इति विश्वः । 'उपमितं व्याघ्रादिभिः—२।४।५,६' इति समासः । लाक्षालक्ष्मीमलक्तकसंपदं वक्त्राम्भोजे मदपरिणतिं मधुपानजन्यशोणिमानं कर्णस्योपान्तेऽग्रदेशे किसलयरुचिं कर्णपूरपल्लवशोभां सीमन्ते मस्तकमध्यरेखायां सिन्दूरशोभां रक्तसिन्दूरश्रियं च सौत्यनुजानाति । षु प्रसवे प्रसवोऽभ्यनुज्ञानमिति वैयाकरणाः । तत्तद्देशयो-

ग्यालंकारं विदधातीत्यर्थः । पद्मरागप्रभाया विषयभेदेनानेकधोल्लेखादुल्लेखः । सर्वेषामेकक्रियान्वयत्वात्तुल्ययोगिता च संसृष्टा ॥

अरुणमणयस्तवैते हरिपदरागेण लब्धमहिमानः ।
गमयन्ति चरणरक्षे द्युमणिगणं ज्योतिरिङ्गणताम् ॥ ३० ॥

अरुणेति । हे चरणरक्षे, तवैतेऽरुणमणयः पद्मरागा हरेः पदयोश्चरणयो रागेणारुणिम्ना लब्धमहिमानः प्राप्तोत्कर्षाः सन्तो द्युमणिगणं सूर्यसमूहं प्रलयोदितसप्तभास्वरसमूहं वा ज्योतिरिङ्गणतां खद्योतकीटतां गमयन्ति नयन्ति । पादुकापद्मरागमहसा सांवर्तिकाः सूर्याः खद्योताः क्रियन्त इत्युक्तयात्युक्तिरलंकारः । 'अत्युक्तिरद्भुतातथ्यशौर्योदार्यादिवर्णनम् ।' इति लक्षणम् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे पद्मरागपद्धतिः सप्तदशी ॥

---

मुक्तापद्धतिरष्टादशी ।

अथास्यां पद्धत्यां मौक्तिकमात्रालंकृतां पादुकां वर्णयति—

बद्धानां यत्र नित्यानां मुक्तानामीश्वरस्य च ।
प्रत्यक्षं शेषशेषित्वं सा मे सिध्यतु पादुका ॥ १ ॥

बद्धानामिति । यत्र पादुकायां बद्धानां प्रत्युप्तानां नित्यानामनपायानां मुक्तानां मौक्तिकानामीश्वरस्य च शेषशेषित्वं स्वस्वामिभावः प्रत्यक्षं चक्षुषा प्रेक्ष्यं भवतीति गम्यते । भगवत्स्वत्वादिति भावः । अन्यत्र बद्धानां संसारिणां मुक्तानां त्यक्तसंसाराणां नित्यानां कदाप्यस्पृष्टसंसाराणामनन्तगरुडादीनामेतेषां त्रिविधजीवानामीश्वरस्य च पादुकाविषये चरणमूर्धवहनाभ्यां शेषशेषित्वं स्वामित्वदासत्वे प्रत्यक्षं तत्तज्जीवचक्षुर्गम्यं सा पादुका मे मम सिध्यतु काङ्क्षितहेतुर्भवतु । प्रेयोऽलंकारः, उपमालंकारध्वनिश्च ॥

तव रङ्गधुरीणपादरक्षे विमला मौक्तिकपद्धतिर्विभाति ।
सुहृदि त्वयि साधितापवर्गैः समये संक्रमितेव साधुकृत्या ॥ २ ॥

तवेति । हे रङ्गधुरीणपादरक्षे, तव विमला मौक्तिकपद्धतिर्मुक्तामणीनां पङ्क्तिः । मुक्ताशब्दात् 'विनयादिभ्यष्ठक् ५।४।३४।' इति स्वार्थिकष्ठक् । साधितापवर्गैः संपादितमोक्षैः पुरुषैः समये पुण्यपापत्यागकाले सुहृदि त्वयि संक्रमिता संप्रापिता साधुकृत्या सुकृतमिव विभाति । सत्त्वमूलत्वात्सुकृतस्य श्वैत्यव्यपदेशः 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रूयते । उत्प्रेक्षा ॥

शरणागतसस्यमालिनीयं तव मुक्तामणिरश्मिनिर्झरौघैः ।
ननु रङ्गधुरीणपादरक्षे जगती नित्यमदैवमातृकाभूत् ॥ ३ ॥

**शरणेति ।** ननु हे रङ्गधुरीणपादरक्षे, शरणागतान् प्रपन्नानेन सस्यानि व्रीह्योषधीः मलते धारयतीति तथोक्ता । 'मल धारणे' इति धातोराभीक्ष्ण्ये णिनिः । इयं जगती भूमिः । 'जगती रत्नगर्भा च' इत्यमरः । तव मुक्तामणिरश्मीनां मौक्तिककिरणानामेव निर्झराणां वारिप्रवाहाणामोघैर्निकरैः । 'स्तोमौघनिकरव्रातवारसंघातसंचयाः' इत्यमरः । नित्यं सदा अदेवमातृका वृष्टिमात्रनिष्पाद्यव्रीह्यियुक्तदेशभिन्ना । नदीमातृकेति यावत् । नदीप्रवाहैर्व्रीहय इव पादुकामुक्ताप्रभाभिः प्रपन्ना मोदन्त इति भावः । रूपकालंकारः ॥

अधिविष्णुपदं परिस्फुरन्ती नवमुक्तामणिनिर्मलप्रकाशा ।
परिपुष्यसि मङ्गलानि पुंसां प्रतिपच्चन्द्रकलेव पादुके त्वम् ॥ ४ ॥

**अधीति ।** हे पादुके, अधिविष्णुपदं भगवच्चरणे आकाशे च । विभक्त्यर्थेऽव्ययीभावः । परिस्फुरन्ती शोभमाना नवैर्मुक्तामणिभिः नवमुक्तामणिवच्च निर्मलः प्रकाश उद्द्योतो यस्याः सा त्वं प्रतिपच्चन्द्रकलेव प्रथमाचन्द्रकलेव पुंसां मङ्गलानि श्रेयांसि व्रीह्यादिसकलौषधीः रक्षणानि च । 'मङ्गलं श्रेयसि श्वेते दूर्वायामपि मङ्गलम् । सर्वार्थरक्षणे चापि मङ्गलं समुदाहृतम् ॥' इति विश्वः । परिपुष्यसि अभिवर्धयसि । श्लेषानुप्राणितोपमालंकारः ॥

निहिता नवमौक्तिकावलिस्त्वामभितः काञ्चनपादुके मुरारेः ।
नखचन्द्रमसां पदाश्रितानां प्रतिमाचन्द्रपरम्परेव भाति ॥ ५ ॥

**निहितेति ।** हे काञ्चनपादुके, त्वामभितस्तव पार्श्वद्वयेऽपि । 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया । निहितानां प्रत्युप्तानां नवानां मौक्तिकानामावली: पङ्क्तीः मुरारेः पदमाश्रितानां नखानामेव चन्द्रमसां प्रतिमाचन्द्राणां प्रतिबिम्बचन्द्राणां परम्परेव पङ्क्तिरिव भाति । इदं च भगवत्पुरोवर्तिन्यां पादुकायामित्यवगन्तव्यम् । उत्प्रेक्षालंकारः । संभावनायामिवशब्दः ॥

समतामुपैति वपुषापि सदा भवदीयमौक्तिकमहश्छुरिता ।
हरिपादुके हरिपदोद्भवया कनकापगासुरपुरापगया ॥ ६ ॥

**समतामिति ।** हे हरिपादुके, सदा भवदीयानां त्वदीयानां मौक्तिकानां महसा प्रभया छुरिता रूषिता कनकापगा कावेरी हरेः पदोद्भवया चरणजनितया सुरपुरापगया गङ्गया सह वपुषापि शरीरेणापि । पावनत्वादिगुणैः साम्यं न वक्तव्यमिति भावः । साम्यं सादृश्यमुपैति प्राप्नोति । गङ्गापयसः शुक्लत्वं कावेर्यास्तु मौक्तिकप्रभारूषणादित्यवगन्तव्यम् । उपमालंकारः ॥

तव रङ्गचन्द्रतपनीयपादुके विमला समुद्वहति मौक्तिकावलिः ।
चरणारविन्दनवचन्द्रमण्डलप्रणयोपयातनवतारकारुचिम् ॥ ७ ॥

**तवेति** । हे रङ्गचन्द्रस्य तपनीयपादुके काञ्चनपादुके, 'तपनीयं शातकुम्भम्' इति सुवर्णपर्यायेष्वमरः । विमला शुद्धा तव मौक्तिकानामावलिः पङ्क्तिः । 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी रेखास्तु राजयः ।' इत्यमरः । चरणारविन्दयोर्भगवत्पादाम्बुजयोर्नखानामेव चन्द्रमण्डलानां प्रणयेन स्नेहेनोपयातानां निकटगतानां मनोज्ञानां तारकाणां नक्षत्राणां रुचिं शोभां समुद्वहति धत्ते । निदर्शनालंकारो वा उत्प्रेक्षा वा वाचकाभावाद्गम्या ॥

चन्द्रचूडमुकुटेन लालिता चारुमौक्तिकमयूखपाण्डरा ।
रङ्गनाथपदपद्मसङ्गिनी लक्ष्यसे सुरधुनीव पादुके ॥ ८ ॥

**चन्द्रेति** । हे पादुके, चन्द्रचूडस्य शिवस्य मुकुटेन किरीटेन लालिता मानिता चारुभिर्मौक्तिकमयूखैस्तद्वच्च पाण्डरा शुक्ला रङ्गनाथस्य पदपद्मयोः सङ्गिनी तदुद्भवा त्वं सुरधुनीव गङ्गेव लक्ष्यसे । श्लेषानुप्राणितोपमालंकारः ॥

ये भजन्ति भवतीं तवैव ते मौक्तिकद्युतिविकल्पगङ्गया ।
वर्धयन्ति मधुवैरिपादुके मौलिचन्द्रशकलस्य चन्द्रिकाम् ॥ ९ ॥

**य इति** । हे मधुवैरिपादुके, ये पुरुषा भवतीं भजन्ति सेवन्ते ते पुरुषास्तव मौक्तिकानां द्युतिरूपया विकल्पगङ्गया पर्यायगङ्गयेव मौलिचन्द्रशकलस्य निजशिरोभूषणचन्द्रखण्डस्य चन्द्रिकां कौमुदीम् । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्यमरः । वर्धयन्ति पोषयन्ति । पादुकासेवया रुद्रत्वं प्राप्नुवन्ति पादुकामौक्तिकप्रभात्मिकामन्यामपि गङ्गां वहन्तीति पर्यायोक्त्यलंकारः ॥

मुक्तामयूखैर्नियतं त्वदीयैरापूरयिष्यन्नवतंसचन्द्रम् ।
बिभर्ति रङ्गेश्वरपादरक्षे देवो महान्दर्शितसंनतिस्त्वाम् ॥ १० ॥

**मुक्तेति** । हे रङ्गेश्वरस्य पादरक्षे, दर्शितसंनतिः प्रकाशितप्रणामो महान् देवः शिवस्त्वदीयैर्मुक्तानां मयूखैरवतंसचन्द्रं शिरोभूषणेन्दुकलाम् । 'वतंसोत्तंसावतंसाः कर्णपूरेऽपि शेखरे ।' इति वैजयन्ती । आपूरयिष्यन् पूर्णं करिष्यन् सन् त्वां बिभर्ति वहति । नियतमित्युत्प्रेक्षा ॥

परिष्कृता मौक्तिकरश्मिजालैः पदस्य गोप्त्री भवती मुरारेः ।
भवत्यनेकोर्मिसमाकुलानां पुंसां तमःसागरपोतपात्री ॥ ११ ॥

**परिष्कृतेति** । हे पादुके, इत्युपस्कार्यम् । मौक्तिकानां रश्मिजालैः किरणसमूहैरेव रज्जुसमूहैः । 'किरणप्रग्रहौ रश्मी' इत्यमरः । परिष्कृतालंकृता मुरारेः पदस्य चरणस्य वस्तुनश्च गोप्त्री रक्षित्री भवती अनेकाभिरूर्मिभिः पीडाभिः सत्ताजनिवृद्धिपरिणतिक्षयनाशरूपषड्भावविकारैश्च तरङ्गैश्च । 'ऊर्मिस्तरङ्गे पीडायां वेगे भङ्गप्रकाशयोः ।' इति

विश्वः । समाकुलानां संभ्रान्तानां पुंसां तमःसागरस्य शोकसागरस्य पोतपात्री यानपात्रं भवति । श्लेषानुप्राणितरूपकालंकारः ॥

रङ्गेशपादप्रतिपन्नभोगां रत्नानुविद्धैर्महितां शिरोभिः ।
मुक्तावदातां मणिपादुके त्वां मूर्तिं भुजङ्गाधिपतेः प्रतीमः ॥ १२ ॥

**रङ्गेशेति** । हे मणिपादुके, रङ्गेशस्य पादेन पूज्यरङ्गेशेन च । पादशब्दस्य पूज्यवाचकत्वात् तातपादादिवत् प्रयोगः । प्रतिपन्नः प्राप्तः भोगः सुखं कायश्च यस्यास्ताम् । 'भोगः सुखे चाहेः शरीरफणकाययोः' इति विश्वः । रत्नानुविद्धैः शिरोमणियुक्तैः शिरोभिर्देवादिमौलिभिः फणैश्च महितां पूजितां मुक्ताभिर्मुक्तावच्चावदातां शुभ्रां त्वां भुजङ्गाधिपतेः शेषस्य मूर्तिं प्रतीमः । इत्युत्प्रेक्षा श्लेषानुप्राणिता ॥

मुकुन्दपादावनिमौक्तिकैस्ते ज्योत्स्नामयं विश्वमिदं दिवापि ।
वैमानिकानां न भजन्ति येन व्याकोचतामञ्जलिपद्मकोशाः ॥ १३ ॥

**मुकुन्देति** । हे मुकुन्दपादावनि, ते तव मौक्तिकैरिदं विश्वं जगत् दिवापि दिवसेऽपि ज्योत्स्नामयं चन्द्रिकाप्रचुरं भवति । येन ज्योत्स्नाव्यापातेन वैमानिकानां देवानामञ्जलय एव पद्मकोशाः सरसिजमुकुला व्याकोचतां विकस्वरभावम् । 'प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः' इत्यमरः । न भजन्ति । पादुकानिकटे देवानामञ्जलिकरणस्य पद्मकोशतया रूपितस्य मौक्तिकप्रभया चन्द्रिकात्वेन रूपितया अविकासवर्णनात्काव्यलिङ्गरूपसंकीर्णोत्प्रेक्षा ॥

समाश्रितानामनघां विशुद्धिं त्रासव्यपायं च वितन्वती त्वम् ।
सायुज्यमापादयसि स्वकीयैर्मुक्ताफलैर्माधवपादुके नः ॥ १४ ॥

**समाश्रितानामिति** । हे माधवपादुके, त्वं समाश्रितानां नोऽस्माकमनघां पापासंवलितां मनोज्ञां च विशुद्धिं रागादिराहित्यं श्वैत्यं च त्रासस्य भयस्य रक्तदोषस्य च व्यपायमसंबन्धं च वितन्वती सती स्वकीयैर्मुक्ताफलैस्त्यक्तनिष्फलकृत्यैश्च मुक्तैः सायुज्यं परस्परसाम्यमापादयसि करोषि । श्लेषालंकारः उपमालंकारध्वनिश्च ॥

अवैमि पादावनि मौक्तिकानां कीर्णामुदग्रैः किरणप्ररोहैः ।
यात्रोत्सवार्थं विहिता मुरारेरभङ्गुरामङ्कुरपालिकां त्वाम् ॥ १५ ॥

**अवैमीति** । हे पादावनि, तव मौक्तिकानामुदग्रैरधिकैरूर्ध्वमुखैश्च किरणानां प्ररोहैरङ्कुरैः कीर्णां व्याप्तां त्वां मुरारेर्यात्रोत्सवार्थं पूजाविशेषरूपाय विहितामभङ्गुरां पूर्णामङ्कुराढ्यां पालिकामङ्कुरार्पणपात्रीमवैमि । उत्सवारम्भेऽङ्कुरार्पणं कुर्वन्तीति भावः । उत्प्रेक्षा ॥

शिवत्वहेतुं सकलस्य जन्तोः स्रोतोविशेषैः सुभगामसंख्यैः ।
मुक्तामयूखैः सुरसिन्धुमन्यां पुष्णासि रङ्गेश्वरपादुके त्वम् ॥ १६ ॥

**शिवत्वेति** । हे रङ्गेश्वरपादुके, त्वं सकलस्य जन्तोः शरीरिणः शिवत्वस्य पावनत्वस्य हेतुमसङ्ख्यैरपरिच्छेद्यैर्मुक्तानां मयूखैरेव स्रोतोविशेषैः प्रवाहभेदैः सुभगां हृद्यामन्यां विलक्षणां सुरसिन्धुं गङ्गां पुष्णासि वर्धयसि । उत्प्रेक्षा ॥

रङ्गे शयानस्य पदावनि त्वां लावण्यसिन्धोः सविधे निषण्णाम् ।
परिस्फुरन्मौक्तिकजालदृश्यां प्रसूतिभिन्नां प्रतियन्ति शुक्तिम् ॥ १७ ॥

**रङ्ग इति** । हे पदावनि, रङ्गे शयानस्य रङ्गेश्वरस्य लावण्यस्य दिव्यमङ्गलविग्रहसमुदायशोभाया एव सिन्धोः समुद्रस्य सविधे निकटे निषण्णां वर्तमानां परिस्फुरतां मौक्तिकानां जालेन दृश्यां प्रेक्षणीयां त्वां प्रसूत्या मौक्तिकभेदेन भिन्नां स्फुटितमुखां शुक्तिम् । 'मुक्तास्फोटः स्त्रियां शुक्तिः' इत्यमरः । प्रतियन्ति । सन्त इति शेषः । रूपकश्लेषाभ्यामनुप्राणितोत्प्रेक्षा ॥

अवैमि रङ्गेश्वरपादरक्षे मुक्ताफलानि त्वयि निस्तुलानि ।
तेनैव कल्पान्तरतारकाणामुप्तानि बीजानि जगद्विधात्रा ॥ १८ ॥

**अवैमीति** । हे रङ्गेश्वरपादरक्षे, त्वयि ( अधिकरणे ) निस्तुलानि वर्तुलानि मुक्ताफलानि तेन जगद्विधात्रैव जगत्स्रष्ट्रा रङ्गेश्वरेणैवोप्तानि प्ररोहणाय विकीर्णानि कल्पान्तरतारकाणां बीजानि कारणानि अवैमि । इत्युत्प्रेक्षा ॥

विक्रम्यमाणमभवत्क्षणमन्तरिक्षं
मायाविना भगवता मणिपादरक्षे ।
व्योमापगाविपुलबुद्बुददर्शनीयै-
र्मुक्ताफलैस्तव शुभैः पुनरुक्ततारम् ॥ १९ ॥

**विक्रम्यमाणमिति** । हे मणिपादरक्षे, मायाविना बलिवञ्चकेन भगवता विक्रम्यमाणमादीयमानमन्तरिक्षमाकाशं व्योमापगाया आकाशगङ्गाया विपुलबुद्बुदवत् दर्शनीयैस्तव मुक्ताफलैः पुनरुक्ततारं द्विगुणीकृतनक्षत्रयुक्तमभवत् । उत्प्रेक्षा चेयमुपमासंसृष्टा ॥

लक्ष्मीविहाररसिकेन पदावनि त्वं
रक्षाविधौ भगवता जगतो नियुक्ता ।
सत्त्वं तदर्हमिव दर्शयसि प्रभूतं
मुक्तामयूखनिकरेण विसृत्वरेण ॥ २० ॥

**लक्ष्मीति** । हे पदावनि, लक्ष्म्या विहारे रसिकेन प्रीतिमता भगवता जगतः प्रपञ्चस्य रक्षाविधौ परित्राणकृत्ये नियुक्ता त्वं विसृत्वरेण मुक्तानां मयूखानां निकरेण

प्रभूतं प्रचुरं तदहं रक्षणोपयुक्तं सत्त्वं सत्त्वगुणं दर्शयसीव। सत्त्वगुणस्य श्वैत्यहेतुत्वात् तान्त्रिकैः कविभिश्च श्वेतत्वव्यवहारः [कृतः]। उत्प्रेक्षालंकारः॥

पादार्पणेन भवतीं प्रतिपाद्यमाने
श्रीरङ्गचन्द्रमसि संभृतमौक्तिकश्रीः।
अङ्गीकरोषि चरणावनि कान्तिमग्र्या-
मुद्भिद्यमानकुमुदेव कुमुद्वती त्वम्॥ २१॥

पादेति। हे चरणावनि, संभृता मौक्तिकानां श्रीर्यया सा त्वं श्रीरङ्गे विद्यमाने भगवत्येव चन्द्रमसि पादयोश्चरणयो रश्मीनां चार्पणेन निक्षेपेण भवतीं प्रतिपाद्यमाने प्राप्नुवति सति उद्भिद्यमानानि स्वयमेव विकसन्ति कुमुदानि सितोत्पलानि यस्याः सा कुमुद्वतीव कैरविणीवाग्र्यामुत्कृष्टां कान्तिं दीप्तिमङ्गीकरोषि। रूपकसंकीर्णोपमा। श्लेषोऽप्यङ्गम्॥

त्रय्यन्तहर्म्यतलवर्णसुधायितेन
ज्योत्स्नाविकल्पितरुचा मणिपादुके त्वम्।
मुक्तामयी मुरभिदङ्घ्रिसरोजभाजां
वर्णेन ते शमयसीव सतामवर्णम्॥ २२॥

त्रय्यन्तेति। हे मणिपादुके, मुक्तामयी मौक्तिकप्रचुरा त्वं त्रय्यन्तस्य वेदान्तस्यैव हर्म्यतलस्य वर्णसुधायितेन धवलरूपालेपभूतेन। अतात्पर्यविषयार्थरूपमालिन्यनिवर्तकेनेत्यर्थः। ज्योत्स्नया विकल्पिता सदृशी रुक् कान्तिर्यस्य तेन ते तव वर्णेन रूपेण मुरभिदङ्घ्रिसरोजे भजन्तीति तेषां सतां महतामवर्णमपवादं मालिन्यं च शमयसि निवर्तयसीव। वर्णेनावर्णशान्तिरिति शमालंकारः। उत्प्रेक्षा, श्लेषोऽप्यङ्गम्॥

वैकुण्ठपादनखवासनयेव नित्यं
पादावनि प्रसुवते नवमौक्तिकानि।
अच्छिन्नतापशमनाय समाश्रितानाा-
मालोकमण्डलमिषादमृतप्रवाहम्॥ २३॥

वैकुण्ठेति। हे पादावनि, तव मौक्तिकानि वैकुण्ठस्य श्रीरङ्गनाथस्य पादनखानां वासनयेव परिचयादिव समाश्रितानामच्छिन्नस्यानादिकालप्रवृत्तस्य तापस्याध्यात्मिकादितापत्रयस्य संतापस्य शमनायालोकमण्डलमिषादच्छकिरणव्याजात् नित्यं सदामृतप्रवाहं सुधापरीवाहं प्रसुवते जनयन्ति। सापह्नवोत्प्रेक्षा॥

रामानुवृत्तिजटिले भरतस्य मौलौ
रङ्गाधिराजपदपङ्कजरक्षिणि त्वम्।

एकातपत्रितजगत्त्रितयाद्द्वितीयं
मुक्तांशुभिः कृतवती नवमातपत्रम् ॥ २४ ॥

रामेति । हे रङ्गाधिराजपदपङ्कजरक्षिणि, एकातपत्रं द्वितीयच्छत्ररहितम् । राजान्तररहितमिति यावत् । तथा कृतं जगत्त्रितयं यया सा त्वं रामस्यानुवृत्त्यानुवर्तनेन जटिले जटायुक्ते । जटाशब्दान्मत्वर्थे इलच् । भरतस्य रामानुजस्य मौलौ मुक्तानामंशुभिस्त्वया-द्वितीयं सदृशराजच्छत्ररहितं मनोज्ञमातपत्रं कृतवती । उत्प्रेक्षा । एकातपत्रितजगत्त्रित-येत्यस्य साकूतत्वात्परिकरश्च ॥

पादावनि स्फुटमयूखमधुप्रवाहा
मुग्धा परिस्फुरति मौक्तिकपद्धतिस्ते ।
रूढस्य रङ्गपतिपादसरोजमध्ये
रेखात्मनः सुरतरोरिव पुष्पपङ्क्तिः ॥ २५ ॥

पादावनीति । हे पादावनि, स्फुटा व्यक्ता मयूखा एव मधुप्रवाहो मकरन्दप्रसृतिर्यस्याः सा मुग्धा सुन्दरा ते तव मौक्तिकानां पद्धतिः पङ्क्ती रङ्गपतेः पादसरोजमध्ये रूढस्य लग्नस्य उत्पन्नस्येत्यपि रेखात्मनो रेखारूपस्य सुरतरोः कल्पवृक्षस्य पुष्पपङ्क्तिरिव परिस्फुरति । उत्प्रेक्षा ॥

आम्रेडितैः पदनखेन्दुरुचा मनोज्ञै-
र्मुक्तांशुभिर्मुरभिदो मणिपादुके त्वम् ।
स्वाभाविकीं सकलजन्तुषु सार्वभौमीं
प्रायः प्रसक्तिममलां प्रकटीकरोषि ॥ २६ ॥

आम्रेडितैरिति । हे मणिपादुके, त्वं मुरभिदः पदयोर्नखानामेवेन्दूनां रुचाम्रेडितैर्बहुलीकृतैर्मनोज्ञैर्मुक्तांशुभिः स्वाभाविकीं नैसर्गिकीं सार्वभौमीं सर्वभूमिषु विदिताममलां कालुष्यरहितां सकलजन्तुषु विषये प्रसक्तिं प्रसादं प्रकटीकरोषि व्यक्तीकरोषि । प्रसादस्य सत्त्वगुणमूलत्वाच्छैत्योक्तिः । प्राय इत्युत्प्रेक्षा ॥

निःसीमपङ्कमलिनं हृदयं मदीयं
नाथस्य रङ्गवसतेरधिरोढुमिच्छोः ।
मातस्तवैव सहसा मणिपादरक्षे
मुक्तांशवः स्फटिकसौधतुलां नयन्ति ॥ २७ ॥

निःसीमेति । हे मातर्मणिपादरक्षे, तव मुक्तांशवो निःसीम्नानवधिकेन पङ्केन पापेन कर्दमेन च मलिनं मलीमसं मदीयं हृदयमधिरोढुमारोढुमिच्छो रङ्गवसतेर्नाथस्य

तत्प्रीत्यर्थं स्फटिकशिलामयस्य सौधस्य तुलां साम्यं सहसा झटिति नयन्ति । हृदयमित्यनुषज्यते । राजागमसमये मलीमसं सौधं सुधादिभिः परिष्कुर्वन्तीति भावः । उपमालंकारः ॥

श्यामा तनुर्भगवतः प्रतिपन्नतारा
त्वं चन्द्रिकाविमलमौक्तिकदर्शनीया ।
स्थाने तदेतदुभयं मणिपादरक्षे
बोधं क्षणान्नयति बुद्धिकुमुद्वतीं नः ॥ २८ ॥

**श्यामेति** । हे मणिपादरक्षे, प्रतिपन्नाः प्राप्तास्ताराः शुद्धमौक्तिकानि नक्षत्राणि च यस्याः सा । 'तारो मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके । ऋक्षाक्षिमध्ययोस्तारा' इति विश्वः । भगवतस्तनुः शरीरं श्यामा श्यामलवर्णा कालरात्रिश्च । 'त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा' इत्यमरः । त्वं चन्द्रिकावत् विमलैर्मौक्तिकैर्दर्शनीया तदेतदुभयं भगवत्तनुः पादुकारूपवस्तुयुगलं नोऽस्माकं बुद्धिमेव कुमुद्वतीं क्षणात् बोधं विकासं नयति । स्थाने युक्तम् । श्लेषानुप्राणितरूपकम् । चन्द्रिकाविमलमौक्तिकदर्शनीयेत्युपमा, अनुगुणश्च संकीर्णः ॥

उद्गाढपङ्कशमनैर्मणिपादरक्षे
मुक्तांशुभिर्मुरभिदो नखरश्मिभिन्नैः ।
चूडापदेषु निहिता त्रिदशेश्वराणां
तीर्थोदकैः स्नपयसीव पदार्थिनस्तान् ॥ २९ ॥

**उद्गाढेति** । हे मणिपादरक्षे, त्रिदशेश्वराणामिन्द्रादीनां चूडापदेषु शिरःसु निहिता त्वमुद्गाढानां दृढानां पङ्कानां पापानां कर्दमानां च शमनैर्निवर्तकैर्मुरभिदो नखरश्मिभिर्भिन्नैः संसृष्टैर्मुक्तांशुभिरेव तीर्थोदकैः पुण्यजलैः पदार्थिनः स्थानाभिलाषिणस्तान् त्रिदशेश्वरानिन्द्रादीन् स्नपयसीव । उत्प्रेक्षा रूपकसंकीर्णा ॥

रङ्गेशपादनखचन्द्रसुधानुलेपं
संप्राप्य सिद्धगुलिका इव तावकीनाः ।
संसारसंज्वरजुषां मणिपादरक्षे
संजीवनाय जगतां प्रभवन्ति मुक्ताः ॥ ३० ॥

**रङ्गेशेति** । हे मणिपादरक्षे, तावकीनास्त्वदीया मुक्ता मौक्तिकानि सिद्धगुलिका इव रसादिद्रव्यनिष्पन्नौषधिगुलिका इव रङ्गेशस्य पादयोर्नखानामेव चन्द्राणां प्रभयैव सुधयामृतेनानुलेपं रूषणं संप्राप्य संसाररूपं संज्वरं तापव्याधिं जुषन्ते ये तेषां

जगतां संजीवनाय प्रभवन्ति कल्पन्ते । उपमा । भिषक्(जो) ज्वराङ्कुशादिरसगुलिकामनुपाने संयोज्य दत्त्वा ज्वरातुरं संजीवयन्ति तद्वदिति भावः ॥

भावोत्तरैरधिगता भरतप्रधानैः
प्रत्युप्तमौक्तिकमिषेण विकीर्णपुष्पा ।
रङ्गेश्वरस्य नियतं त्वयि लास्यभाजो
रङ्गस्थलीव ललिता मणिपादुके त्वम् ॥ ३१ ॥

**भावेति ।** हे मणिपादुके, भावोत्तरैर्भक्त्युत्कर्षवद्भिरभिनयदक्षैश्च भरतप्रधानैः कैकेयीतनयप्रमुखैर्नटपरिवृढैश्चाधिगता ज्ञाता प्राप्ता च प्रत्युप्तानां मौक्तिकानां मिषेण व्याजेन विकीर्णानि पुष्पाणि यस्याः सा त्वं त्वयि ( अधिकरणे ) लास्यभाजो नृत्यसदृशगतिमतो रङ्गेश्वरस्य भगवतो नटपरिवृढस्य ललिता मनोज्ञा रङ्गस्थलीव नर्तनस्थानमिव । नियतमित्युत्प्रेक्षा श्लेषापह्नवगर्भा ॥

मन्ये मुकुन्दचरणावनि मौलिदेशे
विन्यस्य देवि भवतीं विनतस्य शंभोः ।
आपादयन्त्यधिकृताः प्रतिपन्नतारं
चूडातुषारकिरणं तव मौक्तिकौघैः ॥ ३२ ॥

**मन्य इति ।** हे मुकुन्दचरणावनि, अधिकृता अर्चका विनतस्य शंभोर्मौलिदेशे शिरसि भवतीं विन्यस्य चूडातुषारकिरणं शिखाचन्द्रं तव मौक्तिकानामोघैर्निकरैः प्रतिपन्नास्तारा नक्षत्राणि येन तदापादयन्ति कुर्वन्ति । उत्प्रेक्षा ॥

पद्मापतेर्विहरतः प्रियमाचरन्ती
मुक्तामयूखनिवहैः पुरतो विकीर्णैः ।
कन्दानि काञ्चनपदावनि पद्मिनीनां
मन्ये विनिक्षिपसि मन्दिरदीर्घिकासु ॥ ३३ ॥

**पद्मेति ।** हे काञ्चनपदावनि, विहरतः क्रीडतः पद्मापतेः श्रीरङ्गनाथस्य प्रियमिष्टमाचरन्ती त्वं पुरतोऽग्रतो विकीर्णैर्व्याप्तैर्मुक्तामयूखानां निवहैर्मन्दिरदीर्घिकासु गृहवापीषु चन्द्रपुष्करिणीप्रभृतिषु पद्मिनीनां नलिनीनां कन्दानि करहाटान् । 'करहाटः शिफाकन्दः किंजल्कः केसरोऽस्त्रियाम्' इत्यमरः । विनिक्षिपसीति मन्ये । इत्युत्प्रेक्षा । अर्धर्चादेराकृतिगणत्वात् कन्दानीति क्लीबनिर्देशः । कन्दान् इ इति वा पदच्छेदः । 'इ इत्येतद्विस्मयेऽव्ययम् विचित्रखेदकोपात्तेषु(?)' इति नानार्थरत्नमाला ॥

आशास्य नूनमनघां मणिपादरक्षे
चन्द्रस्य वारिधिसुतासहजस्य वृद्धिम् ।

धात्रीं मुकुन्दपदयोरनपायिनीं त्वां
ज्योत्स्ना समाश्रयति मौक्तिकपङ्क्तिलक्ष्यात् ॥ ३४ ॥

आशास्येति । हे मणिपादरक्षे, ज्योत्स्ना चन्द्रिका वारिधिसुतायाः लक्ष्म्याः सहजस्य सोदर्यस्य चन्द्रस्यानघां व्यसनरहितां क्षयरहितामित्यर्थः । वृद्धिमुपचयमाशास्यापेक्ष्य मुकुन्दपदयोर्धात्रीं धारिकां पोषिकां चानपायिनीमविनाभूतां नित्यां च त्वां मौक्तिकानां पङ्क्तेः श्रेण्या लक्ष्याद्व्याजात् समाश्रयति । उत्प्रेक्षा अपह्नवश्लेषोत्तम्भिता च ॥

ये नाम केऽपि भवतीं विनयावनम्रै-
रुत्तंसयन्ति कृतिनः क्षणमुत्तमाङ्गैः ।
इच्छन्ति रङ्गनृपतेर्मणिपादरक्षे
त्वन्मौक्तिकौघनियतामिह ते विशुद्धिम् ॥ ३५ ॥

य इति । हे रङ्गनृपतेर्मणिपादरक्षे, ये नाम केऽपि कृतिनो ये केचन कुशला विनयेनावनम्रैरुत्तमाङ्गैः शिरोभिर्भवतीं त्वां क्षणमुत्तंसयन्ति वहन्ति ते इह जगति तव मौक्तिकौघैर्मुक्तानिकरैर्नियतां नित्यस्थितां महतीं विशुद्धिं श्वैत्यमेव पावनतामिच्छन्ति । कृतिनां पादुकावहनं पादुकामौक्तिकगतशब्दश्लेषाभिहितपावनत्वावाप्त्यर्थमित्युत्प्रेक्ष्यते ॥

अनुदिनललितानामङ्गुलीपल्लवानां
जनितमुकुलशोभैर्देवि मुक्ताफलैस्त्वम् ।
प्रकटयसि जनानां पादुके रङ्गभर्तुः
पदसरसिजरेखापाञ्चजन्यप्रसूतिम् ॥ ३६ ॥

अनुदिनेति । हे देवि पादुके, त्वमनुदिनं प्रतिदिनं ललितानां मनोज्ञानां ग्लानिशून्यानामिति च गम्यते । अङ्गुलीनामेव भगवत्पादाङ्गुलीनामेव पल्लवानां किसलयानां जनितोत्पादिता मुकुलशोभा यैस्तैर्मुक्ताफलै रङ्गभर्तुः पदसरसिजरेखारूपस्य पाञ्चजन्यस्य भगवच्छङ्खस्य प्रसूतिं प्रजानां जनानां प्रकटयसि । शङ्खेषु मौक्तिकप्रसिद्धिमालम्ब्य पादुकामौक्तिकानां भगवच्चरणरेखाशङ्खजन्यत्वमुत्प्रेक्ष्यते । पूर्वार्धेऽङ्गुलीपल्लवमध्यगतमुकुलत्वमुत्प्रेक्ष्यते । उभयत्र रूपकमङ्गम् ॥

बलिविमथनवेलाव्यापिनस्तस्य विष्णोः
पदसरसिजमाध्वी पावनी देवि नूनम् ।
जननसमयलग्नां जाह्नवी तावकानां
वहति चरणरक्षे वासनां मौक्तिकानाम् ॥ ३७ ॥

बलीति । हे देवि चरणरक्षे, बलिविमथनवेलायां व्यापिनः प्रसिद्धस्य विष्णोस्त्रिविक्र-

मस्य पदयोरेव सरसिजयोर्माध्वी मकरन्दात्मिका पावनी परिशुद्धिहेतुर्जाह्नवी गङ्गा जननसमये उत्पत्तिकाले लग्नां सक्तां तावकानां मौक्तिकानां वासनामवयवानुस्मृतिं वहति नूनम् । गङ्गाजलगतश्वैत्यं पादुकावयवानुवृत्तिकृतमित्युत्प्रेक्ष्यते । पूर्वं मकरन्दत्वं रूपितम् । तयोः संसृष्टिः ॥

मधुरिपुपदमित्रैर्वैरमिन्दोः सरोजैः
शमयितुमिव ताराः सेवमानाश्चिरं त्वाम् ।
प्रचुरकिरणपूराः पादुके संश्रितानां
कलिकलुषमशेषं क्षालयन्तीव मुक्ताः ॥ ३८ ॥

मधुरिपुपदेति । हे पादुके, मधुरिपुपदयोर्मित्रैः सुहृद्भिः सरोजैः पद्मैरिन्दोश्चन्द्रस्य वैरं द्वेषं शमयितुं निवर्तयितुं त्वां चिरं सेवमानास्तारा इव नक्षत्राणीव स्थिताः । द्वयोर्वैरस्य तत्संबन्धिभिः शमनीयत्वादिति भावः । प्रचुरः किरणपूरो यासां ताः । मुक्ता मौक्तिकानि नद्य इत्यपि गम्यते । संश्रितानां कलिकलुषं कलिकालजनितदुरितम् पङ्कमित्यपि गम्यते । अशेषं निरवशेषं यथा तथा क्षालयन्ति अपनयन्तीव । उत्प्रेक्षाद्वयसंसृष्टिः ॥

मुकुलितपरितापां प्राणिनां मौक्तिकैः स्वै-
रमृतमिव दुहानामाद्रिये पादुके त्वाम् ।
विषधरफणपङ्क्तिर्यत्प्रभावेण मन्ये
ललितनटनयोग्यं रङ्गमासीन्मुरारेः ॥ ३९ ॥

मुकुलितेति । हे पादुके, स्वैर्मौक्तिकैः प्राणिनाममृतं सुधां दुहानां दुहन्तीम् । अत एव मुकुलितः शमितः परितापो यया तां त्वामाद्रिये पूजयामि । विषधरस्य कालियस्य सर्पस्य फणपङ्क्तिः स्फटाश्रेणी । 'स्फटायां तु फणा द्वयोः' इत्यमरः । यस्या अमृतस्राविण्याः पादुकायाः प्रभावेण मुरारेः श्रीकृष्णस्य ललितनटनस्य शृङ्गारनृत्तस्य योग्यमुचितं रङ्गं रङ्गस्थानमासीदिति मन्ये । अन्यथा नटनासंभवादिति भावः । उत्प्रेक्षाद्वयस्य काव्यलिङ्गस्य च यथासंभवमङ्गाङ्गिभावेन संकरः ॥

सकृदपि विनतानां त्रासमुन्मूलयन्तीं
त्रिभुवनमहनीयां त्वामुपाश्रित्य नूनम् ।
न जहति निजकान्तिं पादुके रङ्गभर्तु-
श्चरणनखमणीनां संनिधौ मौक्तिकानि ॥ ४० ॥

सकृदिति । हे पादुके, मौक्तिकानि सकृदपि विनतानां प्रपन्नानां त्रासं भयं मणिदोषं चेति गम्यते । उन्मूलयन्तीं नाशयन्तीं त्रिभुवनस्य महनीयाम् । त्रिभुवनशब्दस्य पात्रादित्वान्नपुंसकत्वम् । त्वामुपाश्रित्य रङ्गभर्तुश्चरणनखानामेव मणीनां मौक्तिकानाम् ।

परदीप्त्यभिभावितामिति भावः । संनिधौ समीपे निजामात्मीयां कान्तिं न जहति न त्यजन्ति नूनम् । अन्यथा भगवन्नखकिरणैरभिभूतत्वापत्तेरिति भावः । उत्प्रेक्षा ॥

भुवनमिदमशेषं बिभ्रतो रङ्गभर्तुः
पदकमलमिदं ते पादुके धारयन्त्याः ।
चिरविहरणखेदात्संभृतानां भजन्ति
श्रमजलकणिकानां संपदं मौक्तिकानि ॥ ४१ ॥

**भुवनमिति** । हे पादुके, मौक्तिकानि अशेषमिदं भुवनं बिभ्रतो वहतो रङ्गभर्तुरिदं पदकमलयुगं धारयन्त्यास्ते तव चिरं विहरणेन संचारेण जनितात् खेदात् श्रमात् संभृतानां जनितानां श्रमजलकणिकानां खेदबिन्दूनां संपदं शोभां वहन्ति । भारखिन्नस्य खेदजलानि भवन्तीति भावः । गम्योत्प्रेक्षासंसृष्टा निदर्शना ॥

प्रकटितयशसां ते पादुके रङ्गभर्तु-
र्द्विगुणितनखचन्द्रज्योतिषां मौक्तिकानाम् ।
करणविलयवेलाकातरस्यास्य जन्तोः
शमयति परितापं शाश्वती चन्द्रिकेयम् ॥ ४२ ॥

**प्रकटितेति** । हे पादुके, रङ्गभर्तुः प्रकटितानि स्मारितानि यशांसि यैस्तेषाम् । श्रीरङ्गिणो यशोवद्वर्तमानानामित्यर्थः । द्विगुणितानि नखानामेव चन्द्राणि ज्योतींषि यैस्तेषां ते तव मौक्तिकानां शाश्वती नित्येयं चन्द्रिका प्रभात्मिका करणविलयकाले चरमसमये कातरस्याधीरस्यास्य जन्तोः । ममेत्यर्थः । परितापमेव संतापं शमयति । स्मृतिरूपकातिशयोक्त्यनुप्राणितः प्रेयोऽलंकारः ॥

दिव्यं धाम स्थिरमभियतां देवि मुक्तामणीनां
मध्ये कश्चिद्भवति मधुजित्पादुके तावकानाम् ।
न्यस्तो नित्यं निजगुणगणव्यक्तिहेतोर्भवत्या-
मात्मज्योतिःशमिततमसां योगिनामन्तरात्मा ॥ ४३ ॥

**दिव्यमिति** । हे मधुजित्पादुके, भवत्यां त्वयि निजानां गुणगणानामपहतपाप्मत्वादीनां श्वैत्यदीप्त्यादीनां च व्यक्तिहेतोराविर्भावाय प्रकाशाय च न्यस्तः समर्पितः प्रत्युप्तश्च आत्मरूपेण परमात्मरूपेण ज्योतिषा निजदीप्त्या च शमितं तमस्तमोगुणोऽन्धकारश्च येषां तेषां योगिनां मुमुक्षूणामन्तरात्मा जीवात्मा दिव्यं श्रेष्ठमप्राकृतं च स्थिरं नित्यं धाम तेजः परमपदं चाभियतां प्राप्नुवतां तावकानां त्वदीयानां मुक्तामणीनाम् । मुक्तानामित्यपि गम्यते । मध्ये कश्चिद्भवति सजातीयो भवति । विशेषो न लक्ष्यत इति भावः । मुक्तामणीनां मुमुक्षूणामन्तरात्मनां च श्लेषापादितधर्मसाम्यवतां विशेषो न

लक्ष्यत इत्युक्तेर्मीलितमलंकारः । स च श्लेषानुप्राणितः । 'मीलितं यदि सादृश्याद्विशेषो नोपलक्ष्यते ।' इति लक्षणम् ॥

शुद्धे नित्यं स्थिरपरिणतां देवि विष्णोः पदे त्वा-
मास्थानीं तामभितविभवां पादुके तर्कयामि ।
आलोकैः स्वैर्भुवनमखिलं देवि वन्ध्याप्यकामं
मुक्ताः शुद्धिं यदुपसदनाद्बिभ्रति त्रासहीनाः ॥ ४४ ॥

**शुद्ध इति** । हे देवि पादुके, शुद्धे शुद्धसत्त्वात्मके च विष्णोः पदे चरणे परमपदे च नित्यं सदा स्थिरमशिथिलं यथा तथा परिणतां लग्नां वर्तमानां च त्वाममितविभवामनवधिकप्रभावामनवधिकैश्वर्यां च ताम् 'सहस्रस्थूणे दृढे विमिते उग्रे यत्र देवानामधिदेव आस्ते' इति श्रुतिप्रसिद्धामास्थानीमानन्दमयाख्यमहामणिमण्डपं तर्कयामि । उत्प्रेक्षा । त्रासहीना मणिदोषरहिता निर्भयाश्च मुक्ता मौक्तिकानि निवृत्तसंसाराश्च यस्या आस्थानीरूपायाः पादुकाया उपसदनात् सेवनात् प्राप्त्या च स्वैरालोकैरुद्द्योतैर्ज्ञानैश्च दीपवत् प्रदीपवदखिलभुवनं व्याप्याव्रृत्य कामं भृशं शुद्धिं नैर्मल्यं बिभ्रति वहन्ति । इति पूर्वेणान्वयः । उत्प्रेक्षा श्लेषानुप्राणिता ॥

प्राप्ता शौरेश्चरणकमलं पादुके भक्तिभाजां
प्रत्यादेष्टुं किमपि वृजिनं प्रापिता मौलिभागम् ।
देवेन त्वं दशशतदृशा दन्तिराजस्य धत्से
मूर्ध्नि न्यस्ता मुखपटरुचिं मौक्तिकानां प्रभाभिः ॥ ४५ ॥

**प्राप्तेति** । हे पादुके, शौरेश्चरणकमलं प्राप्ता भक्तिभाजां पुरुषाणां किमपि संसाररूपं वृजिनं पापं प्रत्यादेष्टुं निराकर्तुं मौलिभागं शिरोदेशं प्रापिता नीता त्वं दशशतदृशा सहस्राक्षेण देवेनेन्द्रेण दन्तिराजस्यैरावतस्य मूर्ध्नि न्यस्ता सती मौक्तिकानां प्रभाभिर्मुखपटरुचिं मुक्तासारविरचितमुखावरणशोभां धत्से । इत्युत्प्रेक्षा ॥

तव हरिपादुके पृथुलरत्नमौक्तिकभुवः
प्रचलदमर्त्यसिन्धुलहरीसहधर्मचराः ।
पदमजरामरं विदधते कथमम्ब सतां
प्रणतसुरेन्द्रमौलिपलितंकरणाः किरणाः ॥ ४६ ॥

**तवेति** । हे हरिपादुके, प्रचलन्त्याः प्रवहन्त्या अमर्त्यसिन्धुलहर्या गङ्गाप्रवाहस्य सहधर्मचराः सदृशास्तव पृथुलेभ्यो मौक्तिकरत्नेभ्यः । भवन्तीति भुवः । एते किरणाः प्रणतानां सुरेन्द्राणां जरारहितानामपि मौलीनां केशानां पलितंकरणाः जरासाधनानि सन्तः। 'आढ्यसुभग–'इत्यादिना पलिते उपपदे कर्तुः करणेऽर्थे ख्युन् । 'अरुर्द्विषदजन्तस्य

मुम् ।६।३।६७॥' इति मुमागमः । सतां पदं स्वरूपमजरामरं जरारहितं नाशरहितं च कथं विदधते । एतल्लोकविलक्षणमित्यर्थः । व्याघातालंकारः ॥

कपर्दे कस्यापि क्षितिधरपदत्रायिणि तथा
मुहुर्गङ्गामन्यां क्षरति तव मुक्तामणिमहः ।
मुधारम्भः कुम्भस्थलमनुकलं सिञ्चति यथा
निरालम्बो लम्बोदरकलभशुण्डालचुलकः ॥ ४७ ॥

**कपर्द इति ।** क्षितिधरस्य श्रीरङ्गनाथस्य पदत्रायिणि कस्यापि हरस्य कपर्दे जटाजूटे तव मुक्तामणीनां महः मुहुः शश्वदन्यां प्रसिद्धगङ्गाविलक्षणां गङ्गां तथा क्षरति स्रवति । गङ्गेव प्रसरतीत्यर्थः । यथा लम्बोदरस्यैव गजाननस्यैव कलभस्य गजपोतस्य शुण्डालस्य शुण्डायाः।'कुटीशमीशुण्डाभ्यो रः' इति रप्रत्ययः।चुलुकः पुटो निरालम्बः सन् मुधारम्भो व्यर्थोद्योगः सन् कुम्भस्थलं मस्तकदेशमनुकलं क्षणे क्षणे सिञ्चति उक्षति । तथेति पूर्वेणान्वयः । 'अटन्त्याः स्वच्छन्दं हरिपदधरे हाटकधरे' इति पाठे तु हरिपदधरे पादुके इति संबुद्धिः । हाटकधरे हेमपर्वते मेरावित्यर्थः । 'अहार्यधरपर्वताः' इत्यमरः । तत्र स्वच्छन्दं स्वैरं यथा तथा अटन्त्याः संचरन्त्याः । तवेत्यादि पूर्ववत् । भ्रान्तिमदलंकारसंकीर्णोत्प्रेक्षा ॥

मुकुन्दपदरक्षिणि प्रगुणदीप्तयस्तावकाः
क्षरन्त्यमृतनिर्झरं कमपि मौक्तिकग्रन्थयः ।
मनागपि मनीषिणो यदनुषङ्गिणस्तत्क्षणा-
ज्जरामरणदन्तुरं जहति हन्त तापत्रयम् ॥ ४८ ॥

**मुकुन्देति ।** हे मुकुन्दपदरक्षिणि, प्रगुणदीप्तयो भूरिमहसस्तावकास्त्वदीया मौक्तिकानां ग्रन्थयः पङ्क्तयः । अत्र ग्रथितेषु ग्रन्थिशब्दः । अक्षरं नित्यं कमपि विलक्षणममृतनिर्झरं सुधां मोक्षं च क्षरन्ति स्रावयन्ति वितरन्तीत्यर्थः । मुक्तादीप्तिरमृतवद्भातीति भावः । मनीषिणः वुधा मनागपि ईषदपि यदनुषङ्गिणो येषाममृतस्राविणां मौक्तिकानां संबन्धवन्तः सन्तः जरामरणाभ्यां दन्तुरं विषमं तापत्रयमाध्यात्मिकाधिभौतिकाधिदैविकलक्षणं जहति त्यजन्ति । काव्यलिङ्गानुप्राणितोत्प्रेक्षालंकारः ॥

देवः श्रीपदलाक्षया तिलकितस्तिष्ठत्युपर्येव ते
गौरीपादसरोजयावकधनी मूले समालक्ष्यते ।
इत्थं जल्पति दुर्मदान्मुरभिदः शुद्धान्तचेटीजने
प्रायस्त्वं मणिपादुके प्रहसिता मुक्तामयूखच्छलात् ॥ ४९ ॥

**देव इति ।** हे मणिपादुके, श्रियो लक्ष्म्या पदलाक्षया चरणालक्तकेन तिलकितः

परिष्कृतः । तिलकशब्दात् तारकादित्वादितच् । 'तिलकं चित्रके प्राहुर्ललामेऽतीव कालके ।' इति विश्वः । लक्ष्म्याश्चरणयोः प्रणतः । लक्ष्म्याश्चरणेन मूर्ध्नि ताडित इति गम्यते । देवः श्रीरङ्गनाथस्ते तवोपर्येवोर्ध्वभाग एव तिष्ठति वर्तते । रत्यासक्त इति गम्यते । गौर्याः पादसरोजयावकेन धनी धनवान् । गौरीपादालक्तकं धनवद्बहु मन्यत इति भावः । पादताडने लज्जाहीन इत्यपि गम्यते । शिवो मूलेऽधस्तात् । पादुकायाः शिरोनिष्ठत्वादिति भावः । समालक्ष्यते दृश्यते । अन्यविटदर्शनभीत्याच्छन्न इत्यपि गम्यते । इत्थमनेन प्रकारेण मुरभिदः श्रीरङ्गनाथस्य शुद्धान्तचेटीजनेऽन्तःपुरपरिचारकदासीजने दुर्मदाद्गर्वेण वदति गर्व्यं वदति सति त्वं मुक्तानां मौक्तिकानां मयूखव्याजेन प्रहसिता हसितवती । चेटीभिर्जात्यानुरूप्येण तस्य प्रशंसनस्यार्थान्तरगर्भताया ध्वनिवृत्त्या कविनाविष्करणाद्विवृतोक्तिरलंकारः । 'विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि ।' इति लक्षणम् । तदनुप्राणितः कैतवापह्नुतिरलंकारः ॥

रङ्गेशचरणरक्षा सा मे विदधातु शाश्वतीं शुद्धिम् ।
यन्मौक्तिकप्रभाभिः श्वेतद्वीपमिव सह्यजाद्वीपम् ॥ ५० ॥

**रङ्गेशेति** । सा रङ्गेशस्य चरणरक्षा मे मम शाश्वतीं शुद्धिं मौक्तिकरूपाम् । श्वैत्यमित्यपि गम्यते । विदधातु तनोतु । यस्या मौक्तिकानां प्रभाभिः सह्यजायाः कावेर्या द्वीपं मध्यपुलिनं श्वेतद्वीपमिव भवतीति गम्यते । उपमा पूर्वार्धे प्रेयः, तयोः संकरः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे मौक्तिकपद्धतिरष्टादशी ॥

---

मरकतपद्धतिरेकोनविंशी ।

अथास्यां पद्धत्यां मरकतमात्रपरिष्कृतां पादुकां वर्णयति—

वन्दे गारुत्मतीं वृत्त्या मणिस्तोमैश्च पादुकाम् ।
यया नित्यं तुलस्येव हरितत्वं प्रकाश्यते ॥ १ ॥

**वन्द इति** । वृत्त्या भगवद्वहनरूपव्यापारेण मणिस्तोमैर्मरकतरत्नसमूहैश्च गारुत्मतीं गरुत्मतो गरुडस्य सदृशीम् । सादृश्यं संबन्धमात्रविवक्षायाम् 'तस्येदम्' इत्यण् । 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः ।' इत्यमरः । पादुकां वन्दे । यया मरकतमणियुक्तपादुकया तुलस्येव नित्यं सदा हरितत्वं हरिरूपं तत्त्वं वस्तु हरितभावश्च । 'पालाशो हरितो हरित्' इत्यमरः । प्रकाश्यते प्रकटीक्रियते । तामिति पूर्वेणान्वयः । अर्धद्वयेऽप्युपमालंकारः । वृत्त्या मणिस्तोमैश्चेति समुच्चयालंकारः ॥

सविलासगतेषु रङ्गभर्तुस्त्वदधीनेषु बहिष्कृतो गरुत्मान् ।
अधिगच्छति निर्वृतिं कथंचिन्निजरत्नैस्त्वयि पादुके निविष्टैः ॥ २ ॥

**सविलासेति** । हे पादुके, त्वदधीनेषु त्वदायत्तेषु रङ्गभर्तुः सविलासगतेषु लीलासंचारेषु बहिष्कृतोऽनन्वितो गरुत्मान् । संचारेषु वाहनाभावात् । त्वयि निविष्टः प्रत्युप्तैर्निजरत्नैरात्मीयमणिभिर्गारुत्मतैः । गारुत्मतशब्दे गरुडसंबन्धप्रतीतेरिति भावः । कथंचित् निर्वृतिं भगवदङ्गसुखानुभवमधिगच्छति प्राप्नोति । परम्परासंबन्धेनापि तुष्यतीति भावः । गारुत्मतसंबन्धस्य हेतोर्हेतुत्ववर्णनाद्धेतूत्प्रेक्षा ॥

समये मणिपादुके मुरारेर्मुहुरन्तःपुरमुग्धचेटिकास्ते ।
हरितान् हरिदश्मनां मयूखांस्तुलसीपल्लवशङ्कया क्षिपन्ति ॥ ३ ॥

**समय इति** । हे मणिपादुके, मुरारेरन्तःपुरमुग्धचेटिकाः शुद्धान्तमूढदास्यः समये भगवत्संचारकाले ते तव हरितान् हरिदश्मनां मयूखान् तुलसीपल्लवानां शङ्कया भ्रमेण क्षिपन्ति । स्वपादसंबन्धभयादन्यत्र निरस्यन्तीति भावः । भ्रान्तिमदलंकारः ॥

हरितः सहसा हरिन्मणीनां प्रभया रङ्गनरेन्द्रपादरक्षे ।
तुलसीदलसंपदं दधाति त्वयि भक्तैर्निहितः प्रसूनराशिः ॥ ४ ॥

**हरित इति** । हे रङ्गनरेन्द्रपादरक्षे, त्वयि (अधिकरणे) भक्तैर्निहितोऽर्पितः प्रसूनानां पुष्पाणां राशिः समूहः सहसा झटिति हरिन्मणीनां मरकतानां प्रभया हरितः श्यामः सन् तुलसीदलानां संपदं शोभां दधाति वहति । निदर्शनालंकारस्तद्गुणसंकीर्णः ॥

प्रसादयन्ती मणिपादुके त्वं विक्षेपयोगेन विहारवेलाम् ।
हरिन्मनोज्ञा हरिकान्तिसिन्धोः संदृश्यसे शैवलमञ्जरीव ॥ ५ ॥

**प्रसादयन्तीति** । हे मणिपादुके, विक्षेपयोगेन भगवच्चरणविक्षेपेण हेतुना, अन्यत्र प्रसरणेन हेतुना । 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः । विहारवेलां लीलाकालम्, अन्यत्र क्षोभजनितसमुद्रजलकालुष्यम् । 'विहारो भ्रमणे स्कन्धे लीलायां सुभगालये ।' इति विश्वः । 'अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि ।' इत्यमरः । प्रसादयन्ती हर्षयुक्तं कुर्वन्ती वैमल्ययुक्तं कुर्वन्ती । शैवालयोगेन जले प्रसादो भवतीति प्रसिद्धिः । भगवद्धर्षसंयोगात् कालस्य हर्षयोगः । हरिद्भिर्मरकतैः । सामान्यशब्देन विशेषरत्नाभिधानम् । श्यामवर्णेन च मनोज्ञा हरेः कान्तेः प्रभाया एव सिन्धोः समुद्रस्य शैवलानाम् । 'जलनीली तु शैवालं शैवलः' इत्यमरः । मञ्जरी वल्लरीव संदृश्यसे । श्लेषरूपकाभ्यामनुप्राणितोत्प्रेक्षा ॥

बध्नासि रङ्गेश्वरपादरक्षे हरिन्मणीनां प्रभया स्फुरन्त्या ।
चूडापदेषु श्रुतिसुन्दरीणां माङ्गल्यदूर्वाङ्कुरमाल्यपङ्क्तिम् ॥ ६ ॥

**बध्नासीति** । हे रङ्गेश्वरपादरक्षे, स्फुरन्त्या हरिन्मणीनां प्रभया श्रुतीनामेव सुन्दरीणां चूडापदेषु शिरःसु माङ्गल्यानां मङ्गलार्थानाम् । 'तत्र साधुः' इति यत् । दूर्वाङ्कुररचितमाल्यानां पङ्क्तिं श्रेणिं बध्नासि । उत्प्रेक्षा ॥

अच्छेद्यरश्मिनियतैर्घटिता हरिद्भिः
सद्वर्त्मना गतिमती मणिपादरक्षे ।
संदृश्यसे सवितृमण्डलमध्यभाजो
रङ्गेश्वरस्य रथसंपदिवापरा त्वम् ॥ ७ ॥

अच्छेद्येति । हे मणिपादरक्षे, अच्छेद्यैरप्रतिबन्धसरणैरविलयैश्च रश्मिभिः किरणै रज्जुभिश्च नियतैरविनाभूतैर्बद्धैर्हरिद्भिर्मरकतरत्नैः श्यामवर्णैरश्वैश्च । 'हरित् ककुभि वर्णे च तृणवाजिविशेषयोः ।' इति विश्वः । घटिता संबद्धा सद्वर्त्मना समीचीनमार्गेण नक्षत्रपथेन च गतिमती त्वं सवितुः सूर्यस्य मण्डलस्य बिम्बस्य मध्यं भजतीति तथोक्तस्य रङ्गेश्वरस्यापरा सूर्यरथसंपदिव स्यन्दनात्मकसंपत्तिरिव संदृश्यसे । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुतेर्भगवतः सूर्यमण्डलावस्थानम् । श्लेषानुप्राणितोत्प्रेक्षा ॥

श्यामायमाननिगमान्तवनोपकण्ठाः
स्थाने पदावनि हरिन्मणयस्त्वदीयाः ।
पर्यन्तशाद्वलवतीं प्रथयन्ति नित्यं
नारायणस्य रुचिरां नखरश्मिगङ्गाम् ॥ ८ ॥

श्यामेति । हे पदावनि, श्यामायमानाः श्यामलीभवन्तो निगमान्तानां वेदान्तानामुपकण्ठाः समीपदेशा यैस्ते, श्यामीभवत्पत्तनपर्यन्तवनसमीपदेशाश्च । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अपि' इत्यमरः । त्वदीया हरिन्मणयो मरकतरत्नानि रुचिरां मनोज्ञां नारायणस्य नखानां रश्मिमेव गङ्गां नित्यं पर्यन्ते समीपे शाद्वलवतीं बालतृणहरितदेशवतीं प्रथयन्ति प्रख्यापयन्ति । रूपकसंकीर्णोत्प्रेक्षा । श्लेषश्चाङ्गम् ॥

उद्दिश्य कामपि गतिं मणिपादरक्षे
रङ्गेश्वरस्य चरणे विनिवेशितात्मा ।
प्रायो हरिन्मणिरुचा दृढभक्तिबन्धा
प्रादुष्करोति भवती तुलसीवनानि ॥ ९ ॥

उद्दिश्येति । हे मणिपादरक्षे, कामपि गतिं त्वन्मात्रपरिज्ञातं किंचित्प्राप्य गमनं चोद्दिश्यापेक्ष्य रङ्गेश्वरस्य चरणे विनिवेशितात्मा न्यस्तभरा निक्षिप्तस्वशरीरा च भवती दृढो भक्तिबन्धः प्रेमानुबन्धो रत्नवदिति विभागसंबन्धश्च यस्याः सा सती हरिन्मणीनां रुचा तुलसीवनानि प्रादुष्करोति संपादयसीव । इत्युत्प्रेक्षा । फलार्थिनो भक्त्या भगवदर्चनाय तुलसीदलानि कल्पयन्तीति भावः । श्लेषश्चाङ्गम् ॥

सेवार्थमागतवतां त्रिदशेश्वराणां
चूडामणिप्रकरशालिषु मौलिषु त्वम् ।

संवर्तयस्यसुरमर्दनपादरक्षे
स्वेनाश्मगर्भमहसा शुकपङ्क्तिशोभाम् ॥ १० ॥

सेवार्थेति । हे असुरमर्दनपादरक्षे, त्वं सेवार्थमागतवतां त्रिदशेश्वराणामिन्द्रादीनां चूडामणिप्रकरान् शिखागतरत्नसमूहान् शालितुं संवरितुं शीलं येषां ते तथोक्ताः । चूडामणिप्रकरवन्त इत्यर्थः । 'शल चलनसंवरणयोः' इति धातुः । ताच्छील्ये णिनिः । तेषु चूडामणिप्रकरात्मकशाल्याख्यव्रीहिभेदवत्सु इत्यपि गम्यते । मौलिषु किरीटेषु स्वेन निजेनाश्मगर्भाणां मरकतानाम् । 'अश्मगर्भो हरिन्मणिः' इत्यमरः । महसा अंशुना शुकानां कीराणां पङ्क्तेः शोभां संवर्तयसि । उत्प्रेक्षा श्लेषानुप्राणिता ॥

दरपरिणतपूर्वा वल्लरीनिर्विशेषै-
र्मरकतशकलानां मांसलैरंशुजालैः ।
पशुपतिविधृता त्वं तस्य पाणौ निषण्णं
मधुरिपुपदरक्षे वञ्चयस्येणशावम् ॥ ११ ॥

दरेति । हे मधुरिपुपदरक्षे, त्वं पशुपतिना रुद्रेण विधृता विभृता सती दरपरिणतयेषत्परिपक्वया । 'ईषदर्थे दराव्ययम्' इति विश्वः । दूर्वावल्लर्या निर्विशेषैरत्यन्तसदृशैर्मांसलैः स्फीतैर्मरकतशिलानां गारुत्मतरत्नखण्डानामंशुजालैः किरणसमूहैस्तस्य रुद्रस्य पाणौ हस्ते निषण्णं वर्तमानं एणशावं हरिणशिशुं वञ्चयसि आकर्षयसि । 'वञ्चु गतौ' इति धातुः । हेतुमति णिच् । नत्वत्र प्रलम्भनधर्मः । 'गृधिवञ्च्योः प्रलम्भने' इत्यात्मनेपदप्रसङ्गात् । प्रलम्भनं त्वाक्षिप्यते । दूर्वाप्रतीतिजनकैरंशुभिः सह तत्कार्यस्याकर्षणस्य वर्णनात् हेतुरलंकारः । तेन भ्रान्तिमदलंकारो व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

हरिचरणसरोजे न्यासयोग्यं भवत्याः
प्रगुणमभिलषन्त्यो वर्णलाभं तुलस्यः ।
प्रतिदिशमुपहारैः पादुके तावकानां
मरकतशकलानामाश्रयन्ते मयूखान् ॥ १२ ॥

हरीति । हे पादुके, तुलस्यो हरिचरणसरोजयोर्न्यासस्य निक्षेपस्य योग्यमर्हं प्रगुणमुत्कृष्टं भवत्या मरकतप्रचुरायास्तव वर्णस्य श्यामरूपस्य लाभमभिलषन्त्यः काङ्क्षन्त्यः सत्यः तावकानां मरकतशकलानां मयूखान् उपहारैः स्वदलरूपाभिरुपदाभिः । 'उपहारस्त्वुपदा' इत्यमरः । प्रतिदिनमाश्रयन्ते सेवन्ते । अर्चनार्थमानीतेषु तुलसीदलेषु तुलसीदत्तोपहारत्वं रूपयित्वा प्राप्तिस्तुलसीदलसंबन्धाश्रयणत्वेनोत्प्रेक्ष्यते ॥

हरितमणिमयूखैरञ्चिताध्यात्मगन्धै-
र्दिशसि चरणरक्षे जातकौतूहला त्वम् ।

दनुजमथनलीलादारिकाणामुदारां
दमनकदलपङ्क्तिं देवि मौलौ श्रुतीनाम् ॥ १३ ॥

हरितेति । हे देवि चरणरक्षे, त्वं जातकौतूहला उत्पन्नकुतूहला सती अञ्चितः पूजितोऽध्यात्मगन्धो वेदान्ते संबन्धो येषां तैः, वेदान्तभाग एव गन्धः सौरभं येषां तैः, अध्यात्मं शरीरे गन्धः सौरभं येषां तैरिति चार्थः । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ।' इत्यमरः । अध्यात्ममिति विभक्त्यर्थेऽव्ययीभावः । 'नाञ्चेः पूजायाम्—६।४।३०' इति नलोपाभावः । हरितमणीनां मयूखैः दनुजमथनस्य श्रीरङ्गनाथस्य लीलादारिकाणां क्रीडाकुमारीणां श्रुतीनां मौलौ शिरसि दमनकस्य गन्धौषधिविशेषस्य दलपङ्क्तिं पत्रश्रेणीं दिशसि ददासि । पादुकामरकतकिरणेषु प्रतिपाद्य पादुकासंबन्धेन श्रुतिसंबन्धात् तस्याश्चूडापरिष्कारकमरकतदलमालात्वमुत्प्रेक्ष्यते ॥

अधिगतबहुशाखैरश्मगर्भप्रसूतै-
र्मधुरिपुपदरक्षे मेचकैरंशुजालैः ।
अनितरशरणानां नूनमारण्यकानां
किमपि जनयसि त्वं कीचकारण्यदुर्गम् ॥ १४ ॥

अधिगतेति । हे मधुरिपुपदरक्षे, त्वम्, अधिगताः प्राप्ता बह्वयः शाखा वेदभागाः शाखाश्च यैस्तैर्मेचकैः श्यामैरश्मगर्भैर्मरकतैः प्रसूतैरुत्पादितैरंशुजालैरनितरशरणानामव्यतिरिक्तरक्षकाणामन्यगृहहीनानां च । 'शरणं गृहरक्षित्रोः' इत्यमरः । आरण्यकानामरण्येऽध्येयानां वेदभागानामेवमरण्यवासिनां मनुष्याणां वानप्रस्थानाम् । 'अरण्यान्मनुष्ये ४।२।१२९' इति सूत्रे 'पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्' इतिवचनात् ठक् [वुञ्] । किमपि विलक्षणं कीचकारण्यं स्वनयुक्तवेणुवनमेव दुर्गं परागम्यप्रदेशं जनयसि । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।' इत्यमरः । नूनमित्युत्प्रेक्षा ॥

प्रचुरनिगमशाखां पादुके रङ्गिणस्त्वां
चरणनखमयूखैश्चारुपुष्पानुबन्धाम् ।
मरकतदलरम्यां मन्महे संचरन्तीं
कनकहरिदनूपे कांचिदुद्यानलक्ष्मीम् ॥ १५ ॥

प्रचुरेति । हे पादुके, प्रचुरा निगमशाखा वेदभागा एव शाखा यस्यास्तां रङ्गिणश्चरणयोर्नखानां मयूखैश्चारु रम्यः पुष्पानुबन्धः प्रसूनयोगो यस्यास्तां मरकतदलरम्यां मरकतखण्डरम्यां मरकतैरिव स्थितैर्दलैः पत्रै रम्यां त्वां कनकहरितः कावेर्या अनूपे कच्छदेशे संचरन्तीं कांचिदुद्यानलक्ष्मीमुपवनश्रियं मन्महे इत्युत्प्रेक्षा ॥

नखकिरणनिकायैर्नित्यमाविर्मृणाले
महितरसविशेषे मेचकैरंशुभिस्ते।
परिकलयसि रम्यां पादुके रङ्गभर्तुः
पदकमलसमीपे पद्मिनीपत्रपङ्क्तिम्॥ १६॥

**नखेति**। हे पादुके, त्वं रङ्गभर्तुर्नखकिरणानां निकायैः समूहैर्नित्यं सदा आविर्भूतानि मृणालानि बिसानि यस्य तस्मिन्। महितो रसविशेषः प्रीतिभेद एव जलभेदो यस्य तस्मिन्। रङ्गभर्तुः पदस्यैव कमलस्य समीपे मेचकैः श्यामैस्ते मरकतमय्यास्तवांशुभी रम्यां पद्मिन्या नलिन्याः पत्रपङ्क्तिं दलश्रेणिं परिकलयसि संपादयसि। उत्प्रेक्षा॥

अनिमिषयुवतीनामार्तनादोपशान्त्यै
त्वयि विनिहितपादे लीलया रङ्गनाथे।
दधति चरणरक्षे दैत्यसौधानि नूनं
मरकतरुचिभिस्ते मङ्क्षु दूर्वाङ्कुराणि॥ १७॥

**अनिमिषेति**। हे चरणरक्षे, रङ्गनाथेऽनिमिषाणां देवानां युवतीनां स्त्रीणामार्तनादस्योपशान्त्यै। असुरवधार्थमिति भावः। त्वयि (अधिकरणे) लीलया विनिहितपादे निक्षिप्तचरणे सति दैत्यसौधानि ते मरकतरुचिभिर्दूर्वाङ्कुराणि मङ्क्षु सपदि दधति वहन्ति। असुरगृहेषु शून्यागारत्वसूचकदूर्वाप्ररोहत्वं पादुकामरकतकिरणेषूत्प्रेक्ष्यते॥

विपुलतममहोभिर्वीतदोषानुषङ्गं
विलसदुपरिनैल्यं देवि विष्णोः पदं तत्।
पृथुमरकतदृश्यां प्राप्य पादावनि त्वां
प्रकटयति समन्तात् संप्रयोगं हरिद्भिः॥ १८॥

**विपुलेति**। हे देवि पादावनि, विपुलतमैरत्यन्तविशालैर्महोभी रक्तकिरणैरुपलक्षितं वीतोऽस्पृष्टो दोषानुषङ्गो द्वेषसंसर्गो यस्य तत्। अन्यत्राहोभिर्दिवसैर्वीतो दोषानुषङ्गो रात्रिसंबन्धो यस्य तत्। विपुलतममतिविशालं विलसत् प्रकाशमानमुपरि प्रपदभागे नैल्यं नीलवर्णं यस्य तत्। अधोभागस्य रक्तवर्णत्वादिति भावः। अन्यत्र विलसत् उपरिनैल्यमूर्ध्वप्रदेशे नीलिमा यस्य तत्। प्रकाशस्योपरिभागे नीलतया प्रतीतेः। तद्विष्णोः पदं चरणं प्रकाशं च (कर्तृ) पृथुमरकतदृश्यां त्वां प्राप्य हरिद्भिर्दिग्भिः, अन्यत्राश्वैश्च समन्तात् सर्वत्र संप्रयोगं संसर्गं प्रकटयति। मरकतमयपादुकासंबन्धेन भगवच्चरणारविन्दं श्यामीभवत्सर्वदिक्षु संचरति। प्रकाशं तु हरिद्वर्णयुक्तं सवितृमण्डलान्तर्वर्तिभगवत्संचाराय हरिदश्वयुक्तं च भवतीति भावः। श्लेषालंकारः। विपुलतममहोभिरित्यत्र सभङ्गः, अन्यत्र त्वभङ्ग इति विवेकः॥

पद्माभूम्योः प्रणयसरणिर्यत्र पर्यायहीना
यत्संसर्गादनघचरिताः पादुके कामचाराः ।
तारासक्तं तमिह तरुणं प्रीणयन्ते जरत्यो
नित्यश्यामास्तव मरकतैर्नूनमाम्नायभावः ॥ १९ ॥

**पद्मेति** । हे पादुके, यत्र भगवति पद्माभूम्योः श्रीभूम्योः प्रणयसरणिः प्रेमप्रकारः पर्यायहीना असदृशी । कामचाराः शास्त्रानियम्या गोपस्त्रीविहारादयो यस्य भगवतः संसर्गादनघानि पापरहितानि चरितानि कृत्यानि येषां ते तथोक्ताः । अभूवन्निति गम्यते । तारे प्रणवे प्रसक्तं बोधकत्वेन तत्परम् । प्रणवबोध्यमित्यर्थः । तारासु नक्षत्रेषु प्रसक्तं चन्द्रमित्यपि प्रतीयते । तं तरुणं युवानं जरत्योऽनादिकालवर्तिन्यः । वृद्धा इत्यपि गम्यते । आम्नायवाचस्तव मरकतैर्नित्यश्यामाः । नित्यश्यामीकृता युवत्य इत्यपि गम्यते । सत्यः इह जगति प्रीणयन्ते रञ्जयन्ति । नूनमित्युत्प्रेक्षा श्लेषानुप्राणिता ॥

स्थलकमलिनीव काचिच्चरणावनि भासि कमलवासिन्याः ।
यन्मरकतदलमध्ये यः कश्चिदसौ समीक्ष्यते शौरिः ॥ २० ॥

**स्थलेति** । हे चरणावनि, त्वं कमलवासिन्याः श्रियः काचिद्विलक्षणा स्थलोत्पन्ना कमलिनीव आवासनलिनीव भासि राजसे । यस्याः पादुकाया मरकतदलानां मरकतरत्नखण्डानामेव पत्राणां मध्ये असौ शौरिः श्रीरङ्गनाथो यः कश्चिदविलक्षणः सजातीयः समीक्ष्यते संदृश्यते । परिष्काररत्नेषु स्वयमपि रत्नवद्भवति, नलिनीदलेषु दलवच्च भवतीत्यर्थः । उत्प्रेक्षालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे मरकतपद्धतिरेकोनविंशी ॥

---

इन्द्रनीलपद्धतिर्विंशी ।

अथास्यां पद्धत्यामिन्द्रनीलमात्रालंकृतां पादुकां वर्णयति—

हरिणा हरिनीलैश्च प्रतियत्नवतीं सदा ।
अयत्नलभ्यनिर्वाणामाश्रये मणिपादुकाम् ॥ १ ॥

**हरिणेति** । हरिणा श्रीरङ्गनाथेन हरिनीलैरिन्द्रनीलरत्नैश्च सदा निरन्तरं प्रतियत्नवतीं परिष्कारयुक्ताम् । सदा प्रयत्नवतीमित्यपि गम्यते । 'कृञः प्रतियत्ने' इत्यत्र गुणान्तराधानं प्रतियत्न इति व्याख्यातारः । अयत्नलभ्यमनायासेन प्राप्यं निर्वाणं सुखं मोक्षश्च यया करणभूतया तां मणिपादुकामाश्रये सेवे । अयत्नाल्लभ्यसुखवत्यपि यत्नवतीति विरोधप्रतीतेर्विरोधाभासोऽलंकारः, हरिणा हरिनीलैश्चेति समुच्चयः, आश्रय इति श्रेयः । तेषां संसृष्टिः ॥

हरिरत्नमरीचयस्तवैते नवनीलीरसनिर्विशेषवर्णाः।
श्रुतिमूर्धनि शौरिपादरक्षे पलितानुद्भवभेषजं भवन्ति॥ २॥

**हरिरत्नेति**। हे शौरिपादरक्षे, नवस्य नूतनस्य नीलीरसस्य नीलाख्यौषधिविशेषस्य द्रव्यस्य निर्विशेषः सदृशो वर्णो येषां ते तव एते परिदृश्यमाना हरिरत्नानां मरीचयो रश्मयः श्रुतीनां वेदानां मूर्धनि शिरसि पलितस्य जराजन्यशौक्ल्यस्य। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। अनुद्भवार्थमजननार्थं भेषजमौषधं भवन्ति। भिषजो नीलीरसविशिष्टेनौषधविशेषेण जराशौक्ल्यमनुत्पन्नमेव कुर्वन्तीति भावः। उत्प्रेक्षा गम्या॥

अलकैरिव बिम्बितैः श्रुतीनां हरिनीलैः सृजसि त्वमुन्मयूखैः।
कमलादयितस्य पादरक्षे करुणोदन्वति शैवलप्ररोहान्॥ ३॥

**अलकैरिति**। हे पादरक्षे, त्वं बिम्बितैः पादुकायां प्रतिफलितैः श्रुतीनामलकैश्चूर्णकुन्तलैरिव स्थितैरुन्मयूखैरुद्गता मयूखा येषां तैर्हरिनीलैः कमलादयितस्य रङ्गभर्तुः करुणोदन्वति दयासमुद्रे शैवलानां प्ररोहानुद्भूतान् सृजसि। उत्प्रेक्षा॥

अनघैर्हरिनीलपद्धतीनां प्रथमानैर्मणिपादुके मयूखैः।
अधरीकुरुषे रथाङ्गपाणेरमितामूर्ध्वमवस्थितस्य कान्तिम्॥ ४॥

**अनघैरिति**। हे पादुके, त्वमनघै रम्यैः प्रथमानैः प्रसृत्वरैर्हरिनीलपद्धतीनामिन्द्रनीलपङ्क्तीनां मयूखैरूर्ध्वमुपर्यवस्थितस्य रथाङ्गपाणेः श्रीरङ्गनाथस्यामितामधिकां कान्तिमधरीकुरुषे ततोऽप्युत्कृष्टतया भासि, तदूर्ध्वमपि स्वभासा आवृणोषीति चार्थः। उपरिस्थितस्याधस्तादवस्थानमिति विरोधः। उक्तः परिहार इति विरोधाभासालंकारः॥

चरणावनि भाति सह्यकन्या हरिनीलद्युतिभिस्तवानुविद्धा।
वसुदेवसुतस्य रङ्गवृत्तेर्यमुनेव स्वयमागता समीपम्॥ ५॥

**चरणावनीति**। हे चरणावनि, हरिनीलानामिन्द्रनीलानां द्युतिभिरनुविद्धा व्याप्ता सह्यकन्या कावेरी रङ्गवृत्तेर्वसुदेवसुतस्य श्रीरङ्गनाथस्य समीपं स्वयमागता। विहारार्थमिति भावः। यमुनेव कालिन्दीव भाति। बलभद्रसमीपे पूर्वं यमुनागमनवदिति वसुदेवसुतशब्देन प्रतीयते। उत्प्रेक्षा॥

अवधीरितदेवतान्तराणामनघैस्त्वं मणिपादुके मयूखैः।
हरिनीलसमुद्भवैर्विधत्से हरिसारूप्यमयत्नतो जनानाम्॥ ६॥

**अवधीरितेति**। हे मणिपादुके, त्वं हरिनीलसमुद्भवैरनघैर्मयूखैरवधीरितानि देवतान्तराणि भगवद्व्यतिरिक्तदेवता यैस्तेषां जनानामयत्नतोऽनायासेन हरिसारूप्यं भगवत्समानवर्णत्वं भगवत्समानस्वरूपत्वं विधत्से तनोषि। परमसाम्यलक्षणमोक्षमपि संपादयसि। श्लिष्टरूपकम्॥

नेत्रेषु पुंसां तव पादरक्षे नीलाश्मभासा निहिताञ्जनेषु ।
श्रिया समं संश्रितरङ्गकोशो निधिः स्वयं व्यक्तिमुपैति नित्यम् ॥ ७ ॥

नेत्रेष्विति । हे पादरक्षे, तव नीलाश्मनां भासा पुंसां नेत्रेषु नयनेषु निहितमञ्जनं येषु तेषु सत्सु श्रिया समं संश्रितो रङ्गविमानमेव कोशो धनगृहं येन सः निधिः श्रीरङ्गनाथो नित्यं स्वयमात्मना व्यक्तिं प्रकटतामुपैति । जना नयननिहितेनाञ्जनेन निधिं पश्यन्तीति भावः । निध्यञ्जनत्वमुत्प्रेक्ष्यते । निधिशब्देन भगवत उपादानाद्रूपकातिशयोक्तिः ॥

अभङ्गुरामच्युतपादरक्षे मान्यां महानीलरुचिं त्वदीयाम् ।
निश्रेयसद्वारकपाटिकायाः शङ्के समुत्पाटनकुञ्चिकां नः ॥ ८ ॥

अभङ्गुरेति । हे अच्युतपादरक्षे, अभङ्गुरां संततां मान्यामुत्कर्षवतीं त्वदीयां महानीलानामिन्द्रनीलरत्नानाम् । 'महानीलो भृङ्गराजे मणिनागविशेषयोः ।' इति विश्वः । रुचिं दीप्तिं नोऽस्माकं निश्रेयसद्वारस्य मोक्षद्वारस्य कपाटिकायाः कपाटस्य समुत्पाटनार्थां कुञ्चिकामयःकुशीविशेषां शङ्के । मोक्षद्वारकपाटिकाविघटनाय कुशीत्वमुत्प्रेक्ष्यते ॥

जीवयत्यमृतवर्षिणी प्रजास्तावकी दनुजवैरिपादुके ।
घोरसंचरणघर्मनाशिनी कालिकेव हरिनीलपद्धतिः ॥ ९ ॥

जीवयतीति । हे दनुजवैरिपादुके, अमृतवर्षिणी मोक्षजनिका जलस्राविणी च । 'पयः कीलालममृतम्' इत्यमरः । तावकी हरिनीलानां पद्धतिः पङ्क्तिर्घोरं संसरणं संसारमेव घर्मं ग्रीष्मजनितातपं नाशयतीति तथोक्ता कालिकेव मेघपङ्क्तिरिव । 'मेघजालेऽपि कालिका' इत्यमरः । प्रजाजनान् जीवयति प्रीणयति । उपमा रूपकानुप्राणिता ॥

शतमखोपलभङ्गमनोहरा विहरसे मुरमर्दनपादुके ।
मणिकिरीटगणेषु दिवौकसां मधुकरीव मनोरमपङ्क्तिषु ॥ १० ॥

शतमखेति । हे मुरमर्दनस्य पादुके, शतमखोपलभङ्गैरिन्द्रनीलशकलैर्मनोहरा इन्द्रनीलदलवच्च मनोहरा त्वं मनोरमा पङ्क्तिः श्रेणिर्येषां तेषु दिवौकसां देवानां मणिमयानां किरीटानां गणेषु समूहेषु । मालास्विति गम्यते । मधुकरीव भृङ्गीव विहरसे क्रीडसे । उपमालंकारः श्लेषानुप्राणितः ॥

अन्विच्छतां किमपि तत्त्वमनन्यदृश्यं
सम्यक्प्रकाशजननी धृतकृष्णरूपा ।
पादावनि स्फुरसि वासवरत्नरम्या
मध्येसमाधि नयनस्य कनीनिकेव ॥ ११ ॥

**अन्विच्छतामिति** । हे पादावनि, सम्यक्प्रकाशजननी समीचीनस्य प्रकाशस्य-द्योतस्य ज्ञानस्य च जननी त्वं धृतं कृष्णस्य रूपमाकारो नीलवर्णं च यया सा । 'रूपं स्वभावे सौन्दर्ये नाटके पशुशब्दयोः । ग्रन्थावृत्तौ नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः । वासवरत्नैरिन्द्रनीलैरिन्द्रनीलवच्च रम्या त्वं किमपि अवाङ्मनसगोचरमनन्यदृश्य-मयोगिनामगोचरं तत्त्वं वस्तु श्रीरङ्गनाथरूपमन्विच्छतां मृगयमाणानाम् । योगिनामि-त्यर्थः । समाधेर्योगस्यैव नयनस्य मध्ये कनीनिकेव तारकेव । 'तारकाक्ष्णः कनीनिका' इत्यमरः । स्फुरसि भासि । श्लेषानुप्राणितोत्प्रेक्षा ॥

मातः सलीलमधिगम्य विहारवेलां
कान्तिं समुद्वहसि काञ्चनपादुके त्वम् ।
लक्ष्मीकटाक्षरुचिरैर्हरिनीलरत्नै-
र्लावण्यसिन्धुपृषतैरिव रङ्गधाम्नः ॥ १२ ॥

**मातरिति** । हे मातः काञ्चनपादुके, त्वं सलीलं यथा तथा विहारवेलां लीलासं-चारकालम् । समुद्रकूलमित्यपि गम्यते । अधिगम्य प्राप्य लक्ष्म्याः कटाक्षवत् दृष्टि-विक्षेपवत् । 'कटाक्षो दृष्टिविक्षेपे' इति हलायुधः । रुचिरैर्हरिनीलरत्नैरिन्द्रनीलमणिभी रङ्गधाम्नः श्रीरङ्गनाथस्य लावण्यस्यैव सिन्धोः समुद्रस्य पृषतैर्बिन्दुभिरिव । 'पृषन्ति बिन्दुपृ-षतः' इत्यमरः । कान्तिं शोभां समुद्वहसि । समुद्रतीरे संचरतः शरीरे जलबिन्दवः पतन्तीति भावः । इन्द्रनीलेषु भगवल्लावण्यसमुद्रबिन्दुत्वमुत्प्रेक्ष्यते ॥

क्लृप्तावकु(गु)ण्ठनविधिर्मणिपादरक्षे
नीलांशुकैर्बलभिदश्मसमुद्भवैस्ते ।
संगच्छते मुनिजनस्य मतिः समाधौ
रात्रौ समस्तजगतां रमणेन लक्ष्म्याः ॥ १३ ॥

**क्लृप्तेति** । हे देवि मणिपादरक्षे, मुनिजनस्य योगिनो मतिः । अभिसारिकेति गम्यते । समस्तानां जगतां लोकानां रात्राविन्द्रियव्यापाररहिते । पृथग्जनकरणव्या-पाररहित्यमात्रेण रात्रिशब्दो लक्षणया प्रयुज्यते । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।' इति गीयते । समाधौ ध्याने ते तव बलभिदश्मभिरिन्द्रनीलैः समुद्भवैर्जातैर्नी-लांशुभिरेव नीलवस्त्रैः क्लृप्तोऽवकु(गु)ण्ठनस्यामस्तकप्रावरणस्य विधिः क्रिया यया सा सती लक्ष्म्या रमणेन श्रीरङ्गनाथेन । अन्यकान्तानायकेनेत्यपि गम्यते । संगच्छते संगता भवति । समासोक्तिसंकीर्णोत्प्रेक्षा । योगिबुद्धेरेवाभिसारिकाया अवकु(गु)ण्ठनत्वं नीलवर्णरत्नकिरणेषूत्प्रेक्ष्यते ॥

द्रष्टुं कदाचन पदावनि नैव जन्तुः
शक्नोति शाश्वतनिधिं निहितं गुहायाम ।

कृष्णानुरूपहरिनीलविशेषदृश्या
सिद्धाञ्जनं त्वमसि यस्य न देवि दृष्टेः ॥ १४ ॥

**द्रष्टुमिति** । हे देवि पदावनि, जन्तुर्जीवो गुहायां हृदयमध्ये निहितं, देवखातबिले निक्षिप्तमित्यपि गम्यते । शाश्वतं निधिमक्षयशेवधिं परमात्मरूपं द्रष्टुं कदाचन कदापि न शक्नोत्येव । कृष्णस्य भगवतोऽनुरूपैर्योग्यैर्हरिनीलैर्विशेषतो दृश्या, अन्यत्र कृष्णं नीलवर्णमनुरूपं निधिदर्शनयोग्यं हरिनीलवद्विशेषप्रेक्ष्यं च त्वं यस्य जन्तोर्दृष्टेर्लोचनस्य ज्ञानस्य सिद्धाञ्जनं नानौषधिसिद्धमञ्जनं नासि । स जन्तुरिति पूर्वेणान्वयः । अञ्जनहीनो निधिमिव पादुकासंबन्धहीनो भगवन्तं न जानातीति भावः । श्लेषानुप्राणितो रूपकालंकारः ॥

प्रत्येमि रङ्गनृपतेर्मणिपादुके त्वां
कृष्णान्तरङ्गरुचिभिर्हरिनीलरत्नैः ।
विश्वापराधसहनाय पदं तदीयं
विश्वंभरां भगवतीं समये भजन्तीम् ॥ १५ ॥

**प्रत्येमीति** । हे रङ्गनृपतेर्मणिपादुके, 'कृष्णां तदङ्गरुचिभिर्हरिनीलरत्नैः' इति पाठे तु भगवदङ्गसमकान्तिभिर्हरिनीलरत्नैः कृष्णाम् । अन्यत्र स्वतःकृष्णामित्यर्थः । कृष्णस्यान्तरङ्गास्तुल्या रुचयो येषां तैर्हरिनीलरत्नैरुपलक्षितां त्वां विश्वेषां जगतामपराधानामागसां सहनाय क्षमणाय तदीयं रङ्गनाथसंबन्धि पदं चरणं समये प्रसन्नावस्थायां भजन्तीमाश्रयन्तीं कृष्णे भगवति अन्तरङ्गाभी रतासक्ताभी रुचिभिः प्रेमभेदैरुपलक्षितां भगवतीं पूज्यां विश्वंभरां भूमिं प्रत्येमि । इत्युत्प्रेक्षा । विश्वंभरात्वात् विश्वापराधसहनाय भगवच्चरणावलम्बनमित्युक्तेर्विशेष्यस्य साकूतत्वात् परिकरालंकारः । तयोः संकरः ॥

मत्वा मषीं परिमितां भवती तदन्यां
वैकुण्ठपादरसिके मणिपादुके स्वान् ।
अङ्के स्वयं किरणलेपिभिरिन्द्रनीलै-
राशातटेषु ललितानपदानवर्णान् ॥ १६ ॥

**मत्वेति** । हे वैकुण्ठस्य पादयो रसिके रसानुभवपरे मणिपादुके, भवती तदन्यामिन्द्रनीलेतरां मषीं कज्जलं परिमितां स्वल्पां मत्वा ज्ञात्वा किरणा एव लेपा विलेपनसाधनवर्णद्रव्याणि येषां सन्तीति तथोक्तैः । लौकिकप्रयोगे लाघवानादरात्कर्मधारयान्मत्वर्थीयः । इन्द्रनीलैराशातटेषु दिगन्तेषु । प्रतिकास्विति गम्यते । ललितान् स्वान् निजानपदानवर्णान् विरुदावलिरूपाक्षराणि । 'अपदानं कर्मवृत्तम्' इत्यमरः । स्वयमङ्के प्रकाशार्थं लिम्पति । प्रतिकासु प्रकाशाय मषीमञ्जन्तीति भावः । वैयाकरणान्तरमतेऽङ्केरुभयपदित्वादात्मनेपदप्रयोगः । उत्प्रेक्षा ॥

बलमथनमणीनां धामभिस्तावकानां
मधुरिपुपदरक्षे वासरैरव्यपेता ।
अभिसरणपराणां बल्लवीनां तदासी-
च्छमितगुरुभयार्तिः शर्वरी काचिदन्या ॥ १७ ॥

**बलमथनेति** । हे मधुरिपुपदरक्षे, तावकानां बलमथनमणीनामिन्द्रनीलानां धामभिः प्रभाभिस्तदा कृष्णावतारकालेऽभिसरणपराणां कृष्णाभिसारिकाणां बल्लवीनां शमिता निवारिता गुरुभ्यः श्वशुरादिभ्यो भयेन जनिता आर्तिर्दुःखं यया सा वासरैर्दिवसैरव्यपेता अत्यक्ता अनिर्वचनीयक्रीडाहेतुः अन्या विलक्षणा शर्वरी रात्रिरासीत् । इन्द्रनीलप्रभाच्छन्नं दिनमेव गोपीनामभिसरणाय रात्रिरभूदिति भावः । उत्प्रेक्षा ॥

शतमखमणिभङ्गैरुन्मयूखैर्दिशन्ती
शरणमुपगतानां रङ्गनाथेन साम्यम् ।
प्रथयसि जगति त्वं पादुके हैतुकाना-
मुपनिषदुपगीतां तत्क्रतुन्यायवार्ताम् ॥ १८ ॥

**शतमखेति** । हे पादुके, त्वमुन्मयूखैः शतमखमणिभङ्गैरिन्द्रनीलदलैः शरणमुपगतानां श्रीरङ्गनाथं प्रपन्नानां श्रीरङ्गायतनमागतानां च रङ्गनाथेन साम्यमेकवर्णत्वम् । मोक्षरूपपरमसाम्यमित्यपि गम्यते । दिशन्ती सती उपनिषदि उपगीतामुक्तां तत्क्रतुन्यायवार्तां सः प्राप्यगुणः क्रतुरुपासनं यस्य सः तत्क्रतुः पुरुषस्तस्य यो न्यायः श्रुत्युक्तस्तस्य वार्तां वृत्तान्तम् । तथा च श्रुतिः—'यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति ।' इति । येन प्रकारेणोपास्ते तं प्रकारं प्राप्नोतीत्यर्थः । अयं वेदान्ते निष्पन्नो न्यायो जगति हैतुकानां तर्काधीनजयवताम् । दृष्टप्रमाणवादिनामिति भावः । 'तेन दीव्यति खनति जयति जितम् ४।४।२' इति जयत्यर्थे हेतुशब्दाट्ठक् । 'इसुसुक्तान्तात्कः ७।३।५१।' इति तस्य कादेशः । प्रथयसीव ज्ञापयसीव । रङ्गनाथं प्रपन्नानां श्रीरङ्गनाथेन वर्णसारूप्यमेव परमसाम्यापत्तौ निदर्शनमिति हैतुकेभ्यो दर्शयतीति भावः । उत्प्रेक्षालंकारः ॥

परिचरति विधौ त्वां पादुके रङ्गभर्तुः
पदसरसिजभृङ्गैर्भासुरैरिन्द्रनीलैः ।
प्रकटितयमुनौघा भक्तिनम्रस्य शंभोः
परिणमयसि चूडाविष्णुपद्याः प्रयागम् ॥ १९ ॥

**परिचरतीति** । हे पादुके, त्वां विधौ शिवचूडाचन्द्रमस्येव विधौ ब्रह्मणि परिचरति सति शुश्रूषमाणे सति । विधुविधिशब्दयोः सप्तमीविभक्तिश्लेषेण रुद्रप्रणतिकालच-

न्द्रसंसर्गो गङ्गोत्पत्तिकालकृतपरिचरणत्वेनाध्यवसीयते । यथा गङ्गा ब्रह्मपरिचरणकाले उत्पन्ना तथेयं यमुनापीति भावः । रङ्गभर्तुः पदयोरेव सरसिजयोर्भृङ्गैरलिभिर्भासुरैरिन्द्रनीलमणिभिः प्रकटितो यमुनाया ओघः प्रवाहो यया सा त्वं भक्त्या नम्रस्य प्रणतस्य शम्भोश्चूडाविष्णुपद्याः शिखागताया गङ्गायाः । 'गङ्गा विष्णुपदी' इत्यमरः । प्रयागं यमुनासंगमं परिणमयसि संपादयसि । शिवशिरस्थाया गङ्गाया इन्द्रनीलकान्तिसंबन्धो यमुनासंगमत्वेनोत्प्रेक्ष्यते । गङ्गायमुनासंगमे प्रयागशब्दः प्रसिद्धः ॥

पदकिसलयसङ्गात्पादुके पत्रलश्री-
र्नखमणिभिरुदारैर्नित्यनिष्पन्नपुष्पा ।
शतमखमणिनीला शौरिलावण्यसिन्धो-
र्निबिडतमतमाला कापि वेलावनी त्वम् ॥ २० ॥

**पदेति** । हे पादुके, भगवतः किसलययोरिव पदयोः सङ्गात् पत्रला पत्रवती श्रीः शोभा यस्याः सा ; उदारैर्महद्भिर्नखमणिभिर्मणिसदृशैर्नखैर्नित्यं निष्पन्नं पुष्पं प्रसूनं यस्याः सा त्वं कापि वेलावनी तीराटवीव । 'वेला काले च जलधेस्तीरनीरविकारयोः ।' इति विश्वः । गम्योत्प्रेक्षा ॥

त्वयि विनिहितमेतत्केऽपि पश्यन्ति मन्दाः
शतमखमणिजालं शार्ङ्गिणः पादरक्षे ।
वयमिदमिह विद्मः प्राणिनां भावुकानां
हृदयगृहगुहाभ्यः पीतमन्धंतमिस्रम् ॥ २१ ॥

**त्वयीति** । हे शार्ङ्गिणः पादरक्षे, केऽपि मन्दा अल्पबुद्धयस्त्वयि ( अधिकरणे ) विनिहितमेतद्वस्तु शतमखमणिनीलं पश्यन्ति इन्द्रनीलत्वेन जानन्ति । वयं तु इह त्वयि विद्यमानमिदं भावुकानां त्वां ध्यायतां प्राणिनां हृदयगृहस्य चित्तसदनस्य गुहाभ्योऽन्तःप्रदेशेभ्य उद्धृत्य पीतमन्धंतमिस्रं गाढान्धकारम् । अज्ञानमत्र गाढान्धकारत्वेन निगीर्यते । मन्दा इति इन्द्रनीलत्वमपह्नुत्यान्धकारत्वाध्यवसायादपह्नुतिरलंकारः ॥

क्लृप्तश्यामा मणिभिरसितैः कृष्णपक्षेण जुष्टा
श्रेयः पुंसां जनयसि गतिं दक्षिणामुद्वहन्ती ।
तेनास्माकं प्रथयसि परं पादुके तत्त्वविद्भि-
र्मौलौ दृष्टा निगमवचसां मुक्तिकालाव्यवस्थाम् ॥ २२ ॥

**क्लृप्तेति** । हे पादुके, असितैर्नीलैर्मणिभिः क्लृप्तश्यामा ज्ञातश्यामवर्णा रात्रितया कृता च कृष्णस्य पक्षेण भक्तेन जुष्टा सेविता बहुलपक्षयुक्ता च दक्षिणां समर्थां गतिं संचारं दक्षिणायनं चोद्वहन्ती त्वं पुंसां श्रेयो मोक्षं जनयसि । तेन कारणेन तत्त्वविद्भि-

स्तत्त्वज्ञैर्भगवद्व्यासादिभिर्निगमवचसां वेदवचनानां मौलौ वेदान्ते दृष्टां मुक्तिकालस्य मोक्षकालस्याव्यवस्थामनैयत्यम् । 'निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् । अतश्चायनेऽपि दक्षिणे' इत्युक्तम् । अस्माकं प्रथयसि परं ख्यापयसीव । पादुकायाः स्वक्रियया परान् प्रति सदर्थबोधनाच्छ्लेषानुप्राणितो निदर्शनाभेदः ॥

सद्भिर्जुष्टा समुदितविधुर्जैत्रयात्राविनोदे-
ष्वातन्वाना रजनिमनघामिन्द्रनीलांशुजालैः ।
चित्रं ख्याता कुमुदवनतः पादुके पुष्यसि त्वं
व्याकोचत्वं विबुधवनितावक्त्रपङ्केरुहाणाम् ॥ २३ ॥

**सद्भिरिति** । हे पादुके, सद्भिः साधुजनैर्नक्षत्रैश्च जुष्टा सेविता युक्ता च समुदितो विधुः श्रीरङ्गनाथश्चन्द्रश्च यस्याः सा । 'विधुः श्रीवत्सलाञ्छनः', 'विधुः सुधांशुः शुभ्रांशुः' इति चामरः । इन्द्रनीलानामंशुजालैर्जैत्रयात्रारूपेषु विनोदेषु विलासकृत्येष्वनघां रम्यां रजनिं रात्रिमातन्वाना कोर्भूम्या मुदः अवनतो रक्षणात् । कैरवखण्डात् 'पञ्चमी विभक्ते' इति पञ्चमी । ख्याता त्वं विबुधवनितानां देवतास्त्रीणां वक्त्राणामेव पङ्केरुहाणां पद्मानां व्याकोचत्वं विकस्वरताम् । कैरवाधिकमुल्लासमित्यर्थः । पुष्यसि । चित्रमित्याश्चर्ये । रात्रौ पङ्केरुहविकास आश्चर्यावह इति भावः । श्लेषरूपकाभ्यामनुप्राणितो व्याघातालंकारः॥

नित्यं लक्ष्मीनयनरुचिरैः शोभिता शक्रनीलैः
शालग्रामक्षितिरिव शुभैः शार्ङ्गिणो रूपभेदैः ।
साकेतादेः समधिकगुणां संपदं दर्शयन्ती
मुक्तिक्षेत्रं मुनिभिरखिलैर्गीयसे पादुके त्वम् ॥ २४ ॥

**नित्यमिति** । हे पादुके, लक्ष्म्या नयनवत् रुचिरैः शक्रनीलैः शार्ङ्गिणो भगवतः शुभै रूपभेदैर्मूर्त्यन्तरैः शालग्रामशिलादिभिः शालग्रामक्षितिरिव शालग्रामोत्पत्तिभूमिरिव शोभिता त्वं साकेतादेरयोध्यादेः समधिको गुणो यस्यास्तां संपदं शोभां दर्शयन्ती सती अखिलैर्मुनिभिर्मुक्तिक्षेत्रं मोक्षभूमितया गीयसे । अयोध्यादिभ्यो मुक्तिक्षेत्रेभ्योऽधिकतया प्रसिद्धशालग्रामभूमिरिव त्वमपि मुनिभिरुच्यस इति भावः । उपमालंकारः ॥

पादन्यासप्रियसहचरीं पादुके वासगेहात्
त्वामारुह्य त्रिचतुरपदं निर्गते रङ्गनाथे ।
अन्तःस्निग्धैरसुरमहिलावेणिविक्षेपमित्रैः
श्यामच्छायं भवति भवनं शक्रनीलांशुभिस्ते ॥ २५ ॥

**पादेति** । हे पादुके, रङ्गनाथे पादन्यासे चरणविक्षेपविषये प्रियसहचरीं सखीं त्वामारुह्य वासगेहात् शय्यागृहात् त्रिचतुरपदं त्रीणि चत्वारि वा पदानि पादविक्षेपा यस्मिन्

कर्मणि तद्यथा भवति तथा निर्गते सति स्निग्धैः सान्द्रैः, वेणीपक्षे तैलद्रव्ययुक्तैरसुरमहिलानामसुरस्त्रीणां वेणिविक्षेपस्य केशपाशविस्रंसनस्य मित्रैः सदृशैः । भर्तृनाशजनितव्यसनेन विश्लथकेशैरिव स्थितैरित्यर्थः । ते तव शक्रनीलानामिन्द्रनीलानामंशुभिर्भवनमन्तर्गर्भे श्यामच्छायं नीलकान्तियुक्तं भवति । उपमालंकारः ॥

याते बाह्याङ्क(ङ्ग)ण(न)मभियतः पादुके रङ्गभर्तुः
संचारेषु स्फुरति विततिः शक्रनीलप्रभायाः ।
विष्वक्सेनप्रभृतिभिरसौ गृह्यते वेत्रहस्तै-
र्भ्रूविक्षेपस्तव दिविषदां नूनमाह्वानहेतुः ॥ २६ ॥

**यात इति** । हे पादुके, बाह्याङ्क(ङ्ग)ण(न)मभियतो गच्छतो रङ्गभर्तुः संचारेषु ते तव शक्रनीलप्रभाया इन्द्रनीलकान्तेर्या विततिर्विस्तृतिः स्फुरति । असौ विततिर्वेत्रहस्तैर्विष्वक्सेनप्रभृतिभिः सेनापतिमुख्यैर्दिविषदां देवानामाह्वानाहेतुस्तव भ्रुवोर्विक्षेपो गृह्यते चलनत्वेन ज्ञायते नूनमित्युत्प्रेक्षा । वर्णसाम्यात्प्रभाविततिर्देवानामाह्वानाय पादुका भ्रूविक्षेपत्वेन सेनानीप्रभृतिभिर्ज्ञायते ॥

अक्ष्णोरञ्जनकल्पना यवनिका लास्यप्रसूतेर्गते-
श्चिद्गङ्गायमुना मुकुन्दजलधेर्वेलातमालाटवी ।
कान्ताकुन्तलसंततिः श्रुतिवधूकस्तूरिकालंक्रिया
नित्यं रत्नपदावनि स्फुरति ते नीला मणिश्रेणिका ॥ २७ ॥

**अक्ष्णोरिति** । हे रङ्गपादावनि, ते तव नीला मणीनां श्रेणिका इन्द्रनीलपङ्क्तिरक्ष्णोः सेवकनयनयोरञ्जनकल्पना कज्जलपरिष्कृतिः, लास्यस्य नृत्तस्य प्रसूतेरुत्पादिकाया रङ्गभर्तुर्गतेः संचारस्य यवनिका तिरस्करिणी, चिद्गङ्गाया ज्ञानस्यैव गङ्गायाः संबन्धिनी यमुना, मुकुन्दस्यैव जलधेः समुद्रस्य वेलायाः कूलस्य संबन्धिनी तमालाटवी तापिच्छवनम्, कान्तानां श्रीभूम्यादीनां कुन्तलसंततिरलकपङ्क्तिः, श्रुतेरेव वध्वाः कस्तूरिकालंक्रिया मृगमदपरिष्कारः । एभिः प्रकारैर्नित्यं स्फुरति । उल्लेखभेदोऽलंकारः । तत्तद्विषयभेदेन बहुधोल्लेखात् ॥

निरन्तरपुरंदरोपलभुवं द्युतिं तावकी-
मवैमि मणिपादुके सरणिसङ्गिनीं रङ्गिणः ।
तदीयनवयौवनद्विरदमल्लगण्डस्थली-
गलन्मदझलंझलाबहुलकज्जलश्यामिकाम् ॥ २८ ॥

**निरन्तरेति** । हे मणिपादुके, तावकीं त्वदीयां निरन्तरेभ्यः पङ्क्तितयावस्थितेभ्यः पुरन्दरोपलेभ्य इन्द्रनीलमणिभ्यो भवतीति तथोक्तां रङ्गिणः सरणिसङ्गिनीं मार्गसक्तां

द्युतिं तदीयस्य श्रीरङ्गनाथसंबन्धिनो नवयौवनस्यैव द्विरदमल्लस्य गजश्रेष्ठस्य गण्डस्थल्याः कटप्रदेशात् गलन्त्याः स्रवन्त्याः मदझलंझलाया दानप्रवाहस्य बहुलां सान्द्रां कज्जलवत् मषीवत् स्थितां श्यामिकां नैल्यत्वेनावैमि। इत्युत्प्रेक्षा। झलझलशब्दवत् झलंझलाशब्दः प्रवाहपरः। अनुकरणशब्दादर्श आद्यच्। झलंझलं करोतीति 'तत्करोति' इति ण्यन्तात्पचाद्यच्॥

प्रतीमस्त्वां पादावनि भगवतो रङ्गवसते-
र्घनीभूतामित्थं पदकमलमाध्वीपरिणतिम्।
स्फुरन्तः पर्यन्ते मदगरिमनिष्पन्दमधुप-
प्रसक्तिं यत्रैते विदधति महानीलमणयः॥ २९॥

**प्रतीम इति**। हे पादावनि, त्वामित्थं पादुकारूपेण घनीभूतां पिण्डीभूतां रङ्गवसतेर्भगवतः पदयोरेव कमलयोर्माध्व्या मकरन्दस्य परिणतिं परिपाकं प्रतीमो जानीमः। यत्र माध्वीसरणौ पर्यन्ते प्रान्ते स्फुरन्त एते महानीलमणयो मदगरिम्णा हर्षातिशयेन निष्पन्दानां निश्चलानां मधुपानां भ्रमराणां प्रसक्तिं संसर्गं विदधति कुर्वन्ति। काव्यलिङ्गसंकीर्णेयमुत्प्रेक्षा॥

नमतां निजेन्द्रनीलप्रभवेण मुकुन्दपादुके भवती।
तमसा निरस्यति तमः कण्टकमिव कण्टकेनेव॥ ३०॥

**नमतामिति**। हे मुकुन्दपादुके, भवती निजेभ्य आत्मीयेभ्य इन्द्रनीलेभ्यः प्रभवतीति तथोक्तेन तमसा प्रभात्मकेनान्धकारेण। वर्णसाम्यादन्धकारव्यपदेशः। नमतां सेवमानानां तमः शोकमेव तमोऽन्धकारं कण्टकेन सूच्यग्रेण कण्टकं चरणतललग्नं कण्टकमिव निरस्यति। लोके चरणलग्नं कण्टकं कण्टकेनैव निरस्यन्ति तथेहापीति श्लेषेण कथनात् श्लेषसंकीर्णेयमुपमा॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे इन्द्रनीलपद्धतिर्विंशी॥

---

अथ बिम्बप्रतिबिम्बपद्धतिरेकविंशी।

अथास्यां पद्धत्यां मणिमय्यां पादुकायां स्वनिमित्तं प्रतिफलनयोग्यत्वमालम्ब्य पादुकां वर्णयति—

शौरेः शुद्धान्तनारीणां विहारमणिदर्पणम्।
प्रसक्तेरिव संस्थानं पदत्राणमुपास्महे॥ १॥

**शौरेरिति**। शौरेः श्रीरङ्गनाथस्य शुद्धान्तनारीणां श्रीभूम्यादिदिव्यमहिषीणां विहारार्थं लीलार्थं मणिमयं दर्पणमादर्शमभिरूप्य प्रेक्षणस्थानं प्रसक्तेः प्रसादस्य स्वच्छ-

तायाः संस्थानमाकारमिव स्थितम् । मूर्तिमन्तं प्रसादमिव स्थितमित्यर्थः । पदत्राणं पादुकामुपास्महे ध्यायामि । पूर्वत्र रूपकमुत्तरत्रोत्प्रेक्षेत्यवगन्तव्यम् । तयोः प्रेयसा संसृष्टिः ॥

कमलापतिपादुके कदाचिद्विहगेन्द्रस्त्वयि बिम्बितो विभाति ।
सविलासगतेऽपि रङ्गभर्तुर्निजमात्मानमिवोपयातुकामः ॥ २ ॥

कमलेति । हे कमलापतेः पादुके, कदाचित्त्वयि बिम्बितः प्रतिफलितो विहगेन्द्रो गरुडो रङ्गभर्तुः सविलासगतेऽपि निजमात्मानं शरीरमुपयातुं भगवतो धारकत्वेनार्पयितुं कामोऽभिलाषो यस्य स इव विभाति । उत्प्रेक्षा ॥

मणिपङ्क्तिषु ते दिशामधीशाः प्रतिबिम्बानि निजानि वीक्षमाणाः ।
अभियन्ति मुकुन्दपादुके त्वामधिकारान्तरसृष्टिशङ्कयेव ॥ ३ ॥

मणीति । हे मणिपादुके, दिशामधीशा इन्द्रादयस्ते तव मणिपङ्क्तिषु निजान्यात्मीयानि प्रतिबिम्बानि वीक्षमाणाः सन्तोऽधिकारान्तराणामन्येषामिन्द्रादीनामधिक्रियत आरभ्यते दिशां रक्षणमेभिरिति करणे घञ् । सृष्टेरुत्पादनस्य शङ्कयेव त्वामभियन्ति आश्रयन्ते । स्वाधिकारहानिभयात् संश्रयन्तीति भावः । हेतूत्प्रेक्षा ॥

मणिमौलिशतेन बिम्बितेन प्रणतानां परितः सुरासुराणाम् ।
मुरभिन्मणिपादुके महिम्ना युगपत्तेषु समर्पितेव भासि ॥ ४ ॥

मणीति । हे मुरभिन्मणिपादुके, प्रणतानां सुराणामसुराणां च परितः सर्वतो बिम्बितेन प्रतिफलितेन मणिमौलीनां रत्नकिरीटानां शतेन बहुभिर्महिम्ना प्रभावेण (अनेकमूर्तिपरिग्रहहेतुरयम्) तेषु देवासुरकिरीटेषु युगपदेकदा समर्पितेव निक्षिप्तेव भासि । उत्प्रेक्षा ॥

उपनीतमुपायनं सुरेन्द्रैः प्रतिबिम्बच्छलतस्त्वयि प्रविष्टम् ।
स्वयमेव किल प्रसादभूम्ना प्रतिगृह्णासि मुकुन्दपादुके त्वम् ॥ ५ ॥

उपनीतेति । हे मुकुन्दपादुके, त्वं सुरेन्द्रैरुपनीतमाहृतं प्रतिफलनच्छलेन त्वयि प्रविष्टमुपायनमुपहारं प्रसादस्य स्वच्छताया भूम्ना अनुग्रहातिशयेनेति च गम्यते । स्वयमेव प्रतिगृह्णासि किलेत्युत्प्रेक्षा ॥

रङ्गेश्वरस्य नवपल्लवलोभनीयौ
पादौ कथं नु कठिना स्वयमुद्वहेयम् ।
इत्याकलय्य नियतं मणिपादुके त्वं
पद्मास्तरं वहसि तत्प्रतिबिम्बलक्षात् ॥ ६ ॥

रङ्गेश्वरस्येति । हे मणिपादुके, त्वं नवपल्लवलोभनीयौ हृद्यौ रङ्गेश्वरस्य पादौ कठिना रत्नमयत्वादिति स्वयमहम् । पद्मासनास्तरणादिकमन्तरेणेति भावः । कथं

नूद्वहेयं विभृयामित्याकलय्य ज्ञात्वा तयोः पादयोः पद्मसदृशयोः प्रतिफलनव्याजात् पद्मास्तरं सरसिजैरास्तरणं वहसि । नियतमित्युत्प्रेक्षा सापह्नवा ॥

पादार्पणात्प्रथमतो हरिदश्मरम्ये
मध्ये तव प्रतिफलन्मणिपादरक्षे ।
मन्ये निदर्शयति रङ्गपतिर्युगान्ते
न्यग्रोधपत्रशयितं निजमेव रूपम् ॥ ७ ॥

**पादेति ।** हे मणिपादरक्षे, रङ्गपतिः पादार्पणात् चरणनिक्षेपात् प्रथमतः पूर्वं (आरोहणसमये)हरिदश्मभिर्मरकतै रम्ये तव मध्ये प्रतिफलन् सन् युगान्ते प्रलयसमये न्यग्रोधपत्रे वटदले शयितं संविष्टं निजं रूपमेव स्वात्मरूपमेव निदर्शयत्युदाहरति । इति मन्ये इत्युत्प्रेक्षा । पादुकारोहणायाभिमुखतया प्रह्वस्य भगवतः प्रतिफलनं वटदले शयनत्वेनोत्प्रेक्ष्यते ॥

यात्रावसानमधिगच्छति रङ्गनाथे
विश्राणयस्यनुपदं मणिपादुके त्वम् ।
प्रायः प्रयाणसमये प्रतिबिम्बितानां
तीर्थावगाहमपरं त्रिदशेश्वराणाम् ॥ ८ ॥

**यात्रेति ।** हे मणिपादुके, त्वं रङ्गनाथे यात्रावसानमुत्सवसमाप्तिमधिगच्छति सति प्रयाणसमये प्रस्थानकाले प्रतिबिम्बितानां त्रिदशेश्वराणामनुपदं पदे पदे । तत्तत्कालेष्वित्यर्थः । अपरं चन्द्रपुष्करिणीस्नानविलक्षणं तीर्थावगाहमुत्सवावभृथस्नानं विश्राणयसि ददासि प्राय इत्युत्प्रेक्षा ॥

उच्चावचेषु तव रत्नगणेषु मात-
र्वेधाः प्रयाणसमये प्रतिबिम्बिताङ्गः ।
आशङ्कते मधुभिदो मणिपादुके त्वा-
मागामिकल्पकमलासनपङ्क्तिगर्भाम् ॥ ९ ॥

**उच्चेति ।** हे मातः मधुभिदो मणिपादरक्षे, वेधा ब्रह्मा उच्चावचेष्वनेकप्रकारेषु । 'उच्चावचं नैकभेदम्' इत्यमरः । तव रत्नगणेषु प्रयाणसमये प्रतिबिम्बिताङ्गः सन् त्वामागामिकल्पाधिकारिणां कमलासनानां ब्रह्मणां पङ्क्तिर्गर्भोऽन्तस्थितो यस्यास्ताम् । आशङ्कते मन्यते । उत्प्रेक्षा ॥

आलोलरश्मिनियतां मणिपादुके त्वा-
मारुह्य संचरति रङ्गपतौ सलीलम् ।

अन्तःपुरेषु युगपत्सुदृशो भजन्ते
दोलाधिरोहणरसं त्वयि बिम्बिताङ्ग्यः ॥ १० ॥

**आलोलेति** । हे मणिपादुके, रत्नपतावालोलै रश्मिभिः किरणै रज्जुभिश्च नियतां व्याप्तां त्वामारुह्य सलीलं यथा तथा अन्तःपुरेषु संचरति सति युगपत्त्वयि बिम्बिताङ्ग्यः सुदृशो दोलाधिरोहणेन प्रेङ्खोलिकाक्रीडनेन जनितं रसं प्रीतिं भजन्ते । श्लेषानुप्राणितोत्प्रेक्षा ॥

कालेषु राघवपदावनि भक्तिनम्रः
कार्याणि देवि भरतो विनिवेदयंस्ते ।
त्वद्रत्नबिम्बिततयापि मुहुः स्वकीयां
राजासनस्थितिमवेक्ष्य भृशं ललज्जे ॥ ११ ॥

**कालेष्विति** । हे देवि राघवपदावनि, कालेष्वधिकारदिनेषु भक्त्या नम्रो भरतस्ते तुभ्यं कार्याणि कर्तव्यानि विनिवेदयन् सन् तव रत्नेषु बिम्बिततया प्रतिफलनत्वेनापि , वस्तुतोऽवस्थाने किमुतेति भावः । जातां राजासने स्थितिमवस्थानमवेक्ष्य मुहुर्भृशं ललज्जे । लज्जायुक्तोऽभूदित्यर्थः। प्रतिफलनस्य लज्जाहेतुत्वाभावेऽपि तत्संबन्धोक्तेरतिशयोक्तिभेदः । तेनात्यन्तविनीतत्वं व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

प्रत्यागते विजयिनि प्रथमे रघूणां
विन्यस्यति त्वयि पदं मणिपादरक्षे ।
रत्नौघबिम्बितनिशाचरवानरां त्वां
पूर्वक्षणस्थमिव पुष्पकमन्वपश्यन् ॥ १२ ॥

**प्रत्यागत इति** । हे मणिपादरक्षे, विजयिनि रावणहन्तरि प्रत्यागते पुनरायाते रघूणां प्रथमे रामे त्वयि पदं विन्यस्यति सति रत्नौघेषु बिम्बिता निशाचरा विभीषणप्रभृतयो वानराश्च यस्यास्तां त्वां पूर्वक्षणस्थमधिरूढराक्षसवानरराघवयुक्तं पुष्पकं पुष्पकाख्यविमानमिवान्वपश्यन् । प्रजा इति शेषः । उपमालंकारः ॥

वैयाकुलीं शमयितुं जगतो वहन्त्या
रक्षाधुरां रघुधुरंधरपादरक्षे ।
प्रा(ज्यं) यशः प्रचुरचामरबिम्बलक्ष्या-
त्प्रायस्त्वया कवलितं प्रतिभूपतीनाम् ॥ १३ ॥

**वैयाकुलीमिति** । हे रघुधुरंधरपादरक्षे, जगतो वैयाकुलीं व्याकुलभावम् । ब्राह्मणादित्वाद्भावे ष्यञ् । 'न य्वाभ्यां पदान्ताभ्याम् ७।३।३' इत्यादिना वृद्धिनिषेध

ऐजागमश्च । ष्यञः षित्वात् 'षिद्गौरादिभ्यश्च ४।१।४१' इति ङीष् । 'हलस्तद्धितस्य ६।४।१५०' इति यलोपः । शमयितुं रक्षाधुरां रक्षाभारम् । 'ऋक्पूः ५।४।७४' इत्यादिना अकारः समासान्तः । वहन्त्या त्वया प्राज्यं बहुलं प्रतिभूपतीनां वैरिनृपाणां यशः(कर्म) प्रचुराणां बहुलानां चामराणां सितवालव्यजनानां बिम्बलक्ष्यात् प्रतिफलनव्याजात् कवलितं ग्रस्तम् । प्राय इत्युत्प्रेक्षा ॥

प्रतिदिशमुपयाते देवि यात्रोत्सवार्थं
त्वयि विहरणकाले बिम्बिते जीवलोके ।
वहसि मणिगणैस्त्वं पादुके रङ्गभर्तुः
कवलितसकलार्थां कांचिदन्यामवस्थाम् ॥ १४ ॥

प्रतिदिशमिति । हे देवि पादुके, त्वं यात्रोत्सवार्थं चैत्रादिरूपमहोत्सवार्थं प्रतिदिशं नानादिग्भ्यः । वीप्सायामव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७' इत्यच् । उपयाते समागते जीवलोके प्राणिसमूहे विहरणकाले मणिगणैरुपलक्षितायां त्वयि बिम्बिते सति कवलिता ग्रस्ताः सकला अर्था वस्तूनि यस्यां तामन्यां विलक्षणां रङ्गभर्तुः कांचिदवस्थां प्रपञ्चप्रलयदशां वहसि । निदर्शनालंकारः । प्रलये भगवान् प्रपञ्चमुदरे निक्षिप्य रक्षति तद्वदिति भावः ॥

भगवति गरुडस्थे वाहनस्थाः सुरेन्द्रा-
स्त्वयि विनिहितपादे भूमिमेवाश्रयन्ति ।
तदपि चरणरक्षे रत्नजाले त्वदीये
प्रतिफलितनिजाङ्गास्तुल्यवाहा भवन्ति ॥ १५ ॥

भगवतीति । हे चरणरक्षे, भगवति श्रीरङ्गनाथे गरुडस्थे सति सुरेन्द्रा वाहनस्थाः स्वस्वयानाधिरूढा भवन्ति, भगवति त्वयि विनिहितपादे सति यानानि त्यक्त्वा भूमिमेवाश्रयन्ति । तदपि तथापि भूमिस्थत्वेऽपि त्वदीये रत्नजाले प्रतिफलितनिजाङ्गाः सन्तः तुल्या एकरूपा वाहा वाहनानि येषां ते तथोक्ता भवन्ति । स्वयमपि पादुकारूढा इव भान्तीति भावः । उत्प्रेक्षा ॥

स्वच्छाकारां सुरयुवतयः स्वप्रतिच्छन्दलक्ष्या-
द्वाहन्ते त्वां प्रणतिसमये पादुके साभिमानाः ।
स्त्रीरत्नानां परिभवविधौ सृष्टिमात्रेण दक्षां
नीचैःकर्तुं नरसखमुनेरुर्वशीमूरुजाताम् ॥ १६ ॥

स्वच्छेति । हे पादुके, सुरयुवतयो देववनिताः साभिमाना गर्वयुक्ताः सत्यः स्त्रीरत्नानां वनिताश्रेष्ठानां परिभवविधौ न्यक्कारे सृष्टिमात्रेण दक्षां शक्तां नरसखमुनेर्नारा-

यणंस्योरौ सक्थनि जातां जनितामुर्वशीसंज्ञिकां देवस्त्रियं नीचैःकर्तुं तिरस्कर्तुं स्वच्छाकारां विमलशरीरां त्वां प्रणतिसमये स्वप्रतिच्छन्दलक्ष्यात् निजप्रतिफलनव्याजात् गाहन्ते । भगवदूरुसंबन्धायत्तरूपोत्कर्षवतीमुर्वशीमभिभवितुं त्वदन्तर्भावमाकाङ्क्षन्ति देववनिता इति भावः ॥

स्वेच्छाकेलिप्रियसहचरीं स्वच्छरत्नाभिरामां
स्थाने स्थाने निहितचरणो निर्विशन्रङ्गनाथः ।
संचारान्ते सह कमलया शेषशय्याधिरूढे
त्यक्त्वापि त्वां त्यजति न पुनः स्वप्रतिच्छन्दलक्ष्यात् ॥ १७ ॥

**स्वेच्छेति** । हे पादुके, इत्युपस्कार्यम् । त्वयीत्यपि । निहितचरणो न्यस्तपादः स्वेच्छाकेल्याः स्वच्छन्दलीलायाः प्रियसहचरीं प्रियसखीं स्वच्छै रत्नैरभिरामां त्वां स्थाने स्थाने तत्तत्प्रदेशे निर्विशन्ननुभवन् रङ्गनाथः संचारान्ते संचारावसाने त्वां त्यक्त्वा कमलया श्रिया सह शेषशय्यामधिरूढोऽपि स्वप्रतिच्छन्दलक्ष्यात् स्वप्रतिफलनव्याजात् न त्यजति । प्रतिबिम्बात्मना पुनरपि त्वयि तिष्ठतीत्यर्थः । त्यक्तवतोऽप्यत्याग इत्युत्प्रेक्ष्यते । तेनाघटने घटनाशक्तिर्व्यज्यते ॥

त्वामेवैकामधिगतवतः केलिसंचारकाले
पार्श्वे स्थित्वा विनिहितदृशोः पादुकेऽनन्यलक्ष्यम् ।
त्वद्रत्नेषु प्रतिफलितयोर्नित्यलक्ष्यप्रसादा
पद्माभूम्योर्दिशति भवती पादसेवां मुरारेः ॥ १८ ॥

**त्वामेवेति** । हे पादुके, भवती केलिसंचारकाले एकां त्वामेवाधिगतवतो मुरारेः पार्श्वे स्थित्वानन्यलक्ष्यं विषयान्तररहितं यथा तथा विनिहितदृशोस्त्वयि दत्तदृष्ट्योस्तव रत्नेषु प्रतिफलितयोः पद्माभूम्योर्नित्यं लक्ष्यो दृश्यः प्रसादो नैर्मल्यम् । हर्षश्च गम्यते । यस्याः सा सती मुरारेः पादसेवां दिशति ददाति । गम्योत्प्रेक्षा ॥

एकामेकः किल निरविशत्पादुके द्वारकायां
क्रीडायोगीकृतबहुतनुः षोडशस्त्रीसहस्रे ।
शुद्धे देवि त्वदुपनिहिते बिम्बितो रत्नजाले
भुङ्क्ते नित्यं स खलु भवतीं भूमिकानां सहस्रैः ॥ १९ ॥

**एकामिति** । हे देवि पादुके, क्रीडायोगी लीलायां संनाही । 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः । श्रीकृष्ण इत्यर्थः । द्वारकायां पुर्यां कृता बह्व्यस्तनवो येन सः सन् षोडशानां स्त्रीसहस्राणां समाहारे पात्रादित्वान्नपुंसकत्वम् । एकां स्त्रियमेकः एकशरीरतया निरविशत् भुक्तवान् । किलेति प्रसिद्धौ । स इदानीं शुद्धे स्वच्छे त्वय्युप-

निहिते प्रत्युप्ते रत्नजाले बिम्बितः सन् भूमिकानां वैजात्यव्यञ्जकवेषाणां सहस्रैः। बहुभिः शरीरैरित्यर्थः । भवतीं भुङ्क्ते खलु । अनयोत्प्रेक्षया गोपीभ्यः पादुकायां भोग्यताया व्यतिरेको व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

हरिपदनखेषु भवती प्रतिफलति तवैतदपि रत्नेषु ।
उचिता मिथः पदावनि बिम्बप्रतिबिम्बता युवयोः ॥ २० ॥

**हरीति** । हे पदावनि, भवती हरेः पादनखेषु प्रतिफलति । तदपि हरेः पदमपि तव रत्नेषु प्रतिफलति । एवं युवयोर्भगवत्पदपादुकयोर्मिथोऽन्योन्यं बिम्बप्रतिबिम्बता बिम्बे स्वप्रतिफलिते वस्तुनि स्वस्य क्रियाव्यतिहारेण बिम्बनं प्रतिबिम्बता सैव दृष्टान्तदार्ष्टान्तिकत्वमुचितं युक्तम् । परस्परं संनिहितत्वात्, स्वच्छावयवत्वात्, अत्यन्तसदृशत्वाच्चेति भावः । परस्परबिम्बप्रतिबिम्बभावस्यानुरूपस्यानुवर्णनात् समालंकारः । 'समासाद्वर्णनं यत्र द्वयोरप्यनुरूपयोः ।' इति लक्षणात् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे बिम्बप्रतिबिम्बपद्धतिरेकविंशी ।

---

काञ्चनपद्धतिर्द्वाविंशी ।

अथास्यां पद्धत्यां काञ्चनमयीं पादुकां वर्णयति—

कल्याणप्रकृतिं वन्दे भजन्तीं काञ्चनश्रियम् ।
पदार्हां पादुकां शौरेः पद एव निवेशिताम् ॥ १ ॥

**कल्याणेति** । कल्याणप्रकृतिं कल्याणं कनकं प्रकृतिः शरीरोपादानं यस्यास्तां शुभात्मिकां च । 'कल्याणमक्षये स्वर्णे कल्याणं मङ्गलेऽपि च ।' इति विश्वः । काञ्चनश्रियं कनकप्रभां कामपि शोभां च भजन्तीम् । अतएव पदार्हां चरणयोग्यां स्थानार्हां च पदे चरण एव साकेतसिंहासने च निवेशितां शौरेः पादुकां वन्दे । अविशेषेण श्लेषमहिम्ना सार्वभौममहिषीवृत्तान्तप्रतीतेः समासोक्तिः ॥

मधुजित्तनुकान्तितस्कराणां जलदानामभयं विधातुकामा ।
चपलेव तदङ्घ्रिमाश्रयन्ती भवती काञ्चनपादुके विभाति ॥ २ ॥

**मधुजिदिति** । हे काञ्चनपादुके, भवती मधुजितः श्रीरङ्गनायकस्य तनुकान्तेः शरीरप्रभायास्तस्कराणाम् । अन्यथा तेषां तादृशरूपाप्रसक्तेरिति भावः । जलदानां मेघानामभयं दण्डजनितभीतिराहित्यं विधातुं कर्तुं कामो यस्याः सा । तस्य श्रीरङ्गनाथस्याङ्घ्रिं चरणमाश्रयन्ती चरणग्रहणपूर्वकमुपच्छन्दयन्ती चपला विद्युदिव । 'तडित् सौदामिनी विद्युत् चञ्चला चपला अपि' इत्यमरः । विभाति । उत्प्रेक्षा । स्त्रीचापलेन भर्तृवधपरिजिहीर्षया पादपतनपूर्वकं सान्त्वयतीत्यर्थप्रतीतेः समासोक्तिः ॥

निकषीकृतरम्यकृष्णरत्ना भवती काञ्चनसंपदं व्यनक्ति ।
परिपुष्यति पादुके यदीक्षा सहसा नः समलोष्ठकाञ्चनत्वम् ॥ ३ ॥

**निकषीकृतेति** । हे पादुके, निकषीकृतं वर्णपरीक्षार्थं कषणोपलीकृतः रम्यकृष्ण-रत्नं नीलरत्नमिव स्थितः कृष्णः श्रीरङ्गनाथः । नीलमणिरित्यपि गम्यते । यया सा । निकषोपले कनकोत्कर्षवत् भगवति पादुकोत्कर्षो व्यज्यत इति भावः । भवती काञ्चन-संपदं कनकश्रियम् । कामपि शोभामिति च सभङ्गश्लेषेण गम्यते । व्यनक्ति प्रकाशयति । यस्याः संपदः ईक्षा वीक्षणं नोऽस्माकं सहसा झटिति समानि तुल्यानि एकवर्णानि च लोष्ठकाञ्चनानि येषां तेषां भावं परिपुष्यति वर्धयति । पादुकाविग्रहसेवनात् त्रैलोक्यवै-राग्येण लोष्ठवत् काञ्चनेष्वप्यनादरो भवति । पादुकाविग्रहकनकसंपदः कृष्णरत्ननि-वेशेन वीक्षणे इतरेषु प्राकृतकनकेषु लोष्ठवदत्यन्तापकर्षबुद्धिर्जायत इति भावः । काव्यलिङ्गमलंकारः श्लेषानुप्राणितः ॥

सुरभिर्निगमैः समग्रकामा कनकोत्कर्षवती पदावनि त्वम् ।
दिशसि प्रतिपन्नमाधवश्रीरनिशोन्निद्रमशोकवैभवं नः ॥ ४ ॥

**सुरभिरिति** । हे पदावनि, निगमैर्वेदैः सुरभिः सौगन्ध्यवती, अन्यत्र निगमैः पिकैरुपलक्षिता सुरभिर्वसन्तसमयः । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धे च मनोज्ञे च वाच्यवत्–' इति विश्वः । समग्राः पूर्णाः कामा अभिलाषाः कल्याणगुणाश्च यस्याः सा, अन्यत्र पूर्णः कामो मदनो यस्य । वसन्ते कामोद्रेकादिति भावः । कनकेन हेम्ना, अन्यत्र चम्पकवृक्षेणोत्कर्षवती अतिशययुक्ता । 'चम्पकः कनकाह्वयः' । 'कनकं चम्पके स्वर्णे किंशुके नागकेसरे ।' इति विश्वः । प्रतिपन्ना प्राप्ता माधवस्य श्रीरङ्गनाथस्य, अन्यत्र वैशाखमासस्य । 'वैशाखे माधवो राधः' इत्यमरः । श्रीः सम्पत् यया सा त्वं नोऽस्माकमनिशं सदा उन्निद्रम्, अन्यत्र विकस्वरमशोकं दुःखरहितं वैभवं सम्पदं मुक्तिम्, अन्यत्र अशोकाख्यवृक्षस्य वैभवं पुष्पसंपदं दिशसि । वसन्तसमयेऽशोकस्य पुष्पोद्भवादिति भावः । अत्र श्लेषमहिम्ना वसन्तकालवृत्तान्तप्रतीतेः श्लेषालंकारः ॥

सति वर्णगुणे सुवर्णजातेर्जगति ख्यातमसौरभादवर्णम् ।
श्रुतिसौरभशालिना स्वहेम्ना भवती शौरिपदावनि व्युदस्थात् ॥ ५ ॥

**सतीति** । हे शौरिपदावनि, भवती सुवर्णजातेः सुवर्णत्वरूपधर्ममात्राक्रान्तस्य द्रव्यस्य कनकस्य वर्णगुणे भास्वररूपोत्कर्षे सति असौरभात् सौगन्ध्याभावाद्धेतोः जगति लोके ख्यातं प्रसिद्धमवर्णमपवादं सुवर्णे सौरभं नास्तीत्येवंरूपम् । 'अवर्णाक्षेपनिर्वाद-परीवादापवादवत् ।' इत्यमरः । श्रुतिसौरभशालिना वेदात्मकपरिमलवता स्वहेम्ना निज-विग्रहसुवर्णेन व्युदस्थात् निरस्तवती । सुवर्णजात्याक्रान्ते यत्र क्वापि सौरभ्ये तादृशा-पवादो न भवतीति भावः । सौरभेण हेतुना सह अपवादनिरासस्य कार्यस्य वर्णनाद्धेतुर-लंकारः । वर्णगुणेऽप्यवर्णमित्युक्तेर्विरोधाभासश्च ॥

प्रतिपन्नमयूरकण्ठधाम्ना परिशुद्धेन पदावनि स्वकेन ।
कमलास्तनभूषणोचितं तद्भवती रत्नमलंकरोति हेम्ना ॥ ६ ॥

**प्रतिपन्नेति** । हे पदावनि, प्रतिपन्नं प्राप्तं मयूरकण्ठस्य केकिग्रीवाया धाम कान्तिर्येन । 'मयूरकण्ठवर्णत्वं शुद्धस्वर्णस्य लक्षणम् ।' इति शिल्पिशास्त्रे । परिशुद्धेन पुटपाकादिभिर्निरस्तोपष्टम्भकेन स्वकेन हेम्ना निजसुवर्णेन कमलायाः श्रियः स्तनयोर्भूषणं परिष्कारकं तद्रत्नं श्रेष्ठवस्तु श्रीरङ्गनाथरूपम् । पद्मरागमणिरपि व्यज्यते । अलंकरोति परिष्करोति । ते सुवर्णप्रत्युप्तं रत्नं पतगादि(?)भूषणनिष्ठं स्त्रियो वहन्तीति भावः । रूपकातिशयोक्तिसंकीर्णेयं गम्योत्प्रेक्षा ॥

कान्त्या परं पुरुषमाप्रणखात्सुवर्णं
कर्तुं क्षमा त्वमसि काञ्चनपादरक्षे ।
अन्यादृशीं दिशसि या विनतस्य दूरा-
दारग्वधस्तबकसम्पदमिन्दुमौलेः ॥ ७ ॥

**कान्त्येति** । हे काञ्चनपादरक्षे, त्वं परमुत्कृष्टं पुरुषं श्रीरङ्गनाथं कान्त्या निजवर्णप्रभया आप्रणखात् नखाग्रमारभ्य शिखापर्यन्तं सुवर्णं शोभमानवर्णयुक्तं कनकमयं च कर्तुं क्षमासि शक्तासि । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः ।' इति श्रुत्युक्तमाप्रणखात्सुवर्णत्वं त्वत्कनकप्रभावलनकृतमिति भावः । या भवती दूरात् विप्रकृष्टदेशे विनतस्येन्दुमौलेः शिवस्यान्यादृशीं प्रसिद्धराजवृक्षपुष्पस्तबकादप्युत्कृष्टामारग्वधस्तबकस्य राजवृक्षपुष्पगुच्छस्य सम्पदं दिशसि ददासि । पादुकाकनकप्रभया शिवमौलिचन्द्रः आरग्वधस्तबकवद्भवतीति भावः । दूरस्थस्य शिवस्य तथात्वे स्वस्मिन्नेव वर्तमानस्याप्रणखात् सुवर्णत्वं कैमुत्यसिद्धमिति भावः । कैमुत्येनार्थसंसिद्धाया उत्प्रेक्षायाः कथनात् काव्यार्थापत्तिसंकीर्णेयमुत्प्रेक्षा ॥

चन्द्राकृतिः कथमकल्पयथास्तदानीं
वैमानिकप्रणयिनीवदनाम्बुजानाम् ।
विक्रान्तिकालविततेन निजेन धाम्ना
बालातपं बलिविमर्दनपादुके त्वम् ॥ ८ ॥

**चन्द्रेति** । हे बलिविमर्दनस्य त्रिविक्रमस्य पादुके, चन्द्राकृतिः कनकमयाकारा । चन्द्ररूपेत्यपि गम्यते । 'चन्द्रः सुधांशुकर्पूरकाम्पिलस्वर्णवारिषु ।' इति विश्वः । त्वं तदानीं त्रिविक्रमावतारे विक्रान्तिकाले त्रैलोक्यमानसमये विततेनोर्ध्वं प्रसृतेन निजेन धाम्ना प्रभया वैमानिकानां देवानां प्रणयिनीनां स्त्रीणां वदनानामेवाम्बुजानां पद्मानां बालातपं सद्यस्तनसूर्यप्रभां कथमकल्पयथाः कल्पितवती । वदनाम्बुजविकासहेतुत्वात् पादुकाकन-

१. 'पद्मरागादि' इति भवेत्.

कप्रभैव बालातपत्वेनाध्यवसीयते । इन्दोः पद्मोल्लासकातपत्वं विरुद्धमिति भावः । विरुद्धात् कार्योत्पत्त्या विभावनाभेदः । स च श्लेषानुप्राणितः ॥

लेभे तदाप्रभृति नूनमियं भवत्याः
कान्त्या कवेरतनया कनकापगात्वम् ।
यावन्मुकुन्दपदहेमपदावनि त्वं
पुण्यं विभूषितवती पुलिनं तदीयम् ॥ ९ ॥

लेभे इति । हे मुकुन्दपदसंबन्धिनि हेमपादावनि, त्वं तदीयं कावेरीसंबन्धि पुण्यं चारु पुलिनं सैकतं यावत् यदाप्रभृति विभूषितवती (विभीषणेनानीता) तदाप्रभृति तदानीमारभ्येयं कवेरतनया कावेरी भवत्याः कान्त्या कनकापगात्वं कनकनदीत्वं लेभे लब्धवती । नूनमित्युत्प्रेक्षा । कावेर्याः कनकनदीसंज्ञा पादुकाकनकसंबन्धादित्यहेतोर्हेतुत्वमुत्प्रेक्ष्यते । नामनिर्वचनान्निरुक्त्यलंकारः । संकरः ॥

चित्रं सरोजनिलयासहितस्य शौरे-
र्वासोचितानि चरणावनि संविधित्सोः ।
सद्यो विकासमुपयान्ति समाधिभाजां
चन्द्रातपेन तव मानसपङ्कजानि ॥ १० ॥

चित्रमिति । हे चरणावनि, समाधिभाजां योगिनां मानसानि हृदयान्येव पङ्कजानि पद्मानि (कर्तॄणि) सरोजनिलयया कमलवासिन्या श्रिया सहितस्य शौरेः श्रीरङ्गनाथस्य वासोचितानि निवासयोग्यानि स्थानानि संविधित्सोः संविधातुकामायास्तव चन्द्रातपेन कनकप्रभयैव चन्द्रिकया सद्यस्तदानीमेव विकासं फुल्लतामुपयान्ति । चित्रम् । ज्योत्स्नया पद्मविकासो लोके अदृष्टचरत्वादाश्चर्यावह इति भावः । सरोजनिलयाशब्दस्य योगिहृत्पद्मवासप्रीतिहेतुत्वाभिप्रायगर्भत्वात् परिकरः । चन्द्रातपेन पद्मसमुल्लासवर्णनाद्विभावनाभेदोऽलंकारः ॥

त्वय्येव पादमधिरोप्य नवं प्रवाहं
नाथे पदावनि निशामयितुं प्रवृत्ते ।
आत्मीयकाञ्चनरुचा भवती विधत्ते
हेमारविन्दभरितामिव हेमसिन्धुम् ॥ ११ ॥

त्वयीति । हे पदावनि, भवती नाथे प्रभौ श्रीरङ्गनाथे त्वय्येव । न तु वाहनपरिच्छदयुक्त इति भावः । पादं चरणमधिरोप्य नवं प्रवाहं नूतनकावेरीप्रवाहं निशामयितुं द्रष्टुं प्रवृत्ते सति हेमसिन्धुं कावेरीं आत्मीयानां काञ्चनानां हेम्नां रुचा प्रभया हेममयैररविन्दैः पद्मैर्भरितामिव विधत्ते । भगवन्मुखोल्लासाय कावेर्यां कनकपद्मानि संपादितवतीति भावः । उत्प्रेक्षा ॥

विहरति पुलिनेषु त्वत्सखे रङ्गनाथे
कनकसरिदियं ते पादुके हेमधाम्ना।
वहति सलिलकेलीस्रस्तचोलावरोध-
स्तनकलशहरिद्रापङ्कपिङ्गामवस्थाम् ॥ १२ ॥

**विहरतीति**। हे पादुके, इयं कनकसरित् कावेरी त्वत्सखे त्वामारुह्येत्यर्थः। रङ्गनाथे पुलिनेषु सैकतेषु विहरति संचरति सति ते तव हेमधाम्ना स्वर्णप्रभया सलिलकेल्या जलक्रीडया स्रस्तैः क्षालितैः चोलावरोधानां सेवार्थमागतचोलदेशप्रभोरन्तःपुरस्त्रीणां चोलदेशजाताया भगवन्महिषीगोदाया वा कलशसदृशस्तनसंबन्धिभिर्हरिद्रापङ्कैः पिङ्गां पिशङ्गवर्णामवस्थामिव वहति। स्रस्तकूर्पासानामिति वा। चोलः कूर्पासः। निदर्शनालंकारः॥

सुरभिनिगमगन्धा सौम्यपद्माकरस्था
कनककमलिनीव प्रेक्ष्यसे पादुके त्वम्।
भ्रमर इव सदा त्वां प्राप्तनानाविहारः
शतमखमणिनीलः सेवते शार्ङ्गधन्वा ॥ १३ ॥

**सुरभीति**। हे पादुके, सुरभिर्घ्राणतर्पणो निगमो वेद एव गन्धो यस्याः सा, अन्यत्र नगरयोग्यसौरभयुक्ता। 'सुरभिर्घ्राणतर्पणः' इत्यमरः। सौम्ये सुन्दरे पद्मायाः करे लक्ष्मीहस्ते परिचरणकाले, अन्यत्र तटाके सौम्ये सोमसंबन्धिनि। चन्द्रपुष्करिण्यामिव सत्याम्। 'पद्माकरस्तटाकोऽस्त्री' इत्यमरः। तत्र तिष्ठतीति तथोक्ता कनकमयी कमलिनी नलिनीव प्रेक्ष्यसे। जनैरिति शेषः। प्राप्तो नानाविधो विहारः संचारः, अन्यत्र भूषणं येन सः शतमखमणिवत् इन्द्रनीलवत् नीलः शार्ङ्गधन्वा श्रीरङ्गनाथो भ्रमर इव भृङ्ग इव त्वां सदा सेवते आश्रयति। श्लेषसंकीर्णोपमालंकारः॥

कनकरुचिरवर्णा पादुके सह्यसिन्धुः
श्रियमिव महनीयां सिन्धुराजस्य पत्नीम्।
स्वयमिह सविधस्था सौम्यजामातृयुक्ता-
मुपचरति रसेन त्वामपत्याभिमानात् ॥ १४ ॥

**कनकेति**। हे पादुके, सिन्धुराजस्य समुद्रस्य पत्नी स्त्री सह्यसिन्धुः सह्याद्रिजाता कावेरी इह श्रीरङ्गे स्वयं सविधस्था सती कनकरुचिरवर्णां कनकेन हेम्ना, अन्यत्र कनकवत् रुचिरो वर्णो रूपं यस्यास्ताम्। सौम्यजामातृसंज्ञेन रङ्गनाथेन, अन्यत्र सुन्दरेण वरेण युक्ताम् अतएव श्रियमिव महनीयां त्वामपत्याभिमानात् रसेनात्यन्तादरेणोपचरति सभाजयति। सिन्धुराजस्य पत्नीमिति संबन्धसूचकं विशेषणमिति परिकरः। श्लेषानुप्राणितोपमालंकारः॥

अनुकलमुपजीव्या दृश्यसे निर्जराणां
त्रिपुरमथनमौलौ शेखरत्वं दधाना ।
प्रतिपदमधिगम्यप्राप्तशृङ्गासि शौरे-
स्तदपि चरणरक्षे पूर्णचन्द्राकृतिस्त्वम् ॥ १५ ॥

**अनुकलमिति** । हे शौरेश्चरणरक्षे, त्वमनुकलं प्रतिक्षणं कलायां च । 'षोडशांशे च चन्द्रस्य कलनाकालयोः कला ।' इति विश्वः । निर्जराणां जराहीनानां मुक्तानां देवानां चोपजीव्या रक्षणार्थं संश्रयणीया, अन्यत्र आहारार्थमाश्रयणीया दृश्यसे । 'प्रथमां पिबते वह्निः' इति शास्त्रात् ज्ञायते । त्रिपुरमथनस्य शिरोभूषणत्वं दधासि । हरस्य चन्द्रचूडत्वात् । प्रतिपदं पदेपदेऽधिगम्येन प्राप्येन भगवता प्राप्तं शृङ्गं प्रभुत्वं यस्याः सा, अन्यत्र प्रतिपदं प्रथमां तिथिमधिगम्य प्राप्य (ल्यप्) प्राप्तं शृङ्गं शिखरं यया सा असि भवसि । 'शृङ्गं प्रभुत्वे शिखरे चिह्नक्रीडाम्बुयन्त्रके ।' इति विश्वः । तदपि तथापि पूर्णचन्द्राकृतिः समग्रकनकमयशरीरासि । पार्विकचन्द्राकृतिरित्यपि गम्यते । देवैरशनेन क्षयात् रुद्रचूडाचन्द्रस्य कलामात्रत्वात् प्रथमायां पूर्णत्वाभावाच्च सत्यपि विरोधे पूर्णत्वोक्तेर्विरोधाभासालंकारः हेमार्थेन परिहृतः श्लेषानुप्राणितः ॥

कनकमपि तृणं ये मन्वते वीतरागा-
स्तृणमपि कनकं ते जानते त्वत्प्रकाशैः ।
मधुरिपुपदरक्षे यत्त्वदर्थोपनीतान्
परिणमयसि हैमान् देवि दूर्वाङ्कुरादीन् ॥ १६ ॥

**कनकमपीति** । हे मधुरिपुपदरक्षे, ये वीतरागा निस्पृहाः पुरुषाः कनकमपि स्वर्णमपि तृणवन्मन्वते । तृणवन्नाद्रियन्त इति भावः । ते पुरुषास्तृणमपि त्वत्प्रकाशैः (करणैः) कनकं जानते स्वर्णत्वेन भ्रमन्ति । यत् यस्मात् त्वं त्वदर्थे त्वदर्थनायोपनीतानर्चकैरुपाहृतान् दूर्वाङ्कुरादीन् हैमान् कनकवर्णतया परिणमयसि । तस्मादिति पूर्वेणान्वयः । काव्यलिङ्गभ्रमविषमव्याघातानां संकरः ॥

विशुद्धिमधिगच्छति ज्वलनसंगमात्काञ्चनं
विदन्ति च जगन्ति तन्न खलु तद्विपर्यस्यति ।
कथं कनकपादुके कमललोचने साक्षिणि
त्वयैव परिशुद्धता हुतभुजोऽपि जाघट्यते ॥ १७ ॥

**विशुद्धिमिति** । हे कनकपादुके, काञ्चनं कनकं ज्वलनसंगमादग्निसंयोगात् विशुद्धिं वर्णोत्कर्षम् । पावनत्वमपि गम्यते । अधिगच्छति प्राप्नोति । तत् जगन्ति लोका विदन्ति जानते । तत् न विपर्यस्यति वैपरीत्येन न विजानते । खलु प्रसिद्धौ ।

कमललोचने पुण्डरीकाक्षे साक्षिणि प्रत्यक्षद्रष्टरि सति त्वयैव सेवाकाले शिरसि निक्षिप्तया हुतभुजोऽग्नेरपि परिशुद्धता पावनत्वं कथंनु जाघट्यते घटते । क्रियासमभिहारे यङ् । भगवतः कनकमयपादुकासंबन्धादग्नेरपि परिशुद्धता भवतीति प्रसिद्धकार्यकारणवैपरीत्यवर्णनात् विभावनाभेदोऽलंकारः ॥

तारासङ्गप्रथितविभवां चारुजाम्बूनदाभां
त्वामारूढस्त्रिदशमहितां पादुके रङ्गनाथः ।
संचारिण्यां सुरशिखरिणस्तस्थुषा मेखलायां
धत्ते मत्तद्विरदपतिना साम्यकक्ष्यां समीक्ष्याम् ॥ १८ ॥

**तारेति** । हे पादुके रङ्गनाथस्तारस्य प्रणवस्य शुद्धमौक्तिकस्य च, अन्यत्र नक्षत्राणामासङ्गेन तात्पर्येण संवन्धेन प्रथितः प्रख्यातो विभवः समृद्धिर्यस्यास्ताम् । चारुः मनोज्ञा जाम्बूनदस्य स्वर्णस्याभा यस्यास्ताम् । त्रिदशैर्देवैर्महितां पूजितां बहुमतां च त्वामारूढः सन् संचारिण्यां गमनशीलायां सुरशिखरिणो मेरोर्मेखलायां नितम्बे तस्थुषा स्थितेन मत्तद्विरदपतिना मदगजश्रेष्ठेन समीक्ष्यां प्रेक्षणीयां साम्यस्य सादृश्यस्य कक्ष्यां धत्ते । श्लेषानुप्राणितोपमालंकारः ॥

कनकरुचिरा काव्याख्याता शनैश्चरणोचिता
श्रितगुरुबुधा भास्वद्रूपा द्विजाधिपसेविता ।
विहितविभवा नित्यं विष्णोः पदे मणिपादुके
त्वमसि महती विश्वेषां नः शुभा ग्रहमण्डली ॥ १९ ॥

**कनकेति** । हे मणिपादुके, कनकेन हेम्ना रुचिरा कनकवद्रुचिरो लोहिताङ्गः । अङ्गारकोऽपि व्यज्यते । काव्यै रामायणादिप्रबन्धविशेषैराख्याता प्रतिपादिता । काव्यशब्देन बोध्यः शुक्रोऽपि । 'शुक्रो दैत्यगुरुः काव्यः' इत्यमरः । शनैश्चरणस्य संचारस्योचिता योग्या राशीनामनेककालावस्थायीशनैश्चरोऽपि । श्रिता आश्रिता नाथयामुनप्रभृतय आचार्या बुधास्तत्त्वज्ञा व्यासादयो यस्यां सा । गुरुर्बृहस्पतिः बुधः सौम्यश्च । भास्वत्तेजिष्ठं रूपं यस्याः सा । द्विजाधिपैर्विप्रमुख्यैः सेविता । द्विजराजश्चन्द्रोऽपि । नित्यं सदा विष्णोर्भगवतः पदे चरणे आकाश इत्यपि । विहितः संपादितो विभवो यस्याः सा । महती पूज्या त्वं विश्वेषां नस्त्वदाश्रितानां सर्वेषामस्माकं शुभा ग्रहाणां सूर्यादीनां मण्डली समूहोऽसि । शुभस्थानस्थितग्रहमण्डलवदभीष्टदात्री भवसीत्यर्थः । श्लेषानुप्राणितरूपकमलंकारः ॥

प्रज्वलितपञ्चहेतिर्हिरण्मयीं त्वां हिरण्यविलयार्हः ।
आवहतु जातवेदाः श्रियमिव नः पादुके नित्यम् ॥ २० ॥

**प्रज्वलितेति** । हे पादुके, प्रज्वलिता दीप्ता पञ्चहेतयश्चक्रादिदिव्यायुधानि । वह्निज्वाला च गम्यते । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः ।' इत्यमरः । प्रसिद्ध-वह्निस्तु काली, कराली, स्फुलिङ्गिनी' धूम्रवर्णा, विश्वरुची, रोहिता, मनोजवेति ज्वाला-सप्तकविशिष्टः । अयंतु चक्रादिसंज्ञितपञ्चज्वालायुक्त इति व्यतिरेकः । हिरण्यविलयस्य हिरण्यासुरध्वंसनस्यार्हो योग्यः, अन्यत्र कनकद्रवीभावस्य योग्यः । जातवेदाः 'जाता-स्त्वदर्थं वेदाश्च जातवेदास्ततो ह्यसि ।' इति महाभारते । सकलवेदप्रतिपाद्ययज्ञादिक-र्माराध्यश्च भगवान् श्रीरङ्गनाथो हिरण्मयीं काञ्चनमयीं भवतीं श्रियमिव संपत्तिं लक्ष्मीं शोभां त्वामेव । 'लक्ष्मीः श्रीरपि संपत्तिः पद्माशोभाप्रियङ्गुषु ।' इति विश्वः । अस्माकं नित्यं सदा आवहतु ददातु । अद्य मेऽभिमतवत् त्वामपि सेव्य-तया वितरत्वित्यर्थः । 'चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह' इति श्रीसूक्तमन्त्रा-नुसंधेयम् । 'यश्छन्दसामृषभो विश्वरूपः ।' इति भगवतो वेदवेद्यत्वं जातवेदशब्दप्रवृ-त्तिनिमित्तमभिधाय, अन्ते 'ततो मे श्रियमावह' इत्युक्तं तैत्तिरीयोपनिषदि । 'आरोग्यं भास्करादिच्छेच्छ्रियमिच्छेद् हुताशनात् । शङ्करात् ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्द-नात् ॥' इति स्मृतिः । 'ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम् ।' इति प्रतिपन्ना त्रयी चात्र श्रीशब्दार्थः । वह्निश्रियमिव रङ्गनाथरूपो वह्निस्त्वामावहत्वित्युक्ते श्लेषानुप्रा-णितोपमालंकारः ॥ २० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ता-चार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे काञ्चनपद्धतिर्द्वाविंशी ।

---

## शेषपद्धतिस्त्रयोविंशी ।

अथास्यां पद्धत्यामभियुक्तोक्तिभिः संप्रतिपन्नं पादुकायाः शेषवेषान्तरमालम्ब्य स्तौति —

सृष्टां भूमावनन्तेन नित्यं शेषसमाधिना ।
अहं संभावयामि त्वामात्मानमिव पादुके ॥ १ ॥

**सृष्टामिति** । हे पादुके, अनन्तेन शेषेण नित्यं सदा शेष इति समाधिः समर्थनं तेन सह । यथा जना इमां शेषेयमिति समर्थयेयुस्तथेत्यर्थः । 'समाधिर्नियमे ध्याने निवासे च समर्थने ।' इति विश्वः । भूमौ सृष्टामुत्पादितां त्वामनन्तेन श्रीरङ्गनाथेन । 'अनन्तः शेषविष्ण्वोः स्यात्' इति विश्वः । नित्यं कालपरिच्छेदरहितं शेषसमाधिना दासत्वसमर्थनेन सह भूमौ सृष्टम् । 'तोयेन जीवान् विससर्ज भूम्याम्' इति श्रुतेः । लिङ्गपरिणामः । आत्मानं जीवात्मानमिवाहं संभावयामि मन्ये । अनन्तो भगवच्चरणपरि-चरणार्थस्फुटस्वलक्षणं स्वाकारान्तरं पादुकारूपं सृष्टवानिति भावः । अप्रस्तुतप्रशंसया विशेषणश्लेषकृता साधारणधर्मेण पादुका जीवात्मत्वेनोत्प्रेक्ष्यते ॥

ननु कथं पादुकायाः शेषमूर्त्यन्तरत्वमित्यत आह—

पद्माभोगात्पादुके रङ्गभर्तुः पादस्पर्शाद्भोगमन्यत्प्रपित्सोः ।
शेषस्यैकां भूमिकामब्रवीत्तामाचार्याणामग्रणीर्यामुनेयः ॥ २ ॥

**पद्मेति** । हे पादुके, आचार्याणां यतीन्द्रश्रीवत्साङ्करामिश्रमहापूर्णादीनामग्रणीः श्रेष्ठो यामुनेयो यामुनाचार्यस्त्वां पद्माया लक्ष्म्या भोगात् सुखतयानुभाव्यात् रङ्गभर्तुः श्रीरङ्गनाथस्य पादस्पर्शनाद्धेतोः अन्यं भगवत्कल्पितभोगशब्दाभिधेयात् भिन्नं भोगं सुखम् । भगवच्चरणारविन्दस्पर्शजन्यं सुखमित्यर्थः । कायः फणं चेत्यपि गम्यते । 'भोगः सुखे धने चाहेः शरीरफणकाययोः ।' इति विश्वः । ननु पादस्पर्शादन्यमित्यन्वयः । अर्थासामञ्जस्यात् प्रपित्सोः प्राप्तुमिच्छोः शेषस्यानन्तस्यैकां भूमिकां वेषान्तरतयाब्रवीदुक्तवान् । तदुक्तं स्तोत्ररत्ने—'निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरितो जनैः ॥' इति । तल्पीभूय भगवन्तं परिचरन् लक्ष्म्या संवाहनेनानुभाव्य तच्चरणारविन्दस्पर्शजन्यसुखमनुबुभूषुः पादुकारूपं विग्रहं परिगृहीतवानित्याह भगवान् यामुनाचार्यः । तत इदमवगम्यते पादुका शेषमूर्त्यन्तरमिति । भोगमन्यमिति श्लेषः । अब्रवीदिति शब्दप्रमाणोपन्यासात् शब्दालंकारः । आचार्याणामग्रणीरित्युक्त्या सामान्यतो भगवतोऽपि परमगुरुभूतात् गुणोत्कर्षव्यञ्जनादुक्तात् पाञ्चरात्रशास्त्रादपि यामुनेयोक्तिरेवास्माकमादरणीयेत्यभिप्रायप्रतीतेः परिकरश्च ॥

शेषत्वमम्ब यदि संश्रयति प्रकामं
त्वद्भूमिकां समधिगम्य भुजङ्गराजः ।
त्वामेव भक्तिविनतैर्वहतां शिरोभिः
काष्ठां गतं तदिह केशवपादरक्षे ॥ ३ ॥

**शेषत्वमिति** । हे अम्ब केशवपादरक्षे, भुजङ्गराजः शेषस्तव भूमिकां वेषं परिगृह्य शेषत्वं भगवद्दास्यं प्रकामं भृशम् । पादवाहनापेक्षयाधिकस्य शेषत्वस्याभावादिति भावः । संश्रयति यदि भजति यदि तर्हि भक्त्या विनतैर्नम्रैः शिरोभिर्वहतां पुरुषाणां तच्छेषत्वमिह शेषतदन्येषां मध्ये काष्ठां गतमनवधिकमुत्कर्षं प्राप्तम् । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । त्वदात्मकस्यानन्तस्य भगवच्छेषत्वोत्कर्षे त्वच्छेषाणां त्वदपेक्षयोत्कृष्टानां भगवच्छेषत्वं कैमुत्यसिद्धमिति भावः । काव्यार्थापत्तिरलंकारः ॥

मा भूदियं मयि निषण्णपदस्य नित्यं
विश्वंभरस्य वहनाद्व्यथितेति मत्वा ।
धत्से बलाभ्यधिकया मणिपादुके त्वं
शेषात्मना वसुमतीं निजयैव मूर्त्या ॥ ४ ॥

**माभूदिति ।** हे पादुके, इयं वसुमती मयि (अधिकरणे) निषण्णे पदे यस्य तस्य विश्वंभरस्य वहनात् धारणात् व्यथिता पीडिता पीडावती माभूदिति मत्त्वा बलेनाभ्यधिकयोत्कृष्टया शेषात्मना अनन्तभोगाकारया निजया मूर्त्या वसुमतीं भूमिं धत्से दधासि । उत्प्रेक्षा ॥

तत्तादृशा निजबलेन निरूढकीर्तिः
शेषस्तवैव परिणामविशेष एषः ।
रामेण सत्यवचसा यदनन्यवाह्यां
वोढुं पुरा वसुमतीं भवती नियुक्ता ॥ ५ ॥

**तत्तादृशेति ।** हे मणिपादुके, इत्युपस्कार्यम् । तत्तादृशा अनिर्वचनीयस्वरूपप्रकारयुक्तेन निजेन बलेन शक्त्या निरूढकीर्तिः समग्रयशाः बलाधिकत्वेन विदित एषः शेषः तव परिणामविशेषः शरीरभेद एव । यत् यस्मात् सत्यवचसा रामेण भगवता दाशरथिना अनन्यवाह्यां स्वेतरावहनीयां वसुमतीं वोढुं पुरा भवती नियुक्ता । ततो हेतोरिति पूर्वेणान्वयः । भगवता वहनीयाया वसुमत्या वहनात् शेषस्त्वत्परिणामभेद इति समर्थनीयसमर्थनात् काव्यलिङ्गमलंकारः ॥

शेषत्वसीमनियतां मणिपादरक्षे
त्वामागमाः कुलवधूमिव बालपुत्राः ।
त्वद्रूपभेदशयितस्य परस्य पुंसः
पादोपधानशयितामुपधानयन्ति ॥ ६ ॥

**शेषत्वेति ।** हे मणिपादरक्षे, आगमा वेदाः । शेषत्वसीमनियतां शेषत्वस्य पारतन्त्र्यस्य सीम्नि नियतां व्याप्तां तव रूपभेदे मूर्त्यन्तरे शेषाभिधाने शयितस्य परस्य पुंसः श्रीरङ्गनाथस्य पादे चरण एवोपधाने उपबर्हे शयिताम् । भर्तुः पादान्तिके शयानामित्यपि गम्यते । त्वां बालाः शिशवः पुत्राः सुताः कुलवधूं पतिव्रतामिवोपधानयन्ति उपबर्हीकुर्वन्ति । बहुधा भर्तृपरिचरणपरां कुलस्त्रियं शिशव इव त्वामागमाः संश्रयन्ति । तद्वारात्तु भगवदाश्रयणमिति व्यज्यत इत्युपमया वस्तुध्वनिः ॥

भरतशिरसि लग्नां पादुके दूरतस्त्वां
स्वतनुमपि ववन्दे लक्ष्मणः शेषभूतः ।
किमिदमिह विचित्रं नित्ययुक्तः सिषेवे
दशरथतनयः सन्रङ्गनाथः स्वमेव ॥ ७ ॥

**भरतेति ।** हे पादुके, शेषभूतोऽनन्तावतारो लक्ष्मणो भरतस्य शिरसि लग्नां रामप्रयाणसमये नन्दिग्रामादानीयमानां स्वतनुमपि निजशरीरभूतामपि त्वां दूरतोऽसंनि-

कृष्टदेशतो ववन्दे ननाम । अतो नित्यं सदा युक्तः समीपवर्ती रङ्गनाथः इक्ष्वाकुकुलाराध्यो दशरथतनयो रामः सन् स्वमात्मानमेवेह श्रीरङ्गे सिषेवे सेवितवान् इतीदं किं विचित्रं । न किमप्याश्चर्यम् । शेषनन्तव्यशेषिसत्त्वेऽपि दूरस्थस्वतनुवन्दनदर्शनेन शेष्यन्तररहितस्य शेषिणः संनिकृष्टस्ववन्दनं नाद्भुतमित्युक्त्या काव्यार्थापत्तिरलंकारः ॥

भूयोभूयः स्तिमितचलिते यस्य संकल्पसिन्धौ
ब्रह्मेशानप्रभृतय इमे बुद्बुदत्वं भजन्ति ।
तस्यानादेर्युगपरिणतौ योगनिद्रानुरूपं
क्रीडातल्पं किमपि तनुते पादुके भूमिकान्या ॥ ८ ॥

**भूय इति ।** हे पादुके, अन्या तव भूमिका ते वेषान्तरं वटपत्ररूपा इमे ब्रह्मेशानप्रभृतयो विरिञ्चिशिवाद्या भूयोभूयो मुहुर्मुहुः स्तिमिते निश्चले चलिते प्रलये परिणामकाले चोपरते वर्तमाने चेत्यर्थः । यस्य भगवतः संकल्परूपे सिन्धौ समुद्रे बुद्बुदत्वं भजन्ति झटिति चोत्पत्तियुक्ता भवन्ति । अनादेरनुत्पन्नस्य तस्य भगवतो युगपरिणतौ युगान्ते योगनिद्राया ध्यानात्मकस्य स्वापस्यानुरूपं योग्यं किमपि विलक्षणं क्रीडातल्पं लीलार्थशय्यां तनुते । युगान्ते वटपत्रशायिनः स्वयमेव तल्पीभूतवटपत्रतया परिणमसीति भावः । रूपकमलंकारः, उदात्तालंकारः, प्रेयोऽपि । ब्रह्मादिविषयाया नश्वरत्वहेतुकजुगुप्सायाः पादुकाभक्त्यङ्गत्वात् ॥

अहीनात्मा रङ्गक्षितिरमणपादावनि सदा
सतामित्थं त्राणात्प्रथितनिजसत्रत्वविभवा ।
अविद्यायामिन्या स्पृशसि पुनरेकाहपदवीं
क्रतूनामाराध्या क्रतुरपि च सर्वस्त्वमसि नः ॥ ९ ॥

**अहीनेति ।** हे रङ्गक्षितिरमणपादावनि, सदा अहीनः श्रेष्ठोऽहीनां सर्पाणामिनस्य प्रभोः आत्मैवात्मा स्वरूपं शरीरं वा यस्याः सा । अहर्गणसाध्यसुत्याकसोमयागरूपा च । अहन्शब्दात् 'अह्नः खः क्रतौ' इति खप्रत्यये खस्येनादेशे च अहीनेति रूपम् । नित्यं सदा सतां साधूनां त्राणात् रक्षणात् प्रथितो निजस्यात्मीयस्य सत्रत्वस्य विभवो विस्तारो यस्याः सा । सत्रसंज्ञकयागात्मकत्वेन प्रसिद्धा च । आस्त्युपैतिचोदनाचोदितबहुयजमानो यागः सत्रशब्दार्थः । आस्त्युपैतिचोदनाचोदितत्वं सत्रत्वमिति तद्विदः । नोऽस्माकमविद्यायाः प्राचीनकर्मवासनाया एव यामिन्या रात्र्याः एकाहपदवीमद्वितीयवासरभङ्गीमेकदिनसाध्यसुत्याकयागभङ्गीं च स्पृशसि पुनः वहसीव । एवं क्रतूनामहीनसत्रैकाहात्मकसकलक्रतूनामाराध्यापि प्रीणनीयापि त्वं सर्वः पूर्वोक्ताशेषक्रतुरपि असि भवसि । क्रतुभिराराध्यायाः श्लेषानुप्राणितक्रत्वात्मकत्वमुत्प्रेक्ष्यते ॥

बहुमुखभोगसमेतैर्निर्मुक्ततया विशुद्धिमापन्नैः ।
शेषात्मिका पदावनि निषेव्यसे शेषभूतैस्त्वम् ॥ १० ॥

**बह्विति।** हे पदावनि, शेषात्मिका अनन्ताख्यनागराजस्वरूपा त्वं बहुमुखैरनेकप्रकारैर्भोगैः सुखैः समेतैर्युक्तैः, अन्यत्र बहुमुखः सहस्रवदनो भोगः शरीरं यस्याः सेति विभक्तिलिङ्गयोः परिमाणः। निर्मुक्ततया प्राप्तमोक्षत्वेन विशुद्धिं दोषराहित्यमापन्नैः प्राप्तैः, अन्यत्र निर्मुक्ततया मुक्तकञ्चुकत्वेन। 'निर्मुक्तो मुक्तकञ्चुकः' इत्यमरः। विशुद्धिं धावल्यमापन्नैरित्यर्थः। शेषभूतैर्दासभूतैः अनन्तात्मकैरित्यपि। निषेव्यसे सेव्या भवसि। श्लेषानुप्राणितः समालंकारः॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे शेषपद्धतिस्त्रयोविंशी॥

---

द्वन्द्वपद्धतिश्चतुर्विंशी।

अथास्यां पद्धत्यां पादुकागतयुगलभावमालम्ब्य तां वर्णयति—

प्रपद्ये पादुकारूपं प्रणवस्य कलाद्वयम्।
ओतं मितमिदं यस्मिन्ननन्तस्यापि तत्पदम्॥ १ ॥

**प्रपद्य इति।** पादुकारूपं भगवतः पादुकात्मकं प्रणवस्योंकारस्य। 'ओंकारप्रणवौ समौ' इत्यमरः। ओतमोकारात्मकम्। 'तपरस्तत्कालस्य १।१।७०' इति तपरत्वम्। परस्परसंगतमित्यप्यर्थः। कलाद्वयं मात्रायुगलम्। कला स्यान्मूलरैवृद्ध्योः शिल्पादावंशमात्रयोः।' इति विश्वः। प्रपद्ये। पादुकायुगलं प्रणवावयवभूताकारेकारात्मकपरस्परसंगतमात्रायुगलवद्वर्तमानम्। भजे इत्यर्थः। यस्मिन् पादुकायुगले प्रणवकलायुगले च अनन्तस्य परिच्छेदरहितस्य भगवतोऽपीदं पुरोवर्ति श्रूयमाणं च तत् पदं प्रसिद्धचरणः प्रणवरूपशब्दश्च मितं परिच्छिन्नम्। चकारेण इतं युक्तं चेदं कलाद्वयमिति प्रतिनिर्देशस्य पूर्वेणान्वयः। पदविशेषणत्वेन वोपस्कार्यम्। ओकारे मकारप्रश्लेषेण प्रणवात्मको भगवतो वाचकः शब्दो भवति। 'ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।' इति स्मर्यते। श्लेषानुप्राणितं रूपकमलंकारः॥

मणिपादुकयोर्युगं मुरारेस्तव नित्यं विदधातु मङ्गलानि।
अधिकृत्य चराचरस्य रक्षामनुकम्पाक्षमयोरिवावतारः॥ २ ॥

**मणीति।** चराचरस्य जङ्गमस्थावरात्मकस्य प्रपञ्चस्य रक्षामवनमधिकृत्य मुरारेरनुकम्पाक्षमयोर्दयाक्षान्त्योरवतार इव स्थितं मणिपादुकयोर्युगं मम नित्यं मङ्गलानि श्रेयांसि विदधातु तनोतु। इयमुत्प्रेक्षा। नोपमा। तथाविधदयाक्षमावतारस्याप्रसिद्धत्वादभूतोपमेत्यपि वदन्ति॥

चरणौ मणिपादुके मुरारेः प्रणतान्पालयितुं प्रपद्यमानम् ।
विपदामिह देवमानुषीणां प्रतिकारं युवयोर्द्वयं प्रतीमः ॥ ३ ॥

**चरणाविति** । हे मणिपादुके, संबोधनद्विवचनम् । प्रणतानाश्रितान् पालयितुं रक्षितुं मुरारेश्चरणौ प्रतिपद्यमानं युवयोर्द्वयं (कर्म) देवा मानुषाश्च तेषां संबन्धिनीनामिति द्वन्द्वसमासात् तद्धितोत्पत्तिः । 'तस्येदम् ४।३।१२०' इत्यण् । 'टिड्ढाणञ्—४।१।१५' इत्यादिना ङीप् । देवमात्रसाध्यानां मनुष्यकृतीनां चेत्यर्थः । विपदामापदां प्रतिकारं निष्कृतिमिव प्रतीमः । देवमानुषसंबन्धित्वेन द्वेधावस्थितानां विपदां द्विधावस्थितं प्रतिकारमिव पादुकाद्वयं जानीम इत्यर्थः । उत्प्रेक्षा ॥

मुरभिन्मणिपादुके भवत्योर्विहितो नूनमसौ मिथो विभागः ।
भजतामपरस्परप्रियाणामविरोधाय सुरासुरेश्वराणाम् ॥ ४ ॥

**मुरभिदिति** । हे मुरभिदो मणिपादुके, भवत्योः असौ दृश्यमानो मिथोऽन्योन्यं विभागो द्वेधाभावः । भजतां सेवमानानां परस्परमन्योन्यं प्रियाः सुहृदो न भवन्ति ये तेषां सुरासुरेश्वराणां देवासुरप्रभूणामविरोधाय कलहाभावाय विहितः कृतः । नूनमित्युत्प्रेक्षा । अन्यथा देवासुरेश्वराणामेकस्यां पादुकायां स्वस्वामित्वाभिमानेन एकार्थप्रीतिकृतो वर्जनीयः कलहो भवेदिति भावः ॥

अहितोन्मथनाय संश्रितानामलमालोकवशेन शब्दतो वा ।
करयोश्च रथाङ्गपाञ्चजन्यौ मधुहन्तुः पदयोश्च पादुके ये ॥ ५ ॥

**अहितेति** । मधुहन्तुः श्रीरङ्गनाथस्य करयोर्विद्यमानौ रथाङ्गं चक्रम्, पाञ्चजन्यः शङ्खस्तावुभौ । 'शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम् ।' इत्यमरः । 'खड्गोऽस्य नन्दकः शङ्खः पाञ्चजन्यः प्रकीर्तितः ।' इति हलायुधः । 'तं पाञ्चजन्यं शशिकोटिशुभ्रम्' इति प्रयोगश्च । तथा च 'रथाङ्गपाञ्चजन्ये' इति क्वाचित्कः पाठश्चिन्त्यः । रथाङ्गपाञ्चजन्याविति पाठ एवाचार्याभिप्रेतः । पदयोश्चरणयोर्विद्यमाने ये पादुके । अस्य यच्छब्दस्य रथाङ्गपाञ्चजन्यपरत्वेन लिङ्गविपरिणामश्च कार्यः । ततस्तानीति 'नपुंसकमनपुंसकेन—१।२।६९' इति नपुंसकैकशेषेणाध्याहारः । आलोकवशेन, उद्द्योतवशेन च शब्दतः शङ्खध्वानजन्यरवेण कीर्तनेन चाहितानामनिष्टानां शत्रूणां चोन्मथनाय ध्वंसायालं शक्तानि । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ।' इत्यमरः । सुदर्शनोद्द्योतशङ्खरवाभ्यां शत्रुनिरासः पादुकादर्शनकीर्तनाभ्यामनिष्टनिरास इति विवेकः । श्लेषानुप्राणितदीपकमलंकारः । वदन्ति वर्ण्यावर्ण्यानां धर्मैक्याद्दीपकं बुधाः ।' इति लक्षणम् । तेन सुदर्शनपाञ्चजन्यसादृश्यं पादुकयोर्व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

अवधीरितसाधुपद्धतीनामलसानां मधुवैरिपादुके द्वे ।
इतरेतरसाहचर्यमित्थं प्रतिपन्ने इव दैवपौरुषे नः ॥ ६ ॥

**अवधीरितेति ।** द्वे मधुवैरिणः श्रीरङ्गनाथस्य पादुके, द्विवचनोक्तस्यापि द्वित्वस्य स्फुटावगमाय द्वे इति प्रयोगः । अवधीरिता अतिलङ्घिता पद्धतिः मार्गः । आचार इत्यर्थः । यैस्तेषामलसानामशक्तानां नोऽस्माकमितरेतरमन्योन्यं साहचर्यं सहायत्वमित्थं परिदृश्यमानपादुकायुगलप्रकारेण प्रतिपन्ने प्राप्ते दैवं भाग्यं पौरुषं पुरुषकारः ते इव । पादुकायुगलं परस्परानुकूलदैवपुरुषयत्नत्वेनोत्प्रेक्ष्यते । अवधीरितसाधुपद्धतीनामलसानामिति च विशेषणद्वयं स्वतो दृष्टपौरुषाभावयोर्हेतुरिति परिष्कारश्च ॥

पार्श्वयोः सरसिजावसुंधरे पादयोश्च मणिपादुके युवाम् ।
संनिकर्षथ न चेन्मधुद्विषः किं करिष्यति कृतागसां गणः ॥ ७ ॥

**पार्श्वयोरिति ।** हे मणिपादुके, मधुद्विषः श्रीरङ्गनाथस्य पार्श्वयोः सरसिजा पद्मा वसुंधरा भूमिश्च । 'रमाब्धिजा भार्गवी च स्त्रीलिङ्गाश्चाम्बुजाह्वयाः ।' इति यादवः । पादयोश्चरणयोर्युवां चैतौ यूयमिति युष्मच्छब्दस्याध्याहारः कार्यः । 'त्यदादीनि सर्वैर्नित्यम् १।२।७२॥' इति त्यदादिशेषौचित्यात् । संनिकर्षथ नचेत् समीपवर्तिन्यो न यदि । संपूर्वात् कृषेर्लटि मध्यमपुरुषे बहुवचनम् । कृतागसामपराधिनां गणः समूहः किं करिष्यति । अकिंचित्करतया सीदेदिति भावः । अपराधिषु भगवतः प्रसक्तं कोपं निवारयितुं श्रीभूमिवत् पादुकायुगलमपि वर्तत इति भावः । दीपकसंकीर्णेयं संभावना । तथा च श्रीभूमिसादृश्यं पादुकाया व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

पादुके भवभयप्रतीपयोर्भावयामि युवयोः समागमम् ।
सक्तयोर्दनुजवैरिणः पदे विद्ययोरिव परावरात्मनोः ॥ ८ ॥

**पादुके इति ।** हे पादुके, भवजनितभयस्य प्रतीपयोर्विरोधिन्योः दनुजवैरिणः पदे चरणे स्वरूपे च सक्तयोः संबन्धवत्योः । इदं विशेषणद्वयं विद्ययोरपि । युवयोः समागमं संसर्गं परावरात्मनोः शास्त्रजन्यज्ञानयोगसाक्षात्कारस्वरूपयोर्विद्ययोरिव ज्ञानयोः समागममिव भावयामि । उत्प्रेक्षा । मुण्डकोपनिषदि 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' इति श्रूयते । 'ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विद्ये उपादेये' इति भगवता भाष्यकृता व्याख्यातम् । उपबृंहितं च श्रीविष्णुपुराणे—'द्वे विद्ये वेदितव्ये वै इति चाथर्वणी श्रुतिः । परया त्वक्षरप्राप्तिः ऋग्वेदादिमयापरा ॥' इति ॥

रङ्गसीमनि रथाङ्गलक्ष्मणश्चिन्तयामि उपनीय पादुके ।
शापदोषशमनाय यत्पदे चक्रवाकमिथुनं कृतास्पदम् ॥ ९ ॥

**रङ्गेति ।** रङ्गसीमनि श्रीरङ्गनगरे विद्यमानस्य रथाङ्गलक्ष्मणः श्रीरङ्गनाथस्य तपनीयमयीं कनकप्रचुरां पादुकां शापजनितस्य रात्रौ स्त्रीपुंसयोर्विरहरूपस्य दोषस्य शमनाय निवर्तनाय तत्पदे श्रीरङ्गनाथचरणे कृतास्पदं विहितप्रतिष्ठानं चक्रवाकयोः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ।' इत्यमरः । मिथुनं स्त्रीपुंसौ चिन्तयामि । उत्प्रेक्षा । रथाङ्गलक्ष्मण

इति श्लेषेण चक्रवाकप्रतीतेः इदं चक्रवाकागमसाकूतमिति परिकराङ्कुरश्च। पुरा किल दाशरथिश्चक्रवाकं शप्तवानिति पुराणान्तरे। तदभेदाच्छरणागतिर्युक्तेति भावः॥

मानयामि जगतस्तमोपहे माधवस्य मणिपादुके युवाम्।
दक्षिणोत्तरगतिक्रमोचिते पद्धती इव मयूखमालिनः॥ १०॥

**मानयामीति।** हे माधवस्य मणिपादुके, जगतो भुवनस्य तमःशोकमन्धकारं च अपहतो विनाशयत इति तथोक्ते युवां दक्षिणोत्तरयोर्याम्यकौबेरदिक्संबन्धिन्योर्गत्योः संचारयोः क्रमस्य पर्यायस्योचिते, अन्यत्र दक्षिणोत्तरयोरपसव्यसव्ययोर्गत्योः क्रमस्य पदविक्षेपस्योचिते। पादुकयोः पर्यायतो दक्षिणवामपादगत्यनुगुणविक्षेपयोग्यत्वादिति भावः। मयूखमालिनः सूर्यस्य पद्धती इव दक्षिणायनोत्तरायणसरणी इव मानयामि संभावयामि। श्लेषानुप्राणितेयमुपमा॥

रङ्गनाथपदयोरलंक्रिया राजते कनकपादुकाद्वयी।
तद्विभूतियुगलीव तादृशी छन्दतः समविभागमाश्रिता॥ ११॥

**रङ्गनाथेति।** रङ्गनाथस्य पदयोश्चरणयोर्लीलामुक्तिस्थानयोश्चालंक्रिया भूषा कनकमय्योः पादुकयोर्द्वयी तादृशी पादत्वेन त्रिपदत्वेन च प्रसिद्धा छन्दतः स्वेच्छया समविभागं विभूतिविभागमाश्रिता तस्य श्रीरङ्गनाथस्य विभूत्योः प्रकृतिशुद्धसत्त्वमण्डलात्मकयोः सम्पदोर्युगली द्वयीव राजते विभाति। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।' इति भूत्योर्विषमांशतया श्रूयते। तथाभूते लीलाविभूतिनित्यविभूतिस्वेच्छया समविभागमाश्रिते इत्युक्तेरभूतोपमा॥

साक्षात्पदं मधुभिदः प्रतिपादयन्त्यौ
मानोपपत्तिनियते मणिपादुके द्वे।
अन्योन्यसंगतिवशादुपपन्नचर्या-
माज्ञां श्रुतिस्मृतिमयीमवधारयामि॥ १२॥

**साक्षादिति।** मधुभिदः श्रीरङ्गनाथस्य पदं चरणम्, अन्यत्र स्वरूपं साक्षात् प्रत्यक्षतया अन्यत्र शक्त्याख्यया अव्यवहितवृत्त्या प्रतिपादयन्त्या आश्रितेभ्यो ददत्या बोधयन्त्या च मानेन परिमाणेनोपपत्त्या गत्या च नियते व्याप्ते भगवत्पादतुल्यपरिमाणगतियुक्ते इत्यर्थः। अन्यत्र मानोपपत्तिभ्यां प्रमाणतर्काभ्यां नियते व्यावृत्ते तात्पर्यगोचरार्थनिष्ठे इति यावत्। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना॥ यस्तर्केणानुसंधत्ते स वेदं वेद नेतरः॥' इत्युक्तेः श्रुतिस्मृत्योः प्रमाणतर्कानुग्रहस्यावश्यकत्वम्। द्वे मणिपादुके (कर्मणि) पादुकयोरन्योन्यं संगतिवशात् परस्परानुग्रहेण उपपन्ना चर्या अनुष्ठानम्। संचारश्च गम्यते। यस्यास्तां श्रुतिस्मृतिद्वयीं वेदधर्मशास्त्रात्मिकामाज्ञां भगवतः शासनमवधारयामि जानामि। इत्युत्प्रेक्षा॥

'श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥' इति श्रुतिस्मृत्योराज्ञात्वमुक्तम् ॥

विश्वोपकारमधिकृत्य विहारकाले-
ष्वन्योन्यतः प्रथममेव परिस्फुरन्त्योः ।
दृष्टान्तयन्ति युवयोर्मणिपादरक्षे
दिव्यं तदेव मिथुनं दिविषन्निषेव्यम् ॥ १३ ॥

**विश्वेति** । हे मणिपादरक्षे, विहारकालेषु संचारकालेषु लीलाकालेषु च विश्वेषामुपकारमधिकृत्यापेक्ष्य अन्योन्यतः प्रथममेव परिस्फुरन्त्योः परस्परमहंपूर्विकया प्रकाशमानयोर्युवयोर्दिव्यं मनोज्ञमप्राकृतं वा दिविषदां देवानां निषेव्यं भजनीयं तत् लक्ष्मीनारायणात्मकं मिथुनं द्वन्द्वमेव दृष्टान्तयन्ति निर्दिशन्ति । सदृशतया पश्यन्तीति भावः । उपमालंकारः । तेन एवकारेण इतरसादृश्यव्यवच्छेदादुपमेयोपमा व्यज्यत इत्यलंकारेणालंकारध्वनिः ॥

द्वावेव यत्र चरणौ परमस्य पुंस-
स्तत्र द्विधा स्थितवती मणिपादुके त्वम् ।
यत्रैव दर्शयति देवि सहस्रपात्त्वं
तत्रापि नूनमसि दर्शिततावदात्मा ॥ १४ ॥

**द्वावेवेति** । हे देवि, मणिपादुके, त्वं परमस्य पुंसो यत्र परव्यूहप्रभृतिषु द्वावेव चरणौ तत्रावतारे द्विधात्वयुक्ततया स्थितवती स्थिता । यत्र विराट्पुरुषाकारादिषु परमः पुमानिति विपरिणत्या अनुषङ्गः । सहस्रपात्त्वं दर्शयत्येव अयोगव्यवच्छेदेन प्रकाशयति । तत्रापि—'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।' इति श्रुत्युक्तावतारभेदेषु दर्शिताः प्रकाशितास्तावन्तः सहस्रसंख्याः आत्मानः शरीराणि यया सा असि । नूनं सहस्रविधाकारा भवस्येवेत्यर्थः । दर्शयत्येवेत्युक्तेरेवकारप्रतिनिर्देशतया नूनंशब्दोऽत्रैवकारार्थः । न तूत्प्रेक्षार्थः । विराडाकारादिषु पादुकाया असंभावितत्वप्रमाणाभावात् । पर्यायालंकारः । एकस्यां पादुकायां द्वित्वादीनामनेकासां संख्यानां कथनात् । 'एकस्मिन् यद्यनेकः स्यात् पर्यायः सोऽपि संमतः ।' इति लक्षणात् ॥

पर्यायतो मणिवशान्मणिपादरक्षे
पूर्वापरत्वनियमं व्यतिवर्तयन्त्यौ ।
मन्ये युवां महति विष्णुपदे स्फुरन्त्यौ
संध्ये समस्तजगतामभिवन्दनीये ॥ १५ ॥

**पर्यायत इति** । हे मणिपादरक्षे, पर्यायतः क्रमेण गतिवशात् पादविक्षेपवशाच्च

पूर्वापरत्वयोः प्राग्भावपश्चाद्भावयोर्नियममैकान्त्यं व्यतिवर्तयन्त्यौ महती उत्कृष्टे विपुले च विष्णुपदे भगवच्चरणे आकाशे च स्फुरन्त्यौ प्रकाशमाने समस्तानां जगतामभिवन्दनीये नमस्कार्ये संध्ये प्रातःसायंसंध्याकालतया मन्ये । उत्प्रेक्षा । संध्याद्वयस्य कालगतिवशात् पूर्वापरव्यतिवर्तनवत् पादुकाद्वयस्यापि पदविक्षेपवशात् पौर्वापर्यव्यतिवर्तनमिति विवेकः । श्लेषश्चोत्प्रेक्षाङ्गः ॥

अश्रान्तसंचरणयोर्निजसंप्रयोगा-
दम्लानतां चरणपङ्कजयोर्दिशन्त्यौ ।
मन्ये युवां रघुपतेर्मणिपादरक्षे
विद्ये बलामतिबलां च विवेचयामि ॥ १६ ॥

**अश्रान्तेति** । हे रघुपतेः मणिपादरक्षे, निजसंप्रयोगात् स्वग्रहणात् श्रमरहितं संचरणं ययोस्तयोः चरणपङ्कजयोः पद्मसदृशपादयोरम्लानतां ग्लानिराहित्यं दिशन्त्यौ । इदं विद्ययोरपि विशेषणम् । युवाम् । कर्मणि । बलामतिबलां च बलातिबलासंज्ञे मान्ये पूज्ये विद्ये मन्त्रौ विचिन्तयामि विभावयामि । उत्प्रेक्षा । रघुपतेरिति विशेषणस्य विद्यासंबन्धसाकूतत्वात् परिकरश्च । श्रीरामायणे रामं प्रति विश्वामित्रवचनम्—'मन्त्रं गृहाण राम त्वं बलामतिबलां तथा । न श्रमो न ज्वरो वा ते न रूपस्य विपर्ययः ॥'

अन्तर्मोहादविदितवतामात्मतत्त्वं यथाव-
त्पद्यामित्थं परिचितवतां पादुके पापलोक्याम् ।
नित्यं भक्तेरनुगुणतया नाथ पादं भजन्त्यौ
निष्ठे साक्षात्स्वयमिह युवां ज्ञानकर्मात्मिके नः ॥ १७ ॥

**अन्तरिति** । हे पादुके, नित्यं सदा भक्तेर्भगवद्विषयप्रेमात्मकस्मृतिसंतानस्यानुगुणतया हेतुतया नाथस्य श्रीरङ्गनाथस्य पादं चरणं भजन्त्यौ आश्रयन्त्यौ । इदं निष्ठयोरपि विशेषणम् । तयोरपि भक्त्यङ्गत्वात् । युवामन्तर्मोहात् अन्तःकरणाश्रितज्ञानविरोधितमोगुणेन आत्मनोः जीवपरयोस्तत्त्वं साधर्म्यं यथार्हमविदितवतामज्ञातवतामित्थमनुष्ठीयमानप्रकारेण पापलोक्यां नरकहेतुम् । पापलोकशब्दात् तत्र साधुरिति यत्प्रत्ययः । पद्यां मार्गम् । कृत्यमित्यर्थः । परिचितवतां पुनः पुनः अनुष्ठितवतां नोऽस्माकमिह जगति साक्षात् प्रत्यक्षतया दृश्यमाने ज्ञानकर्मात्मिके ज्ञानयोगकर्मयोगरूपे निष्ठे चर्ये । पादुकाद्वये पापिजनानुग्राहकज्ञानकर्मयोगद्वयत्वमुत्प्रेक्षते । तत्र चार्थश्लेषाङ्गम् । ज्ञानकर्मयोगप्रकारप्रपञ्चस्तु गीतायामनुसंधेयः ॥

न्यस्तं विष्णोः पदमिह महत्त्वेन भूम्ना वहन्त्यो-
राम्नायाख्यामविहतगतिं वर्तयन्त्योर्निजाज्ञाम् ।

आसन्नानां प्रणयपदवीमात्मना पूरयन्त्यो-
द्वैराज्यश्रीर्भवति जगतामेकराज्ये भवत्योः ॥ १८ ॥

**न्यस्तमिति** । हे पादुके, इति द्विवचनं संबोधनमुपस्कार्यम् । इह श्रीरङ्गे न्यस्तं निक्षिप्तं महत् उत्कृष्टं विष्णोर्भगवतः पदं चरणं स्थानं च स्वेन भूम्ना निजमाहात्म्येन वहन्त्योः; आम्नायाख्यां वेदनामिकां निजामाज्ञां शासनमविहता अप्रतिबन्धा गतिः प्रवृत्तिर्यस्याः सा तां वर्तयन्त्योः प्रवर्तयन्त्योरासन्नानां समीपवर्तिनां प्रणयपदवीं स्नेहमार्गमात्मना स्वेन पूरयन्त्योर्भवत्योः जगतां लोकानामेकराज्ये अद्वितीयराज्यभावे सत्यपि द्वैराज्यश्रीः राज्यद्वयशोभा भवति । पादुकाया वस्तुतः शेषात्मकत्वेन एकत्वेऽपि भगवत्पादानुगुण्येन शरीरद्वयपरिग्रहात् प्रेक्षकाणां समभागिराजद्वित्वप्रतीतिर्जायत इति भावः । समासोक्त्यनुप्राणितो विरोधाभासोऽलंकारः ॥

अप्राप्तानामुपजनयथः संपदां प्राप्तिमेवं
संप्राप्तानां स्वयमिह पुनः पालनार्थं यतेथे ।
साक्षाद्रङ्गक्षितिपतिपदं पादुके साधयन्त्यौ
योगक्षेमौ सुचरितवशान्मूर्तिमन्तौ युवां नः ॥ १९ ॥

**अप्राप्तानामिति** । हे पादुके, रङ्गक्षितिपतेः पदं चरणं स्थानं वा साक्षादव्यवधानेन प्रत्यक्षतया वा साधयन्त्यौ गमयन्त्यौ च नोऽस्माकमप्राप्तानां संपदामैश्वर्याणां प्राप्तिमधिगममुपजनयथ उत्पादयथः । मध्यमपुरुषद्विवचनम् । पुनर्भूयः संप्राप्तानामधिगतानां संपदां पालनार्थं रक्षणाय स्वयं यतेथे प्रयस्यथः । 'यती प्रयत्ने' इति धातोर्लट्मध्यमपुरुषद्विवचनम् । सुचरितवशात् अस्मत्पुण्यपरिपाकवशात् मूर्तिमन्तौ शरीरिणौ योगक्षेमौ स्थः । अलब्धस्य लाभो योगः । लब्धस्य परिपालनं क्षेमः । कार्यकारणयोरभेदेन योगक्षेमविधायिन्योर्योगक्षेमत्वाध्यवसायः । 'योगोऽपूर्वार्थसंपत्तौ', 'क्षेमः स्यान्मङ्गले लब्धरक्षणे च ।' इत्युभयत्रापि विश्वः । 'कुशलं क्षेममस्त्रियाम्' इत्युक्तेः पुंस्त्वम् । काव्यलिङ्गमलंकारः ॥

बद्धहरिपादयुगलं युगलं तपनीयपादुके युवयोः ।
मोचयति संश्रितानां पुण्यापुण्यमयशृङ्खलायुगलम् ॥ २० ॥

**बद्धेति** । हे पादुके, बद्धं संबद्धम् । शृङ्खलितमित्यपि गम्यते । हरेः पादयुगलं येन तत् । युवयोर्युगलं संश्रितानां पुण्यं सुकृतम्, अपुण्यं पापम्, तदुभयात्मकं शृङ्खलायुगलं निगडद्वयं मोचयति नाशयतीति यावत् । 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।' इति श्रुत्युक्तां मुक्तिं संपादयतीत्यर्थः । व्याघातालंकारः । बन्धकस्य मोचकत्ववर्णनात् । अत्र यद्यपि युगलपदस्य त्रिवारमावर्तनात् कथितपदत्वं

दोष इव तथापि 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।' इत्यादाविव ताद्रूप्यप्रतीते-रुद्देश्यत्वात् कथितपदत्वमत्र गुण एव ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे द्वन्द्वपद्धतिश्चतुर्विंशी ॥

---

पादुकासंनिवेशपद्धतिः पञ्चविंशी।

अथास्यां पद्धत्यां पादुकासंनिवेशं वर्णयति—

अणोरणीयसीं विष्णोर्महतोऽपि महीयसीम्।
प्रपद्ये पादुकां नित्यं तत्पदेनैव संमिताम् ॥ १ ॥

अणोरिति। अणोरन्तर्यामिविग्रहवामनाद्यवतारयुक्तस्याल्पतनोः विष्णोश्चरणानुग्रहेण अणीयसीमल्पसंनिवेशाम्, महतस्त्रिविक्रमविराट्पुरुषाद्याकृतेर्विष्णोश्चरणानुगुण्येन महीयसीं प्रसिद्धमहापदार्थान्तरापेक्षया बृहत्तरसंनिवेशाम्। अतस्तस्य पदेनैव चरणेनैव। 'अणोरणीयान् महतो महीयान्' इति श्रुत्युक्तभगवत्स्वरूपेण चेति गम्यते। संमितां समपरिमाणां पादुकां नित्यं प्रपद्ये। काव्यलिङ्गसंसृष्टः प्रेयोऽलंकारः ॥

प्रतितिष्ठति पादसंमितायां त्वयि नित्यं मणिपादुके मुकुन्दः।
इतरे तु परिच्छदास्त एते विभवव्यञ्जनहेतवो भवन्ति ॥ २ ॥

प्रतितिष्ठतीति। हे पादुके, मुकुन्दः पादेन संमितायां समपरिमाणायां त्वयि नित्यं प्रतितिष्ठति गमनस्थितिकालयोः प्रतिष्ठितो भवति। ते प्रसिद्धा एते परिदृश्यमाना इतरे परिच्छदास्त्वदन्याश्छत्रचामरादिपरिवर्हास्तु भगवतो विभवस्य संपदो व्यञ्जनेऽभिव्यक्तौ हेतवः कारणानि भवन्ति। भगवतः प्रतिष्ठा पादुकाधीना इतरपरिवर्हास्तु ऐश्वर्यमात्रव्यञ्जका इति व्यतिरेकोऽलंकारः ॥

तव रङ्गनरेन्द्रपादरक्षे प्रकृतिः सन्नपि भक्तिपारतन्त्र्यात्।
भवतीं वहतीव पन्नगेन्द्रः प्रथितस्वस्तिकलक्षणैः शिरोभिः ॥ ३ ॥

तवेति। हे रङ्गनरेन्द्रपादरक्षे, पन्नगेन्द्रः शेषस्तव प्रकृतिरुपादानं सन्नपि। शेष एव पादुकारूपेण परिणत इति भावः। प्रथिताः पादुकासमानाकारत्वेन प्रसिद्धाः स्वस्तिका बाहुस्वस्तिकसंनिवेशसमानाकारा रेखा लक्षणं लाञ्छनं येषां तैः शिरोभिः फणाभिर्भक्तिपारतन्त्र्यात् त्वद्विषयप्रेमपरवशतया भवतीं वहतीव धत्ते इवेत्युत्प्रेक्षा। शेषस्त्वदभिन्नत्वेऽपि त्वत्संनिवेशं भक्त्या वहतीति भावः। सर्पजात्याः स्वतःसिद्धे फणागतरेखाभेदे पादुकायुगलसंनिवेशत्वमुत्प्रेक्ष्यते ॥

परस्य पुंसः पदसंनिवेशान् प्रयुञ्जते भावितपञ्चरात्राः ।
अघप्रतीपानपदिश्य पुण्ड्रानङ्केषु रङ्गेशयपादुके त्वाम् ॥ ४ ॥

परस्येति । हे रङ्गेशयस्य पादुके, भावितपञ्चरात्राः परिशीलितपञ्चरात्रशास्त्राः पुरुषा अघानां पापानां प्रतीपान् प्रतिकूलान् परस्य पुंसो हरेः पदयोः संनिवेश इव संनिवेशो येषां तान् पुण्ड्रानपदिश्य व्याजीकृत्य त्वामङ्गेष्ववयवेषु प्रयुञ्जते वहन्तीत्यर्थः । 'हरेः पादाकृतिमात्मनो हिताय मध्येछिद्रमूर्ध्वपुण्ड्रं यो विदधाति स परस्य पुंसः प्रियो भवति ।' इत्याथर्वणे भगवच्छास्त्रेषु च भूयिष्ठं । धर्माणामुपदेशात् भावितपञ्चरात्रा इत्युक्तम् । द्वादशोर्ध्वपुण्ड्रप्रकारश्च भगवच्छास्त्रे बहुशः प्रतिपादितः । कैतवापह्नुतिरलंकारः ॥

विमृश्य रङ्गेन्द्रपतिंवरायाः श्रुतेः स्थितां मूर्धनि पादुके त्वाम् ।
बध्नन्ति वृद्धाः समये वधूनां त्वन्मुद्रितान्याभरणानि मौलौ ॥ ५ ॥

विमृश्येति । हे पादुके, वृद्धा ज्ञानाधिकास्त्वां रङ्गेन्द्रस्य पतिंवराया वध्वाः श्रुतेर्मूर्धनि उपनिषदि स्थितां त्वां तथात्वेन विमृश्य समये विवाहकाले वधूनां पतिंवराणां कन्यानां मौलौ शिरसि त्वया मुद्रितानि चिह्नितानि । पादुकासमानाकाररेखायुक्तानीत्यर्थः । आभरणानि भूषणानि बध्नन्ति । त्वदङ्कितानां श्रुतीनां सौमङ्गल्यं दृष्ट्वा स्ववधूनामपि तदाकाङ्क्षया वृद्धास्त्वां बध्नन्तीत्युक्तेरुत्प्रेक्षा ॥

वहन्ति रङ्गेश्वरपादरक्षे दीर्घायुषां दर्शितभक्तिबन्धाः ।
आशाधिपानामवरोधनार्यस्त्वन्मुद्रिकां मङ्गलहेमसूत्रैः ॥ ६ ॥

वहन्तीति । हे रङ्गेश्वरपादरक्षे, दीर्घायुषां चिरकालजीविनाम् । एतच्च मङ्गलाभरणफलम् । आशाधिपानां दिगीश्वराणामवरोधनार्योऽन्तःपुरस्त्रियः । दर्शिता भक्तिबन्धाः प्रेमोत्कर्षा याभिस्ताः सत्यो मङ्गलार्थैर्हेमसूत्रैर्ग्रैवेयकैस्तव मुद्रिकां त्वदाकाररेखां वहन्ति । गम्योत्प्रेक्षा । मङ्गलसूत्रग्रथिते प्रसिद्धे मङ्गलाभरणे पादुकासंनिवेशत्वमुत्प्रेक्ष्यते॥

व्यूहक्रमेण प्रथितारमग्रे संदर्शयन्तीं मणिपादुके त्वाम् ।
पातुं त्रिलोकीं पदपद्मभाजं सौदर्शनीं शक्तिमवैमि शौरेः ॥ ७ ॥

व्यूहेति । हे मणिपादुके, अग्रे उपरिभागे व्यूहक्रमेण वासुदेवसंकर्षणादिव्यूहावतारानुपूर्व्या, अन्यत्र समूहीभावपरिपाट्या प्रथितारं प्रथमानम् । प्रसिद्धियुक्तमित्यर्थः । अन्यत्र प्रथितमरम् अराणि । जातावेकवचनम् । सुदर्शनावयवविशेषरेखा इत्यर्थः । संदर्शयन्तीं प्रकाशयन्तीम् । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । त्रिलोकीं लोकत्रयसमाहारम् । 'द्विगोः' इति ङीप् । पातुं रक्षितुं शौरेः श्रीरङ्गनाथस्य पदपद्मे भजन्तीति तथोक्ताम् । पद्मरेखामध्यगतामित्यपि गम्यते । तदा पदशब्दः स्थानपरः । त्वां सौदर्शनीं

सुदर्शनशक्तिं यन्त्रमवैमि । इत्युत्प्रेक्षा श्लेषानुप्राणिता । पादुकायुगलसंनिवेशे सुदर्शनयन्त्रत्वमुत्प्रेक्ष्यते । यन्त्रविन्यासप्रकारस्तु परितः पादुकाव्यूहो यथा भवति तथा संप्रदायतोऽवगन्तव्यः । त्रिकोणरेखाद्वयं व्यतिकृतं विलिख्य मण्डलरेखया संप्रवेष्ट्य पर्यन्तेषु पद्मदलानि विलिख्य पुनर्मण्डलरेखया संवेष्ट्य चतसृषु दिक्षु ज्वालां विलिखेत् । तत्र विकस्वरपद्ममध्यस्थितत्वेन प्रतीयमाने त्रिकोणव्यतिकरे सति परितः षटपादुकासंनिवेशः प्रथितो भवति । तत्र परस्पराभिमुखदिग्गतपादुकायुगसंयोजनेन वीक्षणे परितः पादुकात्रिकद्वयप्रतीतिर्भवति ॥

बद्धासिका कनकपङ्कजकर्णिकायां
मध्ये कृशा मुररिपोर्मणिपादुके त्वम् ।
संदृश्यसे सरसिजासनया गृहीतं
रूपान्तरं किमपि रङ्गविहारयोग्यम् ॥ ८ ॥

**बद्धेति** । हे मुररिपोर्मणिपादुके, कनकमयस्य पङ्कजस्य कर्णिकायां वि(व)राटके । पद्मपीठे इति यावत् । बद्धा आसिका स्थितिर्यया सा आसीना मध्ये मध्यभागे वलग्नेऽपि कृशा तन्वी त्वं सरसिजासनया पद्मवासिन्या श्रिया गृहीतमङ्गीकृतं रङ्गे श्रीरङ्गे नर्तनस्थाने च विहारस्य संचारस्य नर्तनस्य च योग्यमुचितं किमपि कक्ष्याबन्धनादिभिर्विलक्षणमित्यपि रूपान्तरं वेषान्तरं संदृश्यसे । नर्तनार्थं सज्जीकृतकमलाशरीरत्वेन प्रेक्ष्यसे इत्यर्थः । श्लेषानुप्राणितोत्प्रेक्षा ॥

मानोचितस्य मदधीनजनस्य नित्यं
माभूदतः कृपणतेति विचिन्तयन्त्या ।
बन्दीकृतं ध्रुवमवैमि वलग्नदेशे
कार्श्यं त्वया कमललोचनपादरक्षे ॥ ९ ॥

**मानोचितस्येति** । हे कमललोचनपादरक्षे, नित्यं सदा मानोचितस्य पूजार्हस्य मदधीनजनस्य मदाश्रितजनस्य अतः कार्श्याद्धेतोः । विभवशून्यत्वमत्र कार्श्यशब्दार्थः । कृपणता कार्पण्यमदातृत्वासद्ग्राहित्वादिकं माभूदिति विचिन्तयन्त्या त्वया कार्श्यं तनुत्वम् । आश्रितजनसंबन्धि अत्र तनुत्वमेव दारिद्र्यत्वेनाध्यवसीयते । वलग्नदेशे स्वमध्यभागे ध्रुवं दृढं यथा तथा बन्दीकृतं बलात्कारेण निरुद्धमवैमि । उत्प्रेक्षा ॥

मध्ये कृशामुभयतः प्रतिपन्नवृद्धिं
मन्ये समीक्ष्य भवतीं मणिपादरक्षे ।
नित्यं मुकुन्दपदसंगमविप्रयोगौ
निश्चिन्वते कृतधियः सुखदुःखकाष्ठाम् ॥ १० ॥

**मध्य इति** । हे मणिपादरक्षे, कृतधियो विद्वांसो मध्ये कृशां तन्वीम् । क्लिष्टामित्यपि गम्यते । उभयतोऽग्रपश्चाद्भागयोः प्रतिपन्ना प्राप्ता वृद्धिरुपचयः । हर्षोऽपि गम्यते । यया तां भवतीं समीक्ष्य मुकुन्दस्य पदयोः संगमः संबन्धः । भजनमिति च गम्यते । विप्रयोगोऽभजनमित्यपि । तौ उभौ सुखदुःखयोः काष्ठां परामवधिं नित्यं निश्चिन्वते जानन्ति । इत्यहं मन्ये । पादुकायां भगवत्पाददृढसंश्लेषयुक्ते भागद्वये वृद्धिदर्शनात्, तद्दृढसंश्लेषरहिते मध्यभागे कार्श्यदर्शनाच्च भगवच्चरणभजनं सुखकाष्ठा, तदभजनं दुःखकाष्ठेति च सन्तो जानन्ति । 'यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते । सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥' इति शास्त्रीयस्थितिं सतामध्यवसाय सा पादुकावयवगतकार्श्यवृद्धिदर्शनहेतुकोत्प्रेक्ष्यते ॥

रङ्गेशितुश्चरणपङ्कजयोर्भजन्तीं
रक्षाप्रसाधनविकल्पसहामवस्थाम् ।
मान्याकृतिर्निविशसे मणिपादरक्षे
मध्ये परिच्छदविभूषणवर्गयोस्त्वम् ॥ ११ ॥

**रङ्गेशितुरिति** । हे मणिपादरक्षे, मान्या माननीया आकृतिर्यस्याः सा त्वं रङ्गेशितुः श्रीरङ्गनाथस्य चरणपङ्कजयो रक्षाप्रसाधनयोरवनपरिकर्मयोर्विकल्पस्य पाक्षिकसाधनत्वस्य सहां क्षमामवस्थां दशां भजन्ती सती परिच्छदविभूषणवर्गयोर्मध्ये निविशसे । छत्रादिवत् भगवच्छरीररक्षिकाया एव पादुकायाः सौन्दर्यातिशयेन चरणभूषणत्वमध्यवसीयते । एकस्या एव पादुकाया विभूषणपरिबर्हयोर्मध्ये नैकत्रवर्णनाद्विशेषालंकारः । 'विशेषः सोऽपि वस्त्वेकं यदनेकत्र वर्ण्यते ।' इति लक्षणम् ॥

अङ्गान्तरेषु निहितान्यखिलानि कामं
पर्यायकल्पनसहानि विभूषणानि ।
नित्यं मुकुन्दपदपद्मतलानुरूपं
नैपथ्यमम्ब भवती नयनाभिरामम् ॥ १२ ॥

**अङ्गान्तरेष्विति** । हे अम्ब, भगवतोऽङ्गान्तरेषु चूडाकण्ठप्रभृतिषु निहितान्यखिलानि विभूषणानि मुकुटकर्णिकादीनि कामं भृशं पर्यायकल्पनस्य विजातीयविभूषणान्तरनिवेशस्य सहानि भवन्ति । भवती तु मुकुन्दपदपद्मतलयोरनुरूपमनुगुणं नयनाभिरामं नित्यं पर्यायान्तरासहिष्णु नैपथ्यमाकल्पत्वेन वर्तते । पादुकामन्तरेण पादतलरक्षणपरिष्कारयोरसंभवादिति भावः । व्यतिरेकालंकारः ॥

ये नाम भक्तिनियतैस्तव संनिवेशं
निर्विश्य नेत्रयुगलैर्न भजन्ति तृप्तिम् ।

कालक्रमेण कमलेक्षणपादरक्षे
प्रायेण ते परिणमन्ति सहस्रनेत्राः ॥ १३ ॥

**ये नामेति**। हे कमलेक्षणपादरक्षे, ये नाम जातिविशेषहीना अपि पुरुषा भक्तिनियतैर्भक्तिवशैर्नेत्रयुगलैस्तव संनिवेशं निर्विश्यानुभूय तृप्तिं न भजन्ति । ते पुरुषाः कालक्रमेण कियतापि कालेन प्रायेण सहस्रनेत्राः इन्द्रस्थानाधिकारिणः परिणमन्ति। पादुकासंनिवेशवीक्षणे नयनद्वयसाध्ये तृप्त्यभावस्य सहस्रनयनहेतुत्वोक्तेः काव्यलिङ्गमलंकारः॥

पदमप्रमाणमिति वादिनां मतं
मधुजित्पदे महति मास्मभूदिति।
व्युदपादि तस्य चरणावनि त्वया
निगमात्मनस्तव समप्रमाणता ॥ १४ ॥

**पदमिति**। हे चरणावनि, पदं पदशब्दाभिधेयं सर्वं प्रकृतिप्रत्ययात्मकमप्रमाणं प्रमितिजनकं न भवति, पदस्य पदार्थस्मृतिमात्रहेतुत्वेनानुभवलक्षणप्रमाजनकत्वाभावादिति भावः। चरणपक्षे न विद्यते प्रमाणं परिच्छेदकवस्त्वन्तरं यस्येति बहुव्रीहिः। अत्र प्रमाणभिन्नत्वेनाध्यवसितं परिच्छेदराहित्यम्। इति वादिनामेवं वदतां तार्किकमीमांसकादीनां मतं सिद्धान्तो महति पूज्ये मधुजितः पदे पदशब्दाभिधेये । चरणशब्द इत्यपि गम्यते। मास्मभूत् मा प्रासाङ्क्षीदिति एवमाकारया बुद्ध्या (कर्त्र्या) तस्य मधुजित्पदस्यानुयोगिनो निगमात्मनो वेदाखरूपायास्तव । प्रतिपाद्यप्रतिपादकसंबन्धेनाभेदोपचारः। वेदरूपया त्वयेत्यर्थः। समप्रमाणता तुल्यपरिमाणवत्ता सैव तुल्यप्रमितिजनकताध्यवसीयते। व्युदपादि व्युत्पादिता । पदमात्रस्याप्रमाणत्वे भगवच्चरणस्यापि पदत्वादप्रामाण्यतयाध्यवसितं परिच्छेदराहित्यं स्यादिति धिया तस्य वेदात्मकस्वसदृशप्रमाणता वेद्य(द)तुल्यप्रमाणतयाध्यवसितया पादुकया संपादितेति भावः। श्लिष्टपरम्परितरूपकसंकीर्णा हेतूत्प्रेक्षा॥

अप्रभूतमभवज्जगत्रयं यस्य मातुमुदितस्य पादुके।
अप्रमेयममितस्य तत्पदं नित्यमेव ननु संमितं त्वया ॥ १५ ॥

**अप्रभूतमिति**। हे पादुके, जगत्रयं (कर्तृ) मातुं विक्रमितुमुदितस्योद्यतस्य यस्य त्रिविक्रमपदस्याप्रभूतमपर्याप्तमभवत्। अमितस्यानन्तस्य भगवतोऽप्रमेयमपरिच्छेद्यं तत्पदं चरणं त्वया नित्यं संमितमेव परिच्छिन्नमेव। नन्विति विवेकः। उत्त- मसारोत्कर्षवर्णनात् सारालंकारः॥

आलवालमिव भाति पादुके पादपस्य भवती मधुद्विषः।
यत्समीपविनतस्य शूलिनः सारिणी भवति मौलिनिम्नगा ॥ १६ ॥

**आलवालमिति** । हे पादुके, भवती मधुद्विष एव पादपस्य कल्पवृक्षस्यालवाल-मिव भाति । अवस्थितत्वात् तादृशसंनिवेशवत्त्वाच्चेति भावः । यस्या आलवालसदृशा-यास्तव समीपे विनतस्य शूलिनः शिवस्य मौलिनिम्नगा शिरोगता गङ्गा सारिणी केदार-कुल्या भवति । उत्प्रेक्षा ॥

मोदमानमुनिवृन्दषट्पदा भाति मुक्तिमकरन्दवर्षिणी ।
कापि रङ्गनृपतेः पदाम्बुजे कर्णिका कनकपादुकामयी ॥ १७ ॥

**मोदमानेति** । मोदमानानि हृष्यन्ति मुनीनां वृन्दान्येव षट्पदा भ्रमरा यस्याः सा । मुक्तिमेव मकरन्दं वर्षयतीति तथोक्ता कापि विलक्षणा कनकपादुकामयी कर्णिका वराटकः रङ्गनृपतेः पद एवाम्बुजे भाति विलसतीति गम्यते । रूपकमलंकारः ॥

युगपदनुविधास्यन् यौवतं तुल्यरागं
यदुपतिरधिचक्रे यावतो रूपभेदान् ।
तदिदमतिविकल्पं बिभ्रती संनिवेशं
तव खलु पदरक्षे तावती मूर्तिरासीत् ॥ १८ ॥

**युगपदिति** । हे पदरक्षे, यदुपतिः श्रीकृष्णस्तुल्यरागं समानप्रेम युवतीनां वृन्दं यौवतं षोडशस्त्रीसहस्रं युगपदेककालेऽनुविधास्यन् अनुसरिष्यन् यावतो रूपभेदान् मूर्तिभेदानधिचक्रे । अङ्गीकृतवानित्यर्थः । तदिदं बहुशरीराङ्गीकरणमनुविधास्यन्त्य इति विपरिणामेन संबन्धः । तवातिविकल्पं भगवतोऽपि बहुतरप्रकारम् । भगवतः षोडशसहस्रात्मकत्वे पादुकाया द्वात्रिंशत्सहस्रात्मकत्वस्यावर्जनीयत्वादिति भावः । संनि-वेशं संस्थानं बिभ्रती दधती तावती भगवत्पादसमसंख्याका मूर्तिरासीत् । पादुकाया भगवच्चरणानुगुण्यवर्णनात् समालंकारः ॥ 'षोडशस्त्रीसहस्राणि शतमेकं तथाधिकम् । तावन्ति चक्रे रूपाणि भगवान् देवकीसुतः ॥ एकैकांशेन ताः कन्या मेनिरे मधुसूदनम् । ममैव पाणिग्रहणं मैत्रेय: कृतवानिति ॥' इति श्रीविष्णुपुराणे ॥

तत्तद्वृत्तेरनुगुणतया वामनीं व्यापिनीं वा
प्राप्ते रङ्गप्रथितविभवे भूमिकां सूत्रधारे ।
मन्ये विश्वस्थितिमयमहानाटिकां नेतुकामा
नानासंस्था भवति भवती पादुके नर्तकीव ॥ १९ ॥

**तत्तदिति** । हे पादुके, रङ्गे श्रीरङ्गविमाने नर्तनस्थाने च प्रथितो विभवः संपत् यस्य तस्मिन् सूत्रधारे नटपरिवृढे श्रीरङ्गनाथे तत्तद्वृत्तेः वामनत्रिविक्रमादिविक्रमस्थितेः कैशिक्यादिवृत्तेश्चानुगुणतया वामनीं ह्रस्वां व्यापिनीं महतीं वा भूमिकां वेषं प्राप्ते सति भवती विश्वस्थितिमयीं प्रपञ्चरक्षात्मिकां महतीं नाटिकां लास्यं नेतुं प्रापयितुं कामो

यस्याः सा सती नर्तकी नटीव नानासंस्था बहुविधसंनिवेशयुक्ता भवति वामनत्रिविक्रमाद्यानुगुण्येन पादुकाप्यल्पा महती च भवतीति भावः । श्लेषरूपकाभ्यामनुप्राणितेयमुत्प्रेक्षा ॥

मानें परं समाने प्रत्यक्षेणागमेनापि ।
हरिचरणस्य तथापि तु वैषम्यं रक्ष्यरक्षकत्वाभ्याम् ॥ २० ॥

**मान इति** । हे पादुके, इत्युपस्कार्यम् । हरेश्चरणस्य तवापि प्रत्यक्षेण चाक्षुषादिना, आगमेन वेदादिशब्दप्रमाणेनापि माने परिमाणे ज्ञाने । प्रथमाद्विवचनम् । परं समाने अपि अत्यन्तसदृशे । भगवत इति गम्यते । अपि तु हरेश्चरणस्य तवापि रक्ष्यरक्षकत्वाभ्यां वैषम्यं विशेषः । हरिचरणो रक्ष्यः, पादुका रक्षिकेति विशेष इति भावः । व्यतिरेकालंकारः । वृत्तमार्याभेदः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे संनिवेशपद्धतिः पञ्चविंशी ।

---

यन्त्रिकापद्धतिः षड्विंशी ।

अथास्यां पद्धत्यां भगवच्चरणाङ्गुल्यवलम्बनार्थां यन्त्रिकामालम्ब्य पादुकां वर्णयति—

उदग्रयन्त्रिकां वन्दे पादुकां यन्निवेशनात् ।
उपर्यपि पदं विष्णोः प्रत्यादिष्टप्रसाधनम् ॥ १ ॥

**उदग्रेति** । उदग्रा ऊर्ध्वाग्रा यन्त्रिका अङ्गुल्यवलम्बनशङ्कुः यस्यास्तां पादुकां वन्दे । यस्यामुदग्रयन्त्रिकायुक्तायां पादुकायां निवेशनात् निक्षेपात् विष्णोर्भगवतश्चरणमुपरि ऊर्ध्वभागेऽपि प्रत्यादिष्टं तिरस्कृतं प्रसाधनमलंकारो येन तत् भवति । पादुका भगवच्चरणतलं स्वसंनिवेशेन परिष्करोति, यन्त्रिकया चरणोपरिभागं परिष्करोतीति भावः । उपमानस्य भूषणस्य यन्त्रिकयोपमेयया तिरस्कारवर्णनात् प्रतीपभेदः ॥

प्रसभं प्रतिरुध्य कण्टकादीन् भवती शौरिपदाम्बुजादधस्तात् ।
चरणावनि धारयत्यमुष्मिन्नुचितच्छायमुपर्यपि प्रतीकम् ॥ २ ॥

**प्रसभमिति** । हे चरणावनि, भवती शौरेः पदाम्बुजात् पादाम्बुजस्याधस्तादधोदेशे । अत्र 'पञ्चम्यतसर्थप्रत्ययेन २।३।३०।' इति षष्ठी स्यादिति नाशङ्कनीयम् । 'ततः पश्चात् स्रंस्यते ध्वंस्यते–' इत्यत्र भाष्ये अतसर्थप्रत्ययान्तपश्चाच्छब्दयोगे तत इति पञ्चमीप्रयोगेण पञ्चम्या अनुज्ञानात् । कण्टकादीन् तीक्ष्णाग्रलोष्ठादीन् प्रसभं बलात्कारेण प्रतिरुध्यामुष्मिन् शौरिपदाम्बुजे उचिता छाया अनातपः शोभा च यस्य तं प्रतीकं पादुकावयवभूतां यन्त्रिकाम् । 'अङ्गं प्रतीकोऽवयवोऽपघन' इत्यमरः । उपर्यपि ऊर्ध्वमपि धारयति वहति । यन्त्रिकायाश्छत्रत्वाभिव्यक्तेः समासोक्तिरलंकारः ॥

मुरभिन्मणिपादुके त्वदीयामनघामङ्गुलियन्त्रिकामवैमि ।
स्वयमुन्नमितां प्रदेशिनीं ते परमं दैवतमेकमित्यृचन्तीम् ॥ ३ ॥

मुरभिदिति । हे मुरभिदो मणिपादुके, अनघां मनोज्ञां त्वदीयामङ्गुल्यवलम्बनार्थां यन्त्रिकां स्वयमात्मनोन्नमितां परममुत्कृष्टं दैवतमेकमद्वितीयं जीवन्तीं संख्यासूचनेन स्तुवन्तीम् । 'ऋच स्तुतौ' इति तौदादिको धातुः । ततः शतरि 'आच्छीनद्योर्नुम्' । ते तव प्रदेशिनीं तर्जनीमङ्गुलिमवैमि । उत्प्रेक्षा । लोके किंचिद्गुणोत्कृष्टमद्वितीयतया स्तुवानाः प्रदेशिनीमुन्नमय्य स्तुवन्तीति भावः । उशन्तीमिति पाठे तु 'बहुलमेतन्निदर्शनम्' इति बाहुलकात्तौदादिकः उशधातुर्भाषार्थं उन्नेयः । वष्टेस्तु शपो लुकि शतुरवर्णात् परत्वाभावात् 'आच्छीनद्योर्नुमि'ति नुमः प्रसक्तिः । बाहुलकाल्लुगभावकल्पने शपो ङित्त्वाभावेन संप्रसारणं न स्यादित्यलं बहुना ॥

स्वदते मणिपादुके त्वदीया पदशाखायुगयन्त्रिका विचित्रा ।
परमं पुरुषं प्रकाशयन्ती प्रणवस्येव परेयमर्धमात्रा ॥ ४ ॥

स्वदत इति । हे मणिपादुके, विचित्रा आश्चर्यावहा त्वदीयेयं परिदृश्यमाना पदशाखयोश्चरणाङ्गुल्योः, युगस्याङ्गुष्ठप्रदेशिनीयुगलस्यावलम्बनार्था यन्त्रिका परमं चित्प्रपञ्चादुत्कृष्टं पुरुषं जीवात्मानम्, यन्त्रिकापक्षे परमं पुरुषं भगवन्तं प्रकाशयन्ती ज्ञापयन्ती यन्त्रिकापक्षे, अङ्गुल्या निर्देशवत् सूचयन्ती शोभयन्तीत्यपि । प्रणवस्योंकारस्य परा अन्ते स्थिता अर्धमात्रा लिपिरूपमकार इव स्वदते । प्रेक्षकाणां रोचते । अस्मदीयलिप्यनुसारेण वेदितव्यम् । मकारलिपिर्हि यन्त्रिकासदृशसंनिवेशा भवति ॥

अनुयातमनोरथा मुरारेर्भवती केलिरथश्रियं दधाति ।
चरणावनि यन्त्रिका तवैषा तनुते कूबरसंपदं पुरस्तात् ॥ ५ ॥

अनुयातेति । हे चरणावनि, अनुयातोऽनुसृतो मनोरथः आश्रितानां फलाकाङ्क्षा यस्याः सा वेगातिशयेन । चित्तरूपस्यन्दनसदृशीत्यपि गम्यते । भवती मुरारेः केलिरथस्य पुष्परथस्य श्रियं शोभां दधाति । एषा तव यन्त्रिका पुरस्तात् अग्रभागे विद्यमानस्य कूबरस्य युगंधराख्यकीलकविशेषस्य 'कूबरस्तु युगंधरः' इत्यमरः । संपदं शोभां तनुते । निदर्शनाभेदोऽलंकारः ॥

शङ्के भवत्याः सुभगं प्रतीकं रङ्गेशपादाङ्गुलिसंग्रहार्थम् ।
त्राणाय पादावनि विष्टपानामाज्ञाकरीमङ्गुलिमुद्रिकां ते ॥ ६ ॥

शङ्क इति । हे पादावनि, रङ्गेशस्य पादाङ्गुल्योः संग्रहः अर्थः प्रयोजनं यस्य तं सुभगं सुन्दरं भवत्याः प्रतीकं यन्त्रिकां विष्टपानां जगतां त्राणाय अहितेभ्यो रक्षणाय आज्ञाकरीं विरोधिभर्त्सनार्थां ते तव अङ्गुलीमुद्रिकामाज्ञामुद्रामिव शङ्के । इत्युत्प्रेक्षा ॥

अलंकृतं कर्णिकयोपरिष्टादुदग्रतालं तव यन्त्रिकांशम् ।
पद्मापतेः पादसरोजलक्ष्म्याः प्रत्येमि पादावनि केलिपद्मम् ॥ ७ ॥

**अलंकृतमिति** । हे पादावनि, उपरिष्टात् उपरिभागे कर्णिकया वराटकसदृशावयवेनालंकृतमुदग्रं तालं काण्डं च यस्य तं तव यन्त्रिकारूपमंशमवयवं पद्मापतेः श्रीरङ्गनाथस्य पादयोरेव सरोजयोः स्थिताया लक्ष्म्याः शोभात्मिकायाः केलिपद्मं लीलातामरसमवैमि । उत्प्रेक्षा । शोभाया लक्ष्मीतादात्म्यं श्लेषेणाध्यवसीयते ॥

उपरि विनिहितस्य केशवाङ्घ्रेरुपरि पदावनि यन्त्रिकात्मिका त्वम् ।
इति तव महिमा लघूकरोति प्रणतसुरेश्वरशेखराधिरोहम् ॥ ८ ॥

**उपरीति** । हे पदावनि, उपरि तवोर्ध्वभागे विनिहितस्य केशवाङ्घ्रेः श्रीरङ्गनाथचरणस्योपरि त्वं यन्त्रिकात्मना वर्तसे इत्यतो हेतोस्तव महिमा माहात्म्यं प्रणतानामधःस्थितानां सुरेश्वराणामिन्द्रादीनां शेखरेष्वधिरोहं लघूकरोत्यल्पीकरोति । उपरिस्थितस्योपरि वर्तमानायाः पादुकाया अधःस्थितानामुपर्यधिरोहणं न चित्रमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

नित्यं पदावनि निबद्धकिरीटशोभं
पद्मालयापरिचितं पदमुद्वहन्त्याः ।
अङ्गीकरोति रुचिमङ्गुलियन्त्रिका ते
साम्राज्यसंपदनुरूपमिवातपत्रम् ॥ ९ ॥

**नित्यमिति** । हे पदावनि, नित्यं सदा निबद्धा संपादिता किरीटशोभा मकुटकान्तिर्येन तत् । किरीटवद्वर्तमानमित्यर्थः । पद्मालयया लक्ष्म्या परिचितं पदं भगवच्चरणमिति पर्यायोक्तिः । स्थानमिति गम्यते । उद्वहन्त्या वहनेन रक्षन्त्यास्ते तव संबन्धिनी अङ्गुलियन्त्रिका साम्राज्यसंपदः सार्वभौमेश्वरस्यानुरूपं योग्यमातपत्रं छत्रमिव रुचिं परितः प्रसारितां दीप्तिमङ्गीकरोति । उपमालंकारः ॥

प्रथमा कलेव भवती चरणावनि भाति रङ्गचन्द्रमसः ।
शृङ्गोन्नतिरिव यत्र श्रियं विभावयति यन्त्रिकायोगः ॥ १० ॥

**प्रथमेति** । हे चरणावनि, भवती रङ्गे विद्यमानस्य चन्द्रमसः सकलजनाह्लादकस्य । भगवत इति यावत् । प्रथमा आद्या कलेव प्रतिपत्कलेव भाति । यत्र भवत्यां यन्त्रिकयोर्योगः शृङ्गयोश्चन्द्रकलाग्रयोरुन्नतिरिव श्रियं शोभां विभावयति व्यञ्जयति । रूपकातिशयोक्त्यनुप्राणितोपमालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे यन्त्रिकापद्धतिः षड्विंशी ॥

---

रेखापद्धतिः सप्तविंशी ।

अथास्यां पद्धत्यां पादुकागतान् रेखाभेदान् आश्रित्य तां वर्णयति—

सूचयन्तीं स्वरेखाभिरनालेख्यसरस्वतीम् ।
अलेखनीयसौन्दर्यामाश्रये शौरिपादुकाम् ॥ १ ॥

**सूचयन्तीमिति** । स्वाभिर्निजाभी रेखाभिरनालेख्यां लेखनानर्हामध्ययनमात्रग्राह्याम् । लिखितवाचने दोषस्मरणात् । सरस्वतीं वेदात्मिकामुक्तिं सूचयन्तीं प्रत्यभिज्ञापयन्तीमलेखनीयमालेख्यत्वेन लेखनाशक्यं सौन्दर्यमाभिरूप्यं यस्यास्तां शौरेः पादुकामाश्रये । सूचयन्तीमिति स्मृतिरलंकारः । प्रधानं तु प्रेयोऽलंकारः ॥

मणिमौलिनिघर्षणात् सुराणां वहसे काञ्चनपादुके विचित्रम् ।
कमलापतिपादपद्मयोगादपरं लक्षणमाधिराज्यसारम् ॥ २ ॥

**मणीति** । हे काञ्चनपादुके, सुराणां मणिमयस्य मौलेः किरीटस्य निघर्षणात् संघर्षणात् हेतोर्विचित्रं नानाकारं विस्मयावहं कमलापतेः पादपद्मयोर्योगादपरमन्यत् आधिराज्यं साम्राज्यं सारं परमफलं यस्य तत् लक्षणं चिह्नं वहसे । हरिचरणपद्मयोगवदिदमपि साम्राज्यसूचकमिति भावः । उत्प्रेक्षा ॥

अभितो मणिपादुके स्फुरन्त्यास्तव रेखाविततेस्तथाविधायाः ।
मुरवैरिपदारविन्दरूढैरनुकल्पायितमाधिराज्यचिह्नैः ॥ ३ ॥

**अभित इति** । हे मणिपादुके, अभितः पार्श्वद्वयेऽपि स्फुरन्त्यास्तथाविधायाः परिदृश्यमानाया एवमिति वक्तुमशक्यायास्तव रेखाविततेः प्रथमकल्पस्य मुरवैरिणः श्रीरङ्गनाथस्य पदारविन्दयो रूढैरुद्भूतैराधिराज्यचिह्नैर्वज्राङ्कुशादिभिरनुकल्पायितं प्रतिनिधिवत्स्थितम् । भावे क्तः । अनुकल्पायितमित्याचारक्यङा प्रतिपादितस्य सादृश्यस्य रेखासूत्प्रेक्षणादुत्प्रेक्षा नतूपमा । तादृशोपमानाप्रसिद्धेरिति द्रष्टव्या । भगवत्पादसाम्राज्यचिह्नादपि अस्या रेखायाः स्फुटव्यञ्जकत्वात् ततोऽप्युत्कर्ष इति निगर्वः ॥

रेखया विनमतां दिवौकसां मौलिरत्नमकरीमुखोत्थया ।
पादुके वहसि नूनमद्भुतं शौरिपादपरिभोगलक्षणम् ॥ ४ ॥

**रेखयेति** । हे पादुके, त्वं विनमतां दिवौकसां मौलौ विद्यमानाया रत्नमकर्या रत्नकृतमकरप्रतिकृतेर्मुखेनाग्रेणोत्थयोत्पन्नया रेखयाद्भुतं शौरिपादस्य भगवच्चरणस्य पूज्यस्य भगवतश्च परिभोगस्य बाह्यरतस्य चुम्बननखव्रणादेर्लक्षणं ज्ञापकं क्षतादि वहसि । नूनमित्युत्प्रेक्षा ॥

त्रिदशमकुटरत्नोल्लेखरेखापदेशा-
त्परिणमयसि पुंसां पादुके मूर्ध्नि लग्ना ।

नरकमथनसेवासंपदं साधयित्री
नियतिविलिखितानां निष्कृतिं दुर्लिपीनाम् ॥ ५ ॥

**त्रिदशेति** । हे पादुके, पुंसां मूर्ध्नि मस्तके शिरस्त्रे लग्ना त्वं नरकमथनस्य हरेः सेवासंपदं मोक्षं साधयित्री कुर्वती सती । तृन्नन्तत्वात् 'नलोकाव्यय—२।३।६९' इति षष्ठीप्रतिषेधात् कर्मणि द्वितीया । त्रिदशानां मकुटरत्नानामुल्लेखेन निघर्षेण जनिताया रेखाया अपदेशात् व्याजात् नियत्या विधिना लिखितानां दुर्लिपीनां पापाभिव्यञ्जकाक्षराणां निष्कृतिं प्रतिरेखया अभिभवं परिणमयसि जनयसि । अपह्नवः । उपरिस्थितपादुकारेखया तत्त्वमपह्नुत्याभिभवात् प्रतिरेखात्वारोपात् ॥

पदकमलतलान्ते संश्रितान्यातपत्र-
ध्वजसरसिजमुख्यान्यैश्वरीलक्षणानि ।
अवगमयसि शौरेः पादुके मादृशाना-
मुपरि परिणतैः स्वैर्देवि रेखाविशेषैः ॥ ६ ॥

**पदेति** । हे देवि पादुके, त्वं स्वैरात्मीयैरुपरि परिणतैर्भगवत्पादतलसंसर्गाज्जातै रेखाविशेषैः शौरेः पदकमलयोरन्तर्मध्ये संश्रितानि आतपत्रम्, ध्वजः, सरसिजम् एतानि मुख्यानि प्रधानानि येषां तानि ऐश्वर्याः ईश्वरभावस्य लक्षणानि चिह्नानि मादृशानामवगमयसि ज्ञापयसि । उपरि सविता भूमेरालोकवत्त्वादितिवत् पादुकागतातपत्रादिसदृशरेखाभेदैर्भगवत्पादतलगतरेखानुमातुं शक्यत इत्यनुमानालंकारः ॥

स्नाता पदावनि चिरं परिभुज्य मुक्ता
पादेन रङ्गनृपतेः शुभलक्षणेन ।
रेखान्तरैर्नवनवैरुपशोभसे त्वं
संस्कारचन्दनविलेपनपङ्कलग्नैः ॥ ७ ॥

**स्नातेति** । हे पदावनि, स्नाता शुभलक्षणेन रङ्गनृपतेः पादेन । नायकेनेति गम्यते । चिरं परिभुज्यानुभूय । रत्येनेत्यपि गम्यते । मुक्ता विसृष्टा त्वं संस्कारार्थेन चन्दनरूपविलेपनपङ्केन लग्नैः श्लिष्टैर्नवनवै रेखान्तरैर्लेखाभेदैः । नखक्षतादिभिरित्यपि गम्यते । उपशोभसे भासि । समासोक्तिरलंकारः ॥

भक्त्या मुहुः प्रणमतां त्रिदशेश्वराणां
कोटीरकोटिकषणादुपजायमानैः ।
आभाति शौरिचरणादधिकानुभावा
रेखाशतैस्तव पदावनि कापि रेखा ॥ ८ ॥

**भक्त्येति** । हे पदावनि, भक्त्या मुहुर्मुहुः पुनः पुनः प्रणतानां त्रिदशेश्वराणामिन्द्रादीनां कोटीराणां किरीटानां कोटिभिरग्रभागैः कषणादुपजायमानैस्तव रेखाशतैरनेकाभी रेखाभिः शौरिचरणात् भगवत्पादादधिकानुभावा अधिकोत्कर्षा कापि शास्त्रापरिज्ञाता रेखा विभाति । सामुद्रिकशास्त्रगम्यभगवच्चरणतलगतच्छत्रादिरेखाभ्योऽप्यधिकानुभावा बहुरेखासमष्टिरूपा साम्राज्यसूचकरेखा भगवत्पादेऽनवगतापि तव राज्यलाभादाभातीति भावः । भेदकातिशयोक्तिः ॥

पादावनि प्रतिपदं परमस्य पुंसः
पादारविन्दपरिभोगविशेषयोग्या ।
स्वाभाविकान्सुभगभक्तिविशेषदृश्या-
न्रेखात्मकान्वहसि पत्रलताविशेषान् ॥ ९ ॥

**पादावनीति** । हे पादावनि, प्रतिपदं पदे पदे परमस्य पुंसः पादारविन्दस्य परिभोगविशेषस्य संभोगभेदस्य संस्पर्शरूपस्य योग्या त्वं स्वाभाविकान् नैसर्गिकान् सुभगैः सुन्दरैर्भक्तिविशेषैरसंकीर्णपङ्क्तिभेदैर्दृश्यान् । सुभगानां भाग्यवतां भक्तिविशेषैर्दृश्यानित्यपि गम्यते । अभिरूपान् रेखात्मकान् रेखारूपान् पत्रलताविशेषान् । 'भुजशिखरस्तनमण्डलकपोलकण्ठेषु विरचिता कुशलैः । आलेपनेन रेखा निगद्यते पत्रवल्लीति ॥' इति हलायुधोक्तरीत्या रचितान् पत्रवल्लरीभेदान् वहसि । अपह्नवभेदः ॥

रेखापदेशतस्त्वं प्रशमयितुं प्रलयविप्लवाशङ्काम् ।
वहसि मधुजित्पदावनि मन्ये निगमस्य मातृकालेख्यम् ॥ १० ॥

**रेखेति** । हे मधुजितः पदावनि, त्वं निगमस्य वेदस्य प्रलये कल्पान्ते विप्लवस्य नाशस्याशङ्कां संदेशं प्रशमयितुं रेखाणामपदेशतो व्याजात् मातृकारूपं लेख्यमक्षरविन्यासं वहसि । मन्ये । उत्प्रेक्षा । प्रलयेऽध्येतृपुरुषाभावेन वेदस्योच्छेदः स्यादिति परमपुरुषेण लिखितपुस्तकवत् पादुका वर्तत इति भावः । प्रथमं वीक्षणीयः कोशो मातृकाशब्दार्थः ॥ १० ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे रेखापद्धतिः सप्तविंशी ॥

---

## सुभाषितपद्धतिरष्टाविंशी ।

अथास्यां पद्धत्यां वर्णनीयां पादुकामवलम्ब्य प्रसङ्गोचितान् सुभाषितश्लोकानुदाहरति—

कलासु काष्ठामातिष्ठन्भूम्ने संबन्धिनामपि ।
पादुका रङ्गधुर्यस्य भरताराध्यतां गता ॥ १ ॥

**कलास्विति ।** कलासु विद्यासु काष्ठामुत्कर्षमातिष्ठन् अधिगच्छन् जनः संबन्धिनां स्वानुबन्धिनामपि भूम्नेऽभ्युदयाय भवतीति गम्यते । तदेव विशेषेण समर्थयते—रङ्ग-धुर्यस्य श्रीरङ्गनाथस्य भरतागमपारदृश्वनश्च पादुका भरतेन दाशरथिद्वितीयेन भरतैर्नटैश्चाराध्यतां पूज्यतां गता । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । भरतागमप्रौढपादुकाया भरतजनाराध्यत्वेन श्लेषगम्येन विशेषणेन सामान्यस्य विद्वत्संबन्धिजनाभ्युदयस्य समर्थनात् । 'उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोः ।' इति लक्षणम् ॥

सन्तः स्वदेशपरदेशविभागशून्यं
हन्त स्ववृत्तिमनघां न परित्यजन्ति ।
राज्ये वने च रघुपुङ्गवपादरक्षा
नैजं जहौ न खलु कण्टकशोधनं तत् ॥ २ ॥

**सन्त इति ।** सन्तो महान्तः स्वदेशः स्वग्रामादिः, परदेशोऽन्यग्रामादिः तयोर्विभागो धर्मानुष्ठानवैषम्यं तच्छून्यं तद्रहितं यथा तथा प्रवाहादिकृततारतम्यानादरेणानघामविप्लुतां स्ववृत्तिं स्वव्यापारं न परित्यजन्ति त जहति । हन्त हर्षे । तदेव विशेषेण समर्थयते—रघुपुङ्गवस्य रामस्य पादरक्षा राज्ये कोसलदेशे वनेऽपि चित्रकूटपरिसरारण्येऽपि नैजं स्वकीयम् । निजशब्दो वृत्तिविषये केवलमाप्तवाची । तस्मात्तस्येदमित्यण् । निजशब्दस्यात्मीयवाचित्वेऽपि स्वकीयपुरुषसाध्यं स्वकीयाधःप्रदेशसाध्यं चेत्यर्थात् प्रसिद्धम् । कण्टकशोधनं सूच्यग्रनिरसनं क्षुद्रशत्रुनिरासं च । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः ।' इत्यमरः । न जहौ न त्यक्तवती । खलु प्रसिद्धौ । पादुका वने सूच्यग्रं निराकृतवतीति भावः । पादुकाया राज्ये वने च कण्टकशोधनस्य वैषम्यादर्शनात् सतां तथाभावो युक्त इति भावः । वर्णकान्तरम्—अन्तस्तत्त्वबुभुत्सवः स्वपक्षपरपक्षयोर्वैषम्यानादरेणानघां विजिगीषादिव्यसनशून्यां स्ववृत्तिं प्रथितदोषनिरसनरूपं स्वव्यापारं न परित्यजन्ति । तथाहि राज्ये परसिद्धान्तस्थाने वने स्वसिद्धान्तस्थानेऽपि रघुपुङ्गवपादरक्षा नैजं तत् कण्टकशोधनं पूर्वोक्तं कण्टकोद्धारापरपर्यायम् । हेतुदोषनिरसनमिति गम्यते । न जहौ । इति विशेषेण सामान्यसमर्थनमर्थान्तरन्यासः ॥

ब्रह्मास्त्रतामधिजगाम तृणं प्रयुक्तं
पुण्यं शरव्यमभवत् पयसां निधिर्वा ।
पृथ्वीं शशास परिमुक्तपदं पदत्रं
किं वा न किं भवति केलिविधौ विभूनाम् ॥ ३ ॥

**ब्रह्मेति ।** प्रयुक्तं रामेण प्रेरितं तृणं दर्भो ब्रह्मास्त्रतामधिजगाम । रामेण प्रयुक्तो दर्भो ब्रह्मास्त्रीभूय काकमुपदुद्रावेति श्रीरामायणे । पुण्यं परशुरामसुकृतं पयसां निधिः

समुद्रो वा शरव्यं शरवेध्यमभवत् । इदं च दाशरथिभार्गवसंवादे समुद्रतीरे प्रायोपवेशानन्तरं च रामायणे द्रष्टव्यम् । परिमुक्तं त्यक्तं पदं रामचरणं येन तत् । पदत्रं पादुका पृथ्वीं महीं शशास आज्ञया ररक्ष ॥ उक्तं सामान्येन समर्थयते—विभूनां केलिविधौ लीलाक्रियायां किं वा वस्तु किं न भवति । सर्ववस्त्वप्यपेक्षितकार्यकरं भवतीत्यर्थः । अतः पूर्वोक्तमुपपन्नमिति भावः ॥

अन्येषु सत्स्वपि नरेन्द्रसुतेषु दैवा-
द्भ्रष्टः पदादधिकरोति पदं पदार्हः ।
प्रायो निदर्शयति तत्प्रथमो रघूणां
तत्पादयोः प्रतिनिधी मणिपादुके वा ॥ ४ ॥

**अन्येष्विति** । दैवात् दुरदृष्टाद्धेतोः पदात् स्थानात् चरणादित्यपि । भ्रष्टः पदार्हः स्थानयोग्यपुरुषोऽन्येषु स्वव्यतिरिक्तेषु नरेन्द्रस्य राज्ञः सुतेषु सत्स्वपि विद्यमानेष्वपि पदं स्थानमधिकरोत्यधितिष्ठति । तदुक्तमर्थं रघूणां प्रथमो रामो निदर्शयति स्वसादृश्येन ज्ञापयति । कैकेयीवचनेन स्थानाच्युतस्य भरतादिषु सत्स्वपि रामस्यारण्यवासानन्तरं पुनः स्वपदप्राप्तेरिति भावः । तस्य रामस्य पदयोः प्रतिनिधी अनुकल्पभूते मणिपादुके वा निदर्शयत इति द्विवचनान्तत्वेन विपरिणामः । रामपदाच्च्युतयोः पादुकयोर्भरतादिषु सत्स्वपि कोसलपदप्राप्तेरिति भावः । प्राय इत्यत्र हेतुः बाहुल्यं ज्ञापयति । पादुकयोः रामस्य च क्रियया सदर्थस्य परान् प्रति बोधनात् निदर्शनाभेदः । रघूणां प्रथमो मणिपादुके वेति विकल्पकथनाद्विकल्पालंकारश्च ॥

चरणमनघवृत्तेः कस्यचित्प्राप्य नित्यं
सकलभुवनगुप्त्यै सत्पथे वर्तते यः ।
नरपतिबहुमानं पादुके वाधिगच्छन्
भगवति समयेषु प्रेक्षितज्ञैरुपास्यः ॥ ५ ॥

**चरणमिति** । यः पुरुषोऽनघवृत्तेः शुभचरितस्य कस्यचित् महापुरुषस्य चरणं पदं प्राप्याधिगम्य सकलानां भुवनानां जगतां गुप्तौ रक्षणाय लोकसंग्रहाय च सत्पथे सन्मार्गे सदाचारे च वर्तते । स पुरुषः पादुके वा नरपतौ क्रियमाणं बहुमानं राजार्हपूजामित्यर्थः । नरपतिना क्रियमाणं बहुमानं वाधिगच्छन् सन् समयेषु कार्यकालेष्वाचारेषु प्रेक्षितज्ञैः । प्रभुप्रेक्षणमात्रेण कर्तव्यं जानद्भिर्भृत्यैरित्यर्थः । प्रेक्षावद्भिः शिष्यैश्च कोसलदेशस्थैश्चोपास्यः सेव्यो भवति । यथा पादुका रामपादाश्रयेण लोकरक्षणाय सन्मार्गे संचारात् कोसलदेशाधिपत्यं प्राप्य कोसलदेशस्थानां मान्याभूत् । तथा राजानं परिचरन् सदाचारपरः पुत्रस्थानं प्राप्य भृत्यैरुपास्यो भवति । तथैवाचार्यं परिचरन् लोकानुग्रहाय धर्ममाचरन् शिष्योऽपि विवादपदाचारविषये स्वयमपि विवेकाय शिष्यै-

रुपाख्यो भवतीति चार्थः । 'प्रेक्षितज्ञास्तु कोशलाः' इति प्रसिद्धिः । श्लेषानुप्राणितेयमुपमा ॥

रामे राज्यं पितुरभिमतं संमतं च प्रजानां
माता वव्रे तदिह भरते सत्यवादी ददौ च ।
चिन्तातीतः समजनि तदा पादुकाग्र्याभिषेको
दुर्विज्ञानस्वहृदयमहो दैवमत्र प्रमाणम् ॥ ६ ॥

**राम इति ।** रामे राज्यं पितुर्दशरथस्याभिमतम्, प्रजानां कोसलदेशस्थानां संमतमिष्टं च । अभूदिति गम्यते । माता कैकेयी तत् राज्यं भरते विषये वव्रे वृतवती । इहास्मिन्नर्थे सत्यवादी राजा भरते राज्यं ददौ च । तदा तस्मिन् समये चिन्तातीतोऽतर्कितः पादुकाया अग्र्याभिषेकः साम्राज्याभिषेकः समजनि संजातः । अत्रास्मिन्नर्थे दुर्विज्ञानं ज्ञातुमशक्यं स्वहृदयं निजसंकल्पो यस्य तत् । दैवं विधिः प्रमाणं हेतुः । अहो आश्चर्ये । अत्र चिन्तातीतो दैवं प्रमाणमिति चार्थस्यासंभाव्यत्ववर्णनादसंभवोऽलंकारः । 'असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् ।' इति लक्षणात् ॥

नातिक्रामेच्चरणवहनात्पादुका पादपीठं
यद्वासन्नं परमिह सदा भाति राजासनस्य ।
पूर्वत्रैव प्रणिहितमभूद्धन्त रामेण राज्यं
शङ्के भर्तुर्बहुमतिपदं विक्रमे साहचर्यम् ॥ ७ ॥

**नातिक्रामेदिति ।** पादुका चरणवहनात् भगवत्पादधरणाद्धेतोः पादपीठं नातिक्रामेत् । चरणवहनं पादुकापादपीठयोस्तुल्यमिति । तत उत्कर्षो नास्तीति भावः । अपि तु पादुकापेक्षया पादपीठस्यैवोत्कर्षोऽस्तीत्याह—**यद्वेति ।** प्रकारान्तरेणातिक्रामेदित्यनुषङ्गः । तदेवाह—( पादुकापादपीठयोर्मध्ये ) परमनन्तरनिर्दिष्टं पादपीठं राजासनस्य सिंहासनस्य सदा आसन्नं सद्भाति । राजासनप्रत्यासन्नत्वं पादपीठस्य सदातनत्वादधिकम् । पादुकायास्तु संचारकाले राजासनप्रत्यासत्त्यभावात् न्यूनमिति भावः । एवमपि रामेण राज्यं राजभावः पूर्वत्र पूर्वनिर्दिष्टपादुकायामेव प्रणिहितं न्यस्तमभूत् । **हन्तेति ।** पादपीठस्य राजासनप्रत्यासत्त्याधिक्येऽपि राजासनानधिरोहहेतुको विषादः पुनः पादुकायाः स्थानाधिरोहे गुणान्तरदर्शनेन हृष्यन् सिद्धान्तयति । विक्रमे पादविक्रमे च साहचर्ये साहाय्यं भर्तुः प्रभोर्बहुमतिपदं बहुमानस्थानमिति शङ्के मन्ये । पादुकायाः पादविक्षेपसाहचर्यमेव श्लेषेण पराक्रमसहायत्वेनाध्यवसीयते । राजानः शूरमेव बहु मन्यन्त इति भावः । आक्षेपालंकारः । पादपीठापेक्षया न्यूनायाः पादुकाया राजासनाधिरोहस्यान्याय्यत्वमुक्त्वा पुनर्विचार्य प्रतिषेधात् । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणम् ।' इति लक्षणात् ॥

प्रतिपदचपलापि पादुका रघुपतिना स्वपदे निवेशिता ।
समजनि निभृतस्थितिस्तदा भवति गुणः श्रियमभ्युपेयुषाम् ॥ ८ ॥

**प्रतिपदेति** । प्रतिपदं पदे पदे चपलापि चञ्चलापि । अनवस्थितापीति गम्यते । चपलः पारदे कीरे पुमान् स्त्रीषु तु चञ्चले । दुर्विनीते च नीचे' इति नानार्थरत्नमाला । रघुपतिना रामेण स्वपदे साकेतसिंहासने निवेशिता सती तदा अधिकारकाले निभृतस्थितिर्निश्चलावस्थाना स्थिरा च समजनि संजाता । विशेषं सामान्येन समर्थयते—लोके श्रियमैश्वर्यमभ्युपेयुषां गुणः समीचीनधर्मो भवति ॥

गतिहेतुरभूत्क्वचित्पदे स्थितिहेतुर्मणिपादुका क्वचित् ।
नहि वस्तुषु शक्तिनिश्चयो नियतिः केवलमीश्वरेच्छया ॥ ९ ॥

**गतीति** । मणिपादुका क्वचित् क्वापि पदे भगवच्चरणे गतिहेतुरभूत् । क्वचित् पदे साकेतसिंहासने स्थितिहेतू रक्षणकारणम् । गतिनिवृत्तिहेतुरित्यपि अभूत् । तस्माद्वस्तुषु शक्तिनिश्चयः सामर्थ्यनिर्णयो नहि नास्त्येव । शक्तेर्नियतिर्व्यवस्था ईश्वरेच्छया केवलमीश्वरसंकल्पेनैव । अत्र विशेषेण सामान्यसमर्थने पुनर्विशेषकथनात् विकस्वरालंकारः । 'यस्मिन् विशेषसामान्यविशेषाः स विकस्वरः ।' इति लक्षणात् ॥

अधरीकृतोऽपि महता तमेव सेवेत सादरं भूष्णुः ।
अलभत समये रामात्पादाक्रान्तापि पादुका राज्यम् ॥ १० ॥

**अधरीकृत इति** । भूष्णुर्वर्धिष्णुर्महता अधरीकृतोऽपि न्यक्कृतोऽपि सादरं प्रेमपूर्वकं तं महान्तमेव सेवते । उक्तमर्थं विशेषेण समर्थयते—पादाक्रान्तापि भगवच्चरणगृहीतापि । न्यक्कृतापीति गम्यते । पादुका रामात् रामस्य सकाशात् समये दण्डकारण्यप्रवेशकाले राज्यं राजत्वमलभत । अत उक्तमुपपन्नमिति भावः । विशेषेण सामान्यसमर्थनरूपार्थान्तरन्यासालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे सुभाषितपद्धतिरष्टाविंशी ॥

---

प्रकीर्णपद्धतिरेकोनत्रिंशी ।

अथास्यां पद्धत्यां नियतमेकमर्थमनवलम्ब्य संभाविताकारेण पादुकां स्तौति—

विधौ प्रवृत्ते यद्द्रव्यं गुणसंस्कारनामभिः ।
श्रेयःसाधनमात्मानं तत्पदत्रं तथास्तु मे ॥ १ ॥

**विधाविति** । द्रव्यं भव्यं यत् पदत्रं पश्वादि च । 'द्रव्यं भव्ये गुणाश्रये' इत्यमरः । विधौ भगवति प्रवृत्ते संचारोन्मुखे सति । 'विधुः श्रीवत्सलाञ्छनः ।' इत्यमरः । अन्यत्र

विधौ विधिबोध्यकर्मणि। विधीयत इति विधिः। 'उपसर्गे घोः किः ३।३।९२' इति कर्मणि किप्रत्ययः। प्रवृत्ते अनुष्ठेये सति गुणैः सुखस्पर्शवत्त्वलाघवादिभिः शारीरैर्दयाक्षान्त्याद्यात्मधर्मैश्च, अन्यत्र 'श्वेतमालभेत भूतिकामः' इत्यादिश्रुत्युक्तैः श्वैत्यादिभिः संस्कारैरधिवासार्चनस्थापनादिगुणाधानैः, अन्यत्र प्रोक्षणादिभिः नामभिः शठकोपशेषानन्ताद्यभिधानैः, अन्यत्र चित्राक्षामवत्यादिसंज्ञायुक्ते कर्मणि द्रव्यविधानात् कर्मनामभिश्चोपलक्षितं सत् श्रेयः श्रेष्ठं साधनं गतिहेतुः। 'साध संसिद्धौ' इति धातोर्ण्यन्तात् करणे ल्युट्। स च गतौ च प्रयुज्यते। अन्यत्र साक्षात् क्रियाशरीरनिर्वर्तकत्वेन श्रेष्ठकारणमाम्नातं श्रुत्योक्तम्। तत् पदत्रं पादुका मे मम तथा श्रेयसो मोक्षस्य साधनमस्तु। श्लेषानुप्राणितः प्रेयोऽलंकारः। विधावित्यत्र विभक्तिश्लेषः। श्रेयःसाधनमित्यत्र सभङ्गश्चेति द्रष्टव्यम्॥

मधुरस्मितरम्यमौक्तिकश्रीर्विशसि व्यञ्जितमञ्जुलप्रणादा।
सह रङ्गनृपेण वासगेहं तनुमध्या मणिपादुके त्वमेका॥ २॥

मधुरेति। हे मणिपादुके, मधुरस्मितवद्रम्या मन्दहासवद्रम्या मौक्तिकानां श्रीः शोभा यस्याः सा। व्यञ्जितमञ्जुलप्रणादा प्रकटितमधुरस्वरा। व्यञ्जितसानुरागवचना चेति गम्यते। 'प्रणादस्तु शब्दः स्यादनुरागजः।' इत्यमरः। तनुमध्या कृशमध्यभागा। अवलग्ने कृशेत्यपि। त्वमेकाद्वितीया सती रङ्गनृपेण भगवता सह वासगेहं शय्यागृहं विशसि। रिरंसुनायिकाव्यक्तेः समासोक्तिरलंकारः॥

शुभशब्दविशेषसंश्रिताभिर्भवती शौरिपदावनि क्रियाभिः।
अनुतिष्ठति नूनमाश्रितानामखिलोपद्रवशान्तिकं नवीनम्॥ ३॥

शुभेति। हे शौरिपदावनि, भवती शुभान् शब्दविशेषान्, अनिष्टनिरासकमन्त्रांश्च संश्रिताभिः क्रियाभिर्गतिभिः। वैदिककर्मभिरिति गम्यते। आश्रितानां नवीनं विलक्षणमखिलानामुपद्रवाणां शान्तिकमुपशमप्रयोजनकं कर्मानुतिष्ठति। नूनमित्युत्प्रेक्षा॥

मणिभिर्मधुवैरिपादरक्षे भवती विक्रमणे प्रवर्धमाना।
युगपद्भवतां युगान्तकाले दिवि लक्ष्मीं विदधे दिवाकराणाम्॥४॥

मणिभिरिति। हे मधुवैरिपादरक्षे, भवती विक्रमणे त्रिविक्रमावतारकाले प्रवर्धमाना सती मणिभिः स्वस्मिन् प्रत्युप्तैः स्थूलै रत्नैर्दिवि आकाशे युगान्तकाले प्रलये युगपद् भवतामेकदा जायमानानां दिवाकराणां लक्ष्मीं शोभां विदधे कृतवती। उपमालंकारः॥

मञ्जुस्वनां मणिमयूखकलापिनीं त्वां
दृष्ट्वा कपर्दसविधे विनिवेश्यमानाम्।

गूढीभवन्ति गरुडध्वजपादरक्षे
फूत्कारवन्ति पुरवैरिविभूषणानि ॥ ५ ॥

मञ्जुस्वनामिति । हे गरुडध्वजस्य पादरक्षे, पुरवैरिणो रुद्रस्य विभूषणानि सर्पाः मञ्जुस्वनाम् । केकावतीमित्यपि गम्यते । मणीनां मयूखकलापः किरणसमूहोऽस्या अस्तीति तथोक्तां पिच्छावतीं मयूरीमित्यपि । कपर्दस्य शिवजटाजूटस्य सविधे समीपे विनिवेश्यमानां निक्षिप्यमाणां त्वां दृष्ट्वा फूत्कारवन्ति सशब्दमुखानिलात्नुद्गिरयन्ति सन्ति गूढीभवन्ति । कण्ठकक्षादिभागेषु निलीयन्त इत्यर्थः । गाढीभवन्तीति पाठे तु आत्मरक्षणार्थं दृढावस्थितानि भवन्तीत्यर्थः । भ्रमानुप्राणितस्वभावोक्तिरलंकारः । 'स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनम् ।' इति लक्षणात् ॥

मध्येपरिस्फुरितनिर्मलचन्द्रतारा
प्रान्तेषु रत्ननिकरेण विचित्रवर्णा ।
पुष्णासि रङ्गनृपतेर्मणिपादुके त्वं
चक्षुर्वशीकरणयन्त्रविशेषशङ्काम् ॥ ६ ॥

मध्य इति । हे रङ्गनृपतेर्मणिपादुके, मध्ये स्वमध्यभागे परिस्फुरिता निर्मला विशुद्धाश्चन्द्रताराः कनकमौक्तिकानि यस्याः सा । 'तारो मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके ।' इति विश्वः । 'चन्द्रः सुधांशुकर्पूरकम्पीलस्वर्णवारिषु ।' इति च स एव । यन्त्रपक्षे मध्ये परिस्फुरितनिर्मलं प्रकाशमानाभ्रकाख्यधातुविशेषमध्ये । 'पारे मध्ये षष्ठ्या वा २।१।१८' इत्यव्ययीभावः । 'निर्मलं विमले विद्यान्निर्माल्याभ्रकयोरपि ।' इति विश्वः । तत्र विद्यमाने चन्द्रे चन्द्रमण्डलाकारवर्तुलरेखायां तारं प्रणवो यस्य सः । प्रान्तेषु पर्यन्तभागेषु रत्नानां निकरेण विचित्रवर्णा नानारूपा—अन्यत्र बहुविधमन्त्राक्षराणि यस्याः सा । त्वं चक्षुषां प्रेक्षकलोचनानां वशीकरणार्थस्य यन्त्रविशेषस्य शङ्कां पुष्णासि । वर्तुलाकारेऽभ्रके मण्डलाकाररेखां विलिख्य ललाटे मध्ये प्रणवं प्रान्तेषु वशीकरणमन्त्राक्षराणि विलिख्य ललाटे तिलकधारणे जनवशीकारो भवतीति तद्विदः । तद्वत्पादुकामध्यगतावयवोऽपि भासत इति भावः । उत्प्रेक्षा ॥

पादेन रङ्गनृपतेः परिभुज्यमाना
मुक्ताफलप्रकटितश्रमवारिबिन्दुः ।
उत्कण्टका मणिमयूखशतैरुदग्रैः
सीत्कारिणीव चरणावनि शिञ्जितैस्त्वम् ॥ ७ ॥

पादेनेति । हे चरणावनि, रङ्गनृपतेः पादेन । पुंसेत्यपि गम्यते । परिभुज्यमाना अनुभूयमाना । मुक्ताफलैः प्रकटिताः श्रमवारिबिन्दवः खेदकणिका यस्याः सा । उदग्रैरु-

न्मुखैर्मणीनां मयूखशतैरुत्कण्टका उद्गतपुलका त्वं शिञ्जितैर्नादैः सीत्कारिणीव अधरदंशनादिजनितसीत्कारवतीव । उत्प्रेक्षा । नायिकात्वव्यक्तेः समासोक्तिरङ्गम् ॥

दूरप्रसारितकरा निनदैर्मणीना-
मायाति दैत्यरिपुरित्यसकृद्ब्रुवाणा ।
दैत्येश्वरानभिमुखाञ्जनितानुकम्पा
मन्ये निवारयसि माधवपादुके त्वम् ॥ ८ ॥

**दूरेति** । हे माधवपादुके, दूरं प्रसारितः करो रत्नकिरण एव हस्तो यया सा जनितानुकम्पा दयायुक्ता त्वं मणीनामन्तर्गतानां निनदैर्दैत्यरिपुरसुरहन्ता आयाति आगच्छतीति असकृदनेकवारं ब्रुवाणा सती अभिमुखान् दैत्येश्वरान् असुरप्रभून् निवारयसि प्रतिषेधसि । नागच्छत पलायध्वमिति वदसीति मन्ये । उत्प्रेक्षा ॥

अच्छेद्यरश्मिनियतक्रमरत्नधुर्या
निष्कम्पकूबरनिभं दधती प्रतीकम् ।
क्रीडागतेषु मधुजित्पदपद्मलक्ष्म्याः
कर्णीरथस्त्वमसि काञ्चनपादरक्षे ॥ ९ ॥

**अच्छेद्येति** । हे काञ्चनपादरक्षे, अच्छेद्यरश्मीनि अभङ्गुरकिरणानि नियतक्रमाणि असंकीर्णपङ्क्तीनि रत्नधुर्याणि श्रेष्ठमणयो यस्याः सा । अन्यत्राशिथिलैः प्रग्रहैर्नियतक्रमा व्यावृत्तगतयो रत्नधुर्याः श्रेष्ठयुग्या यस्याः सा । निष्कम्पस्य स्थिरस्य कूबरस्य युगंधरस्य निभं सदृशम् । निभशब्दस्य पृथक् प्रयोगाभावात् अस्वपदविग्रहः । प्रतीकं यन्त्रिकारूपमवयवं दधती मधुजित्पदपद्मस्य लक्ष्म्याः शोभाया एव श्रियः क्रीडागतेषु लीलासंचारेषु कर्णीरथो यात्रारथोऽसि । 'कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।' इत्यमरः । श्लेषानुप्राणितगम्योत्प्रेक्षा । वाचकाभावात् ॥

मञ्जुस्वना मरकतोपलमेचकाङ्गी
शोणाश्मतुण्डरुचिरा मणिपादुके त्वम् ।
पद्माविहाररसिकस्य परस्य यूनः
पर्यायतां भजसि पञ्जरशारिकाणाम् ॥ १० ॥

**मञ्जुस्वनेति** । हे मणिपादुके, मञ्जुस्वना हृद्यालापा च मरकतोपलैस्तद्वच्च मेचकं श्यामलमङ्गं यस्याः सा । 'तुडि तोडने' इति धातोः घञ् । तुण्डशब्देन खण्ड उच्यते । शोणमणिखण्डरुचिरा शोणाश्मना पद्मरागेणेव तुण्डेन वदनेन रुचिरा त्वं पद्माविहारे लक्ष्मीलीलायां रसिकस्य परस्य यूनः श्रीरङ्गनाथस्य पञ्जरस्थानां शारिकाणां शुकीनां पर्यायतां सादृश्यं भजसि । उपमालंकारः ॥

शोणोपलैश्चरणरक्षिणि संश्रितेषु
छायात्मना मरकतेषु तवावगाढः ।
अन्वेति शौरिरभितः फलपङ्क्तिशोभि-
न्यात्मानमेव शयितं वटपत्रमध्ये ॥ ११ ॥

**शोणेति** । हे चरणरक्षिणि, शोणोपलैः पद्मरागैः संश्रितेषु तव मरकतेषु छायात्मना प्रतिबिम्बरूपेणावगाढः शौरिरभितः शौरेः पार्श्वद्वयेऽपि फलानां पङ्क्त्या श्रेण्या शोभिनि राजमाने वटपत्रस्य न्यग्रोधदलस्य मध्ये शयितं सुप्तमात्मानं स्वमूर्तिमेवान्वेति अनुकरोति । उपमालंकारः ॥

स्फीतं पदावनि तव स्नपनार्द्रमूर्ते-
रासागरं ततमभून्मणिरश्मिजालम् ।
लीलोचितं रघुसुतस्य शरव्यमासन्
यातूनि यस्य वलयेन विवेष्टितानि ॥ १२ ॥

**स्फीतमिति** । हे पदावनि, स्नपनेन साकेतराज्याभिषेकेणार्द्रमूर्तेस्तव स्फीतं भूयिष्ठं मणीनां रश्मिजालं किरणसमूह एव आनायः आसागरं समुद्रमभिव्याप्य ततं विस्तृतमभूत् । यस्य जालस्य वलयेन मण्डलभावेन विवेष्टितानि क्रोडीकृतानि यातूनि रावणादिरक्षांसि । 'नैर्ऋतो यातुरक्षसी' इत्यमरः । रघुसुतस्य रामस्य । दशरथो रघुशब्देन तद्गोत्रत्वादुपचर्यते । लीलोचितमाखेटक्रीडायोग्यम् । अयत्नलभ्यमिति यावत् । शरव्यं शरवेध्यमासन् । तदिति पूर्वेणान्वयः । श्लिष्टरूपकमलंकारः । उत्तरार्धे उदात्तम् । समासोक्तिः । मृगत्वप्रतीतेः ॥

रत्नांशुभिस्तव तदा मणिपादरक्षे
संरज्यमानवपुषां रजनीमुखेषु ।
आकस्मिकागतमदर्शि महौषधित्वं
साकेतपत्तनसमीपरुहां द्रुमाणाम् ॥ १३ ॥

**रत्नेति** । हे मणिपादरक्षे, तदा अधिकारकाले तव रत्नांशुभिः संरज्यमानवपुषां संश्लिष्टगात्राणां साकेतपत्तनस्य । अयोध्यानामकनगरस्येति यावत् । समीपे रोहन्ति ये तेषां द्रुमाणां वृक्षाणां रजनीमुखेषु रात्र्यागमेषु आकस्मिकमतर्कितहेतुकं यथा तथा आगतमुपसन्नं महौषधित्वम् । रात्रौ ज्वलतो वृक्षस्य महौषधीति नाम । तद्भावोऽदर्शि दृष्टम् । जनैरिति शेषः । दिवा अमहौषधीनामेव वृक्षाणां रात्रौ महौषधित्वस्य पर्यायतः कथनात् पर्यायभेदः ॥

रामे वनं दशरथे च दिवं प्रयाते
निर्धूतविश्वतिमिरा सहसा बभूव ।
भूयिष्ठरत्नकिरणा भवती रघूणां
भूयःप्रतापतपनोदयपूर्वसंध्या ॥ १४ ॥

**राम इति** । हे पादुके, इत्युपस्कार्यम् । रामे वनं प्रति गच्छति सति दशरथे च दिवं स्वर्गं प्रयाते सति भूयिष्ठरत्नकिरणा रघूणां भूयसः स्फारस्य प्रतापस्यैव तपनस्य सूर्यस्योदये आविर्भावे पूर्वसंध्या प्राचीसंध्या भवती सहसा शीघ्रमेव निर्धूतानि विश्वेषां तिमिराणि शोकात्मकानि अन्धकाराणि च यया सा बभूव । रूपकमलंकारः ॥

प्रीतेन देवि विभुना प्रतिपादनीयां
पादावनि प्रतिपदोदितमञ्जुनादाम् ।
विद्यां विदुर्भगवतः प्रतिपादनार्हां
पारायणागमपयोनिधिपारगास्त्वाम् ॥ १५ ॥

**प्रीतेनेति** । हे देवि पादावनि, पारायणागमानां समस्तवेदानां पारमुत्तरावधिं गच्छन्तीति तथोक्तास्त्रयीपारदृश्वानः सन्तः । 'साकल्यासङ्गवचने पारायणतुरायणे' इत्यमरः । प्रीतेन प्रसन्नेन विभुना समर्थेन गुरुणा च प्रतिपादनीयां गमनीयाम् । पादुकाया भगवदधीनगतित्वादिति भावः । अन्यत्र विश्राणनीयां प्रतिपदं प्रतिचरणविक्षेपम्, अन्यत्र प्रतिसुप्तिङन्तम् । उदित उद्भूतो मञ्जुनादो मधुरध्वनिर्यस्यास्ताम् । भगवतः प्रतिपादनार्हां संचारयोग्याम् । 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः । त्वामेवंभूतां विद्यां त्रयीं विदुः जानते । श्लेषानुप्राणितोत्प्रेक्षालंकारः ॥

मुक्तांशुकेसरवती स्थिरवज्रदंष्ट्रा
प्रह्लादसम्पदनुरूपहिरण्यभेदा ।
मूर्तिः श्रियो भवसि माधवपादरक्षे
नाथस्य नूनमुचिता नरसिंहमूर्तेः ॥ १६ ॥

**मुक्तेति** । हे माधवस्य पादरक्षे, मुक्तांशुभिर्मौक्तिकप्रभाभिः केसरवती जटायुक्ता । स्थिराणि वज्राण्येव दंष्ट्राः सृक्कदेशस्था मूलदन्ता यस्याः सा । प्रह्लादसंपद आनन्दसंपत्तेः, अन्यत्र हिरण्यसुतसंपदः । अनुरूपो योग्यो हिरण्यभेदो बहुवर्णसुवर्णविशेषः, अन्यत्र हिरण्याख्यासुरगात्रदलनं यस्याः सा त्वं नरसिंहमूर्तेः श्रीनृसिंहत्वेनावतीर्णस्य नाथस्य श्रीरङ्गनाथस्योचितानुरूपा श्रियो लक्ष्म्या मूर्तिः शरीरान्तरं भवसि । 'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनूम् ॥' इत्युक्ता

श्रीरेव नृसिंहावतारानुगुणं दिव्यमङ्गलविग्रहं पादुकात्मकमाश्रितवतीत्यर्थः । नूनमित्युत्प्रेक्षा । श्लेषसंभेदरूपकाण्यत्र संकीर्यन्ते ॥

संभावयन्ति कवयश्चतुरप्रचारां
मञ्जुस्वनां महितमौक्तिकपत्त्रलाङ्गीम् ।
स्वाधीनसर्वभुवनां मणिपादुके त्वां
रङ्गाधिराजपदपङ्कजराजहंसीम् ॥ १७ ॥

**संभावयन्तीति** । हे मणिपादुके, कवयः क्रान्तदर्शिन एव जलपक्षिणः । 'कं शिरोऽम्बुनोः' इत्यमरः । 'विः पक्षिव्योमनी वातः' इति नानार्थरत्नमाला । इदं च हंसीत्वसंभावनायां साकूतम् । चतुरो रमणीयः प्रचारो गतिर्यस्यास्ताम् । मञ्जुस्वनां महितैर्मौक्तिकैः पत्त्रलं गरुद्युक्तमङ्गं शरीरं यस्यास्ताम् । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४।१।५४।' इत्यत्रानुक्तसमुच्चयार्थेन चकारेण 'अङ्गगात्रकण्ठेभ्यश्च—' इति समुच्चीयत इति वृत्तिकारादयः । स्वाधीनानि स्वायत्तानि सर्वाणि भुवनानि जगन्ति जलानि च यस्यास्ताम् । 'विष्टपं भुवनं जगत्' 'जीवनं भुवनं वनम्' इत्युभयत्राप्यमरः । त्वां रङ्गाधिराजस्य पदयोरेव पङ्कजयो राजहंसीं हंसविशेषस्त्रियं संभावयन्त्युत्प्रेक्षन्ते । 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।' इत्यमरः । श्लेषानुप्राणितोत्प्रेक्षालंकारः ॥

मुक्तामयूखरुचिरां मणिपादरक्षे
मञ्जुस्वनां मणिभिराहितवर्णवर्गाम् ।
मन्ये मुकुन्दपदपद्ममधुव्रतीना-
मन्यामकृत्रिमगिरामधिदेवतां त्वाम् ॥ १८ ॥

**मुक्तेति** । हे मणिपादरक्षे, मुक्तामयूखैर्मौक्तिकप्रभाभी रुचिरां रम्यां शुद्धां च मञ्जुस्वनां हृद्यनादां हृद्यध्वनिं च मणिभी रत्नैराहितः संपादितो वर्णवर्गः शुक्लादिरूपसमूहोऽक्षरनिचयश्च यस्यास्तां त्वां मुकुन्दस्य पदयोरेव पद्मयोर्मधुव्रतीनां भृङ्गीवदासक्तानामकृत्रिमगिरां श्रुतीनामन्यां प्रसिद्धाधिदेवतापेक्षया विलक्षणामधिदेवतामधिष्ठात्रीं देवतां मन्ये । श्लेषानुप्राणितोत्प्रेक्षा ॥

आसाद्य केकयसुतावरदानमूलं
कालं प्रदोषमनिरीक्ष्य रमासहायम् ।
मञ्जुप्रणादरहिता मणिपादरक्षे
मौनव्रतं किमपि नूनमवर्तयस्त्वम् ॥ १९ ॥

**आसाद्येति** । हे मणिपादरक्षे, केकयसुतायाः कैकेय्या वरदानस्य मूलं हेतुम् । अनिरीक्ष्यः कोसलदेशेऽवीक्ष्यो रमासहायः सीतासमेतो दाशरथिर्यत्र तम् । रामस्य सीतया

सह अरण्यगमनात् । 'न प्रदोषे हरिं पश्येत्' इति शास्त्रविषयमित्यपि गम्यते । प्रदोषं प्रकृतो रामविवासनरूपो दोषोऽवगुणो यस्मिन् तम् । रजनीमुखमित्यपि । 'प्रदोषो रजनीमुखम्' इत्यमरः । कालं वेलामासाद्य मञ्जुना प्रणादेन आलापेनेत्यपि गम्यते । रहिता शून्या । प्रदोषे व्यवहारस्य निषिद्धत्वात् । सा सती किमपि विलक्षणं मौनव्रतं वाचंयमत्वनियममवर्तयः अनुष्ठितवती । नूनमित्युत्प्रेक्षा ॥

वैदूर्यरम्यसलिला महिता मरुद्भि-
श्छायावती मरकतोपलरश्मिजालैः ।
अश्रान्तमोहपदवीपथिकस्य जन्तो-
र्विश्रान्तिभूमिरिव शौरिपदावनि त्वम् ॥ २० ॥

**वैदूर्येति** । हे शौरिपदावनि, वैदूर्याणि वालवायजरत्नानि । 'वैदूर्यं वालवायजम् ।' इत्यमरः । तान्येव तद्वच्च रम्याणि सलिलानि जलानि यस्याः सा । मरुद्भिर्देवैर्मन्दमारुतैश्च महिता पूजिता । 'मरुद्देवे समीरे स्यात्' इति विश्वः । त्वमश्रान्तम् । 'सततानारताश्रान्तसन्ततविरतानिशम् ।' इत्यमरः । मोहपदव्यां विषयाभिनिवेशमार्गे पथिकस्य संचारवतो जन्तोः शरीरिणो विश्रान्तिभूमिरिव विश्रामस्थानमिवासन्नजलेषु निबिडतरुच्छायामन्दमारुतयुक्तेषु तटाकादितीरेषु श्रान्ताः पथिकाः श्रमापनोदनाय निविशन्त इति भावः । इवशब्दः संभावनायाम् । उत्प्रेक्षालंकारः श्लेषानुप्राणितः ॥

आद्यो रघुक्षितिभुजामभिषेकदीप्तै-
राप्यायितस्तव पदावनि रश्मिजालैः ।
मन्दीचकार तपनो व्यपनीतभीति-
र्मन्दोदरीवदनचन्द्रमसो मयूखान् ॥ २१ ॥

**आद्य इति** । हे पदावनि, रघुक्षितिभुजां रघुवंशजानां राज्ञामाद्यो गोत्रप्रथमः अभिषेकेण दीप्तैरुज्ज्वलैस्तव रश्मिजालैराप्यायितः पुष्टस्तपनः सूर्यो व्यपनीतभीतिर्निरस्तभावः सन् मन्दोदर्या रावणमहिष्या वदनस्यैव मुखस्यैव च चन्द्रमसश्चन्द्रस्य मयूखान् किरणान् मन्दीचकाराल्पीकृतवान् । मन्दोदरीवदनस्य रावणनाशजनितदैन्यमेव किरणाल्पीभावतयाध्यवसीयते । तत्र च पादुकारत्नकिरणजनितपोषस्य सूर्यस्य हेतुत्वमुत्प्रेक्ष्यते ॥

मान्या समस्तजगतां मणिभङ्गनीला
पादे निसर्गघटिता मणिपादुके त्वम् ।
अन्तःपुरेषु ललितानि गतागतानि
छायेव रङ्गनृपतेरनुवर्तसे त्वम् ॥ २२ ॥

**मान्येति** । हे मणिपादुके, समस्तजगतां मान्या बहु[illegible]न्तव्या मणीनामिन्द्रनीलानां

भङ्गैः शकलैस्तद्वच्च नीला नीलवर्णा रङ्गनृपतेः पादे निसर्गेण स्वभावेन घटिता संबद्धा त्वमन्तःपुरेषु शुद्धान्तदेशेषु ललितानि रम्याणि रङ्गनृपतेर्गतागतानि छायेव पुरुषाकारानातप इवानुवर्तसेऽनुसरसि । श्लेषसंकीर्ण उपमालंकारः ॥

रङ्गाधिराजपदपङ्कजमाश्रयन्ती
हैमी स्वयं परिगता हरिनीलरत्नैः ।
संभाव्यसे सुकृतिभिर्मणिपादुके त्वं
सामान्यमूर्तिरिव सिन्धुसुताधरण्योः ॥ २३ ॥

**रङ्गेति** । हे मणिपादुके, रङ्गाधिराजस्य पदपङ्कजमाश्रयन्ती स्वयं हैमी कनकमयी । गौरवर्णेत्यपि गम्यते । त्वं सिन्धुसुतधरण्योः श्रीभूम्योः सामान्यमूर्तिरिव साधारणशरीरमिव सुकृतिभिर्धन्यैः संभाव्यसे । गौरश्यामवर्णसंमेलनात् लक्ष्मीभूम्योः साधारणविग्रहत्वं पादुकायामुत्प्रेक्ष्यते ॥

अभ्यर्चिता सुमनसां निवहैरजस्रं
मुक्तारुणोपलनखाङ्गुलिपल्लवश्रीः ।
श्रेयस्करीं मुरभिदश्चरणद्वयीव
कान्तिं समाश्रयसि काञ्चनपादुके त्वम् ॥ २४ ॥

**अभ्यर्चितेति** । हे काञ्चनपादुके, सुमनसां पुष्पाणां देवानां च । 'सुपर्वाणः सुमनसः', 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । निवहैः समूहैरजस्रं सदा अभ्यर्चिता पूजिता मुक्तारुणोपलयोर्मौक्तिकपद्मरागयोराधारयोः, नखानामङ्गुलीपल्लवानां च श्रीः शोभा यस्याः सा । मौक्तिकपद्मरागसदृशनखाङ्गुलिपल्लवश्रीरित्यपि । त्वं मुरभिदश्चरणद्वयीव पादयुगलीव श्रेयस्करीं मोक्षहेतुभूतां कान्तिं समाश्रयसि । उपमालंकारः ॥

निर्मृष्टरागरुचिरा मणिपादुके त्वं
स्नातानुलेपसुरभिर्नवमाल्यचित्रा ।
प्राप्ते विहारसमये भजसे मुरारेः
पादारविन्दपरिभोगमनन्यलभ्यम् ॥ २५ ॥

**निर्मृष्टेति** । हे मणिपादुके, निर्मृष्टेन शोधितेन निर्मलेन गात्रेण रुचिरा स्नाता अभिषिक्ता । कृतावगाहेत्यपि । अनुलेपेन चन्दनादिचर्चया सुरभिः सौगन्ध्यवती नवैर्नूतनैर्माल्यैश्चित्रा आश्चर्यकरी त्वं विहारस्य संचारस्य रत्यादिक्रीडायाश्च समये प्राप्ते सति अनन्यलभ्यमन्येषामलभ्यं मुरारेः पादारविन्दस्य पुंस इत्यपि गम्यते । परिभोगं संस्पर्शजन्यं सुखम् । रतिजन्यमित्यपि । भजसे । रतासक्तनायिकावृत्तान्तप्रतीतेः समासोक्तिरलंकारः ॥

नादे पदावनि तथा तव संनिवेशे
निर्वेशनक्रममसह्यमपाचिकीर्षुः ।
यैरेव लोचनशतैरभिवीक्षते त्वां
तैरेव पन्नगपतिः श्रुतिमान्बभूव ॥ २६ ॥

**नाद इति ।** हे पदावनि, तव नादेऽन्तर्मणिरवे तथा संनिवेशे विग्रहसंस्थाने च विषयेऽसह्यममर्षणीयं निर्वेशनस्यानुभवस्य क्रमं परिपाटीम् । कालव्यवधानमिति यावत् । अपाचिकीर्षुर्निराचिकीर्षुः पन्नगपतिः शेषो यैरेव लोचनशतैश्चक्षुषां सहस्रेण । शतशब्दोऽत्रानेकवाची । त्वामभिवीक्षते पश्यति । तैर्लोचनशतैरेव श्रुतिमान् कर्णयुक्तो बभूव । तस्य चक्षुःश्रवस्त्वादिति भावः । शेषस्य स्वतःसिद्धं चक्षुःश्रवस्त्वं पादुकानादसंनिवेशयोर्युगपदनुबुभूषाहेतुकत्वेनोत्प्रेक्ष्यत इति हेतूत्प्रेक्षा ॥

पादावनि स्फुटमयूखसहस्रदृश्या
विष्णोः पदेन भवती विहितप्रचारा ।
त्वद्भक्तियन्त्रितजनप्रथमस्य शंभो-
र्वैकर्तनीमनुकरोति विहारमूर्तिम् ॥ २७ ॥

**पादावनीति ।** हे पादावनि, स्फुटैर्मयूखानां सहस्रैरनेकैः दशशतसंख्यैरित्यपि । दृश्या । विष्णोः पदेन चरणेनाकाशेन विहितः प्रचारः संचारो यया सा भवती तव भक्त्या त्वद्विषयप्रेमाधिक्येन यन्त्रितानां परवशानां जनानां भागवतानां प्रथमस्याग्रेसरस्य । 'निम्नगानां यथा गङ्गा देवानामच्युतो यथा । वैष्णवानां यथा शंभुः पुराणानामिदं तथा ॥' इति श्रीभागवते । 'यथा सरिद्वरा गङ्गा वैष्णवानामहं यथा ।' इति श्रीरङ्गमाहात्म्ये नारदं प्रति शिववचनम् । वैकर्तनीं सूर्यसंबन्धिनीं मण्डलात्मिकां विहारमूर्तिं लीलाविग्रहमनुकरोति । शिवस्याष्टासु मूर्तिषु सूर्यमण्डलस्यान्तर्भावादिति भावः । उपमालंकारः ॥

राज्ये वनेऽपि रघुवीरपदोचितायाः
संस्मृत्य गौतमवधूपरिरक्षणं ते ।
मन्ये समाहितधियो मणिपादुके त्वां
मूर्ध्ना भजन्त्यनुदिनं मुनिधर्मदाराः ॥ २८ ॥

**राज्य इति ।** हे मणिपादुके, मुनीनां ऋषीणां धर्मदाराः पत्न्यो राज्ये कोसलदेशे वने चित्रकूटपरिसरारण्येऽपि रघुवीरसंबन्धिनः पदस्य स्थानस्य चरणस्य चोचितायास्ते तव गौतमवध्वा अहल्यायाः परिरक्षणमुज्जीवनं संस्मृत्य विचिन्त्य समाहितधियः सत्योऽवहितमनस्काः सत्यो मूर्ध्ना शिरसा भजन्ति सेवन्ते मन्य इत्युत्प्रेक्षा । भक्तिकृतस्य प्रणामस्याहल्यारक्षणचिन्तनहेतुत्वेनोत्प्रेक्षणात् ॥

त्वामाश्रितो मणिमयूखसहस्रदृश्यां
त्वच्छिञ्जितेन सह रङ्गपतिः समुद्यन् ।
आशङ्कयते सुमतिभिर्मणिपादरक्षे
विद्यासखः सवितृमण्डलमध्यवर्ती ॥ २९ ॥

त्वामिति । हे मणिपादरक्षे, सुमतिभिः कृतिभिर्मणीनां मयूखसहस्रैर्दृश्यां प्रेक्षणीयां त्वामाश्रितस्तव शिञ्जितेन नादेन सह समुद्यन्नाविर्भवन् रङ्गपतिर्विद्यासखस्त्रिवेदीसहितः सवितृमण्डलस्य मध्ये वर्तत इति तथोक्तः । तथा आशङ्कयते । 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः ।' इति श्रूयते । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति च ॥

रत्नाश्रितैर्हरिपदं मणिपादुके त्वं
स्पृष्ट्वा करैः श्रुतिरसायनमञ्जुनादा ।
तत्त्वं तदेतदिति बोधयसीव सम्यक्
वेदान्प्रतारितवतो विविधान्कुदृष्टीन् ॥ ३० ॥

रत्नेति । हे मणिपादुके, त्वं रत्नाश्रितैर्मणिसंबद्धैः । रत्नदूर्वाक्षतादिमाङ्गलिकवस्तुयुक्तैरित्यपि गम्यते । 'मङ्गलद्रव्ययुक्तपाणिः पुरुषो दिव्यं कुर्यात्' इति हि स्मर्यते । करैः किरणैरेव हस्तैः शौरेः श्रीरङ्गनाथस्य पदं स्पृष्ट्वा आलभ्य श्रुतीनां रसायनं रसायनवद्भोग्यो मञ्जुनादः । शपथोक्तिरित्यपि गम्यते । यस्याः सा सती वेदान् प्रतारितवतोऽयथायथतात्पर्यवर्णनेन प्रलोभितवतो विविधान् परस्परव्याहतोक्तीन् कुदृष्टीन् दुरुत्प्रेक्षामूलसिद्धान्तान् शंकरादीन् । 'गतिबुद्धि—१।४।५२' इत्यादिना कर्मत्वम् । तत्त्वमबाधितश्रुतितात्पर्यास्पदं वस्तु तत् चिदचिदात्मकप्रपञ्चशरीरकञ्चुकितत्वेन श्रुतिबोधितमेतत्परिदृश्यमानदिव्यास्त्रभूषणपत्नीपरिजनादिपरिष्कृतं दिव्यमङ्गलविग्रहोपेतं श्रीरङ्गनाथरूपमिति सम्यक् बोधयसीव । शिक्षयसीवेत्यर्थः । उत्प्रेक्षा । शपथेन विना दुर्बुद्धीनां प्रत्ययो नास्तीति भावः ॥

आनन्दसूः प्रणयिनामनघप्रसादा
रङ्गाधिराजपदरक्षिणि रत्नभासा ।
न्यस्ते मुहुर्निजभरे स्थिरतां भजन्त्या
वर्णांशुकं वितरसीव वसुंधरायाः ॥ ३१ ॥

आनन्देति । हे रङ्गाधिराजपदरक्षिणि, प्रणयिनां भक्तानां याचकानां चानन्दसूः हर्षसंपादिका अनघो रमणीयः प्रसादः स्वच्छता सौमुख्यं च यस्याः सा त्वं निजे आत्मीये भरे भारे त्वया न्यस्ते निक्षिप्ते सति । भूमौ भारं त्वदीयं वहन्त्यां सत्यामित्यर्थः ।

स्थिरतामपारिप्लवत्वं भजन्त्या वसुंधराया भूमे रत्नभासा नानावर्णेर्मुहुर्वर्णांशुकं चित्रपटं पारितोषिकं वितरसीव । उत्प्रेक्षा । राजानो महतो राजकृत्यस्य विधानेन आश्रान्तं सचिवादिकं पुरुषं वस्त्रादिपारितोषिकेण संभावयन्तीति भावः ॥

त्वं चित्रभानुरसि रत्नविशेषयोगा-
द्भूम्ना निजेन परिपुष्यसि पावकत्वम् ।
स्वेनैव शौरिचरणावनि चन्द्ररूपा
तेजस्त्रयीव मिलितासि तमोपहा नः ॥ ३२ ॥

**त्वमिति** । हे शौरिचरणावनि, त्वं रत्नविशेषाणां पद्मरागमरकतादीनां योगात् चित्रा बहुला भानवो मरीचयो यस्याः सा असि । सूर्यो भवसीत्यपि गम्यते । 'चित्रभानुर्विरोचनः' इति सूर्यपर्यायेष्वमरः । निजेन स्वीयेन भूम्ना महिम्ना पावकत्वं पावनमग्नित्वं च परिपुष्यसि पुष्णासि । स्वेनैवात्मनैव चन्द्ररूपा कनकमयी । इन्दुरित्यपि । असीत्यप्यनुषज्यते । मिलिता एकीभूता तेजसां सूर्याग्निचन्द्राणां त्रयीव नोऽस्माकं तमः शोकमन्धकारं च हन्तीति तथोक्ता असि । श्लेषानुप्राणिता भूतोपमालंकारः ॥

प्रौढप्रवालरुचिरा भुवनैकवन्द्या
रङ्गाधिराजचरणावनि रम्यचन्द्रा ।
संभिन्नमौक्तिकरुचिः सततं प्रजानां
तापात्ययं दिशसि तारकितेव संध्या ॥ ३३ ॥

**प्रौढेति** । हे रङ्गाधिराजचरणावनि, प्रौढप्रवालवत् अतिबालपल्लववत् रुचिरा रम्या भुवनानामेकवन्द्या असाधारणतया वन्दनीया । संध्याया अपि 'अहरहः संध्यामुपासीत' इति वन्द्यत्वोक्तेः । रम्यश्चन्द्रः सुवर्णम्, अन्यत्र इन्दुर्यस्याः सा । संभिन्ना संसृष्टा मौक्तिकानां रुचिर्यस्याः सा त्वं तारकिता संजातनक्षत्रा । 'तदस्य संजातं तारकादिभ्य इतच् ५।२।३६॥' इतीतच् । संध्येव संध्याकाल इव प्रजानां सततं तापात्ययमाध्यात्मिकादितापशान्तिं घर्मजनितसंतापशान्तिं च दिशसि । उपमालंकारः ॥

रङ्गेश्वरस्य पुरतो मणिपादुके त्वं
रत्नांशुभिर्विकिरसि स्फुटभक्तिबन्धा ।
पादौ विहारयितुमद्भुतसौकुमार्यौ
प्रायः सरोजकुमुदोत्पलपत्रपङ्क्तिम् ॥ ३४ ॥

**रङ्गेश्वरस्येति** । हे मणिपादुके, स्फुटो भक्तिबन्धो दृढभक्तिः । रत्नदलानां पङ्क्तिसंनिवेशश्च गम्यते । यस्याः सा रङ्गेश्वरस्याद्भुतं सौकुमार्यं मार्दवं ययोस्तौ पादौ विहारयितुं संचारयितुं पुरतः पुरोदेशे रत्नानामंशुभिः किरणैः सरोजं कुमुदं कैरवमुत्पलमिन्दी-

वरं तेषां पत्रपङ्क्तिं दलश्रेणीं विकिरसि विक्षिपसि । प्राय इत्युत्प्रेक्षा । भगवच्चरणयोः कठिनभूमिसंचारावहत्वादिति भावः ॥

आसन्नवृत्तिरवरोधगृहेषु शौरे-
रापादयस्यनुपदं वरवर्णिनीनाम् ।
आलग्नरत्नकिरणा मणिपादुके त्वं
मञ्जुस्वना मदनबाणनिघर्षशङ्काम् ॥ ३५ ॥

**आसन्नेति** । हे मणिपादुके, शौरेरवरोधगृहेषु अन्तःपुरसद्मसु आसन्नवृत्तिः समीपवर्तिनी आलग्ना आसक्ताः रत्नानां किरणाः यस्याः सा । एतेन निघर्षणजन्या दीप्तिर्व्यज्यते । मञ्जुस्वना । एतेन निघर्षणशब्दो व्यज्यते । त्वं वरवर्णिनीनां श्रीरङ्गनाथ-दिव्यमहिषीणामनुपदं प्रतिचरणविक्षेपम् । प्रतिक्षणमित्यपि । मदनबाणस्य कामशरस्य निघर्षशङ्कां शाणाभिस्तेजनशङ्कामापादयसि । पादुकाया भगवत्संनिधानहेतुत्वेनोद्दी-पकत्वादेवमुत्प्रेक्ष्यते ॥

पर्याप्तमौक्तिकनखा स्फुटपद्मरागा
रेखाविशेषरुचिरा ललितप्रचारा ।
रङ्गाधिराजपदयोर्मणिपादुके त्वं
सायुज्यमाश्रितवतीव समस्तवन्द्या ॥ ३६ ॥

**पर्याप्तेति** । हे मणिपादुके, पर्याप्तानि पूर्णानि मौक्तिकान्येव नखाः यस्याः सा । स्फुटो व्यक्तः पद्मरागः कुरुविन्द एव पद्मस्य रक्तिमा यस्याः सा । रेखाविशेषैर्वज्रा-ङ्कुशादिभी रुचिरा । ललितो हृद्यः प्रचारः संचारो यस्याः सा । समस्तानां वन्द्या त्वं रङ्गाधिराजस्य पदयोः सायुज्यं परमसाम्यमाश्रितवतीव प्राप्तवतीव । श्लेषरूपकाभ्यामनु-प्राणितेयमुत्प्रेक्षा ॥

प्राप्ताभिषेका मणिपादुके त्वं प्रदीप्तरत्ना रघुराजधान्याः ।
प्रदक्षिणप्रक्रमणादकार्षीः प्राकारमाग्नेयमिव प्रभाभिः ॥ ३७ ॥

**प्राप्तेति** । हे मणिपादुके, प्राप्ताभिषेका त्वं प्रदीप्तानि ज्वलन्ति रत्नानि यस्याः सा सती रघुराजधान्या अयोध्यायाः प्रदक्षिणस्य प्रक्रमणादारम्भाद्धेतोः प्रभाभिराग्नेयं वह्निकृतम् । अग्नेर्ढक् । प्राकारं सालम् । 'प्राकारो वरणः सालः' इत्यमरः । अकार्षीः कृतवती । उत्प्रेक्षा ॥

रत्नासने राघवपादरक्षे प्रदीप्यमानास्तव पद्मरागाः ।
प्रायो नरेन्द्रान्भरतस्य जेतुः प्रतापवह्नेरभवन्प्ररोहाः ॥ ३८ ॥

**रत्नासन इति** । हे राघवपादरक्षे, तव रत्नासने प्रदीप्यमाना ज्वलन्तः पद्मरागा

नरेन्द्रान् प्रतिभूपतीन् जेतुर्भरतस्य प्रतापस्यैव वह्नेः प्ररोहा अङ्कुरा अभवन् । प्राय इत्युत्प्रेक्षा ॥

शुभप्रणादा भवती श्रुतीनां कण्ठेषु वैकुण्ठपतिंवराणाम् ।
बध्नासि नूनं मणिपादरक्षे माङ्गल्यसूत्रं मणिरश्मिजालैः ॥ ३९ ॥

**शुभेति** । हे मणिपादरक्षे, भवती उपाध्यायीति व्यज्यते । शुभः प्रणादः शब्दः । 'माङ्गल्यतन्तुनानेन' इति शब्दोच्चारणमपि गम्यते । यस्याः सा सती वैकुण्ठस्य श्रीरङ्गनाथस्य पतिंवराणां विवाहोत्सवयुक्तवधूनां सेवया संनिहितानां कण्ठेषु मणिरश्मिजालैः सूत्रैरित्यपि गम्यते । माङ्गल्यसूत्रं बध्नासि योजयसि । नूनमित्युत्प्रेक्षा ॥

विचित्रवर्णा श्रुतिरम्यशब्दा निषेव्यसे नाकसदां शिरोभिः ।
मधुद्विषस्त्वन्मणिपादरक्षे श्रेयस्करी शासनपत्रिकेव ॥ ४० ॥

**विचित्रेति** । हे मणिपादरक्षे, विचित्रवर्णा शबलरूपा, अन्यत्र नानाविधाक्षरयुक्ता श्रुतीनां श्रवसां रम्यो भोग्यः शब्दो यस्याः सा प्रमाणत्वेनाङ्गीकृता श्रेयस्करी मोक्षहेतुः, अन्यत्र श्रेष्ठकार्यज्ञापिका त्वं मधुद्विषः श्रीरङ्गनाथस्य शासनपत्रिकेव आज्ञापत्रमिव नाकसदां देवानां शिरोभिर्निषेव्यसे ध्रियसे । राज्ञां शासनपत्रिकामुपजीविनः शिरसा वहन्तीति भावः ॥

स्थिरा स्वभावान्मणिपादुके त्वं सर्वंसहा स्वादुफलप्रसूतिः ।
पृथ्वीव पद्भ्यां परमस्य पुंसः संसृज्यसे देवि विभज्यसे च ॥ ४१ ॥

**स्थिरेति** । हे देवि मणिपादुके, स्वभावात् निसर्गतः स्थिरा दृढा, अन्यत्र अचञ्चलतया स्थिरशब्दवाच्या सर्वंसहा आश्रितापराधसहिष्णुः अशेषधारकतया भारसहिष्णुः सर्वंसहाशब्दवाच्या स्वादूनामत्यन्तभोग्यानां रसयुक्तानां च फलानां स्वर्गापवर्गादिप्रयोजनानां शाल्यादीनां च प्रसूतिर्जनयित्री त्वं पृथ्वीव भूमिरिव परमस्य पुंसः श्रीरङ्गनाथस्य पद्भ्यां संसृज्यसे संयुज्यसे । गमनकाले, अन्यत्र उत्पाद्यसे । 'पद्भ्यां भूमिः' इति श्रुतेः । विभज्यसे विभागवती भवसि । स्थितिकाले, अन्यत्र त्रिविक्रमस्य पद्भ्यां विभज्यसे मानेन पृथक्क्रियसे च । तारणे संसर्ग उत्पत्तिर्विभागो लय इति वा बोध्यः । श्लेषानुप्राणितोपमालंकारः ॥

पश्यन्ति रङ्गेश्वरपादरक्षे पूजासु ते संहितपुष्पजालाम् ।
मृगीदृशो वासवरत्नरेखां सचित्रपुङ्खामिव मन्मथज्याम् ॥ ४२ ॥

**पश्यन्तीति** । हे रङ्गेश्वरस्य पादरक्षे, मृगीदृशः श्रीप्रभृतयो देव्यः पूजास्वर्चनकालेषु संहितं श्लिष्टं पुष्पजालं यस्यास्ताम् । शरसंधानमित्यपि व्यज्यते । कामस्य पुष्पशरत्वादिति भावः । वासवरत्नानां महेन्द्रनीलानां रेखां पङ्क्तिं सचित्रपुङ्खां शरविशिष्टाम् ।

'चित्रपुङ्खविशिखेषु कलम्बाः' इति हलायुधः । मन्मथस्य ज्यां मौर्वीमिव पश्यन्ति । भृङ्गाल्या एव मन्मथधनुर्गुणत्वादिति भावः । उत्प्रेक्षा ॥

करैरुदग्रैः स्फुरतां मणीनां मञ्जुस्वना माधवपादुके त्वम् ।
अनूपदेशे कनकापगायाः कलेः प्रवेशं प्रतिषेधसीव ॥ ४३ ॥

**करैरिति** । हे माधवपादुके, त्वं स्फुरतां दीप्यमानानां मणीनामुदग्रैरुद्गताग्रैः करैः किरणैरेव हस्तैः कनकापगायाः कावेर्या अनूपदेशे कच्छसीम्नि श्रीरङ्गनगर्यामिति यावत् । कलेर्युगस्य प्रवेशं प्रतिषेधसि निषेधसीव । श्रीरङ्गे कृतयुगधर्मं प्रवर्तयसीति भावः ॥

आक्रान्तवेदिर्भवती तदानीमदर्शि मुक्तान्वितशोणरत्ना ।
करग्रहार्थं भरतेन भूम्या लाजोत्करैर्वह्निशिखेव कीर्णा ॥ ४४ ॥

**आक्रान्तेति** । हे पादुके, इत्युपस्कार्यम् । आक्रान्ता वेदिः सिंहासनरूपं धिष्ण्यं यया सा । अग्न्याधारस्थण्डिलमपि गम्यते । मुक्तान्वितानि मौक्तिकयुक्तानि शोणरत्नानि पद्मरागा यस्याः सा । तदानीमधिकारपरिग्रहकाले भरतेन भूम्याः करग्रहार्थं पाणिग्रहणाय बलिहरणाय लाजानामुत्करैः कीर्णा वह्नेः शिखेवार्चिरिवादर्शि दृष्टा । जनैरिति शेषः । पादुकायां मौक्तिकपद्मरागसंबन्धाल्लाजाकीर्णवह्निशिखात्वमुत्प्रेक्ष्यते ॥

पत्रला मणिगणैर्हिरण्मयी भासि रङ्गपतिरत्नपादुके ।
केलिमण्डपगतागतोचिता भूमिकेव गरुडेन कल्पिता ॥ ४५ ॥

**पत्रलेति** । हे रङ्गपतिरत्नपादुके, मणिगणै रत्ननिचयैः पत्रला पक्षयुक्ता हिरण्मयी त्वं भगवतः केलिमण्डपगतागतयोरुचिता गरुडेन कल्पिता परिगृहीता भूमिकेव वेषरचनेव भासि । वर्णसाम्यात् पक्षवत्त्वाच्च पादुकायां गरुडभूमिकात्वमुत्प्रेक्ष्यते ॥

उन्नतं बलिविरोधिनस्तदा पादुके पदसरोजमाश्रिता ।
मौक्तिकस्तबकमध्यसंमितं व्योमषट्पदतुलामलम्भयः ॥ ४६ ॥

**उन्नतमिति** । हे पादुके, उन्नतमुच्छ्रितं बलिविरोधिनस्त्रिविक्रमस्य पदसरोजमाश्रिता त्वं तदोर्ध्वदेशस्थितिकाले मौक्तिकस्तबकस्य मुक्तासमूहस्य । पुष्पगुच्छस्येत्यपि गम्यते । मध्येन मध्यभागेन संमितं परिच्छिन्नं व्योम आकाशं (कर्म) षट्पदतुलां भ्रमरसादृश्यमलम्भयः लम्भितवती प्रापितवती । लम्भयतेर्गत्यर्थत्वादणि कर्तुर्णौ कर्मत्वम् । उपमालंकारः ॥

कोमलाङ्गुलिनिवेशयन्त्रिका न्यस्तमौक्तिकमयूखदन्तुरा ।
मङ्गलानि वमसीव देहिनां रङ्गराजमणिपादुके स्वयम् ॥ ४७ ॥

**कोमलेति** । हे रङ्गराजस्य मणिपादुके, कोमलानामङ्गुलीनां निवेशार्थायां यन्त्रिकायां न्यस्तस्य मौक्तिकस्य मयूखेन दन्तुरोदग्रा स्वयं देहिनां प्राणिनां मङ्गलानि कल्या-

णानि वमसीवोद्गिरसीव। मङ्गलस्य सत्त्वमूलतया शुद्धत्वमवलम्ब्यैवमुत्प्रेक्ष्यते। 'दिशसि' इति पाठे हस्तेन मङ्गलदानमुत्प्रेक्ष्यते॥

पङ्कजासहचरस्य रङ्गिणः पादुके निजपदादनन्तरम्।
न्यस्यतस्त्वयि जगन्ति जायते नागभोगशयनं निरङ्कुशम्॥ ४८॥

**पङ्कजेति।** हे पादुके, पङ्कजासहचरस्य लक्ष्मीसहितस्य (संचरितवतः) अनन्तरं संचारानन्तरं त्वयि निजपदात् स्वचरणात् (उद्धृत्य) जगन्ति भुवनानि न्यस्यतो निक्षिपतो रक्षिणो नागभोगे शेषशय्यायां शयनं स्वापो निरङ्कुशमनिरोधं यथा तथा जायते संपद्यते। श्रीरङ्गनाथः पादुकायां प्रथमं चरणं निवेश्य संचारानन्तरं जगद्रक्षाधुरं निवेश्य श्रिया सह शेषशय्यायां सुखेन शेत इति भावः। पादुकायां भगवत्पादस्य जगतां च गतिशयनकालयोः पर्यायतो वृत्तेः पर्यायभेदोऽलंकारः॥

साधयन्ति मधुवैरिपादुके साधवः स्थिरमुपायमन्तिमम्।
त्वत्प्रवृत्तिविनिवर्तनोचितस्वप्रवृत्तिविनिवर्तनान्वितम्॥ ४९॥

**साधयन्तीति।** हे मधुवैरिणः पादुके, साधवः सन्तस्तव प्रवृत्तेः रक्षणोद्योगस्य विनिवर्तने निरोधे उचिता योग्या या स्वप्रवृत्तिरात्मोद्योगस्तस्य विनिवर्तनेन त्यागेनान्वितं युक्तं भरन्यासेन स्वरक्षणगोचरस्वव्यापारपरित्यागे पादुका प्रपन्नान् रक्षितुं स्वयमुद्युङ्क्ते। स्वरक्षणाय स्वप्रवृत्तौ तु पादुका तटस्था सती तूर्णीं तिष्ठतीति भावः। स्थिरं 'नेहाभिक्रमनाशोऽस्ति' इत्युक्तरीत्या प्रत्यूहनिवहमुद्धूय फलसाधनक्षममन्तिमं चरममुपायं प्रपदनरूपमोक्षोपायं साधयन्त्यनुतिष्ठन्ति। सन्तः स्वरक्षणोद्योगत्यागपूर्वकं त्वयि भरं न्यस्य कृतकृत्या भवन्ति। त्वमपि ताटस्थ्यं परित्यज्य तेषां रक्षाभरमङ्गीकरोषीति भावः। पादुकामाहात्म्याङ्गतया महापुरुषचारित्रवर्णनादुदात्तालंकारः॥

नन्दसूनुपदपद्ममिन्दिरापाणिपल्लवनिपीडनासहम्।
पादुके तव बलेन पर्यभूदूष्मलामुरगमौलिशर्कराम्॥ ५०॥

**नन्देति।** हे पादुके, इन्दिराया लक्ष्म्याः पाणिपल्लवस्य पल्लववत्सुकुमारस्य हस्तस्य निपीडनस्य संवाहनस्याप्यसहमसहिष्णुम्। एतेन सौकुमार्यातिशयो व्यज्यते। नन्दसूनोः श्रीकृष्णस्य पद्मसदृशं पदं तव बलेन शक्त्योष्मलामौष्ण्ययुक्तामुरगस्य कालियनागस्य मौलिं चूडारूपां शर्कराम्। मौलिरत्नमेव शर्करात्वेनाध्यवसीयते। शर्कराशब्दो मणिविशेषवाची। 'शर्कराखण्डविकृता उपलार्ककरांशयोः। शर्करान्वितदेशे च।' इति विश्वः। पर्यभूत् परिभूतवत्। स्वयमक्षतं सत् कालियशिरोमणीनभिभवतीत्यर्थः। मृदुलस्य शर्कराभिभावुकत्वोक्त्या व्याघातः। काव्यलिङ्गमलंकारः॥

मणिनिकरसमुत्थैः सर्ववर्णामयूखैः
प्रकटितशुभनादा पादुके रङ्गभर्तुः।

निखिलनिगमसूतेर्ब्रह्मणस्तत्सनाथा-
मवगमयसि हृद्यामर्धमात्रां चतुर्थीम् ॥ ५१ ॥

**मणीति** । निखिलानां निगमानां सूतेः प्रवक्तुः । 'तस्य वा एतस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः' इत्यादिश्रुतेः । ब्रह्मणः स्वरूपरूपगुणविभूतिभिरनवधिकवृद्धियुक्तस्य रङ्गभर्तुः । पादुके, इति संबोधनम् । मणिनिकरसमुत्थैर्मयूखैः (पक्षद्वयेऽपि) सर्ववर्णा शुक्लादिसमस्तरूपवती प्रकटितः शुभो नादो यस्याः सा । अन्यत्र लिङ्गविभक्तिविपरिणामेन प्रकटितशुभनादामिति कर्मधारयमाश्रित्यार्धमात्रां विशिनष्टि । ताल्वाद्यभिव्यक्तनादात्मिकामित्यर्थः । त्वं तेन परमपुरुषेण सनाथां विद्यमानदेवताकाम् । परमपूरुषदैवत्यामित्यर्थः । हृद्यां रम्यां हृदयदेशादुत्पन्नां च निखिलनिगमसूतेः सकलवेदकारणस्य ब्रह्मणो वेदस्य । प्रणवस्येत्यर्थः । 'ओंकारप्रभवा वेदाः' इत्युक्त्या प्रणवस्य सकलवेदकारणत्वम् । चतुर्थीमर्धमात्रां नादात्मिकामवगमयसि स्मारयसि । प्रणवमधिकृत्याकारादिवर्णत्रयस्य रूपविशेषान् देवताविशेषांश्चोक्त्वा श्रूयते यावसानेऽस्य चतुर्थ्यर्धमात्रा सा बिन्दुमती सर्ववर्णा पुरुषदैवत्येति । नादात्मिका चतुर्थ्यर्धमात्रा परमपुरुषदेवताका देवतायाः शुक्लादिसमस्तरूपवत्त्वेन तद्द्वारा शुक्लादिसमस्तरूपवतीति च तदर्थः । श्लेषायत्तसादृश्यमूला स्मृतिरलंकारः ॥

श्रुतिविषयगुणा त्वं पादुके दैत्यहन्तुः
सततगतिमनोज्ञा स्वेन धाम्ना ज्वलन्ती ।
जनितभुवनवृद्धिर्दृश्यसे स्थैर्ययुक्ता
विधृतनिखिलभूता वैजयन्तीव माला ॥ ५२ ॥

**श्रुतीति** । दैत्यहन्तुरसुरमर्दनस्य पादुके, [ इति ] संबुद्धिः । श्रुतीनां वेदानां विषयः प्रतिपाद्यो गुणो ज्ञानशक्त्यादिर्यस्याः सा । श्रोत्रग्राह्यशब्दरूपगुणयुक्ततया आकाशात्मतापि प्रतीयते । समुदायिसमुदाययोरभेदादेवमुक्तम् । सततं गत्या संचारेण मनोज्ञा । अविरतगमनत्वेन वायुत्वमपि । 'मातरिश्वा सदागतिः ।' इत्यमरः । स्वेन धाम्ना प्रभया ज्वलन्ती दीप्यमाना ज्वालायुक्ततया वह्नित्वमपि । जनिता भुवनानां जगतां वृद्धिः संपत् यया सा । भुवनशब्देन जलत्वमपि । तज्जनकतयाप्तन्मात्रापि । स्थैर्येण दृढचिन्तनया युक्ता स्थिराशब्देन भावप्रत्ययान्तेन पृथिवीत्वमपि । त्वं विधृतानि निखिलानि भूतान्याकाशवायुवह्निजलपृथिवीरूपाणि पञ्चभूतानि यया सा वैजयन्ती वैजयन्त्याख्या मालेव दृश्यसे । तदुक्तं श्रीविष्णुपुराणे—'पञ्चरूपा तु या माला वैजयन्ती गदाभृतः । सा भूतहेतुतन्मात्रा भूतमाला च वै द्विज ॥' इति ॥

रघुपतिपदसङ्गाद्राज्यखेदं त्यजन्ती
पुनरपि भवती स्वान् दर्शयन्ती विहारान् ।

अभिसमधित वृद्धिं हर्षकोलाहलानां
जनपदजनितानां ज्यायसा शिञ्जितेन ॥ ५३ ॥

**रघुपतीति** । हे पादुके, इत्युपस्कार्यम् । रघुपतेः (अरण्यवासात् प्रत्यागतस्य) रामस्य पदयोः सङ्गात् संसर्गात् राज्यखेदं कोसलजनपदाधिपत्यजनितदुःखं त्यजन्ती पुनरपि स्वान् विहारान् लीलासंचारान् दर्शयन्ती भवती ज्यायसा श्रेष्ठेन शिञ्जितेन नादेन जनपदेषु जनितानां हर्षसूचकानां कोलाहलानां कलकलशब्दानाम् । 'कोलाहलः कलकलः' इत्यमरः । वृद्धिमुपचयमभिसमधित संपादितवती संकल्पितवती । अभिसंपूर्वाद्धातोर्लुङ्प्रथमपुरुषैकवचनम् । प्राक्सिद्धस्य कोलाहलस्य शिञ्जितेनौल्बण्यकथनादनुगुणभेदोऽलंकारः । रघुपतिपदसङ्गस्याधिकारानधिकारयोस्तुल्यतायामप्यनधिकारे खेदत्यागः । अधिकजनपदहर्षजनकत्वमपि प्रकृष्यत इति भावः ॥

हरिचरणमुपपन्नं पादुके संश्रिताया-
मधिगतबहुशाखा(खं) वैभवं दर्शयन्त्याम् ।
अभजत विधिहस्तन्यस्तधर्मद्रवायां
त्वयि मुकुलसमृद्धिं मौक्तिकश्रीस्तदानीम् ॥ ५४ ॥

**हरीति** । हे पादुके, हरेस्त्रिविक्रमस्य चरणमुपपन्नमाश्रयत्वेन संश्रितायाम् । एतेन पादुकायाः कल्पलतात्वं व्यज्यते । अधिगताः प्रतिपाद्यतया प्राप्ता बह्वयः शाखा वेदभागाः । विटपादिवृद्धिरपि गम्यते । येन तद्वैभवं संपत्तिं दर्शयन्त्यां विधेर्ब्रह्मणो हस्तेन न्यस्तो निक्षिप्तो धर्मद्रवः पुण्यनिष्यन्दो यस्यास्तस्याम् । जलतया द्रवीभूतेन पुण्येन त्रिविक्रमचरणं क्षालितवान् ब्रह्मेति ईश्वरसंहितायाम्—'द्रवीभूतस्ततो धर्मो हरिभक्त्या महामुने । गृहीत्वा धर्मपानीयं पादं नाथस्य तुष्टये ॥ क्षालितं परया भक्त्या पाद्यार्घ्यादिभिरर्चितम् । तदम्बु पतितं दृष्ट्वा दधार शिरसा हरः ॥ पावनार्थं जटामध्ये योग्योऽस्मीत्यवधारणात् । वर्षायुतानथ बहून्न मुमोच तदा हरः ॥' त्वयि मौक्तिकानां श्रीः शोभा तदानीं मुकुलानां कुड्मलानां समृद्धिं संपदमभजत प्राप्तवती । लोके लता उपपन्नदानजलनिक्षेपादिवर्धिता शाखाद्यभिवृद्धिपूर्वकं पुष्पाणि जनयतीति भावः । कल्पलताव्यापारप्रतीतेः समासोक्तिः । तामालम्ब्य मौक्तिकेषु मुकुलत्वमुत्प्रेक्ष्यत इति संकरः ॥

कनकरुचिरकान्तिः कल्पिताशोकभारा
कृतपदकमलश्रीः क्रीडता माधवेन ।
दिशि दिशि सुमनोभिर्दर्शनीयानुभावा
सुरभिसमयलक्ष्मीं पादुके पुष्यसि त्वम् ॥ ५५ ॥

**कनकेति** । हे पादुके, कनकेन हेम्ना चम्पकवृक्षेण च रुचिरा कान्तिर्यस्याः सा । कल्पितो रचितोऽशोकभारः शोकसत्ताहानिः, अशोकपुष्पसंपत्तिश्च यया सा । क्रीडता खेलता विकसता च माधवेन श्रीरङ्गनाथेन वैशाखमासेन च कृता जनिता पादकमलयोः श्रीर्यस्याः सा । अन्यत्र कृतपदा विहितास्पदा कमलानां पद्मानां श्रीर्यस्याः सा । दिशि दिशि सर्वासु दिक्षु सुमनोभिर्देवैः पुष्पैश्च दर्शनीयः प्रेक्षणीयोऽनुभावः प्रभावो यस्याः सा त्वं सुरभिसमयस्य वसन्तकालस्य लक्ष्मीं शोभां पुष्यसि वर्धयसि । श्लेषानुप्राणितोपमालंकारः ॥

प्रणिहितपदपद्मा पादुके रङ्गभर्तुः
शुभतरगतिहेतुश्चारुमुक्ताप्रवाला ।
स्थिरपरिणतरागा शुद्धबोधानुबद्धां
स्वजनयसि मुनीनां त्वन्मयीं चित्तवृत्तिम् ॥ ५६ ॥

**प्रणिहितेति** । हे रङ्गभर्तुः पादुके, प्रणिहितं सावधानतया न्यस्तं पदपद्मं भगवच्चरणारविन्दं यस्याः सा । शुभतराया अत्यन्तभव्याया गतेः संचारस्य परलोकावाप्तेश्च हेतुः । चारुमुक्ताप्रवाला रम्यमौक्तिकविद्रुमयुक्ता, अन्यत्र चारु यथा तथा मुक्ताः प्राप्तमोक्षाः आप्रबालाः बालानभिव्याप्य यया सा । बवयोरभेदः । त्वं स्थिरं यथा तथा परिणतो जातो रागः प्रेमा यस्याः सा । पक्षे पद्मरागकिरणै रक्तवर्णा शुद्धेन संशयादिरहितेन बोधेन ज्ञानेनानुबद्धां सहिताम् । पादुकापक्षे तु शुद्धबोधैरकलङ्कितबुद्धिभिर्भरतादिभिरनुबन्धवतीं त्वन्मयीं त्वदेकगोचरां मुनीनां योगिनां चित्तवृत्तिं मनोव्यापारं भक्तिप्रपत्त्यात्मकं स्वजनयसि स्वजनं करोषि । तत्सदृशी भवसीत्यर्थः । श्लेषानुप्राणितोपमालंकारः ॥

विरचितनवभागा रत्नभेदैर्विचित्रै-
र्विविधविततरेखा व्यक्तसीमाविभागा ।
हरिचरणसरोजं प्रेप्सतामर्चनीयं
प्रथयसि नवनाभं मण्डलं पादुके त्वम् ॥ ५७ ॥

**विरचितेति** । हे पादुके, विचित्रैर्नानारूपै रत्नभेदैः पद्मरागादिनवरत्नैर्विरचिता नवभागा नवांशा यस्याः सा । विविधाभिर्विस्तृताभी रेखाभिर्लेखाभिर्वनराजिभिश्च व्यक्तः स्फुटः सीमाविभागोऽवधिपृथग्भावो यस्याः सा त्वं हरेश्चरणसरोजं प्रेप्सतां प्राप्तुमिच्छतामर्चनीयं पूज्यम् । 'कर्मभूमिं जयं स्वर्गमपवर्गं च गच्छताम्' इत्युक्त्या कर्मभूमावेव धर्मानुष्ठानसंभवादिति भावः । नव एकोनदशसंख्या नाभा नाभेश्चक्रवर्तिनोऽपत्यानि । शिवादित्वादण् तस्येदमिति वा । यस्य तम् । नाभिसंज्ञकचक्रवर्तिगोत्रप्रसूतैर्नवधा कृतमित्यर्थः । मण्डलं भारताख्यं भूभागम् । श्रीविष्णुपुराणे—'हिमाह्वयं तु वै

वर्षं नाभेरासीन्महात्मनः।' इति नाभिमुपक्रम्य 'तस्यर्षभोऽभवत्पुत्रः' इत्यादिना तत्सन्ततिभिस्तैरिह भारतं वर्षं नवभेदं च कृतमित्युक्तम्। 'भारतस्यास्य वर्षस्य नवभेदान्निशामय। इन्द्रद्वीपः केशभूश्च ताम्रपर्णो गभस्तिमान्। नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः। अयं तु नवमस्तेषां द्वीपः सागरसंयुतः॥' इति नः प्रख्यापयसीत्यर्थः उपमालंकारः॥

परिणतगुणजाला पङ्क्तिभिर्मौक्तिकानां
बहुविधमणिरश्मिग्रन्थबन्धाभिरामा।
रघुपतिपदरक्षे राजवाह्यस्य कुम्भे
कलितरुचिरभूस्त्वं कापि नक्षत्रमाला॥ ५८॥

**परिणतेति।** हे रघुपतिपदरक्षे, मौक्तिकानां पङ्क्तिभिः परिणतं जातं गुणजालमुत्कर्षबाहुल्यमेव सूत्रसमूहो यस्याः सा। बहुविधानां मणीनां रश्मीनां किरणानां ग्रन्थिबन्धो निबिडसंवलनमेव रज्जुग्रन्थिबन्धनं तेनाभिरामा राजवाह्यस्य शत्रुंजयस्य कुम्भे मस्तके कलिता वितता रुचिर्दीप्तिर्यस्याः सा। कापि विलक्षणा नक्षत्रमाला हारभेदः अभूरसि। 'सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिका(कैः)।' इति हारभेदप्रकरणेऽमरः। श्लेषानुप्राणितं रूपकमलंकारः॥

चरितनिखिलवृत्तिश्चारुपद्मासनस्था
गुणनिबिडितमुक्तापङ्क्तिबद्धाक्षमाला।
सविधमधिवसन्ती पादुके रङ्गभर्तु-
श्चरणकमलमन्तर्बिम्बितं ध्यायसीव॥ ५९॥

**चरितेति।** हे पादुके, चरिता कृता निखिलानां वृत्तिर्जीवनं यया सा, अन्यत्र चरिता अनुष्ठिता निखिला वृत्तिर्मैत्राद्या ऋतंभराद्या च मनोवृत्तिर्यया सा। चारुणि पद्मासने पद्मपीठे तिष्ठतीति तथोक्ता गुणैरुत्कर्षैः सूत्रैश्च निबिडितानां मुक्तानां मौक्तिकानां पङ्क्त्या आवल्या बद्धा वशीकृता अक्षमाला सेवकानामिन्द्रियावलिरेव जपमाला यस्याः सा। रङ्गभर्तुः श्रीरङ्गनाथस्य सविधं समीपमधिवसन्ती अध्यासीना। 'उपान्वध्याङ्वसः १।४।४८।' इति वसतेराधारस्य कर्मत्वम्। अन्तर्गर्भदेशे बिम्बितं प्रतिफलितमन्तःकरणे ध्यानेन विषयीकृतमित्यपि। चरणकमलं ध्यायसीव निरन्तरं चिन्तयसीव। श्लेषानुप्राणितोत्प्रेक्षालंकारः॥

अनुपधि परिरक्षन्नेकपुत्राभिमाना-
द्भुवनमिदमशेषं पादुके रङ्गनाथः।
निजपदनिहितायां देवि तिष्ठन्व्रजन्वा
त्वयि निहितभरोऽभूत् किं पुनः स्वापमृच्छन्॥ ६०॥

**अनुपधीति** । हे पादुके, अशेषं समस्तमिदं भुवनं जगत् एकपुत्रे योऽभिमानः (पुत्रवतः) तादृशस्नेहेनानुपधि कैतवरहितं यथा तथा। 'उपधिश्छद्मकैतवे' इत्यमरः। परिरक्षन् पालयन् रङ्गनाथः तिष्ठन् निवृत्तगतिकः, व्रजन् गच्छन् सन् त्वयि निहितो भरः स्वभारो राज्यभारश्च येन सः। अभूत्। स्वापं निद्रां ऋच्छन् गच्छन् त्वयि निहितभरोऽभूदिति किं पुनः। कैमुत्यसिद्धमित्यर्थः। जागरूकस्य त्वयि निहितभरत्वे निद्रालोर्न वक्तव्यमित्यर्थः। काव्यार्थापत्तिरलंकारः॥

त्वरितमुपगतानां श्रीमतो रङ्गभर्तु-
स्त्वदुपहितपदस्य स्वैरयात्रोत्सवेषु ।
मुखरयति दिगन्तान्मुह्यतां त्वत्प्रशस्तौ
विहितकुसुमवृष्टिर्व्यावघोषी सुराणाम् ॥ ६१ ॥

**त्वरितमिति** । हे पादुके, इत्युपस्कार्यम्। त्वय्युपहितं पदं चरणं येन तस्य श्रीमतो रङ्गभर्तुः स्वैरयात्रोत्सवेषु स्वेच्छासंचारमहेषु त्वरितं शीघ्रमुपगतानामागतानां तव प्रशस्तौ प्रशंसायां मुह्यतामत्यन्तानुरक्तानां सुराणां विहिता कृता कुसुमवृष्टिः पुष्पवृष्टिर्यया सा व्यावघोषी परस्परमुद्घोषः। व्यावपूर्वान् घुषेः कर्मव्यतिहारे णच्प्रत्ययः। 'णचः स्त्रियामञ् ५।४।१४' इत्यजन्तः। अजन्तत्वात् ङीप्। दिगन्तान् मुखरयति प्रतिध्वनिभरितान् करोति। वर्णनानुदात्तमलंकारः॥

मनसि नियमयुक्ते वर्तमाना मुनीनां
प्रतिपदमुपयान्ती भावनीयक्रमत्वम् ।
श्रुतिरिव निजशब्दैः पादुके रङ्गभर्तुः
पदमनिरगम्यं व्यङ्क्तुमर्हा त्वमेव ॥ ६२ ॥

**मनसीति** । हे पादुके, नियमयुक्तेऽवहिते मुनीनां योगिनां मनसि वर्तमाना। चिन्त्यमानेत्यर्थः। प्रतिपदं प्रतिचरणविक्षेपं प्रतिसुप्तिङन्तं च भावनीयो दर्शनीयः क्रमः आनुपूर्वी यस्याः सा। अन्यत्र भावनीयो गणनीयः क्रमः 'इषेत्वा, त्वोर्जे, ऊर्जेत्वा' इत्यादिक्रमेण गृहीतमुक्तरीत्या अध्ययनभेदो यस्याः सा। तस्या भावमुपयान्ती भजमाना त्वमेव श्रुतिरिव वेद इव अनितरगम्यं त्वदतिरिक्तानामप्राप्यं श्रुतिव्यतिरिक्तप्रमाणागोचरं च रङ्गभर्तुः पदं चरणम्। स्वरूपमित्यपि। निजशब्दैरात्मीयनादैः, आत्मीयनारायणादिपदैश्च व्यङ्क्तुमवगमयितुमर्हा योग्या पादुकानादश्रवणाद्भगवदागमनं ज्ञातुं शक्यमिति भावः। श्लेषानुप्राणितोपमालंकारः॥

अविकलनिजचन्द्रालोकसंदर्शनीया
प्रतिकलमुपभोग्या पादुके रङ्गभर्तुः ।

मुकुलयितुमशेषं मौक्तिकज्योत्स्नया नः
प्रभवसि तिमिरौघं पौर्णमासी निशेव ॥ ६३ ॥

**अविकलेति** । हे रङ्गभर्तुः पादुके, अविकलस्य पूर्णस्य निजस्यात्मीयस्य चन्द्रस्य सुवर्णस्य शशिनश्चालोकेन द्योतेन संदर्शनीया प्रेक्षणीया प्रतिकलं क्षणे क्षणे प्रतीन्दुभागं चोपभोग्या अनुभवेन सुखजनिका त्वं पौर्णमासी पूर्णिमासंबन्धिनी निशा रात्रिरिव मौक्तिकानां ज्योत्स्नया, अन्यत्र मौक्तिकवच्छुद्धया चन्द्रिकया नोऽस्माकमशेषं समस्तं तिमिरौघमज्ञानसमूहम्, अन्यत्रान्धकारनिवहं मुकुलयितुं प्रभवसि शक्तासि । पूर्ववदुपमा ॥

हंसश्रेणीपरिचितगतिर्हारिणी कल्मषाणां
मौलौ शम्भोः स्थितिमधिगता मुग्धचन्द्रानुबद्धा ।
राज्ञामेका रघुकुलभुवां सम्यगुत्तारिका त्वं
काले तस्मिन्क्षितिमधिगता पादुके जाह्नवीव ॥ ६४ ॥

**हंसश्रेणीति** । हे पादुके, हंसानां मानसौकसां योगिनां च । 'हंसो विहङ्गभेदे स्यात् हंसे विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मनि' इति विश्वः । श्रेण्या समूहेन पङ्क्त्या च परिचिता सेविता गतिः संचारोऽन्यत्र प्रवाहो यस्याः सा । कल्मषाणां पापानां शरीरमलानां च हारिणी निरासिका शम्भोः शिवस्य मौलौ शिरसि स्थितिमवस्थानमधिगता प्राप्ता मुग्धेन सुन्दरेण चन्द्रेण हेम्ना अनुबद्धा युक्ता, अन्यत्र मुग्धेन बालेन चन्द्रेण शिवशिरःस्थेनानुबद्धा संगता रघुकुलभुवां राज्ञामिक्ष्वाकुप्रभृतीनाम्, अन्यत्र सगरसुतानामेका । असहाया सतीति यावत् । सम्यक् यथावत् उत्तारिकोत्कृष्टलोकप्रापिका त्वं जाह्नवीव गङ्गेव तस्मिन् काले सत्यलोकादयोध्यागमनसमये, अन्यत्र भगीरथतपःकाले क्षितिं भूमिमधिगता प्राप्ता । पूर्ववदुपमा ॥

स्वच्छाकारां श्रुतिसुरभितां स्वादुभावोपपन्नां
मार्गे मार्गे महितविभवां पादुके तीर्थभेदैः ।
शीतस्पर्शां श्रमविनयिनीं गाहते मन्दमन्दं
क्रीडालोलः कमलनिलयादत्तहस्तो युवा त्वाम् ॥ ६५ ॥

**स्वच्छेति** । हे पादुके, कमलनिलयया श्रिया दत्तहस्तो युवा समर्पितकरः श्रीरङ्गनाथः स्वच्छो निर्मल आकारो यस्यास्ताम् । श्रुत्या वेदेन सुरभितां सौरभ्यवतीम् । वेदवेद्यामिति यावत् । कावेर्या अपि नर्मदे सिन्धुकावेरीति श्रुतिबोध्यत्वात् । स्वादुभावेन, अन्यत्र माधुर्येणोपपन्नां युक्तां मार्गे मार्गे सरणिषु तीर्थभेदैः पराङ्कुशपरकालादिभिः, अन्यत्र जलावतारविशेषैर्महितो बहुमतो विभवः संपत्तिर्यस्यास्ताम् । श्रमस्य संसारजनितायाः श्रान्तेः, अन्यत्र घर्मजनितायाः । विनयिनीमपनोदिकां त्वाम् ।

कावेरीमित्यपि गम्यते । क्रीडायां लीलासंचारे, अन्यत्र जलक्रीडायां लोलः सतृष्णः सन् मन्दमन्दं शनैः शनैर्गाहते उपादत्ते, अन्यत्र मज्जनाय विशति । विशेषणसामर्थ्यात् श्रुतिवोध्यमहानदीस्नानप्रतीतेः समासोक्तिः ॥

अभ्यस्यन्त्योः क्रममनुपमं रङ्गभर्तुर्विहारे
स्थाने स्थाने स्वरपरिणतिं लम्भितस्तत्तदर्हाम् ।
पर्यायेण प्रहितपदयोः पादुके श्रुत्युदारः
शिञ्जानादः स्फुरति युवयोः श्रृङ्खलावन्धरम्यः ॥ ६६ ॥

**अभ्यस्यन्त्योरिति** । हे पादुके, संवोधनद्विवचनम् । रङ्गभर्तुर्विहारे संचारेऽनुपमं निस्तुलं क्रमं गत्यानु[पू]र्वीम्, अन्यत्र ग्रस्तमुक्तरीत्या श्रुत्युच्चारणम् । अभ्यस्यन्त्योः पुनः पुनः कुर्वन्त्योः पर्यायेणानुपूर्व्या प्रहिते प्रयुक्ते पदे सुप्तिङन्तादिशब्दौ याभ्यां तयोर्युवयोः स्थाने स्थाने तत्तत्प्रदेशेषु तस्य तस्यार्हां योग्यां स्वरपरिणतिं नादपरिणामं लम्भितः प्रापितो निम्नोन्नतप्रदेशेषु । नादस्य तरतमभावेन वैचित्र्यादिति भावः । अन्यत्र स्थाने स्थानेऽनुदात्तादिस्वरयुक्तपदेषु तस्य तस्यार्हां योग्यां स्वरपरिणतिं स्वरितादिस्वरभेदं लम्भितः । यथा—'ऊर्जे त्वा वायवस्थ' इत्यत्र पदकालेऽनुदात्तस्य त्वापदस्य क्रमकाले स्वरितत्वम् । 'उच्चात् परोऽनुदात्तो यः स्वरितत्वमाप्नुयात्' इति संहितायां स्वरितत्वं विधीयते । 'अग्ने दुर्द्धृगद्य किं शिलवन्ये'त्यत्र पदकालेऽनुदात्तानाम्, संहिताकाले प्रचयत्वम् । स्वरितात्संहितायामनुदात्तानां प्रचय उदात्तश्रुतिरिति विहितम् । श्रुतीनां श्रवसामुदारो भोग्यः, अन्यत्र श्रुतौ वेदे उदार उत्कृष्टः शिञ्जानादोऽन्तर्मणिरवः श्रृङ्खलावन्धवत् शृङ्खला यथा बद्धमुक्तरीत्या बध्यते तथा ग्रथनेन रम्यः । क्रमाध्ययनमपि तथा मनोज्ञमित्यर्थः । स्फुरति । उत्सवकाले चर्चारूपद्विकर्तृकश्रुत्यध्ययनप्रतीतेः समासोक्तिरलंकारः ॥

आसन्नानां दिवसमपुनर्नक्तमापादयन्ती
स्फीतालोका मणिभिरभितः प्राणिनामस्तदोषा ।
प्रह्वैर्जुष्टा विबुधनिवहैः पादुके रङ्गभर्तुः
पादाम्भोजे दिशति भवती पूर्वसंध्येव कान्तिम् ॥ ६७ ॥

**आसन्नानामिति** । हे पादुके, आसन्नानां सेवकानां संनिहितानां च प्राणिनां मेरुभूभागान्तरस्थानामसंनिहितानां दिवसत्वभावाद्दिवसं दिनमपुनर्नक्तं पुना रात्र्यागमनशून्यं यथा तथा आपादयन्ती संपादयन्ती मणिभी रत्नैरभितः स्फीतः पूर्ण आलोक उद्द्योतो यस्याः सा । अस्तदोषा हेयप्रत्यनीकभूता, अन्यत्र अस्ता क्षिप्ता दोषा रात्रिर्यया सा । तदास्तदोषा इति विसर्गान्ततया विपरिणामः । अव्ययस्योपसर्जनत्वेन सुपो लुगभावात् 'अव्ययादाप् सुपः' इत्यत्र विहितविशेषणाश्रयणात् । प्रह्वैर्नम्रैर्विबुधानां

देवानां विदुषां च निवहैर्जुष्टा सेविता भवती पूर्वसंध्येव रङ्गभर्तुः पाद एवाम्भोजे कान्ति शोभां दिशति ददाति । श्लेषानुप्राणितोपमालंकारः ॥

रम्यालोका ललितगमना पद्मरागाधरोष्ठी
मध्ये क्षामा मणिवलयिनी मौक्तिकव्यक्तहासा ।
श्यामा नित्यं हरितमणिभिः शार्ङ्गिणः पादरक्षे
मन्ये धातुर्भवसि महिलानिर्मितौ मातृका त्वम् ॥ ६८ ॥

**रम्येति** । हे शार्ङ्गिणः पादरक्षे, रम्य आलोक उद्द्योतो वीक्षणं च यस्याः सा ललितं गमनं संचारो यस्याः सा । पद्मरागः कुरुविन्द एवाधरोष्ठो यस्याः सा । अन्यत्र पद्मरागसदृशाधरयुक्ता मध्ये क्षामा कृशा, अन्यत्र तनुविलग्ना । मणिवलयो रत्ननिचयोऽस्यास्तीति तथोक्ता । अन्यत्र मणिमयकटकयुक्ता । मौक्तिकैर्मुक्तावच्च व्यक्तः स्फुटो हासो विकासो हसितं च यस्याः सा । हरितमणिभिर्मरकतैर्नित्यं सदा श्यामा श्यामलवर्णयुक्ता । युवतिरित्यपि गम्यते । त्वं धातुर्ब्रह्मणो महिलानिर्मितौ स्त्रीसृष्टौ मातृका प्रथमप्रकृतिर्भवसि । ब्रह्मा त्वां मातृकां दृष्ट्वा स्त्रीरत्नानि प्रथमं ससर्जेति भावः । मन्य इत्युत्प्रेक्षा श्लेषानुप्राणिता ॥

स्थित्वा पूर्वं क्वचन भवती भद्रपीठस्य मध्ये
रत्नोदञ्चत्किरणनिकरा रङ्गिणः पादरक्षे ।
व्याकीर्णानां नृपतिविरहाद्देवि वर्णाश्रमाणां
नूनं सीमाविभजनसहं निर्ममे सूत्रपातम् ॥ ६९ ॥

**स्थित्वेति** । हे रङ्गिणः पादरक्षे, रत्नैरुदञ्चन्तः किरणनिचया यस्याः सा भवती राज्ञी । शिल्पी, ऋषयश्च व्यज्यन्ते । पूर्वं क्वचन समये कोसलदेशाधिपत्यकाले भद्रपीठस्य सिंहासनस्य परिशुद्धस्य विष्टरस्य स्थिरस्योन्नतप्रदेशस्य च मध्ये विविक्ते रम्ये च देशे स्थित्वा नृपते राज्ञः पुरुषश्रेष्ठस्य । विरहादभावात् व्याकीर्णानां परस्परं संकीर्णानां वर्णानां ब्राह्मणादीनां शुक्लादीनां चाश्रमाणां ब्रह्मचर्यादीनां ब्राह्मणादिगृहाणां च सीमाविभजनस्य मर्यादास्थापनस्यावधिविभागस्य च सहं योग्यं सूत्रपातं व्यवस्थापनं शास्त्रकरणं तन्तुनिवेशनं च । 'सूत्रं तु सूचनं ग्रन्थे सूत्रं तन्तुव्यवस्थयोः ॥' इति विश्वः । निर्ममे निर्मितवती । नूनमित्युत्प्रेक्षा समासोक्तिसंकीर्णा । राजासिंहासने स्थित्वा आज्ञया वर्णाश्रमव्यवस्थां करोति ऋषयस्तु प्राचीना गृहदर्भासने स्थित्वा बुद्ध्या वर्णाश्रमधर्मव्यवस्थापकानि सूत्राणि प्रणयन्ति । शिल्पी तु दृढे क्वचिदासने स्थित्वा परस्परा संकीर्णवर्ण चित्रविरचनयासंकीर्णं गृहनिर्माणतन्तुं निवेशयतीति त्रयोऽर्था विवेचनीयाः पक्षत्रयेऽपि । परितः प्रसृताः किरणाः सर्वदिग्व्याप्तज्ञानत्वेन तन्तुसंतानत्वेन च संभाव्यन्ते ॥

मातर्मञ्जुस्वनपरिणतप्रार्थनावाक्यपूर्वं
निक्षिप्तायां त्वयि चरणयोः पादुके रङ्गभर्तुः ।
त्वय्यायत्तं किमपि कुशलं जानतीनां प्रजानां
पर्याप्तं तन्न खलु न भवत्यात्मनिक्षेपकृत्यम् ॥ ७० ॥

**मातरिति** । हे मातः पादुके, त्वयि रङ्गभर्तुश्चरणयोर्मञ्जुस्वनेन मञ्जुनादेन परिणतं प्रयुक्तं प्रार्थनावाक्यं स्वामिन्, पादुकामारोहेति सविनयवाक्यं स्वामिन् मद्रक्षाभरमङ्गीकुरुष्वेति याञ्चोक्तिश्च गम्यते । पूर्वं प्रथमं यस्मिन् कर्मणि तद्यथा भवति तथा निक्षिप्तायां समर्पितायां सत्यां गोप्तृत्ववरणादिकमपि गम्यते । किमपि कुशलं श्रीरङ्गनाथचरणरूपं संसारनिवृत्तिरूपं च त्वय्यायत्तं त्वदधीनगतिकतया जानतीनामवगच्छन्तीनां प्रजानां तत्त्वयानुष्ठितमात्मनिक्षेपकृत्यं भगवत्प्राप्तिरूपं प्रपत्त्यनुष्ठानं च पर्याप्तं भवति । न नेति नञ्द्वयस्य प्रकृतार्थोपादकतया तदेवालमित्यर्थः । अर्चकेन संप्रार्थनावाक्यपूर्वकं पादुकायां समर्पितायामधिरुह्य भगवति निर्गते तं प्रणम्य प्रजाः कृतार्था भवन्तीति भावः । त्वद्भक्तानां मोक्षाय पृथक् प्रपत्तिर्नानुष्ठेयेति प्रतीतेः समासोक्तिः ॥ 'मां मदीयं च निखिलं चेतनाचेतनात्मकम् । स्वकैंकर्योपकरणं वरद स्वीकुरु स्वयम् ॥' इत्येवमाकारकप्रार्थनायुक्तायां त्वत्प्रत्तौ तेषामप्यन्तर्भावादिति भावः । तथाहि स्मर्यते— 'पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥' इत्याचार्यप्रपत्तिरेव तदीयानामप्यवगमे हेतुः । तदीयतानुसंधानमात्रं शिष्यकृत्यमिति चरमोपायवेदिन उपदिशन्ति । पादुकाकृतप्रपदनस्यैव कारणान्तरस्य संनिधानेन शिष्यापवर्गस्य कार्यस्य सौकर्यवर्णनात्समाधिरलंकारः । 'समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः ।' इति लक्षणम् ॥

नित्यं रङ्गक्षितिपतिपदन्यासधन्यात्मनस्ते
शिञ्जानादं श्रवणमधुरं पादुके दीर्घयन्तः ।
काले तस्मिन्करणविगमक्लेशजातं विहन्युः
संतापं नस्तरुणतुलसीगन्धिनो गन्धवाहाः ॥ ७१ ॥

**नित्यमिति** । हे पादुके, नित्यं सदा रङ्गक्षितिपतेः पदस्य चरणस्य न्यासेन धन्यात्मनः कृतार्थशरीरायास्ते तव श्रवणानां कर्णानां मधुरं स्वादु शिञ्जानादमन्तर्मणिरवं दीर्घयन्तो विस्तारयन्तः । अनुकूलवातसाचिव्येन शब्दस्य बहुदूरव्यापनादिति भावः । तरुणतुलस्याः सुकुमारतुलसीपल्लवस्य गन्धः सौरभ्यमेषामस्तीति तथोक्ता गन्धवाहा मन्दानिलाः पादुकासंसर्गिणस्तस्मिन् काले चरमसमये नोऽस्माकं करणानां चक्षुरादीनां विगमो नाशस्तस्य क्लेशेन जातमुत्पन्नं संतापं पीडां विहन्युः शमयेयुः । धर्मादिक्लिष्टकरणानां मन्दानिलः क्लान्त्युपशमहेतुरिति भावः । प्रेयोऽलंकारः ॥

संसाराध्वश्रमपरिणतं संश्रितानां जनानां
तापं सद्यः शमयितुमलं शार्ङ्गिणः पादुके त्वम् ।
चन्द्रापीडे प्रणमति नवां चन्द्रिकामापिबद्भि-
र्धारानिर्यत्सलिलकणिकाशीकरैश्चन्द्रकान्तैः ॥ ७२ ॥

**संसारेति** । हे शार्ङ्गिणः पादुके, त्वं चन्द्रापीडे शशिशेखरे शिवे प्रणमति सति नवां चन्द्रिकां शिवचूडाचन्द्रकौमुदीमापिबद्भिर्गृह्णद्भिः अत एव धारारूपेण निर्यन्तीभिर्गलन्तीभिः सलिलकणिकाभिर्जलबिन्दुभिः शीकरैः सान्द्रैश्चन्द्रकान्तैर्मणिभिस्त्वयि प्रत्युप्तैः संश्रितानां सेवकानां जनानां प्राणिनां संसाराध्वनि भवमार्गे । मरुभूमित्वं व्यज्यते । जातेन श्रमेण परिणतमुत्पन्नं तापमाध्यात्मिकादिरूपं सद्यस्तदानीमेव शमयितुमपनेतुमलं शक्ता । सलिलकणिकासंसर्गस्य तापापनोदनाभिप्रायगर्भत्वात्परिकरालंकारः । पदार्थहेतुकं काव्यलिङ्गमित्येके ॥

वज्रोपेतां बलभिदुपलश्यामलां मञ्जुघोषां
मुक्तासारां मधुरचपलां वीक्ष्य विष्णोः पदे त्वाम् ।
हर्षोत्कर्षादुपरि चलयन्पादुके चन्द्रकान्तं
धत्ते नित्यं धृतघनरुचिस्ताण्डवं नीलकण्ठः ॥ ७३ ॥

**वज्रोपेतामिति** । हे पादुके, धृता घनरुचिः सान्द्रप्रेमा येन सः, अन्यत्र धृता घने मेघे रुचिः प्रीतिर्येन स नीलकण्ठः शिवः । मयूरोऽपि व्यज्यते । वज्रेण हीरेण, अन्यत्र अशनिनोपेतां युक्तां बलभिदुपलेनेन्द्रनीलेन, अन्यत्रेन्द्रनीलवत् श्यामलां नीलवर्णयुक्तां मञ्जु घोषो नादः स्तनितं च यस्यास्तां मुक्ताभिः सारामुत्कृष्टाम्, अन्यत्र मुक्ता विसृष्टा आसारा धारासंपाता यस्यास्ताम् । 'धारासंपात आसारः' इत्यमरः । मधुरां रम्यां चपलां गतिकाले लोलाम्, अन्यत्र मधुरा चपला विद्युत् । 'तडित् सौदामिनी विद्युच्चञ्चला चपला अपि ।' इत्यमरः । यस्यास्तां त्वाम् । कादम्बिनीमिति व्यज्यते । विष्णोः पदे श्रीरङ्गनाथचरणे आकाशे च वीक्ष्य हर्षस्य संतोषस्योत्कर्षेणोपरि ऊर्ध्वभागे चान्तमग्रं चलयन् मन्दमान्दोलयन् सन् नित्यं सदा ताण्डवं नर्तनं धत्ते करोतीत्यर्थः । मेघमालां वीक्ष्य शिखी नृत्यति त्वां वीक्ष्य शिवो नृत्यतीत्यर्थः । श्लेषेण शिवकेकिनोः कादम्बिनीपादुकयोश्च भेदाध्यवसायात् श्लेषानुप्राणितं रूपकमलंकारः । कादम्बिनीवाचकाभावादेकदेशविवर्ति ॥

श्रीरङ्गेन्दोश्चरणकमलं तादृशं धारयन्ती
काले काले सह कमलया क्लृप्तयात्रोत्सवश्रीः ।

गत्वा गत्वा स्वयमनुगृहं द्वारमुन्निद्रनादा
पौरान्नित्यं किमपि कुशलं पादुके पृच्छसीव॥ ७४ ॥

**श्रीरङ्गेन्दोरिति** । हे पादुके, काले काले उचितसमयेषु कमलया श्रिया । परस्त्रिया कयाचनेत्यपि गम्यते । सह सार्धं कॢप्ता विहिता यात्रोत्सवस्य चैत्राद्युत्सवस्य । मृगयाविहारश्च गम्यते । श्रीः शोभा यया सा । तादृशं त्वदेकधार्यं श्रीरङ्गेन्दोश्चरणकमलं पद्मसदृशपदम् । चन्द्रसंबन्धिहरिणमित्यपि । 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगप्रभेदे कमलः कमला श्रीवरस्त्रियोः ॥' इति सर्वत्रापि विश्वः । धारयन्ती वहन्ती । भटैर्वाहयन्तीत्यपि गम्यते । राजानो मृगयायां मृगान् गृहीत्वा अटन्तीति भावः । स्वयमनुगृहद्वारं पौराणां प्रतिभवनप्रतिहारं गत्वा गत्वोन्निद्रः प्रबुद्धो नादो मृदुभाषणमित्यपि गम्यते । यस्याः सा सती पौरान् श्रीरङ्गनगरवासिनो नित्यं किमपि 'पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च' इति बहुप्रकारत्वात् सकृदुक्त्या बोधयितुमशक्यं कुशलं पृच्छसीव । श्लेषानुप्राणितेयमुत्प्रेक्षा ॥ 'संग्रामात्पुनरागत्य कुञ्जरेण रथेन वा । पौरान् स्वजनवन्नित्यं कुशलं परिपृच्छति ॥' इति रामवृत्तान्तप्रतीतेः समासोक्तिरपि ॥

चतुरविहारिणीं रुचिरपक्षरुचिं भवतीं
मनसिजसायकासनगुणोचितमञ्जुरवाम् ।
अनुपदमाद्रियेमहि महेन्द्रशिलामहितां
हरिचरणारविन्दमकरन्दमधुव्रतिकाम् ॥ ७५ ॥

**चतुरेति** । हे पादुके, इत्युपस्कार्यम् । चतुरश्चमत्कारो विहारो लीलासंचारः, अन्यत्र भ्रमणमस्या अस्तीति तथोक्ताम् । रुचिरा रम्या पक्षयोः पार्श्वयोः, अन्यत्र गरुतो रुचिर्यस्यास्ताम् । मनसिजस्य कामस्य सायकासनस्य चापस्य गुणस्य मौर्व्या एवोचितो योग्यो मञ्जुरवो मञ्जुनादः, अन्यत्र झंकारो यस्यास्ताम् । भ्रमराणामेव कामधनुर्गुणत्वादिति भावः । महेन्द्रशिलाभिरिन्द्रनीलैरिन्द्रनीलवच्च महिताम् । रुचिरामिति पाठस्तु कथितपदत्वादनादरणीयः । भवतीं हरेश्चरणयोरेवारविन्दयोः सुखस्पर्शादिरूपगुणस्यैव मकरन्दस्य मधुनो भोग्यत्वात् मकरन्दत्वेन निगिरणम् । भोक्त्रीं मधुव्रतिकां भृङ्गीमनुपदं पदे पदे आद्रियेमहि बहु मन्यामहे । श्लेषानुप्राणितेयमुत्प्रेक्षा ॥

कनकरुचा जटामुरगमौलिमणीन् मणिभि-
स्त्रिदिवतरङ्गिणीं सरलमौक्तिकदीधितिभिः ।
कुटिलतया क्वचिच्छशिकलामधरीकुरुषे
मुररिपुपादुके पुरभिदः शिरसा विधृता ॥ ७६ ॥

**कनकेति** । हे मुररिपुपादुके, त्वं पुरभिदः शिवस्य शिरसा विधृता सती कनकस्य

स्वशरीरहेम्नो रुचा दीप्त्या जटाम् । शिवस्य श्लिष्टकेशत्वात् जटायाः पिशङ्गवर्णत्वात् मणिभिः (स्वगात्रे प्रत्युप्तैः) रत्नैरुरगस्य (शिवशिरोभूषणस्य) सर्पस्य मौलिमणीन् शिरोरत्नानि तरलमौक्तिकानां नायकमुक्ताफलानां दीधितिभिस्त्रिदिवतरङ्गिणीं गङ्गां क्वचित् मध्यदेशे कुटिलतया वक्रभावेन शशिकलां शिवचूडाचन्द्रलेखां चाधरीकुरुषे अधःस्थितां करोषि । गुणोत्कर्षेण न्यक्करोषीत्यपि । अनेकेषामेकक्रियावर्णनात्तुल्ययोगिता । उपमानानामुपमेयैस्तिरस्कारोक्तेः प्रतीपभेदश्च । तयोः संकरः । एकस्याः सर्वभूषणात्मकत्ववर्णनात् तेभ्यो व्यतिरेकश्च ॥

काले तल्पभुजङ्गमस्य भजतः काष्ठां गतां शेषतां
मूर्तिं कामपि वेद्मि रङ्गनृपतेश्चित्रां पदत्रद्वयीम् ।
सेवानम्रसुरासुरेन्द्रमकुटीशेषापटीसंगमे
मुक्ताचन्द्रिकयेव या प्रथयते निर्मोकियोगं पुनः ॥ ७७ ॥

**काल इति** । रङ्गनृपतेश्चित्रामाश्चर्यकरीं पदत्रद्वयीं पादुकायुगलीं काले संचारसमये काष्ठां शेषत्वस्य परमावधिं गतां प्राप्ताम् । चरणवहनादधिकस्य दासकार्यस्याभावादिति भावः । शेषतां चरणवहनरूपं कैंकर्यमेतादृशशेषकार्यकरत्वात्तस्य शेषसंज्ञाप्युपपद्यत इति भावः । भजतस्तल्पभूतस्य शय्याभूतस्य भुजङ्गमस्यानन्तस्य कामपि विलक्षणां मूर्तिं विग्रहतया वेद्मि मन्ये । या पदत्रद्वयी सेवार्थं नम्राणां प्रणतानां सुरासुरेन्द्राणां देवासुरप्रभूणां मकुटीं (गतायाः) शेषपट्याः पादुकानिक्षेपात् पूर्वं वेष्टितस्य पटस्य संगमे संसर्गे सति मुक्तानां मौक्तिकानां चन्द्रिकयेव प्रभयेव पुनर्निर्मोकस्य कञ्चुकस्य योगं संसर्गं प्रथयते प्रख्यापयति । मौक्तिकप्रभासंवलनेन पूर्वं निर्मोकप्रतीतिर्जाता तेषां शेषापटीसंसर्गात्पुनरपि अन्यो निर्मोकयोगः प्रतीयत इति भावः । उपमासंस्पृष्टमनुमानमलंकारः । निर्मोकसंबन्धस्य शेषमूर्तित्वज्ञापकत्वात् ॥

चन्द्रापीडशिखण्डचन्द्रशिखरच्योतत्सुधानिर्झर-
स्तोकाश्लिष्टसुरेन्द्रशेखररजःस्त्यानां स्तुमः पादुकाम् ।
ब्रह्मस्तम्बविभक्तसीमविविधक्षेत्रज्ञसर्गास्थिति-
ध्वंसानुग्रहनिग्रहप्रणयिनी या सा क्रिया रङ्गिणः ॥ ७८ ॥

**चन्द्रेति** । चन्द्रापीडस्य शिवस्य शिखण्डचन्द्रस्य शिखागतशशिनः शिखरादग्रभागात् च्योततो गलतः सुधानिर्झरस्यामृतप्रवाहस्य स्तोकेन लेशेनाश्लिष्टैः सक्तैः सुरेन्द्राणां शेखररजोभिः शिरोमाल्यपरागैः स्त्यानां घनीभूतां पादुकां स्तुमः प्रशंसामः । या पादुका ब्रह्मणा चतुर्मुखेन स्तम्बेन तृणभेदेन गुल्मेन वा । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । विभक्तसीम्नामुत्कर्षापकर्षावधियुक्तानां विविधानां पूर्वपुण्यपापतारतम्येन बहुप्रकाराणां क्षेत्रज्ञानामात्मनां सर्गः सृष्टिः, स्थितिः रक्षणम्, ध्वंसो लयः, अनुग्रहः पुण्य-

फलदानम्, निग्रहः पापफलदानम्, तान् प्रणयति विधत्त इति तथोक्ता सा प्रसिद्धा क्रिया लीलासंकल्पः । 'क्रिया कर्मणि चेष्टायां करणे संप्रधारणे । आरम्भोपायशिक्षासु चिकित्सानिष्कृतिष्वपि ॥' इति विश्वः । पादुकाया भगवत्संकल्पलीलात्मकतया प्रणामस्तुत्योः समर्थनात् काव्यलिङ्गमलंकारः ॥

लक्ष्मीनूपुरशिञ्जितेन गुणितं नादं तवाकर्णय-
न्नाजिघ्रन्निगमान्तगन्धतुलसीदामोत्थितं सौरभम् ।
काले कुत्रचिदागतं करुणया सार्धं त्वया चाग्रतः
पश्येयं मणिपादुके परतरं पद्मेक्षणं दैवतम् ॥ ७९ ॥

**लक्ष्मीति** । हे मणिपादुके, लक्ष्म्या नूपुरस्य मञ्जीरस्य शिञ्जितेन नादेन गुणितमुपचितं तव नादमाकर्णयन् शृण्वन् निगमान्त एव गन्धः सौरभं यस्य तेन निगमान्तस्य गन्ध इव गन्धो यस्य तेनेति वा । तुलसीदाम्नोत्थितमुद्गतं तव सौरभमाजिघ्रन् घ्राणेनानुभवन् अहं तु कुत्रचित् काले चरमसमये करुणया दयया त्वया च सार्धमागतमासन्नं पद्मेक्षणं पुण्डरीकाक्षं परतरं समाभ्यधिकरहितं दैवतं देवतानां परमदैवतमित्युक्तं श्रीरङ्गनाथमग्रतः पश्येयम् । 'दृशिर् प्रेक्षणे' इति धातोः लिङुत्तमपुरुषैकवचनम् । प्रेयोऽलंकारः ॥

वहति क्षितिव्यवहितां सोऽपि त्वां गतिषु पादुके रङ्गी ।
कमठपतिभुजगपरिवृढकरिवरकुलशिखरिभूमिकाभेदैः ॥ ८० ॥

**वहतीति** । हे पादुके, सोऽपि त्वया धृतोऽपि रङ्गी श्रीरङ्गनाथो गतिषु संचारेषु क्षित्या भूम्या व्यवहितामन्तरितां त्वां कमठपतिः क्षितिधारक आदिकूर्मो, भुजगपरिवृढो नागराजः शेषः, करिवरा दिग्गजाः, कुलशिखरिणः कुलपर्वतास्तैरेव भूमिकाभेदैर्मूर्त्यन्तरैर्वहति । 'यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥' इत्युक्तरीत्या शेषदिग्गजादीनामपि भगवदात्मकत्वादिति भावः । परस्परधृत्या परस्परोपकारवर्णनादन्योन्यालंकारः । 'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम्' । इति लक्षणात् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे प्रकीर्णपद्धतिरेकोनत्रिंशी ॥

---

## चित्रपद्धतिस्त्रिंशी ।

अथास्यां पद्धत्यां पादुकाविषयान् शब्दचित्रप्रधानान् श्लोकानुदाहरति—

प्रतिष्ठां सर्वचित्राणां प्रपद्ये मणिपादुकाम् ।
विचित्रजगदाधारो विष्णुर्यत्र प्रतिष्ठितः ॥ १ ॥

**प्रतिष्ठामिति** । सर्वेषां चित्राणां शबलवर्णनानारत्नानां स्वशरीरविरचितशङ्खपद्माद्यालेख्यानामुपक्रान्तानुप्रासयमकबन्धगत्यागत्यादिशब्दचित्राणामन्यपद्धतिषु प्रतिपादितानामुपमाद्यर्थचित्राणां परीक्षिदुज्जीवनाहल्यानिर्माणप्रभृत्याश्चर्यकृत्यानां च (यथासंभवमधिकारितया विषयतया च) प्रतिष्ठामास्पदीभूताम् । चित्रशब्दस्यानेकार्थत्वं 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।' 'आलेख्याश्चर्ययोश्चित्रम्' इति कोशेन शब्दचित्रार्थचित्रादिरूपालंकारिकव्यवहारेण चावधार्यम् । मणिपादुकां (भगवतो रङ्गनाथस्य) रत्नमयपादुकां प्रपद्येऽभीष्टोपायतया आश्रये । यत्र पादुकायां विचित्रस्याश्चर्यकरस्य जगतः प्रपञ्चस्याधार आश्रयो विष्णुः श्रीरङ्गनाथः प्रतिष्ठितोऽबाधेन स्थितवान् ॥ विचित्रप्रपञ्चाधारस्यापि आधारत्वात् सर्वचित्राधारत्वं युक्तमिति भावः । समालंकारः । एतेनास्यां पद्धत्यां बहुविधशब्दचित्रप्रचुरता प्रतिज्ञाता भवतीति सूच्यार्थसूचनान्मुद्रालंकारः । तदुक्तम्—'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।' अत्र पादादिषु प्रतिष्ठां प्रपद्ये विचित्रं विष्णुरिति वर्णावृत्तेरनुप्रासः । शब्दचित्रम् । तदुक्तम्— 'वर्णावृत्तिरनुप्रासः पादेषु च पदेषु च ।' इति ॥

चित्रान्तरमप्याह—

श्रृणु ते पादुके चित्रं चित्राभिर्मणिभिर्विभोः ।
युगक्रमभुवो वर्णान्युगपद्वहसे स्वयम् ॥ २ ॥

**शृण्विति** । हे पादुके, ते तव चित्रं शब्दचित्रप्रचुरमाश्चर्यं च संदर्भं शीलं च शृणु पश्य । अत्र श्रवणज्ञाने चाक्षुषत्वं प्राकट्यातिशयेनारोप्यते । अन्यथा 'पश्यार्थैश्चानालोचने' ।८।१।२५' इति तवशब्दस्य ते इत्यादेशासंभवः । त्वक् च दृक् च निपिपासति जिह्वेत्यादिवत् । शुद्धसत्त्वमयपादुकाङ्गत्तौ सर्वकरणत्वारोप उपपद्यते । या त्वं चित्राभिर्नानावर्णाभिर्मणिभिर्विभोः श्रीरङ्गनाथस्य युगेषु कृतत्रेतादिषु क्रमभुवः आनुपूर्व्येण जायमानान् वर्णान् शुक्लादीन् युगपदेकदा स्वयमवतारभेदमनादृत्य वहसे बिभर्षि । अतो भगवता अनेककालैरवतारभेदैश्च वहनीयान् वर्णान् त्वं सकृदेकावतारेण वहसीति भगवतोऽपि त्वच्छीलस्याश्चर्यत्वम् । किं च युगतया यमकादिषु आवृत्तियुक्ततया क्रमेण तत्तद्बन्धचित्रापेक्षितानुपूर्व्या च जायमानान् वर्णान् अक्षराणि च वहसि । अतस्त्वद्विषयसंदर्भश्च आश्चर्यावह इति भावः । 'आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः ॥' इति युगक्रमेण भगवतो नानावर्णग्रहणे प्रमाणं द्रष्टव्यम् । यमकबन्धेषु वर्णावृत्तिवर्णक्रमौ तत्र तत्र वक्ष्येते । अत्र शृणुत इति संहितायामात्मनेपदत्वभ्रमादपशब्दाभासः शब्दचित्रम् । तदुक्तम्— 'यत्रापशब्दधीः साधुभावज्ञानान्निवर्तते । तत्रापशब्दाभासः स्याद्यथेदंपुरुषो महान् ॥' इति ॥

---

१. पुंनपुंसकयोर्विशेषणविशेष्यभावाभावेनापशब्दाभासत्वे अयं चासौ पुरुषश्चेति समासेन तन्निवृत्तिः.

सुरासुरार्चिता धन्या तुङ्गमङ्गलपालिका ।
चराचराश्रिता मान्या रङ्गपुङ्गवपादुका ॥ ३ ॥

सुरेति । सुरासुरैर्देवासुरैरर्चिता पूजिता धन्या सकलसंपद्विश्लिष्टा तुङ्गानामुत्कृष्टानां मङ्गलानां श्रेयसां पालिका पालयित्री चराचरैर्जङ्गमस्थावरैः स्वशरीरगतैरालेख्यरूपैश्चाश्रिता रङ्गपुङ्गवस्य पादुका मान्या । सर्वैरिति शेषः । शिष्टं स्पष्टम् ॥

अयं गोमूत्रिकाबन्धः । गोमूत्रवद्वक्रगतित्वेन वाच्यमानत्वात् संदर्भस्य । लक्षणं तु—'वर्णानामेकरूपत्वं यद्येकान्तरमर्धयोः । गोमूत्रिकेति तां प्राहुर्दुष्करं तद्विदो यथा ॥' इति । श्लोके उभयोरर्धयोराद्याक्षरमारभ्य एकैकाक्षरान्तरितमेकैकाक्षरं यद्येकमेव भवति तदा वक्रतया उभयोर्वीथ्योर्वाचयितुं योग्यत्वात्तां गोमूत्रिकां दुष्करेषु शब्दचित्रेषु तद्विद आलंकारिका वदन्तीत्यर्थः । उद्धारस्तु— प्रत्येकं षोडशकोष्ठघटितं पङ्क्तिद्वयं विलिख्य प्रथमपङ्क्त्यां प्रथमार्धं द्वितीयपङ्क्त्यां द्वितीयार्धं च क्रमेण विलिख्य प्रथमार्धे प्रथमाक्षरं द्वितीये द्वितीयं प्रथमे तृतीयं द्वितीये चतुर्थमित्यादिक्रमेणैकैकमपहायैकैकश्लेषणेन वाचने प्रथमार्धं भवति । एवं द्वितीयार्धे प्रथमं प्रथमे द्वितीयमित्यादि क्रमेण पूर्ववदेवैकैकमपहायैकैकश्लेषणेन वाचने द्वितीयार्धमपि भवति ॥

पद्मेव मङ्गलसरित्पारं संसारसंततेः ।
दुरितक्षेपिका भूयात्पादुका रङ्गभूपतेः ॥ ४ ॥

**पद्मेति** । मङ्गलसरित् भद्रप्रवाहरूपा संसारसंततेः भवधोरण्याः पारमवधिभूता । संसारार्णवसंतारिकेति भावः । रङ्गभूपतेः पादुका पद्मेव लक्ष्मीरिव । सादृश्यं च पूर्वोक्तविशेषणानामर्थतः साधारणत्वात् । दुरितस्य पापस्य क्षेपिका निरासिका भूयात् । ममेत्याक्षिप्यते । गूढचतुर्थं नामैतच्छब्दचित्रम् । चतुर्थपादाक्षराणां पादत्रयेऽपि तत्र तत्र गूढत्वात् । पादमित्यत्र पा, दुरितेत्यत्र दु, क्षेपिकेत्यत्र का, पारमित्यत्र रम्, मङ्गलेत्यत्र ग, भूयादित्यत्र भू, पद्मेत्यत्र प, संततेरित्यत्र तेः इति यथासंभवं चतुर्थपादोद्धारो द्रष्टव्यः । लक्षणं तु—'यत्रैकपादवर्णानामन्यपादेषु गोपनम् । तद्गूढपादकं नाम तद्भेदः प्रथमादिभिः ॥' इति । अन्यत्र गूढप्रथमपादादिकमप्यूह्यम् ॥

अनन्यशरणः सीदन्ननन्तक्लेशसागरे ।
शरणं चरणत्राणं रङ्गनाथस्य संश्रये ॥ ५ ॥

**अनन्येति** । अनन्तेऽनवधौ क्लेशसागरे दुःखसमुद्रे सीदन् शोचन् अनन्यशरण उपायान्तररहितोऽहं रङ्गनाथस्य चरणत्राणं शरणं संश्रये उपायत्वेन वृणे । निरोष्ठ्योऽयं श्लोकः । त्राणमित्यत्र मकारस्य 'मोऽनुस्वारः' इति शास्त्रेणानुस्वारतया परिणामात् न नैरोष्ठ्यहानिः । तदुक्तम्—'हलस्वरस्थानवर्णानां नियमो दुष्करेष्वसौ । इष्टश्चतुष्प्रभृत्येष दृश्यते सुकरः परः ॥' इति । अस्यार्थः—अचां हलां कण्ठादिस्थानानामेकाचक-एक-

हल्क–एकस्थानक–द्व्यच्क-द्विहल्क-द्विस्थानकेत्यादिरूपेण चतुष्पर्यन्तं नियमाश्रयणे दुष्करः शब्दचित्रभेदः। अनियमे सुकरः संदर्भः। न चित्रमिति। अयं तु श्लोक ओष्ठ्यपरिहारेण चतुःस्थानकः। उवर्णपवर्गौकारौकारवकारोपध्मानीयानामभावात्॥

प्रतिभायाः परं तत्त्वं बिभ्रती पद्मलोचनम्।
पश्चिमायामवस्थायां पादुके मुह्यतो मम॥ ६॥

**प्रतिभाया इति**। परमुत्कृष्टं तत्त्वं वस्तु। 'ततः समश्चाभ्यधिकश्च दृश्यते।' इति श्रुतेः। पद्मलोचनं पुण्डरीकाक्षम्। 'कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतेः। बिभ्रती त्वं पश्चिमायामवस्थायामन्त्यकाले मुह्यतो मोहं गच्छतो मम प्रतिभायाः प्रत्यक्षीभूयाः। क्रियावञ्चनं नाम प्रहेलिकाभेदः। तदुक्तम्—'क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे। परव्यामोहने चापि सोपयोगा प्रहेलिका॥' इत्युपक्रम्य 'वञ्चितान्यस्वरूपेण यत्र शब्देन वञ्चना।' इति। प्रतिभाया इत्यस्य षष्ठ्यन्तप्रतिभाशब्दसाम्येन प्रतिपूर्वात् 'भा दीप्तौ' इत्यस्माद्धातोः प्रार्थनायां लिङ्मध्यमपुरुषैकवचनान्तस्य क्रियाशब्दस्य वञ्चनात्॥

यामः श्रयति यां धत्ते यैन यात्याय याच्च या।
यास्य मानाय यैवान्या सा मामवतु पादुका॥ ७॥

**यामिति**। याम्, अः, श्रयति। या, अम्, धत्ते। या, एन, याति। आय, या। आत्, च, या। या, अस्य, मानाय। या, ए, वान्या इति पदच्छेदः। अः विष्णुः। 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः॥' इति प्रणवप्रकृतिभूताकारवाच्यता भगवतः श्रूयते। स्मर्यते च—'अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः।' इति। यां पादुकां श्रयति सेवते। गत्यर्थमुपादत्त इति यावत्। या पादुका अं विष्णुं धत्ते। या एन विष्णुना याति। पादुकायाः स्वभावतोऽन्याधीनगतिकत्वात्। या आय विष्णवे। तस्य शेषभूतेति यावत्। तादर्थ्ये चतुर्थी। या आत् विष्णोः। अभवदिति शेषः। तदधीनसत्ताकेति यावत्। या अस्य विष्णोः मानाय पूजायै। प्रत्यासन्नपुष्पादिवत्समर्पणीयत्वेन पूजार्थत्वादिति भावः। या ए विष्णौ विषये वान्या सम्यक् भजनीया। वन षण संभक्तावित्यस्मात् 'ऋहलोर्ण्यत् ३।१।१२४' इति ण्यत्। चकारः कर्तृयद्वृत्तेषु संबध्यते। सा पादुका मामवतु। प्रार्थनायां लोट्। अत्र अशब्दस्य सप्तविभक्तयो। वच्यन्तेः सप्तस्वपि वाक्येषु संहिताकालेऽविवक्षितपदान्तरभ्रान्त्याविवक्षितपदाप्रतिभानात् प्रहेलिकाभेदः। पूर्वापेक्षया वित्तिविशेषशाली। लक्षणं तूक्तम्॥

चर्या नः शौरिपादु त्वं प्रायश्चित्तेष्वनुत्तमा।
निवेश्यसे ततः सद्भिः प्रायश्चित्तेष्वनुत्तमा॥ ८॥

चर्येति । हे शौरिपादु, त्वं नोऽस्माकं (अनादिसंसारप्रवृत्तपापवताम्) प्रायश्चित्तेषु पापापनोदनेषु कर्मसु अनुत्तमा उत्तमं न विद्यते यस्याः सा । उत्कृष्टतमा चर्या क्रियारूपा । प्राय इत्युत्प्रेक्षाव्यञ्जकः । ततः कारणात् अनुत्तमा अनुत्ता अनिरस्ता मा लक्ष्मीर्यया सा । 'इन्दिरा लोकमाता मा' इत्यमरः । 'नुद प्रेरणे' इत्यस्मात् कर्मणि क्तः । 'नुदविद–' इत्यादिना नत्वस्य विकल्पितत्वात् । नत्वाभावे रूपं नुत्तेति । भगवच्चरणपरिचरणकालेषु लक्ष्म्या आदृता पादुकेति भावः । सद्भिः प्रायश्चित्तपरैः साधुजनैश्चित्तेषु निवेश्यसे । प्रायश्चित्तानुष्ठानवैकल्ये सति तत्प्रायश्चित्ताय पादुकां स्मरन्ति सन्त इति भावः । पादावृत्ति यमकम् । [तदुक्तम्—] 'अव्यपेतव्यपेतात्मा या वृत्तिर्वर्णसंहतेः । यमकं तच्च पादानामादिमध्यान्तगोचरम् । एकद्वित्रिचतुष्पादयमकानां विकल्पनात् । आदिमध्यान्तमध्याद्यमध्यमाद्यन्तसर्वतः ॥ अत्यन्तबहवस्तेषां भेदाः संभेदयोनयः ॥' इति ॥

रामपादगता भासा सा भातागदपामरा ।
कादुपानञ्च कासह्या ह्यास काञ्चनपादुका ॥ ९ ॥

रामेति । रामपादं गता आश्रिता गदं व्याधिं पान्तीति गदपाः । विरोधिन इति यावत् । तेषां दोषरूपमनोव्याधिदायकत्वादिति भावः । 'आतोऽनुपसर्गे कः ३।२।३ ।' अगदपाः विरोधिरहिता अमरा देवा यस्याः सा । देवविरोधिनिवर्तिकेति यावत् । भासा दीप्त्या कासह्या कस्य सूर्यस्यासह्या सोढुमशक्या । सूर्याधिकतेजोविशिष्टेति यावत् । सा प्रसिद्धा काञ्चनपादुका कात् ब्रह्मणः सकाशात् । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' इत्यमरः । उपानञ्चोपागतवती । उपपूर्वादञ्चतेर्लिट् । भाता विदिता आस अभूदित्यर्थः । आसेति तिङन्तप्रतिरूपकमव्ययम् । हि प्रसिद्धा । रङ्गिणः पूजाकाले ब्रह्मणा समर्पिता तथात्वेन विदिता प्रसिद्धा च श्रीरङ्गनाथमाहात्म्ये । पादानुलोमप्रतिलोमयमकम् । [तल्लक्षणम्—] 'आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा । यमकं प्रतिलोमत्वात्प्रतिलोममिति स्मृतम् ॥' इति ॥

बाढाघालीझाटतुच्छे गाथाभानाय फुल्लखे ।
समाधौ शठजिच्चूडां वृणोषि हरिपादुके ॥ १० ॥

बाढेति । हे हरिपादुके, बाढेन दृढेनाघानां व्यसनानाम् । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः । आल्याः पङ्क्त्याः झाटेन संसर्गेण तुच्छे शून्ये । 'जट झट संघाते' इत्यस्मात् घञ् । उत्तरपूर्वाघाश्लेषविनाशिनीति यावत् । यद्वा बाढया अघाल्यैव झाटेन कान्तारेण तुच्छे अनिवर्तनीयपापशून्ये इत्यर्थः । पापपङ्क्तिरेव कान्तारत्वेन निरूप्यते । 'झाटो निकुञ्जे कान्तारे व्रणसंमार्जनेऽपि वा ।' इति विश्वः । गाथानां द्रविडोपनिषत्पद्यानामाभानाय प्रकाशाय । तादर्थ्ये चतुर्थी । फुल्लं विकसितं खं मनोरूपेन्द्रियं यस्मिन् तस्मिन् । 'इन्द्रियेऽपि खम्' इत्यमरः । समाधौ मानससाक्षात्कारे शठजिच्चूडां

शठकोपस्य शिखां वृणोषि संनिधत्स इति यावत्। योगनिष्ठः शठकोपस्त्वां शिरसि लग्नां भावयतीति भावः। अनुभवप्राकट्याद्वर्तमानवद्व्यपदेशः। 'चेमुमंपिलवि···ताएइण्ण येणं ळल्म मेले' (?) इति द्रविडोपनिषदत्रानुसंधेया । अपुनरुक्तव्यञ्जनं नाम शब्दचित्रम्। तदुक्तम्—'स्वराणां व्यञ्जनानां वा यत्रावृत्तिर्न लक्ष्यते। अनावृत्तार्णकं तज्ज्ञाः शब्दचित्रं प्रचक्षते ॥' इति ॥

सा भूपा रामपारस्था विभूपास्तिसपारता ।
तारपा सकृपा दुष्टिपूरपा रामपादुका ॥ ११ ॥

**सा भूपेति**। भुवं पातीति भूपा । 'आतोऽनुपसर्गे कः ३।२।३'। अर्चावतारेषु मध्यमलोकरक्षिणी रामपारस्था रामरूपे पारे मर्यादास्थापके तिष्ठतीति तथोक्ता । 'सुपि स्थः। ३।२।४' इति कः। 'पारं परं विष्णुरपारपारे' इति ब्रह्मपारस्तवे । 'परिगतवृषशैलं पारम्' इति प्रकारेण रामरूपे पारे स्थिता। विभूपास्तेर्भगवदुपासनस्य सपारता। पारेण सहितः सपारस्तस्य भावः सपारता । 'समासकृत्तद्धितेषु संबन्धाभिधानम्' इत्यभियुक्ताः । उत्तरावधिसंबन्धिभूतेति यावत् । भगवदुपासनस्य पादुकासंबन्धः फलमिति भावः। तारशब्देन प्रणवप्रतिपाद्यं ब्रह्मोच्यते । तत्पाति कण्टकनिवृत्तिद्वारेति तथोक्ता। दुष्टिपूरपा दुष्टेर्दोषस्य पूरं प्रवाहं पिबति नाशयतीति तथोक्ता। एवंभूता रामपादुका सकृपा दयावती। आश्रितापराधसहिष्णुरिति यावत्। अयं मुरजबन्धः। लेखनप्रकारस्तु—'तिर्यग्रेखा लिखेत् पञ्च नव वा तत्र पङ्क्तयः। अष्टकोष्ठाश्चतस्रः स्युस्तासु श्लोकं लिखेत् क्रमात् ॥' उद्धारस्तु—आद्याङ्घ्रिराद्ययोः पङ्क्त्योर्वाच्यो गोमूत्रिकाक्रमात्। किंचैकं द्वितयं द्वैतं द्वयमेकद्वयोरपि। स्वपङ्क्तिप्रक्रमादेवं विन्यासद्वितयं भवेत् ॥ एवं तृतीयतुर्याङ्घ्री स्वपङ्क्त्योस्तदुपक्रमात् ॥' इति। अस्यार्थः—प्रथमपङ्क्तौ प्रथमाक्षरम्, द्वितीयपङ्क्तौ द्वितीयतृतीये, पुनः प्रथमपङ्क्तौ चतुर्थपञ्चमे, पुनर्द्वितीयपङ्क्तौ षष्ठसप्तमे, पुनः प्रथमपङ्क्तावष्टमं च गृहीत्वा प्रथमपादं वाचयेत्। एवं द्वितीयपङ्क्तौ प्रथमम्, प्रथमायां द्वितीयतृतीये, द्वितीयायां चतुर्थपञ्चमे, प्रथमायां षष्ठसप्तमे, द्वितीयायामष्टमं च गृहीत्वा द्वितीयपादं वाचयेत् । एवं तृतीयपङ्क्त्याद्यक्षरमारभ्य चतुर्थपङ्क्तिसंकलिततया तृतीयपादं प्रथमपादवद्वाचयेत्। चतुर्थपङ्क्त्याद्यक्षरमारभ्य तृतीयपङ्क्तिवर्णसंकीर्णतया चतुर्थपादं वाचयेत्। अपरोऽपि वाचने नियमः—

'आद्याङ्घ्रिः प्रथमादौ स्यात् द्विद्विस्त्रिस्त्रिस्तुरीयके ।
चतुर्थं पञ्चमं च त्रिषष्ठं चाथ द्विसप्तमम् ॥
प्रथमायां ततः पङ्क्तौ द्रष्टव्यं चरमाक्षरम् ॥'

अस्यार्थः—प्रथमपङ्क्तौ प्रथमाक्षरम्, द्वितीयपङ्क्तौ द्वितीयाक्षरम्, तृतीयस्यां तृतीयम्, चतुर्थ्यां चतुर्थं पञ्चमं च, पुनस्तृतीयस्यां षष्ठम्, द्वितीयस्यां सप्तमम्, प्रथमायामष्टमं च गृहीत्वा प्रथमपादो वाचयितव्यः ॥

द्वितीयपादस्य तु—

'द्वितीयाङ्घ्रिर्द्वितीयादावाद्ये द्वित्री द्वितीयके ।
तृतीये तुर्यके त्रिद्वी तृतीयायं च वाचयेत् ॥'

अस्यार्थः—द्वितीयायां प्रथमाक्षरम्, प्रथमायां द्वितीयं तृतीयं च, द्वितीयायां तृतीयायां च चतुर्थम्, चतुर्थ्यां तृतीयं द्वितीयं च, तृतीयायां प्रथमाक्षरं च गृहीत्वा द्वितीयपादं वाचयेदिति नियमः ।

तृतीयपादस्य तु—

'तृतीयोऽङ्घ्रिर्द्वितीयान्ते आद्यसप्तमषष्ठयोः ।
द्वित्रिपञ्चमयोस्तुर्यषष्ठसप्तमयोः क्रमात् ॥
तृतीयान्त्ये च लक्ष्यायां बन्धो मुरजसंज्ञिकः ॥' इति ।

अर्थस्तु—द्वितीयपङ्क्तावष्टमम्, प्रथमायां सप्तमं षष्ठं च, द्वितीयायां पञ्चमम्, तृतीयायामपि पञ्चमम्, चतुर्थ्यां षष्ठं सप्तमं च, तृतीयायामष्टमं च गृहीत्वा वाचयेत् । इत्येवं द्वितीयतृतीयपादौ वृत्ताकारेण वा वाचयितुं शक्यौ ।

चतुर्थपादस्य—

'तुर्याङ्घ्रिस्तु तदादौ स्यात् त्रिद्विद्वित्र्याद्यतुर्यके ।
तत् पञ्चमे द्विषष्ठे त्रिसप्तमे तुर्यकान्तिमे ॥'

अस्यार्थः—चतुर्थपङ्क्तौ प्रथमम्, तृतीयायां द्वितीयम्, द्वितीयायां तृतीयम्, प्रथमायां चतुर्थम्, तस्यामेव पञ्चमम्, द्वितीयायां षष्ठम्, तृतीयायां सप्तमम्, चतुर्थ्यामष्टमं च गृहीत्वा चतुर्थपादं वाचयेत् । एवं मुरजबन्धविन्यासप्रकारेण वाच्यमानोऽयं श्लोको मुरजबन्धसंज्ञिको भवति । 'तच्छ(च्चि)त्रं यत्र वर्णानां खड्गाद्याकृतिता भवेत् ।' इति काव्यप्रकाशिकायाम् । विवृतं च व्याख्यातृभिः—'यद्यदाकारता वर्णविन्यासस्यावभासते। ताभिस्ताभिश्च संज्ञाभिर्व्यावृत्तो बन्ध उच्यते ॥' इति ॥

कारिका न न यात्राया या गेयास्यस्य भानुभा ।
पादपा हह सिद्धासि यज्ञाय मम साञ्जसा ॥ १२ ॥

**कारिकेति** । यात्रायाः प्रवृत्त्यात्मिकायाः न न कारिका कारिकेव । भगवतो वा सर्वेषां वा प्रवृत्तिप्रयोजिकेति वाक्यार्थः । भानुभा भानोः सूर्यस्य भेव भा यस्याः सा तथोक्ता या त्वं गेयासि गानयोग्यासि । अस्य विष्णोः पादपा पादरक्षिणी सा त्वमञ्जसा झटिति मम यज्ञाय मत्कर्तृकाराधनाय सिद्धासि प्राप्तासि । 'द्राक् झटित्यञ्जसाह्नाय' इत्यमरः । हहेति हर्षे । अनतिरिक्तपदपदार्थानुलोमप्रतिलोमं नाम शब्दचित्रम् । दुष्करयमकभेदः । लक्षणं तूक्तम् । 'साञ्जसा मम यज्ञाय सिद्धासि हह पादपा । भानुभास्यस्य या गेया यात्राया न न कारिका ॥' इति प्रतिलोमं पाठेऽपि तान्येव पदानि त एव वाक्यार्थाः प्रत्येतुं शक्यन्त इति अनतिरिक्तपदपदार्थानुलोमत्वम् ॥

सराघवा श्रुतौ दृष्टा पादुका सनृपासना ।
सलाघवा गतौ श्लिष्टा स्वादुर्मे सदुपासना ॥ १३ ॥

**सराघवेति** । सराघवा राघवेण सहिता श्रुतौ वेदे दृष्टा अन्तःपरिस्फुटतया ज्ञाता सनृपासना रामारण्यगमनकाले राजासनवती, गतौ भगवतः संचारे विषये सलाघवा शैघ्र्यसहिता श्लिष्टा परस्परसंगता सदुपासना सद्भिरुपास्यत इति कर्मणि 'ण्यासश्रन्थो युच्। ३।३।१०७' एवंभूता पादुका मे स्वादु मह्यं स्वदत इति यावत्। शरबन्धोऽयम् । तदुक्तम्—

'यत्रार्धयोश्चतुर्वर्णा आदावन्ते पुनस्त्रयः ।
मध्ये श्लिष्टाश्चतुर्युग्माः शरबन्धोऽयमुच्यते ॥'

इति । उद्धारस्तु रेखाद्वयेन कोष्ठचतुष्टयघटितामेकां पङ्क्तिमुत्पाद्य, तत्र पूर्वोत्तरार्धयोराद्याक्षरचतुष्टयं श्लिष्टं क्रमेण विलिख्य, ततः परं तां पङ्क्तिं द्विधा कृत्वा, एकैककोष्ठघटितयोस्तयोरश्लिष्टपञ्चमवर्णौ विन्यस्य, पुनरेकीकृत्य, तत्र श्लिष्टषष्ठं विलिख्य, भूयस्तां द्विधा कृत्वा, तयोरश्लिष्टसप्तमौ विलिख्य, पुनः श्लिष्टयोः श्लिष्टौ, अश्लिष्टयोरश्लिष्टौ इत्येवं क्रमेण त्रयोदशाक्षरपर्यन्तं विलिख्य पुनरेकीकृतायां कोष्ठत्रयघटितायां पङ्क्तौ श्लिष्टाक्षराणि त्रीणि विलिखेत् । एवं च किंचिदुन्नताश्लिष्टपञ्चाक्षरविन्याससन्धिरयं बन्धः ईषदुन्नतपर्वपञ्चकाधारशराकारवत्त्वात् शरबन्धसंज्ञको भवति । अत्र रलयोरभेदेन द्वितीयवर्णस्थितिर्लेख्या । एवं पङ्क्तिद्वयपञ्चकलिखिताश्लिष्टाक्षरद्वयपञ्चकदन्तुरोऽयं तन्तुद्वयप्रोतमौक्तिकद्वयरूपसरद्वयपञ्चकबन्धुरत्वात् सरबन्ध इत्येके ॥

काव्यायास्थित मावर्गव्याजयातगमार्गका ।
कामदा जगतः स्थित्यै रङ्गपुङ्गवपादुका ॥ १४ ॥

**काव्यायेति** । काव्याय, अस्थित, मावर्गव्याजयातगमार्गका इति पदच्छेदः । मायाः श्रिय आवर्गे आवर्जने व्याजं निमित्तं यातं संचारं गच्छतीति तथोक्तः मार्गकः अल्पमार्गो यस्याः सा तथोक्ता । अल्पस्यापि पादुकासंचारमार्गस्य घण्टापथस्येव शोभा भवतीति भावः । काममिष्टं ददातीति कामदा । आतोऽनुपसर्गे कः । रङ्गपुङ्गवपादुका जगतः प्रपञ्चस्य स्थित्यै रक्षायै काव्याय अस्थित । जगद्रक्षणार्थं प्रवृत्तरामायणपादुकासहस्रादिविषयतया आत्मप्रकाशनाय स्थितवतीत्यर्थः । 'प्रकाशनस्थेयाख्ययोश्च' इत्यात्मनेपदम् । 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः । १ । ४ । ३४ ।' इति चतुर्थी । स्थित्या इत्यत्र तादर्थ्ये चतुर्थी । गरुडगतिचक्रबन्धोऽयं श्लोकः । तदुक्तम्—

'मध्यस्थप्रथमादिद्यन्तरपङ्क्त्यन्तरस्पृगेकार्णम् ।
गरुडगतिचक्रमेतद्द्वयर्धाद्यन्तैकगं त्रिमण्डलगम् ॥' अस्यार्थः—मण्डलरेखाचतुष्केण पङ्क्तित्रयं विलिख्य, प्रथमपङ्क्तौ दश कोष्ठान् विलिख्य, द्वितीयतृतीयपङ्क्त्योः पञ्च पञ्च कोष्ठान् विलिख्य, मध्यमपङ्क्तौ कुत्रचिदूर्ध्वकोष्ठे प्रथमपादप्रथमाक्षरम्,

तदधोदेशे तृतीयपङ्क्तौ प्रादक्षिण्येन कोष्ठद्वये क्रमेणाक्षरद्वयम्, पुनर्मध्यमपङ्क्तौ प्रथमाक्षरैकान्तरितकोष्ठे एकम्, तृतीयपङ्क्तौ द्वयमित्येवंप्रकारेण मण्डलगतिद्वयेन प्रथममर्धमुपक्रान्त एवाक्षरे समापयेत् । उत्तरार्धं च तत्रैवोपक्रम्य पूर्वक्रमेण प्रथमपङ्क्तौ कोष्ठद्वयेऽक्षरद्वयं विलिख्य, द्वितीयपङ्क्तौ द्वितीयकोष्ठे एकं विलिख्य, पुनश्च प्रथमपङ्क्तौ द्वयमित्येवंप्रकारेणोत्तरार्धं चैकया मण्डलगत्या तत्रैव प्रथमाक्षरे समापयेत् । एवं सत्यर्धद्वयेऽपि आद्यन्ताक्षरचतुष्टयमेकं भवति । तथा चतुर्थसप्तमौ, सप्तमत्रयोदशौ, दशमचतुर्थौ, त्रयोदशदशमौ च वर्णावेकरूपौ । तथा प्रथमार्धे पादद्वयेऽपि द्वितीयाद्यौ, तृतीयौ, पञ्चमतुरीयौ, षष्ठौ, अष्टमसप्तमौ च वर्णौ श्लिष्टौ भवतः । एवं वक्रात्मकवीथ्यन्तरैकाक्षरावक्रात्मकस्ववीथ्यक्षरविन्यासघटितत्रिमण्डलगतिरूपत्वादस्य श्लोकस्य वक्रावक्रबहुमण्डलात्मकगरुडगतिसमानाकारमेतच्चक्रं गरुडगतिसंज्ञकं भवति । प्रकारान्तरम्—पञ्चकोणरेखापञ्चकं विलिख्य तदुपरि वृत्तं पञ्चकोणेषु पञ्चदलं च विलिख्य प्रथमदले प्रथमं तदधोऽन्तराले द्वितीयं द्वितीयान्तरे तृतीयं बहिस्तृतीयपद्मे चतुर्थं पुनस्तृतीयान्तराले पञ्चमं चतुर्थान्तराले षष्ठं बहिः पञ्चमपद्मे सप्तमं पञ्चमान्तरालेऽष्टममिति प्रथमपादः । पुनर्बहिर्द्वितीयपद्मे दशमं बहिश्चतुर्थपद्मे त्रयोदशं च विलिख्य प्रथमपद्मे समापयेदिति द्वितीयपादः । उत्तरार्धं तु पञ्चकोणरेखयोर्मध्ये क्रमेण द्वितीयतृतीयौ पञ्चमषष्ठौ, अष्टमनवमौ, एकादशद्वादशौ, चतुर्दशपञ्चदशौ क्रमेण विलिख्य श्लिष्टप्रथमपादप्रथमाद्यक्षरमारभ्य प्रथमे समापयेत् । आद्यन्ताक्षरचतुष्टयमेकं भवति । द्वितीयम्, तृतीयम्, चतुर्थम्, पञ्चमम्, षष्ठम्, सप्तमम्, दशमम्, त्रयोदशम्, एतान्यक्षराणि द्विधा भवन्ति ॥

सुरकार्यकरी देवी रङ्गधुर्यस्य (सु)पादुका ।
कामदा कलितादेशा चरन्ती साधुवर्त्मसु ॥ १५ ॥

**सुरकार्यकरीति** । सुराणामिष्टानिष्टप्राप्तिनिरसनरूपकार्यकरणशीला । 'कृञो हेतुताच्छील्यानुलोम्येषु । ३।२।२०' इति टः । देवी क्रीडावती दीप्तिमती वा । पचादौ देवडिति डित्वेन पाठात् ङीप् । कामदा उपासकानामिष्टस्य दात्री कलित आदेशः श्रुतिस्मृतिरूपाज्ञा यया सा तथोक्ता । साधुवर्त्मसु सन्मार्गेषु चरन्ती रङ्गधुर्यस्य (सु) पादुका कामदा इति योजना । द्विशृङ्गाटकचक्रबन्धोऽयम् । तदुक्तम्—

'प्रक्रान्तान्तं लिखेद्वर्णान् क्रमादेकत्र मण्डले ।
अन्यत्रैकान्तरं द्वौ चेद्द्विशृङ्गाटक उच्यते ॥' इति । अस्यार्थः—

मण्डलरेखात्रयेण पङ्क्तिद्वयमुत्पाद्य द्वयमपि प्रत्येकं द्वादशकोष्ठघटितं विधाय प्रथममण्डले प्रक्रान्तकोष्ठपर्यन्तं पूर्वार्धत्रयोदशाक्षराणि विलिख्य द्वितीयमण्डले प्रथमाक्षराव्यवहितकोष्ठद्वये क्रमेण चतुर्दशं पञ्चदशं च विलिख्य प्रथममण्डले प्रथमाक्षरैकान्तरितकोष्ठे षोडशं श्लिष्टं वाचयित्वा उत्तरार्धप्रथमाक्षरमपि तदेव वाचयित्वा पुनर्द्वितीयमण्डले

तृतीयचतुर्थकोष्ठयोः यथाक्रममुत्तरार्धद्वितीयतृतीये लिखित्वा, प्रथममण्डलपञ्चमकोष्ठे चतुर्थं वाचयित्वा, द्वितीयमण्डले पञ्चमषष्ठयोः पञ्चमषष्ठाक्षरे लिखित्वा, प्रथममण्डलसप्तमकोष्ठे सप्तमं वाचयित्वा द्वितीयमण्डलसप्तमाष्टमयोरष्टमनवमाक्षरे विलिख्य प्रथममण्डलनवमकोष्ठे दशमाक्षरं वाचयित्वा, द्वितीयमण्डलनवमदशमयोरेकादशद्वादशाक्षरे लिखित्वा, प्रथममण्डले दशमकोष्ठे त्रयोदशाक्षरं वाचयित्वा द्वितीयमण्डले एकादशद्वादशयोश्चतुर्दशपञ्चदशाक्षरे विलिख्य प्रथममण्डलप्रथमकोष्ठे षोडशाक्षरं वाचयित्वा श्लोकं समापयेत्। एवं सति द्वयोर्मण्डलयोः पर्यायेणानेकगतिसंसर्गाद्विशृङ्गाटकत्वोक्तिः॥

भरताराधितां तारां वन्दे राघवपादुकाम्।
भवतापाधितान्तानां वन्द्यां राजीवमेदुराम्॥ १६॥

**भरतेति**। भरतेनाराधितां पूजितां तारामुत्कृष्टाम्। शब्दगतं तारत्वमत्र लक्षणयोच्यते। भवतापेन संसारसंबन्ध्याध्यात्मिकादितापत्रयरूपेण आधिना मनोव्याधिना तान्तानां ग्लानिमतां वन्द्यां स्तुत्याम्। तापत्रयातुरास्तदपनोदनाय पादुकां स्तुवन्तीति भावः। 'वदि अभिवादनस्तुत्योरिति धातुः। राजीवैः पूजासु समर्पितपद्मैर्मेदुरां सान्द्रां राघवपादुकां वन्दे॥ द्विचतुष्कचक्रबन्धोऽयम्। तदुक्तम्—

'बहिरन्तर्मण्डलस्थमष्टकोष्ठविहारि यत्।
कोणाष्टकयुतं तद्द्विचतुष्कं चक्रमुच्यते॥
तत्रायुग्माक्षरश्लिष्टा यदि गोमूत्रिका भवेत्।
आनुलोम्येन रचिता दुष्करेष्वियमुच्यते॥' इति।

एतदुक्तं भवति—दिङ्मुखकोणकं विदिङ्मुखकोणकं च द्वे चतुरस्रचक्रे व्यत्ययीकृते विलिख्य तस्य बहिरन्तश्च मण्डलरेखायुगं विलिख्य प्रत्येकमष्टकोष्ठघटितं विधाय बहिर्मण्डले पूर्वार्धस्याश्लिष्टाक्षराणि, अन्तर्मण्डले उत्तरार्धस्याश्लिष्टाक्षराणि च चक्रमालिख्य अर्धद्वयस्य श्लिष्टाक्षराष्टकं मण्डलद्वयमध्याष्टकोणेषु विलिखेत्। एवं द्विचतुष्ककोणविशिष्टत्वादस्य चक्रस्य द्विचतुष्कचक्रसंज्ञा। इयम् युग्माक्षरश्लिष्टानुलोमगोमूत्रिका। सुरासुरेति युग्माक्षरश्लिष्टेति भेदः। सापि अस्मिन् चक्रे लिखितुं शक्या। युग्माक्षरश्लिष्टत्वात्। मण्डलस्पर्शपूर्वकः कोणस्पर्श इति भेदः॥

कादुपास्यसदालोका कालोदाहृतदामका।
कामदाध्वरिरंसाकाकासा रङ्गेशपादुका॥ १७॥

**कादुपास्येति**। कं जलमत्तीति कात् ऋषिः। अब्भक्षा वायुभक्षाश्चेति स्मृतेः। 'अद भक्षणे' इति धातोः। 'अदोऽनन्ने। ३।२।६८।' इति विट्प्रत्ययः। तैरुपास्यः सन् आलोकः प्रकाशो यस्याः सा। 'आलोकौ दर्शनोद्योतौ' इत्यमरः। काले उचितसमये उदाहृतानि उत्क्षिप्य समर्पितानि दामकानि पुष्पमाला यस्याः सा तथोक्ता कामदा

स्वसेवकाभीष्टदा अध्वनि मार्गे रिरंसा रन्तुमिच्छा यस्याः सा तथोक्ता। 'शेषाद्विभाषा ५।४।१५४' इति कप्। रङ्गेशपादुका अकासेति च्छेदः। अस्य विष्णोः कास इव कासो यस्याः सा तथोक्ता। 'कस गतौ' इति धातोः भावे घञ्। विष्णुसदृशगतिरिति यावत्। चतुरारचक्रबन्धोऽयम्। तदुद्धारक्रमस्तु प्रथमं मण्डलाकारामेकां रेखां विलिख्य तन्मध्ये तिर्यग्रेखाद्वयमूर्ध्वरेखाद्वयं च विलिख्य नाभिमध्ये प्रथमाक्षरं तदुपरि द्वितीयं तृतीयं च विदिशि चतुर्थं पञ्चमं च दिशि नेमिसमीपे षष्ठं तस्य प्रथमाक्षरस्य च मध्ये सप्तमं विलिख्याष्टमं श्लिष्टं वाचयित्वा तान्येव प्रतिलोमतया नवमदशमैकादशभूतानि वाचयित्वा एवं क्रमेण विदिशि अश्लिष्टाक्षरलेखनपूर्वकं दिशि श्लिष्टाक्षरवाचनेन प्रथमपादप्रथमाक्षर एव श्लोकं समापयेदिति। अस्य श्लोकस्य चतुररविशिष्टत्वात् चतुरराचक्रबन्धसंज्ञा भवति। इदमेवाष्टदलपद्ममित्युच्यते। तदुक्तम्—

'कर्णिकायां न्यसेदेकं द्वे द्वे दिक्षु विदिक्षु च।
प्रवेशनिर्गमौ दिक्षु कुर्यादष्टदलाम्बुजे॥' इति।

एतदुक्तं भवति—कर्णिकायुक्तमष्टदलपद्मं लिखित्वा कर्णिकायां प्रथमाक्षरमष्टसु दलेषु द्वितीयाक्षरमारभ्य द्वे द्वे अक्षरे च विन्यसेत्। तत्र त्रिषु दलेषु कर्णिकाक्षरप्रवेशनिर्गमाभ्यां प्रथमदिग्दले कर्णिकाक्षरप्रवेशेन श्लोकसमाप्तिर्भवतीति। इदमेव चतुर्दलगर्भं द्वादशदलविशिष्टं पद्मं विलिख्य कर्णिकायां प्रथमाक्षरं षोडशसु दलेषु एकैकमक्षरं विन्यसेत्। प्रवेशनिर्गमौ पूर्ववत्॥ चतुररचक्रलक्षणं तु—

'सकलेषु च पादेषु यद्याद्यन्ताक्षरैकता।
गतागतानुकूल्येन न्यस्ते ये षष्ठसप्तमे॥
ते द्वितीयतृतीयाभ्यामभिन्ने चरणान्तरे।
तदा चतुररं चक्रमष्टवर्णाम्बुजादिवत्॥' इति।

पापाकूपारपालीपा त्रीपादीपादपादपा।
कृपारूपाजपालापास्वापामापान्नृपाधिपा॥ १८॥

**पापेति**। पापाकूपारपालीपा पापसमुद्रपङ्क्तिं पिबतीति तथोक्ता। आतोऽनुपसर्गे कः। त्रिपादीं परमपदं पद्यत इति त्रिपादीपादो विष्णुः। पदेः कर्मण्यप्। 'त्रिपादस्यामृतं दिवि' इति श्रुतेः। प्रकृतिमण्डलापेक्षया पादत्रयसमाहाररूपत्वात् परमपदस्य त्रिपादीत्वम्। त्रिपादीशब्देन 'द्विगोः ४।१।२१' इति ङीप्। तस्य पादपा पादरक्षा कृपारूपा दयाप्रचुरा जपवत् पावन आलापः स्वविषयकीर्तनं यस्याः सा। स्वापा सुखेन प्राप्या। अधिपातीत्यधिपा। आतश्चोपसर्गे कः। नृपाणां राज्ञामधिपा स्वामिनी। शेषषष्ठ्या समासः। मा मामपादरक्षत्।

सकर्णिकषोडशदलपद्ममिदम्। [तदुक्तम्]

'एकं सर्वं यदि भवेदेकान्तरितमक्षरम्।
तत् षोडशदलं पद्मं श्लिष्टार्णाधारकर्णिकम्॥

अत्र गोमूत्रिकाप्यूह्या । तन्नियतो द्विचतुष्कचक्रबन्धश्च ॥

स्थिरागसां सदाराध्या विहताकततामता ।
सत्पादुके सरा सामा रङ्गराजपदं नय ॥ १९ ॥

**स्थिरागसामिति** । हे सतो ब्रह्मणः पादुके, 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' इति स्मृतेः । स्थिराणि दृढानि आगांसि अपराधा येषां तेषाम् । 'आगोऽपराधो मन्तुश्च' इत्यमरः । संसारिणामिति यावत् । सदा आराध्या पूज्या । विहतानि निरस्तानि अकततान्यसुखविस्तृतानि अमतानि अनिष्टानि दुःखसाधनानि च यया सा तथोक्ता । 'सुखशीर्षजलेषु कम्' इति विश्वः । सरासा रासेन शब्देन सहिता । 'रास शब्दे' भावे घञ् । एवंभूता त्वं मा मां रङ्गराजस्य पदं चरणं स्थानं वा नय प्रापय । चतुरङ्गपदेषु पङ्क्तिशो लेख्यः प्रथमश्लोकोऽयम् ॥

स्थिता समयराजत्पागतरा मोदके गवि ।
दुरंहसां सन्नतादा साध्यातापकरासरा ॥ २० ॥

**स्थितेति** । समयेन श्लिष्टाचारसंकेतेन राजतः शोभमानान् पातीति तथोक्ता । आगता रायः सुवर्णानि ऐश्वर्याणि वा यस्याः सा आगतरा स्वर्णमयी । प्राप्तैश्वर्येति यावत् । 'स्वर्णेऽपि राः' इत्यमरः । 'रायो हलि ७।२।८।' इत्यात्वम् । मोदके संतोषकरे । 'मदी हर्षे' । गवि रश्मौ रवौ वा । 'गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तुर्यां दिशि भारत्यां भूमौ च सुरभावपि । न स्त्रियां स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ॥' इति विश्वः । स्थिता जगदानन्दकरविस्तृतवरमणिरश्मिमध्यवर्तित्वात् लोकबान्धवभूतादित्यमण्डलान्तर्वर्तिभगवत्संबन्धाद्वा तथोक्ता दुरंहसां दुष्टमंहो येषां तेषाम् । सन्नतामवसन्नभावं द्यति खण्डयतीति तथोक्ता । 'दोऽवखण्डने' इत्यस्माद्धातोः आतोऽनुपसर्गे कः । साध्य उत्पाद्योऽतापस्तापाभावो येषां ते कराः किरणा यस्याः सा तथोक्ता । पादुकारत्नकिरणसंसर्गात् नमतां तापशान्तिर्भवतीति भावः । आसरति समन्तात् सरतीति आसरा । पचाद्यच् । सर्वेषु लोकेषु कामचारवती सा त्वं रङ्गराजपदं नयेति पूर्वेणान्वयः । अनयोः श्लोकयोरेकवाक्यतयान्वय इति आचार्यैरुक्त इति संप्रदायः ॥

चतुरङ्गतुरङ्गपदबन्धोऽयम् । लक्षणंतु—

'चतुरङ्गपदन्यस्ते श्लोके श्लोकान्तरं यदि ।
उद्धार्यं हयगत्या स्यात्तत्तुरङ्गपदं विदुः ॥' इति ।

लोकताराकामचारा कविराजदुरावचा ।
तारागतेपादराम राजते रामपादुका ॥ २१ ॥

**लोकतारेति** । लोकमाश्रितजनं तारयतीति लोकतारः । आकाम्यत इत्याकामः । कमेर्णिङ् । कर्मण्येरच् । तथाभूतश्चारः संचारो यस्याः सा । आश्रितजनसंचारकसर्वजनाभिलषणीयसंचारयुक्तेति यावत् । कविराजैर्व्यासवाल्मीकिप्रभृतिभिः कविविशेषैः ।

दुरावचा कार्त्स्न्येन वक्तुमशक्या गते गमने तारा उच्चैस्तरस्वनवती । 'तारोऽत्युच्चैस्त्रय-स्त्रिषु' इत्यमरः । पादरा किरणदा । 'रा दाने' इत्यस्माद्धातोरातोऽनुपसर्गेकः । रामपादुका आम एवम् । 'आमैवम्' इत्यमरः । राजते ॥ अर्धभ्रमकंनाम दुष्करयमकभेदः । तदुक्तम्—

'आहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।
तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः ॥' इति ।

अस्यार्थः—श्लोकस्य पादानामर्धांशभ्रमणं यदि तदा तदर्धभ्रमणं नाम दुष्करं बन्धचित्रं वदन्ति । यदि पादानां सर्वतो भ्रमणं स्यात्तत्सर्वतोभद्रमिति । अर्धभ्रमकस्यायं विन्यासप्रकारः— तिर्यक् पञ्चरेखा विलिख्य पङ्क्तिचतुष्टये पादचतुष्टयं यथाक्रमं विलिखेत् । ततः प्रथमपादः पङ्क्तिचतुष्टयाद्यन्ताक्षरेष्वनुलोम एव वाच्यो भवति । तथा द्वितीयस्तदनन्तरेषु, तृतीयस्तदनन्तरेषु, चतुर्थस्तदनन्तरेष्विति । अयमत्र क्रमविवेकः । पादार्धानामनुलोमतो भ्रमणेऽर्धभ्रमणम् । पादानामनुलोमतः प्रतिलोमतश्च सर्वतो भ्रमणे सर्वतोभद्रमिति ॥

जयामपापामयाजयामहे दुदुहे मया ।
महेशकाकाशहेमपादुकाममकादुपा ॥ २२ ॥

**जयामपेति** । जयामपा जय उत्कर्ष आमोऽपरिपक्वो येषां तान् मुमुक्षून् पातीति तथोक्ता । अपामया अपगत आमयो यया सा । आश्रितानां तापत्रयस्यापनोदिकेति यावत् । अममकात् अममा निर्ममा अखे स्वल्पबुद्धिहीनाः । 'शेषाद्विभाषा । ५।४।१५४।' इति कप् । तानततीति अममकात् । 'अत सातत्यगमने' इत्यस्मात् क्विप् । स चासौ उः रुद्रः तं पातीति । यद्वा अममः ममकाररहितो यः कः ब्रह्मा तमत्ति शिरश्छेदरूपया पीडया बाधते । 'अदोऽनन्ने ।३।२।६८।' इति विट् । तादृशमुं रुद्रं पातीति तथोक्ता । महेशकाकाशहेमपादुका महान्तो ये ईशका इन्द्रादयः । 'ईश ऐश्वर्ये' इत्यस्माण्ण(ण्वु)ल् । तेषामकमसुखम् । 'नाम्ना अकं भवति' इति श्रुतेः । तदश्नाति नाशयतीति महेशकाकाशो विष्णुः । अशधातोः कर्मण्यण् । तस्य हेमपादुका काञ्चनपादुका अजयामहे अजं विष्णुं यातीत्यजया क्विप् । तस्मिन् महे रङ्गेशवसन्ताद्युत्सवे मया दुदुहे दुह्यते स्म । ईप्सितमिति शेषः ॥ सर्वतोभद्रं नाम बन्धचित्रमिदम् । लक्षणं तु पूर्वमुक्तम् । प्रस्तारप्रकारस्तु चतुरस्रं लिखित्वा तदन्तस्तिर्यगूर्ध्वं च ऋज्वायता अक्षरविन्यासयोग्यान्तरालाः सप्त रेखा विलिखेत् । तत्राष्टकोष्ठघटिता अष्ट पङ्क्तयो भवन्ति । तत्र प्रथमादिपङ्क्तिचतुष्टये यथाक्रमं श्लोकस्य चतुरः पादान् लिखित्वा पञ्चमादिचतुष्टये व्युत्क्रमेण पादान् विलिखेत् । तत्र चतसृष्वपि बाह्यपङ्क्तिषु प्रथमपादो वाचयितुं शक्यते । तथा द्वितीयादिषु पङ्क्तिषु द्वितीयादयः पादाः । तत्र चैकैकपादस्य तिर्यगूर्ध्वं चानुलोमप्रतिलोमवाचनाभ्यामष्टौ वाचनप्रकाराः संपद्यन्त इति ॥

पापादपापादपापापादपाददपादपा ।
दपादपापादपादपादपा ददपादपा ॥ २३ ॥

**पापादिति** । पापात्, अपापात्, अपापा, अपादपाददपादपा, दपादपापादपादपादपा, ददपादपा इति पदच्छेदः ।

अपापा पापरहिता अस्य विष्णोः पादयोश्चरणयोः पाददान् किरणदान् पादान् पातीति तथोक्ता । पाधातोरातोऽनुपसर्गे कः । पादुकाकान्तिसंसर्गात् भगवच्चरणारविन्दयोरपि कान्तिर्भवतीति भावः । ददेषु पादुकासमर्पकेषु विषयेषु । 'ददातिदधात्योर्विभाषा ।३।१।१३९' इति शप्रत्ययः । अस्मिन् परे 'श्लौ ।६।१।१०' इति द्वित्वे च 'श्नाभ्यस्तयोरातः ।६।४।११२।' इत्याल्लोपः । पान्त्यो रक्षन्त्य आपः अभिषेकजलानि यस्याः सा । पान्ती शब्दस्य 'स्त्रियाः पुंवद्भाषित—६।३।३४।' इत्यादिना पुंवद्भावः । अप् शब्दस्य 'ऋक्पूरब्धूः—५।४।७४' इत्यादिना समासान्ते अप्रत्ययः । दं रक्षणम् । 'देङ् रक्षणे' इत्यस्मात् घञर्थे कविधानमिति कः । 'आतो लोप इटि च ६।४।६४' इत्याल्लोपोऽपि । तत्पादयति संपादयतीति दपादो रक्षणसंपादकः । 'पद गतौ' इत्यस्मात् हेतुमण्ण्यन्तात् कर्मण्यण् । पापं दुष्कृतमादयति अपनोदयतीति पापादः । अत्तेर्ण्यन्तात्कर्मण्यण् । तथाभूतौ पादौ चरणौ यस्य तस्य विष्णोः पादौ चरणौ पातीति तथोक्ता पादुका पापात् दुष्कृतात् अपादानात् । 'भीत्रार्थानां भयहेतुः ।१।४।२५' इति अपादानसंज्ञा । अपापादरक्षत् । मामिति शेषः । 'पा रक्षणे' इति धातोर्यङो लुकि लङ् ॥ द्यज्झल्विषययमकसर्वतोभद्रात्मकोऽयं बन्धः । अकाराकारयोरचोः पकारदकारयोर्हलोश्चैवात्र विद्यमानत्वात् । दपापादपापेति त्र्यक्षरयमकसद्भावात्सर्वतोभद्रलक्षणयोगाच्च ॥

कोपोद्दीपकपापेऽपि कृपापाकोपपादिका ।
पूदपादोदकापादोद्दीपिका कापि पादुका ॥ २४ ॥

कोपेति । कोपोद्दीपकं भगवदमर्षजनकं पापं यस्य तस्मिन् जनेऽपि कृपापाकस्य भगवदनुकम्पापरिणामस्योपपादिका संपादिका । शेषषष्ठ्या समासः । पूदं 'पूङ् पवने' इति धात्वर्थं ददातीति पूदम् । भावे क्विप् । पादोदकं गङ्गारूपं यस्य तस्य अस्य हरेः पादस्य चरणस्योद्दीपिका दीप्तिकरी पादुका कापि अवाङ्मनसगोचरवैभवेत्यर्थः । त्र्यक्षरश्लोकः । लक्षणं तु पूर्वमुक्तम् ॥

ततातत्तातितत्तेता तातततीतेतितातितुत् ।
तत्तत्तत्तातततितता ततेतातेततावुता ॥ २५ ॥

ततातत्तेति । ततातत्ता, अतितत्तेता, तातति, इतेतितातितुत्, तत्तत्तत्तातततितता, तता, इतातेततावुता इति पदच्छेदः ।

तता विस्तृता अतत्ता सततं गच्छत्ता यस्याः सा । 'अत सातत्यगमने' इत्यस्मात् शतरि तल् । जगद्रक्षणाय सततगतिशीलेतियावत् । तच्छब्देन ब्रह्म निर्दिश्यते । 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।' इति हि स्मर्यते । अतिक्रान्तं तत् ब्रह्म भोग्यत्वप्राप्यत्वादिना यया सा अतितत् तस्य भावोऽतितत्ता तया इता प्राप्ता अतितत्तेता । इताः प्राप्ताः ईतयः पीडा येषां ते मितेतयः । तेषां भावः इतेतिता । तामतिशयेन तुदतीति तथोक्ता । 'तुद व्यथने' इत्यस्मात् क्विप् । तस्य तस्य वस्तुनस्तत्ता तत्तद्भावः तत्तत्तत्ता तस्याः ततिः पङ्क्तिस्तया तता विस्तृता तत्तत्तत्तातवितता स्वाधीनसर्ववस्तुसत्ताकेत्यर्थः । तता विस्तृता । यद्वा आतता आगतवीणादिवाद्या । 'ततं वीणादिकं वाद्यम्' इत्यमरः । प्रपर्ण इत्यादिवत् बहुव्रीहिः । इतातेन मन्मथजनकेन विष्णुना इता प्राप्ता तातुता पादुका अचूसादृश्यात् तौतातितदिवत् पादुकासंज्ञा सूचकोऽयमनुकरणशब्दः । तदुक्तमाचार्यैः—तकारपठितिसूचितपादुकासंज्ञाक्षरान्तोऽयमेकाक्षरश्लोक इति संप्रदाय इति । एवंभूता पादुका तातति उत्सवेषु सर्वेषु पितेव परितुष्यतीति न्यायेन सर्वेषां जनकवदाचरति । अयमेकाक्षरश्लोकः । व्यञ्जनानामेवैकरूप्यं द्रष्टव्यम् । प्रतियोगिभेदेन प्राप्तिविस्तरयोः प्रतिपादनात् ततेतशब्दपौनरुक्त्यं नास्तीति द्रष्टव्यम् । कथितपदत्वदोषो दुष्करचित्रेषु नास्तीत्यालंकारिकाः ॥

यायायायायायायायायायायायायायायायाया ।
यायायायायायायायायाया या या या या या या या ॥ २६ ॥

**यायेति** । यायाया, आय, आयाय, अयाय, अयाय, अयाय, अयाय, अयाया, यायाय, आयायाय, आयायाया, या, या, या, या, या, या, या इति पदच्छेदः ।

यायाया भृशमिष्टं देशान्तरं प्राप्यतेऽनयेति यायाया । 'या प्रापणे' इत्यस्मात् यङन्तात् करणे अप्रत्ययादिति अकारप्रत्ययः—स्त्र्यधिकारविहितः । अतष्टाप् । प्रापणार्थत्वेन गत्यर्थलाभावात् 'नित्यं कौटिल्ये गतौ' इति न नियमः । प्रापणे गतिरुपसर्जनं न गतिरेव प्रापणम् । ऋगतौ प्रापणे चेति भेदेन निर्देशान्न बहिर्गत्यर्थ इति भाष्याच्च । यायाया इत्यनेन प्रापणसाधनभूता पादुकोच्यते । सा आय विष्णवे । तच्छेषभूतेति यावत् । इतः परं चतुर्थपादस्थितानां यद्वृत्तानां क्रमेण पूर्वत्रान्वयः कथ्यते । या पादुका आयाय स्वामिप्राप्यभागाय रामादिप्राप्यकोसलदेशभागाय । पादुकाराज्यमभूदिति भावः । या पादुका अयाय शुभावहविधये । 'अयः शुभावहो विधिः' इत्यमरः । आश्रितानां सदृष्टप्रापिका भवतीति भावः । या पादुका अयाय ज्ञानाय । 'इण् गतौ' इत्यस्माद्भावे एरच् । सर्वे गत्यर्था ज्ञानार्था इत्यभियुक्ताः । स्वसेवकानां सज्ज्ञानदायिनीति भावः । या पादुका अयाय इच्छायै । 'ई गतिपूजनकान्त्यसनखादनेषु' इति धातोरिच्छापरपर्यायकान्त्यर्थकादेरच् । जनानामियं मे देवता भूयादितीच्छां जनयतीति भावः । या पादुका अयाय निरसनाय । विरोधिनामिति शेषः । अयाया विष्णुं प्राप्ता ।

यातेर्यङि लुक् । आतः कः टाप् । विरोधिनिरसनकाले भगवता गृहीतेति भावः । या पादुका यायाय गमनाय । अत्रोपसर्जनगतिमात्रविवक्षायां यातेर्भावे घञ् । आतो युक् । चतुर्थ्येकवचनम् । अयाया विष्णुं प्राप्तेति पूर्ववदन्वयः । लीलासंचारार्थं भगवतोत्पादितेति भावः । या पादुका आयायाय आगमनाय । आङ्पूर्वात् यातेः पूर्ववत् प्रक्रिया । स्वाश्रितरक्षणार्थं भगवदागमनहेतुरिति भावः । सर्वत्र तादर्थ्ये चतुर्थी । उपकार्योपकारकभाववत् । या पादुका आयाया आयस्य समन्ताद्गतेः आया प्राप्तिः । आङ्पूर्वात् यातेः 'आतः' इति कः । सर्वेषु लोकेषु कामचारा भवतीति भावः । या एवंभूता इत्येवमाकाराणामष्टयद्वृत्तवाक्यानां सा पादुका आय विष्णवे इति पूर्वेणान्वयः । यद्वृत्तस्योत्तरार्धगतत्वात् पूर्ववाक्ये तच्छब्दस्याक्षेपाल्लाभः । इममेवार्थमभिप्रेत्याष्टानां यद्वृत्तानां पूर्वेणान्वय इत्याचार्यैरनुगृहीतम् । विद्युन्मालावृत्तम् । 'मो मो गो गो विद्युन्माला' इति लक्षणम् । सर्वविषयसमुच्चयश्लोकोऽयं महायमकः । अचामाकाराणां हलां यकाराणां चैकत्वात् एकस्वरचित्रमेकवर्णचित्रम्, द्विस्थानकं स्थानचित्रम्, गोमूत्रिकासर्वतोभद्रकङ्कणवन्धमुरजवन्धपद्मवन्धादीनि वन्धनचित्राणि श्लोकानुलोमप्रतिलोमं गतिचित्रम्, अर्धयमकपादचतुरावृत्तियमकपादार्धाष्टावृत्तियमकपादषोडशावृत्तियमकैकाक्षरद्वात्रिंशदावृत्तियमकानि च दृश्यन्त इति महायमकत्वम् । अर्थान्तरकथनं च विस्तरभयात् श्रोतृबुद्धिव्यामोहनभयाच्चोपेक्षितम् ॥

रघुपतिचरणावनी तदा विरचितसंचरणा वनीपथे ।
कृतपरिचरणावनीपकैर्निगममुखैश्च रणावनी गता ॥ २७ ॥

**रघुपतीति** । तदा विश्वामित्रेण सिद्धाश्रमप्रयाणकाले वनीपथे अरण्यमार्गे । वनशब्दात् स्त्रीत्वविवक्षायां 'जातेरस्त्रीविषयादयोपधात् ।४।१।६३' इति ङीष् 'ऋक्पू—' इत्यादिना पथिशब्दस्य अप्रत्ययः । विरचितं संचरणं यया सा । रणावनीं मारीचादियुद्धभूमिं गता प्राप्ता रघुपतेश्चरणावनी पादुका वनीपकैर्याचकैः रक्षार्थिभिर्निगममुखैः वेदा एव मुखानि येषां तैः गौतमशतानन्दप्रभृतिभिश्च कृतपरिचरणा विहितसपर्याका अभूदिति गम्यते । पादचतुष्टयभागावृत्तियमकम् । 'ननरलगुरुभिश्च भद्रिका' इति त्रैष्टुभम् । 'भवति नजाविह मानिनी जरौ' इति जागतम् । उभयसंकीर्णेयमुपजातिः । 'इत्थं किलान्यास्वपि मिश्रितासु वदन्ति जातिष्विदमेव नाम ॥' इति संकीर्णवृत्तेषूपजातिसंज्ञा निर्दिष्टा ॥

दत्तकेलिं जगत्कल्पनानाटिकारङ्गिणारङ्गिणा रङ्गिणारङ्गिणा ।
तादृशे गाधिपुत्राध्वरे त्वां विनापादुका पादुका पादुकापादुका ॥२८॥

**दत्तकेलिमिति** । दत्तकेलिम्, जगत्कल्पनानाटिकारङ्गिणा, अरङ्गिणा रङ्गिणा, अरङ्गिणा, इति पदच्छेदः । अथवा रङ्गिणा त्रिः । उत्तरत्रापि तादृशे, गाधिपुत्राध्वरे, त्वां, विना, अपात्, उ, का, पादुका, पादुकापादुका इति पदच्छेदः ।

हे पादु पादुके, जगतां चराचराणां कल्पना सृष्टिरेव नाटिका नटनम् । 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इति स्त्र्यधिकारविहितण्वुल् । तां रङ्गितुं गन्तुं शीलमस्येति जगत्कल्पनानाटिकारङ्गी तेन । 'रगि गतौ' इति धातुः । ताच्छील्ये णिनिः । रङ्गं नृत्तस्थलमस्यास्तीति रङ्गी नटः । सः न विद्यते यस्य तेन अरङ्गिणा अपूर्वनटोत्सवेन रङ्गिणा रङ्गनाथेन रामात्मना रङ्गिणा नटेन । व्यस्तरूपकम् । दत्ता केलिः संचारकालेषु लीला यस्याः सा तां त्वां विना तादृशे प्रसिद्धे गाधिपुत्राध्वरे विश्वामित्रस्य यागे का उ पादुका कैव पादुका कस्य सुखस्य आपादुका आपादनशीला सती । आङ्पूर्वादन्तर्भावितण्यन्तात् पदेस्ताच्छील्ये 'लषपतपद—३।२।१५४' इत्यादिना उकञ्प्रत्ययः । यद्वा कापादुका ईषत्पादनशीला । ईषदर्थे वेति का भावः । भगवत्पादुकापेक्षया तदन्यपादुकागतिरत्यल्पेति भावः । का उ पादुका कैव पादुकेत्यर्थः । उशब्दस्यैवकारार्थता । 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।' इत्यत्र 'तदेव भूतं तदु भव्यमा इदम्' इत्यत्र च विवृता । अत्र रक्षणे नैरपेक्ष्यमवधारणार्थम् । अपादरक्षत् । यजमानं विश्वामित्रमग्न्यादिकं चोपकरणमिति शेषः । मारीचादिकृतविघ्ननिवृत्त्या तदग्न्यादिकं विश्वामित्रं च त्वमेव रक्षितवतीत्यर्थः । 'पा रक्षणे' इत्यस्माल्लङ् । द्वितीयचतुर्थपादयोः पादभागचतुरावृत्तियमकयोः संसृष्टिः । स्रग्विणी वृत्तम् । 'रैश्चतुर्भिर्युता स्रग्विणीयं मता ।' इति लक्षणम् ॥

पादपापादपापादपापादपा पादपा पादपापादपापादपा ।
पादपापादपापादपापादपापादपापादपापादपापादपा ॥ २९ ॥

**पादपेति** । पादपापादपापादपापादपा, पादपा, पादपापादपा, अपादपा, पादपापादपापादपापादपापात्, अपापादपापा, आदपापादपा इति पदच्छेदः ।

पादपान् स्थावरान्, अपादपान् जङ्गमांश्च आपद्यते प्राप्नोतीति पादपापादपापादम् । तच्च तत् पापं च तददन्तीति तथोक्ताः पापादस्तादृश्य आपो यस्याः सा पापादपा । स्थावरजङ्गमप्राप्तपापनाशकाभिषेकजलवतीति यावत् । 'ऋक्पूरब्धूःपथामानक्षे ।५।४।७४' इति समासान्ते अप्रत्ययः । पादं त्रिपाद्विभूत्यपेक्षया चतुर्थांशं पाति रक्षतीति पादपा 'पादोऽस्य विश्वाभूतानि' इति श्रुतेः । अपादं पादभिन्नं नित्यविभूतिं पातीति तथोक्ता । 'त्रिपादस्यामृतं दिवि' इति श्रुतेः । परव्यूहविभवादिषु भगवत्परिगृहीता पादुका संचरणमुखेनोभयविभूतिरक्षिकेति उभयविशेषणार्थः । पदसंबन्धिनः पादाः पदशब्देनेन्द्रादिस्थानमुच्यते । तत्संबन्धिनस्तत्राधिकृता इन्द्रादयः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । तान् पातीति पादपः । अः विष्णुः क्विप् । तस्य पादौ चरणौ पाति रक्षतीति पादपापादपा । आतोऽनुपसर्गे कः । इन्द्रादिरक्षकस्य हरेः पादरक्षेत्यर्थः । इदं सर्वत्र विशेष्यम् । अत्र पूर्वोत्तराणां विशेषणानां विधेयतयान्वयः । पदं रक्षणं तत्संबन्धिनि पादे रक्षणसंबन्धिनि रक्ष्ये पित्रादौ त्राणार्थकात् पदशब्दात्

'तस्येदम् ४।३।१२०' इत्यण्। पापातो भृशं रक्षकाः, अपापातस्तद्भिन्ना अरक्षकाः। 'पा रक्षणे' इत्यस्मात् यङो लुकि शत्रन्तौ शब्दौ। तेषु मातृपितृविषये रक्षकेष्वरक्षकेषु च यथाक्रममपापात् पापमशुभसंकल्पमतति सततं गच्छतीति पापात्। 'अत सातत्यगमने' इत्यस्मात् क्विप्। तद्भिन्ना अपापात्। शुभसंकल्पवतीत्यर्थः। अपापात् अपापं सुकृतमत्ति नाशयतीति अपापात्। 'अद भक्षणे' इत्यस्मात् 'अदोऽनन्ने।३।२।६८' इति विट्। सुकृतनाशिनीति यावत्। भगवन्निष्ठनिग्रहानुग्रहजनकत्वं पादुकायामारोप्यते। अवश्यरक्षितव्यरक्षकेषु शुभम्, अवश्यरक्षितव्यारक्षकेष्वशुभं च पादुका विधत्त इति भावः। अं विष्णुं पापान्ति भृशं पिबन्तीति अपापा भगवदनुभवशीलाः। 'अन्येभ्योऽपि दृश्यते' इति विच्। तान् दायन्ति शोधयन्तीति अपापादाः शमदमादयः। 'दैप् शोधने' इत्यस्मात् आतोऽनुपसर्गे कः। दमशमादिभिरेव हि भगवदनुभवानुकूलचित्तशुद्धिर्भवति। 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' इति श्रुतेः। तान् गुणान् पापानि पुनः पुनः रक्षतीति तथोक्ता। यङ्लुङन्तात् 'आतः—३।२।३' इति कः। पादुकासंबन्धात् सर्वेषु भगवदनुभवानुकूलशमदमादयो जायन्त इति भावः। आद्यन्ति खण्डयन्तीत्यादाः खण्डकाः स्वाश्रितविरोधिनस्तान् पान्ति शोषयन्तीति आदपाः। 'पै शोषणे' इत्यस्मादन्तर्भावितण्यर्थात् क्विप्। विरोधिनिरासकास्ते च ते पादाः किरणास्तान् पाति रक्षतीति तथोक्ता। स्वकिरणप्रसरणमात्रेण विरोधिनः पराभूता भवन्तीति भावः। 'आतः—' इति कः। अत्र स्रग्विणीवृत्तम्। षोडशावृत्तियमकव्यञ्जनैकश्लोकपादानुलोमाष्टदलपद्मादिबन्धानां चित्राणां यथासंभवं संसृष्टिः संकरश्च। अत्रायमष्टदलविन्यासप्रकारः—मण्डलाकाररेखात्रयेण मण्डलं वीथीद्वयमुत्पाद्य तत्र दिक्षु विदिक्षु च द्विकोष्ठघटितदलाष्टकं विधाय कर्णिकायां पाकारं लिखित्वा पाद इत्यक्षरद्वयमष्टस्वपि दलेषु विलिख्य दलाष्टककोष्ठद्वयनिविष्टस्याक्षरद्वयस्य पृथक् पृथक् कर्णिकायां प्रवेशनिर्गमाभ्यां श्लोकं वाचयेत्। षोडशदलपद्मविन्यासप्रकारस्तु पूर्ववन्मण्डलवीथीमुत्पाद्य तत्र षोडशदलानि विलिख्य तेषु षोडश पाकारान् विलिख्य कर्णिकायामेकं दकारं विन्यस्य दलनिष्ठपाकारोपक्रमोपसंहारं कर्णिकानिष्ठदकारमध्यमं च पादपा इत्यक्षरत्रयं वाचयेत्। चतुर्दलपद्मविन्यासप्रकारस्तु पूर्ववन्मण्डलवीथीमुत्पाद्य तत्र चतसृषु दिक्षु चत्वारि दलानि विलिख्य तेषु प्रत्येकं कोष्ठपञ्चकमुत्पाद्य तेषु प्रत्येकं पादपापाद इत्यक्षरपञ्चकं विलिख्य कर्णिकायां पाकारं विन्यस्य प्रथमदलकोष्ठपञ्चकविलिखितस्याक्षरपञ्चकस्य कर्णिकाक्षरप्रवेशनिर्गमाभ्यां प्रथमपादं वाचयेत्। एवमेव द्वितीयादिषु त्रिषु दलेषु त्रीनपि पादान् वाचयेदित्येतैर्विन्यासैर्बन्धा विच्छित्तिविशेषशालिनो भवन्ति॥

साकेतत्राणवेलाजनिततततनिजप्राङ्कणश्रीप्रभासा
साभा प्रश्रीरटव्यामियममममयमित्यापदुच्छेदिलासा।

सालादिच्छेदतिग्माहवरुरुरुवहह्रीकरस्यामरासा
सा रामस्याङ्घ्रिमभ्याजतिननतिजस्थूलमुत्रातकेसा ॥ ३० ॥

**साकेतेति ।** साकेतस्यायोध्यायास्त्राणवेलायां पालनसमये जनित उत्पादितस्ततो विस्तृतो निजप्राङ्गणे स्वस्थानसभाचत्वरे श्रीप्रभासः संपत्तिप्रकाशो यया सा । रत्नकाञ्चनाद्यनेकद्रव्यभूयिष्ठसभावतीति यावत् । आभया कान्त्या सहिता साभा । प्रकृष्टा श्रीस्त्रयीरूपा यस्याः सा प्रश्रीः । 'ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्' इति श्रुतेः । त्रयीप्रतिपाद्येति यावत् । अटव्यां ताटकावनेऽममानां निर्ममाणां यमिनां मुनीनां व्यापदं ताटकाकृतां विविधापदमुच्छेत्तुं शीलमस्येति व्यापदुच्छेदी लासो विलासो यस्यां सा । आमः अपक्वो रासः शब्दः । 'रस शब्दे' इति धातोर्भावे घञ् । अस्यतीत्यसा । 'असु क्षेपणे' इति धातोः पचाद्यच् । आमरासस्य असा निरासिका आमरासासा । स्वसेवकानामपरिपक्वशब्दनिरसनपूर्वकस्य सारस्वतस्य दात्रीति भावः । सा प्रसिद्धा इयमेषा पादुका सालादि सारादि । रलयोरभेदः । आदिपदेन धनुषः परिग्रहः । तयोर्बलधनुषोश्छेदे भङ्गे तिग्मस्तीक्ष्णः आहवरुः युद्धे प्रवृत्तो हुंकारशब्दः । 'रु शब्दे' इति धातुस्वरूपनिर्देशः । तेन लक्षणया तदर्थः प्रतीयते । तेन शब्देन रुरुवहस्य मृगधारिणो हरस्य ह्रीकरस्य लज्जाकरस्य । शिवबलधनुषोर्भङ्गाय विष्णुना कृतेन हुंकारेण शिवो लज्जितोऽभूदिति रामायणे रामजामदग्न्यसंवादे । तादृशस्य रामस्य रामात्मनावतीर्णस्य रङ्गनाथस्य अनुकम्प्य उत्रातः उत्रातकः । अनुकम्पायामिति कन् । उदित्येतदुत्कर्षार्थकम् । अनुकम्पनीये उत्कर्षेण त्रातके विषये नतिस्तत्कृतो नमस्कारः तज्जनितं तज्जं स्थूलं स्थौल्यम् । स्थूलशब्दोऽयं भावप्रधानतया निर्दिश्यते । तद् यस्य तमङ्घ्रिं रामस्याङ्घ्रिं प्रथममापन्नं संरक्ष्यं नमयित्वा स्वयं हर्षेण उल्वणीभवतीत्यर्थः । स्थूलमुदिति पदच्छेदे तु वेङ्कटपतिकमलमित्युद्धार्ये न सिध्यति, स्थूलमुत्रातक इति पदच्छेदे तु कमलमिति सविभक्तिकत्वं सिध्यतीति द्रष्टव्यम् । अभ्याजति साधनीभूय प्रेरयति । अभ्याङ्पूर्वकस्य 'अज गतिक्षेपणयोः' इत्यस्य प्रेक्षणार्थकत्वात् । ननेति नञ्द्वयमवधारणार्थे । प्रेरयत्येवेत्यर्थः । तत्र नित्यसंश्लिष्टेति यावत् । पादार्धभक्तिनिविष्टदलन्यासं कोणास्पृष्टकर्णिकं दलाग्रभागेषु वेङ्कटपतिकमलमिति कविनामाङ्कितमष्टदलपद्ममिदम् । अस्यार्थः—पादस्य श्लोकचतुर्थांशस्यार्धभक्तिरर्धभागः सा निविष्टा यस्मिन् दलन्यासे स पादार्धभक्तिनिविष्टः । दलन्यासो यस्मिन् पद्मे तत्तथोक्तम् । दलद्वये पादस्य निवेशात् दले पादार्धनिवेशो द्रष्टव्यः । अर्धशब्दोऽयमसमांशवाची । तथा च यथासंभवमर्धभागो द्रष्टव्यः । कोणैर्विदिग्भिरस्पृष्टा कर्णिका यस्मिन् तथोक्तम् । विदिक्दलवाचनसमये कर्णिकागतमक्षरं न वाचयितव्यमिति भावः । यथा चैतत्तथा प्रस्तारे विविच्य वक्ष्यामः । दलाग्रभागेषु वेङ्कटपतिकमलमिति वेङ्कटपतेर्वेङ्कटनामा(था)परनामधेयस्याचार्यस्य कमलं पद्मबन्धः तत्समर्पितम् । पद्ममित्यपि प्रतीयते । इत्यनेन प्रकारेण कमलशब्दोपसर्जनतया कविनामघटनाक्षरविशिष्टमष्टदलपद्ममिदं पद्यम् । अष्टदलपद्म-

रेखायां लेखनीयत्वात् पद्मस्य तथात्वम्। तल्लेखनप्रकारस्तु कर्णिकाकारेण प्रथमं मण्डलं विलिख्य तत्परितो दलाष्टकमन्योन्यव्यतिकृताग्ररेखाकं विलिखेत्। एवं सति दलद्वय-रेखाव्यतिकीर्णप्रदेशोऽक्षरत्रयनिवेशयोग्यो भूत्वा दलाष्टकवत् प्रतीतो भवति। तत्र कर्णिकायां सा इति प्रथमपादप्रथमाक्षरं विलिख्य दिक्‍दलस्य व्यतिकीर्णान्तरालभागे के–त–त्रा इति वर्णत्रयं विन्यस्य तस्मिन्नेव दले अन्तरालस्योपरिभागे रेखाप्रान्ते ण इति लिखित्वा, वे इति दलाग्रे लिखित्वा, प्रादक्षिण्येनावरुह्य भागान्तररेखाप्रान्ते ला इति लिखित्वा, तस्याधो व्यतिकीर्णान्तराले अवरोहक्रमेण ज–नि–त इति त्रयं लिखित्वा कर्णिकाक्षरमस्पृष्ट्वैव त इत्येतत् पुनर्द्विवारमावृत्य वाचयित्वा जनीत्यक्षरद्वयं प्रातिलोम्येन निजेति वाचयित्वा तस्योपरितनान्तरदलस्य संनिहितरेखाप्रान्ते प्रा इति लिखित्वा दलाग्रे क्ष इति निवेश्य पुनः पूर्ववदवरुह्य भागान्तरे ण इति लिखित्वा तस्याधो व्यति-कीर्णान्तराले अवरोहक्रमेण श्री–प्र–भा इति त्रयं लिखित्वा सा इति कर्णिकाक्षरं श्लिष्टं वाचयित्वा पादं समापयेत्। पुनः कर्णिकाक्षरमारभ्यारोहक्रमेण प्रविष्टेनैव मार्गेण सा भा प्र श्री इति वाचयित्वा तस्योपरि अनन्तरदलरेखाप्रान्ते र इति लिखित्वा अग्रे ट इति लिखित्वा अधोभागे अन्तराले व्या इति लिखित्वा अधोऽन्तरालेऽवरोहक्रमेण भि–य–म इति त्रयं विलिख्य कर्णिकामस्पृष्ट्वा म इत्येतत् द्विवारमावृत्य मियेत्येतत्प्राति-लोम्येन यमीति वाचयित्वा अनन्तरदलस्योपरि संनिहितरेखाप्रान्ते व्या इति न्यस्य दलाग्रे प इति न्यस्य अधः पार्श्वान्तरे दु इति न्यस्य अधोऽन्तराले अवरोहक्रमेण श्वेदिला इति न्यस्य कर्णिकाक्षरं सा इति वाचयित्वा अर्धं समापयेत्। एवमुत्तरार्धमपि सालादिच्छे इत्यादिक्रमेण दलेषु प्रवेशनिर्गमाभ्यां विदिक्‍दलेष्वन्तरालप्रवेशे कर्णि-कामस्पृष्ट्वैव यथासंभवं विलिख्य वाचयेत्। प्रथमनिर्गतदलान्तरालेनैव श्लोकान्ते प्रवेशः। एवं सति प्रादक्षिण्येन दलाष्टकाग्राक्षरेषु वेङ्कटपतिकमलमिति वाचयितुं श-क्यते। अनेनेदं पद्ममेव पद्माकारविन्यासयोग्यत्वात् पद्मत्वेनाध्यवसाय पादुकायां विषये आचार्यैः समर्पितमिति व्यज्यते। लक्षणं तु—'पादेषु प्रथमान्त्यैक्यपादो-पान्त्याक्षरत्रयम्। पादान्तरद्वितीयादि त्रितयं चेद्विपर्ययात्॥ अष्टमादित्रयं वाच्यं गत्यागत्योर्भवेद्यदि। दशमस्याधिकावृत्तिरुदयं चेद्दलाग्रकम्। यदि कोणापरिस्पृष्टकर्णि-काक्षरवाचनम्। इदमष्टदलं पद्मं कविसंज्ञाङ्कितं तदा॥' इति। स्रग्धरावृत्तम्। 'म्रभ्नै-र्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥' इति लक्षणात्॥

रम्ये वेश्मनि पापरक्षसभिदास्वासत्तधीनायिका
नन्तुं कर्मजदुर्मदालसधियां साहन्तनाधीकृता।
सद्वाटभ्रमिकासु तापसतपोविस्रम्भभूयन्त्रिका
काचित् स्वैरगमेन केलिसमये कामव्रता पादुका॥ ३१॥

**रम्य इति।** पापानां पापिनां राक्षसानां भिदायां भेदे स्वासत्ता सुतरामासत्ता

धीर्बुद्धिर्यस्य तस्य रामस्य नायिका प्रापिका सुबाहुमारीचप्रभृतिराक्षसनिबर्हणाय रामं विश्वामित्रयागभूमिं प्रापितवतीति यावत् ॥ केलिसमये विलाससंचारसमये स्वैरगमेन स्वच्छन्दगमनेन कामव्रता काम्यत इति कामः । 'अकर्तरि च कारके संज्ञायाम्' ३ । ३ । १९' इति कर्मणि घञ् । तथाभूतं व्रतं नियमपरिग्रहो यस्याः सा । लीलासंचार इव मनोहरलोकरक्षणादिनियमपरिग्रहवतीति भावः । सतां साधूनां मुनीनां वाटेष्वाश्रमश्रेणिषु भूमिकासु भ्रमणेषु । पुनः संचारेष्विति यावत् । तापसानां तपस्विनां तपसि विस्रम्भ ऐकाग्र्यं तस्य भूर्भूमिः जन्यजनकभावसंबन्धेन तदाधारभूतं यन्त्रं स्वविन्यासरेखात्मकं यस्याः सा तथोक्ता तापसवनभूमौ स्वाश्रमसमीपे रामपादुकामुद्रादर्शनात् निर्भयास्तपसि प्रवर्तन्त इति भावः । यन्त्रिकेत्यत्र 'शेषाद्विभाषा ५ । ४ । १५४' इति कप् । अतः सा काचित् अनिर्वचनीयवैभवा पादुका रम्ये हृद्ये वेश्मनि श्रीरङ्गविमाने कर्मभिर्दुष्कृतैर्जातो दुर्मदो यासां ताः कर्मजदुर्मदा दुष्टमदयुक्ता अतएव अलसा आवश्यकविषयग्रहणाशक्ता धियो बुद्धयो येषां तेषां नन्तुं सेवितुं नाथीकृता स्वामिनीकृता । कर्तरि शेषत्वविवक्षया षष्ठी । भगवज्ज्ञानाशक्ता रङ्गधाम्नि पादुकां सेवन्त इति भावः । हन्तेति हर्षे । अलसजनसेव्यदेवतालाभनिमित्तोऽयं हर्षः । शार्दूलविक्रीडितवृत्तम् ॥ वेङ्कटनाथीयं पादुकासहस्रमिति कविकाव्यनामाङ्कितं महाचक्रमिदम् । उद्धारस्तु दशमण्डलरेखात्मके नवमण्डलान्तरालवति नाभिस्थानेन सह प्रत्येकमेकोनविंशतिकोष्ठघटितं षट्कोणं वीथीत्रयं विलिख्य तत्रैकस्यां वीथ्यामाद्यपादं लिखित्वा प्रादक्षिण्येन द्वितीयवीथ्यां द्वितीयं तृतीयवीथ्यां तृतीयं च लिखित्वा नेमिस्थाने वीथीनामाद्यन्तकोष्ठैः कोष्ठषट्कवति तत् कोष्ठद्वयमध्ये प्रत्येकं कोष्ठयुगललेखनेनाष्टादशकोष्ठानि संपाद्य तृतीयपादान्तवर्णमारभ्य प्रादक्षिण्येन नेमिकोष्ठेषु चतुर्थपादं लिखित्वोपक्रान्तकोष्ठ एव समापयेत् । तत्र नाभिस्थाने आद्यपादत्रयस्य दशमाक्षरं श्लिष्टं भवति । पादत्रयस्याद्यन्तवर्णैः सह नेमिकोष्ठेषु चतुर्थपादोद्धारः । तृतीयपादान्त्यवर्णेन चतुर्थपादाद्यन्तवर्णौ श्लिष्टौ भवतः । तृतीयषष्ठमण्डलयोर्वेङ्कटनाथीयं पादुकासहस्रमिति कविकाव्यनामोद्धारः ॥

लक्षणं तु—कोणषट्कसमाक्रान्तमण्डलीनवमात्मके । चक्रे नेमीतरायां तु मण्डल्यां यत्र कुत्रचित् । मण्डलीगतिरित्येव यद्विवक्षितमुच्यते । तुर्यपादश्च नेमिस्थस्तन्महाचक्रमुच्यते ॥' इति । प्रस्तारेणैव स्पष्टोऽर्थः ॥

श्रीसंवेदनकर्मकृद्वसु तवस्यामृद्धधैर्यस्फुटः
श्रीपादावनि विस्तृतासि सुखिनी त्वं गेययातायना ।
वेदान्तानुभवातिपाति सुतनुः सान्द्रेड्यभावप्रथे-
ऽङ्कस्था चाच्युतदिव्यदासुसुमतिः प्राणस्थसीताधन ॥ ३२ ॥

श्रीसंवेदनेति । श्रीस्त्रयी । 'सा हि श्रीरमृता सताम्' इति श्रुतेः । तस्याः संवेदनं

ज्ञानं यस्य तत् । त्रयीबोध्यं कर्म कुर्वन्तीति श्रीसंवेदनकर्मकृतः त्रयीबोधितधर्मानुष्ठातारस्तेषां वसु धनभूते । वसुशब्दस्य नपुंसकस्य संबुद्धौ रूपम् । सान्द्रेड्यभावप्रथे ईड्यः स्तुत्यस्तस्य भावस्तेन जाता प्रथा प्रसिद्धिः सान्द्रा घना ईड्यभावप्रथा यस्याः सा तथोक्ता । तत्र संबुद्धिः । स्तुत्यत्वेन जगद्विदितेति यावत् । प्राणवत्तिष्ठतीति प्राणस्था सा चासौ सीता जानकी तस्या धनवदुपादेया पादुका तत्र संबुद्धिः । एवंभूते हे श्रीपादावनि पादुके, गेयं गानयोग्यं यातायनं गतिवर्त्म यस्याः सा । 'अयनं वर्त्म' इत्यमरः । पादुकासंचारितमार्गं सर्वे स्तुवन्तीति भावः । वेदान्ते योऽनुभवस्तमतिपतितुमतिक्रमितुं शीलं यस्याः सा । शोभना तनुर्यस्याः सा । वेदान्तापरिच्छेद्योत्कर्षयुक्तस्वरूपेति यावत् । अङ्कवत् भगवतो विरुदवत् तिष्ठतीत्यङ्कस्था । चकारः सर्वत्र विशेषणसमुच्चयार्थः । अच्युतदिव्यदास्ये शोभमाना मतिर्यस्याः सा । सुमतिः सुखिनी निरतिशयसुखवती एवंभूता त्वं विस्तृतासि । नानावतारेषु बहुरूपासि । ऋद्धेन समृद्धेन धैर्येण स्फुटो विकसितबुद्धिस्तव स्यां त्वच्छेषभूतः स्याम् ॥ चतुरङ्कमष्टारं चक्रमिदम् । इदमत्र 'श्रीश्रीवेङ्कटनाथेन वेदान्ताचार्यतावता । कविवादिमृगेन्द्रेण कृता पादावनीनुतिः ॥' इति । चतुष्पादीपादैरङ्कचतुष्टयम् । श्रीसंवेदनेति श्लोकरूपा या चतुष्पादी तत्संबन्धिनस्तत्रोद्धार्याः श्रीश्रीवेङ्कटनाथेन इत्यादयश्चत्वारः पादास्तैर्नामस्वरूपगुणक्रियाबोधकैः कवेरङ्कचतुष्टयं चिह्नचतुष्टयमुद्धार्यमिति शेषः । उद्धारस्तु पूर्ववदेव । दशमण्डलरेखात्मके नवमण्डलान्तरालवति चक्रे नाभिस्थानेन सह एकोनविंशतिकोष्ठघटितं विधिचतुष्टयं दिक्षु विदिक्षु च विलिख्य एकस्यां वीथ्यामाद्यपादं विलिख्य प्रादक्षिण्येन द्वितीयस्यां द्वितीयं तृतीयस्यां तृतीयं चतुर्थ्यां चतुर्थं च विलिखेत् ॥ तत्र नाभिस्थाने पादचतुष्टयस्य दशमाक्षरं श्लिष्टं भवति । तत्र प्रथममण्डले श्री श्रीवेङ्कटनाथेन इत्यस्य पादस्य तृतीयमण्डले वेदान्ताचार्यतावतेत्यस्य षष्ठमण्डले कविवादिमृगेन्द्रेणेत्यस्य अष्टममण्डले कृता पादावनीनुतिरित्यस्य चोद्धारः । वीथीनां चतुष्टयादराणामष्टत्वम् । लक्षणं तु—कोणाष्टकसमाक्रान्तनवमण्डलचक्रगे । चतुर्वीथीगते पद्ये मण्डलेषु यथेप्सितम् । पद्यं पद्यद्वयं वापि यथाशक्ति समुद्धरेत् ॥ मण्डलीगतिरित्येतदष्टारं चक्रमुच्यते । इति प्रस्तारेणैव स्पष्टोऽर्थः ॥

कनकपीठनिविष्टतनुस्तदा सुमतिदायिनिजानुभवस्मृता ।
विधिशिवप्रमुखैरभिवन्दिता विजयते रघुपुङ्गवपादुका ॥ ३३ ॥

**कनकपीठेति** । तदा अधिकारकाले कनकपीठे सुवर्णसिंहासने निविष्टा तनुर्यस्याः सा । सुमतिं शोभनबुद्धिं दत्ते इति सुमतिदायिनी । शोभनबुद्धिप्रदे निजे आत्मीये अनुभवः प्रत्यक्षादिज्ञानं स्मृतं स्मृतिश्च ते यस्याः सा । पादुका साक्षात्कारादिभिः स्मरणेन च शोभनबुद्धिर्भवतीति भावः । स्मृतं स्मृतिर्भावे क्तः । विधिशिवप्रमुखैर्ब्रह्मरुद्राद्यैरभिवन्दिता नमस्कृता रघुपुङ्गवपादुका विजयते । द्रुतविलम्बितवृत्तम् । भिन्नवृत्तानुलोमगोमूत्रिकायां प्रथमश्लोकोऽयम् ॥

दीनगोपीजनिक्लिष्टभीनुत्सदा रामपादावनि स्वानुभावस्थिता ।
एधि मेऽवश्यमुत्तारभावश्रिता तेजसा तेन घुष्टिं गता पालिका ॥३४॥

दीनेति। हे रामपादावनि, दीनानां गोपीनां बल्लवाङ्गनानां जनिं पुनरुत्पत्तिं क्लिष्टं क्लेशं कंसादिकृतपीडां भियमिन्द्रादिजनितभयं च नुदति क्षिपतीति तथोक्ता। 'नुद प्रेरणे' इत्यस्मात्क्विप्। तथात्वं च चिन्तयन्ती राधादौ प्रसिद्धम्। सदा स्वानुभावस्थिता स्वे महिम्नि प्रतिष्ठिता उत्तारभावश्रिता संसारोत्तरणकारणत्वं प्राप्ता। तारयतेः करणे एरच्। तेन प्रसिद्धेन तेजसा स्वप्रभया घुष्टिं प्रसिद्धिं गता। 'घुषिर् विशब्दने' इति धातोः स्त्रियां क्तिन्। त्वं मे ममावश्यं सत्यं पालिका एधि रक्षिका भव। 'अस भुवि' इति धातोर्लोट्-मध्यमपुरुषैकवचनम्। स्रग्विणीवृत्तम्। अनयोः श्लोकयोरेकान्तरितवर्णश्लिष्टतया पूर्वोत्तरार्धगोमूत्रिकावद्वाचनं द्रष्टव्यम् ॥

धामनिराकृततामसलोका धातृमुखैर्विनता निजदासैः ।
पापमशेषमपाकुरुषे मे पादु विभूषितराघवपादा ॥ ३५ ॥

धामनिराकृतेति। हे पादु, धाम्ना तेजसा निराकृतास्तामसलोका आसुरप्रकृतिजना यया सा तथोक्ता। धातृमुखैश्चतुर्मुखप्रभृतिर्निजदासैः स्वशेषभूतैर्विनता नमस्कृता विभूषितौ परिष्कृतौ राघवपादौ यया सा। त्वं मे मम पापं दुष्कृतमशेषं निःशेषं यथा तथा अपाकुरुषे निराकरोषि। दोधकवृत्तमिदम्। 'दोधकवृत्तमिदं भभभाद्गौ' इति लक्षणात् भिन्नवृत्तप्रतिलोमगोमूत्रिकायां प्रथमश्लोकोऽयम् ॥

प्रातिलोम्येन वाच्यमानश्लोको यथा—

कृपानघत्रातसुभूरदुष्टा मेध्या रुचा पारिषदाम भूपा ।
पदावनि स्त्यानसुखैर्नतृप्ता कान्त्या समेताधिकृतानिरोधा ॥ ३६ ॥

कृपेति। हे पादावनि, त्वं कृपया अनघं निर्दुःखं यथा तथा त्राता रक्षिता सुभूरार्यावर्तादिपुण्यभूमिर्यया सा तथोक्ता अदुष्टा निरवद्या रुचा किरणेन मेध्या परिशुद्धा। पावनरत्नकिरणेति यावत्। पारिषदा परिषदि साधुः जनसमाजे साधुः। 'णोऽपीष्यते' इति साध्वर्थे परिषच्छब्दाण्णप्रत्ययः। साधुसभापरिष्कारिकेति यावत्। भुवं पातीति भूपा। अर्चावतारे भूलोकरक्षिकेति यावत्। स्त्यानैर्निबिडैः सुखैर्भगवदङ्घ्रिसंगमजैर्नतृप्ता तृप्तिरहिता अत एव कान्त्या भगवदङ्घ्रिसंगमेच्छया समेता भगवच्चरणयोर्नित्यसंश्लिष्टेति यावत्। अधिकृता कोसलदेशरक्षणसमयेऽधिकारयुक्ता अनिरोधा अप्रतिहतसंचारा एवंभूता त्वं आम आयाहि। पूजाकालेषु संनिधत्स्वेति यावत्। आङ्पूर्वात् 'अम गत्यादिषु' इति धातोर्लोट्मध्यमपुरुषैकवचनम्। पूर्वश्लोकमनुलोमतया विलिख्य उत्तरश्लोकमुपान्त्यश्लिष्टद्वितीयाक्षरतया उत्तरोत्तरैकान्तरित एकाक्षरश्लिष्टतया च विलिख्य वाचयेत् ॥

सारससौख्यसमेता ख्याता पदपा भुवि स्वाज्ञा ।
साहसकार्यवनाशा धीरा वसुदा नवन्यासा ॥ ३७ ॥

**सारसेति** । सारसैः पूजोपनीतपद्मैः सौख्यसमेता सुखवती स्वाज्ञा शोभनाज्ञावती साहसकारिणो भरतस्यावने रक्षणे आशा इच्छा यस्याः सा तथोक्ता भरतस्य साहसकारित्वम् 'शेष्ये पुरस्ताच्छालाया यावन्न प्रतियास्यति ।' इति रामायणे द्रष्टव्यम् । धीरा अचञ्चला श्रितरक्षणाध्यवसायवती वसुदा धनप्रदा नवा मनोहरा न्यासाः संनिवेशा यस्याः सा पदपा पादावनी भुवि ख्याता भूमौ प्रसिद्धा । आर्याभेदः । भिन्नवृत्तानुलोमप्रतिलोमप्रथमश्लोकोऽयम् ॥

सान्या वनदा सुवराधीशाना वर्यका सहसा ।
ज्ञा स्वा विभुपादपताख्याता मे सख्यसौ सरसा ॥ ३८ ॥

**सान्यावनदेति** । सान्या सम्यक् भजनीया । 'षण संभक्तौ' इति धातोः कर्मणि ऋहलोर्ण्यत् । अवनदा रक्षणदा सहसा झटिति सुवरा सुखेन वरणीया । 'वृङ् वरणे' इति धातोः सुपूर्वात् खल् । अधीशाना स्वामिनी वर्यं श्रेष्ठं कं सुखं यस्याः सा वर्यका ज्ञा ज्ञानवती । देवतात्वाध्यवसायादेवमुक्तिः । विभोः श्रीरङ्गनाथस्य पादपतया पादरक्षिणीत्वेन ख्याता प्रसिद्धा पदसंस्कारपक्षावलम्बने सामान्यतो विशेषानालोचनेन कप्प्रत्ययान्तः । टाबभावे तल उत्पत्तौ पादपतेति रूपम् । अतः पादपातेति भाव्यमिति नाशङ्कनीयम् । स्वा स्व आत्माधीनः अः विष्णुर्यस्याः सा । स्वाधीनरङ्गनाथेति यावत् । असौ पादुका मे मम सरसा स्नेहयुक्ता सखी वयस्या । हिताहितयोरुपदेष्ट्रीत्यर्थः । पूर्वोक्तविशेषणानां सखीसाधारण्यमपि द्रष्टव्यम् । अयं श्लोकः पूर्वश्लोके प्रतिलोमतया वाचनीयः । वृत्तमार्याभेदः ॥

तारस्फारतरस्वररसभररा सा पदावनी सारा ।
धीरस्वैरचरस्थिररघुपुरवासरतिरामसवा ॥ ३९ ॥

**तारस्फारेति** ॥ धीरो दृढबुद्धिः स्वैरचरः स्वच्छन्दचारी स्थिरा रघुपुरवासरतिरयोध्यानगरवासाभिलाषो यस्य स चासौ रामः । सवः प्रेर्यो यस्याः सा तथोक्ता । 'षूङ् प्रेरणे' इत्यस्मादेरच् । तारेणोच्चैस्तरेण स्फारतरेण भूयसा । 'स्फारं भूयश्च भूरि च ।' इत्यमरः । स्वरेण निजनादेन रसभरं प्रीत्यतिशयं राति ददातीति रसभररा सा प्रसिद्धा पदावनी सारा आरेण गमनेन सहिता । 'ऋ गतौ प्रापणे च' इति धातोः भावे घञ् । आश्रितरक्षणाय तत्र गमनवतीति भावः । आर्यावृत्तम् ॥ पादुकायुगलगर्भकर्णिकमष्टदलपद्ममिदमस्मदुपज्ञं चित्रम् । अत्र दिक्षु कोणेषु च क्रमात् प्रवृत्ताभ्यां पादाभ्यां रेफकर्णिकं पत्राष्टकं द्वितीयचतुर्थपादाभ्यां कर्णिकामध्ये पादुकाद्वयं तत्र दशसु अङ्गुलिस्थानेषु सरति रामपदावनी सा इति वाक्योद्धारः ।' इति । एतदुक्तं भवति—

प्रथमं रेफरूपां कर्णिकां लिखित्वा दिक्दलेषु कोणदलेषु च क्रमाल्लिखितानां प्रथमतृतीयपादप्रथमतृतीयपञ्चमसप्तमाक्षराणां प्रत्येकं द्वितीयाक्षरत्वेन-कर्णिकारेफं वाचयित्वा कर्णिकामध्ये रेफस्य पार्श्वद्वये द्वितीयचतुर्थपादाक्षरैः पादुकाद्वयं विलिखेत् । तल्लेखनप्रकारस्तु द्वितीयपादप्रथमाक्षरमपि कर्णिकास्थं रेफमेव वाचयित्वा रेफस्य दक्षिणपार्श्वे । 'मध्ये कुशामुभयतः प्रतिपन्नवृद्धिं मन्ये समीक्ष्य भवती मणिपादरक्षे ।' इत्युक्तरीत्या पादुकां कृत्वा पार्ष्णिस्थाने द्वितीयपादस्य स इति द्वितीयाक्षरं भ इति तृतीयाक्षरं च लिखित्वा चतुर्थाक्षरं कर्णिकारेफमेव वाचयित्वा द्वितीयतृतीययोरुपरि रा इति पञ्चमाक्षरं विलिख्य तदूर्ध्वं दक्षिणपादुकाकनिष्ठाङ्गुलिस्थाने सा इति षष्ठमक्षरं लिखित्वा तस्यां पादुकायामङ्गुष्ठाद्यङ्गुलिस्थानेषु चतुर्षु पदावनी इति अक्षरचतुष्टयं लिखित्वा कनिष्ठिकास्थानस्थं सा इत्येतदक्षरं पूर्वं लिखितमेव वाचयित्वा द्वादशाक्षरं श्लिष्टं पादुकामध्ये पञ्चमाक्षरं वाचयित्वा अर्धं समापयेत् । एवमेव रेफस्य वामपार्श्वेऽपि पादुकां कृत्वा पार्ष्णिस्थाने चतुर्थपादद्वितीयाक्षरं तृतीयाक्षरं च विलिख्य कर्णिकारेफं चतुर्थतया वाचयित्वा तदूर्ध्वे पञ्चमं वा इत्यक्षरं पादुकामध्यस्थाने लिखित्वा तदूर्ध्वं वामपादुकाकनिष्ठाद्यङ्गुलिस्थानेषु पञ्चसु सरति राम इति षष्ठसप्तमाष्टमनवमदशमाक्षराणि विलिख्य व्युत्क्रम्य एकादशाक्षरं तत्पादुकाकनिष्ठिकास्थानस्थं सकारं वाचयित्वा पादुकागर्भस्थे चतुर्थपादपञ्चमाक्षरे श्लोकं समापयेत् । एवं लिखिते सति प्रथमतृतीयचरणाङ्कितदलाष्टकवति उल्बणकर्णिकाके विकस्वरे पद्मे कर्णिकाविन्यस्ताभ्यां द्वितीयचतुर्थपादाभ्यां पादुकायुगलसंनिवेशः सिध्यतीति। तत्र पादुकायुगलान्तराले कर्णिकारेफः स्फुटो भवति। तत्र दशस्वङ्गुलिस्थानेषु सरति रामपादावनी सा इति वाक्योद्धारः । अस्यार्थः—सा प्रसिद्धा रामपदावनी सरति गच्छति अस्मिन् पद्म इति शेषः । इदं पादुकायुगलगर्भकर्णिकमष्टदलपद्मरूपं चित्रमाचार्यैः प्रथमं दृष्टमित्यर्थः ॥ इति ॥

चरमचरं च नियन्तुश्चरणावनिदंपरेतरा शौरेः ।
चरमपुरुषार्थचित्रौ चरणावनि दिशसि चत्वरेषु सताम् ॥ ४० ॥

**चरमचरमिति** । हे चरणावनि, त्वमनिदंपरेतरा सती इदंपरैव सती अयोगव्यवच्छेदेन रङ्गनाथचरणप्रदानतात्पर्यवती सती चरं जङ्गमम्, अचरं चोभयमपि नियन्तुस्तदुभयनियमनशीलस्य । तृन्नन्तत्वात् 'न लोकाव्यय—' इत्यादिना षष्ठीनिषेधः । यथाप्राप्ति द्वितीयैव । शौरे रङ्गनाथस्य चरमपुरुषार्थस्य मोक्षस्य चितं ज्ञानम् । 'चिती संज्ञाने' इत्यस्मात् स्त्र्यधिकारे 'संपदादिभ्यः' इति क्विप् । त्रायेते रक्षत इति चरमपुरुषार्थचित्रौ । 'त्रैङ् पालने' इत्यस्मात् 'आतोऽनुपसर्गे कः' । चरणौ सतामधिगतात्मयाथात्म्यज्ञानानां चत्वरेषु गृहाङ्गणेषु दिशसि साधुजनगृहाङ्गणेषु रङ्गनाथमानयसीति भावः। पादद्वयभागद्वयावृत्ति यमकम् । प्रथमतृतीययोश्चरमेत्यावर्तनात् द्वितीयचतुर्थयोश्चरणावनीत्यावर्तनाच्च । पादचतुष्टयेऽपि चर इति वर्णद्वयावर्तनात् यमकानुप्रासयोः संकर इति ॥

अनालंकारिकत्यक्तमवैयाकरणोत्थितम्।
यथामति मयाप्येषा व्याख्याता चित्रपद्धतिः।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे चित्रपद्धतिस्त्रिंशी॥

---

निर्वेदपद्धतिरेकत्रिंशी॥

इयता प्रबन्धेन पादुकाया दिव्यमङ्गलविग्रहगुणानात्मगुणांश्चानुभूय एतादृशसुलभशुभालम्बने विद्यमानेऽपि आलम्बनान्तरभ्रमजनितं स्वापराधं पादुकायै निवेदयितुं प्रस्तौति—

प्रपद्ये पादुकां देवीं परविद्यामिव स्वयम्।
यामर्पयति दीनानां दयमानो जगद्गुरुः॥ १॥

**प्रपद्य इति।** देवीं क्रीडापरां गुणैर्दीप्यमानां वा स्वयमात्मना परविद्यां परभक्तिमिव स्थितां पादुकां प्रपद्ये। उपमालम्बनसाधारणधर्ममाह, उक्तमर्थं च समर्थयते—यामिति। जगतां लोकानां गुरुराचार्यः श्रीरङ्गनाथः। 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।' इति प्रथमं वेदसंप्रदायप्रवर्तकतया श्रुतेः। दीनानां संसारखिन्नानां दयमानः कारुणिकः सन् यां पादुकामर्पयति ददाति तामिति पूर्वेणान्वयः। सदाचार्यसकाशाल्लब्धा भक्तिर्यथा स्वसंबन्धिनो दीनान् उज्जीवयति तथा श्रीरङ्गनाथसकाशाल्लब्धा पादुकापीत्युक्तेरुपमालंकारः। तस्यैवोत्तरार्धेन समर्थनात् काव्यलिङ्गसंकीर्णः॥

अपि जन्मनि पादुके परस्मिन्ननघैः कर्मभिरीदृशो भवेयम्।
य इमे विनयेन रङ्गभर्तुः समये त्वां पदयोः समर्पयन्ति॥ २॥

**अपीति।** हे पादुके, अहमनघैः प्रतिबन्धरहितैः कर्मभिस्त्वदर्चनरूपैः। परस्मिन्नपि जन्मनि भविष्यति मोक्षरूपे जन्मान्तरेऽपि। ईदृशस्त्वत्परिचारकसदृशो भवेयं जायेय। य इमे पुरुषा रङ्गभर्तुः पदयोस्त्वां समये लीलासंचारसमये विनयेन प्रश्रयेण समर्पयन्ति ईदृश इति पूर्वेणान्वयः।

'अहह सहजदासाः सूरयः स्वस्तबन्धा
विमलचरमदेहा इत्यमी रङ्गधाम्नि।
महितमनुजतिर्यक्स्थावरत्वं श्रयन्ते
सुनियतमिति हंसं प्राहुरेभ्यो नमः स्तात्॥'

इति पराशरभट्टपादोक्तरीत्या मोक्षानन्तरं श्रीरङ्गे भगवानिवेच्छागृहीतदेहोऽहं मुक्तैश्वर्यं भगवत्कैंकर्यं कुर्यामिति भावः प्रेयोऽलंकारः॥

परिवर्तयिता पितामहादीन् त्वमिवानन्तमसौ वहत्यनेहा ।
अधुनापि न शौरिपादुके त्वामनघालम्बनमभ्युपैति चित्तम् ॥ ३ ॥

**परिवर्तयितेति** । हे शौरिपादुके, पितामहादीन् पितृजनकप्रपितामहादीन् ब्रह्मादींश्च परिवर्तयिता पर्यायतो निराकुर्वन्, पादुकापक्षे ब्रह्मादीन् कल्पभेदेन क्रमशः प्रतिष्ठापयन्तीति लिङ्गपरिणामः । अनेहा कालः । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः । 'ऋदुशनस्पुरुदंसोऽनेहसां च ७ । १ । ९४' इति नङ् । त्वमिवानन्तमवधिरहितं यथा वहति प्रवाहरूपेण याति, अन्यत्र अनन्तं भगवन्तं वहसि धत्से । अधुनापीदानीमपि चित्तम् । ममेति गम्यते । अनघं रमणीयम्, आलम्बनं ध्यानविषयं त्वां नाभ्युपैति । इयता कालेनापि त्वां भजन् तदानीमप्यस्वाधीनमनस्कत्वात् न भजामि किं करोमीति निर्वेदः । पूर्वार्धे श्लेषानुप्राणितोपमा प्रेयश्च संसृज्यते ॥

कमलाध्युषिते निधौ निरीहे सुलभे तिष्ठति रङ्गकोशमध्ये ।
त्वयि तत्प्रतिलम्भने स्थितायां परमन्विच्छति पादुके मनो मे ॥४॥

**कमलेति** । हे पादुके, कमलया श्रिया अध्युषितेऽधिष्ठिते । ताम्रपात्रवर्तिनीति गम्यते । 'कमलं सलिले ताम्रे' इति विश्वः । निरीहेऽवाप्तसमस्तकामे काङ्क्षाधिक इत्यपि । सुलभे भक्त्येकलभ्ये, अन्यत्र खननादिबहुव्यापारमन्तरेण प्राप्ये निधावनवधिकपुरुषार्थभूते । श्रीरङ्गनाथे निधावित्यपि । रङ्गकोशस्य श्रीरङ्गविमानस्य मध्ये गुप्तप्रदेशे इत्यपि । तिष्ठति सति । 'कोशोऽस्त्री कुड्मलेऽप्योघे गुह्येऽण्डे शास्त्रदिव्ययोः । गृहे देशे पुस्तकौघे पेश्यामसिपिधानके ॥' इति नानार्थरत्नमालायाम् । त्वयि तस्य निधेः प्रतिलम्भने प्रत्यक्षतया ज्ञापने स्थितायां हेतुतया व्यवस्थितायां सत्यां मे मम मनो हृदयं परं क्षुद्रपुरुषार्थमन्विच्छति । किं करोमि । अस्वाधीनचित्तत्वेन निर्वेदः विषादनमलंकारः । 'इष्यमाणविरुद्धार्थसंसिद्धिस्तु विषादनम् ।' इति लक्षणात् ॥

यद्यप्यहं तरलधीस्तव न स्मरेयं
न स्मर्तुमर्हति कथं भवती स्वयं मे ।
वत्से विहारकुतुकं कलयत्यवस्था
का नाम केशवपदावनि वत्सलायाः ॥ ५ ॥

**यद्यपीति** । हे केशवपदावनि, तरलधीश्चपलमतिरहं यद्यपि तव न स्मरेयं न चिन्तयेयम् । 'अधीगर्थदयेशां कर्मणि । २ । ३ । ५२' इति षष्ठी । भवती स्वयं मे मम स्मर्तुं कथं नार्हति । अर्हत्येव । तत्र दृष्टान्तमाह—वत्से तर्णके विहारकुतुकं लीलासंचारकुतूहलं कलयति विदधति सति वत्सलायाः पुत्रस्नेहवत्या धेन्वा अवस्था का नाम । अनिर्वचनीयसंभ्रमवती धेनुर्भवतीति भावः । दृष्टान्तमलंकारः ॥

मातर्मुकुन्दकरुणामपि निह्नुवानात्
किंवापरं किमपि किल्बिषतो मदीयात् ।
गाढं गृहीतचरणागमनापदेशा
तत्प्रेरणप्रणयिनी तव चेन्न लीला ॥ ६ ॥

**मातरिति** । हे मातः पादुके, मुकुन्दस्य स्वयमेव संश्रितमोचनोद्युक्तस्य करुणां कारुण्यमपि निह्नुवानादपह्नुवानात् मदीयात् किल्बिषात् परमुत्कृष्टं किमपि प्रतिबन्धशक्तिमद्वस्तु किंचित् । किंवा किंचिदपि नाधिकमित्यर्थः । गमनस्य संचारस्यापदेशात् व्याजात् गाढं दृढं यथा तथा गृहीतमुपात्तं भगवच्चरणं यया सा । तस्य भगवतः प्रेरणं रक्षणोद्योगं प्रणयतीति तथोक्ता तव लीला न चेत् मदीयात् किल्बिषात् किमपि किमपि परं नास्तीति पूर्वेणान्वयः । त्वं लीलया भगवन्तं चरणग्रहणपूर्वकं न सान्त्वयेर्यदि तदा मत्पापमेवाप्रतिबन्धशक्तितया विजयेतेति भावः । संभावनालंकारः ॥

अत्यन्तनिर्विण्ण आचार्यः पादुकायां स्वदीनोक्त्यनाकर्णनमुन्नीय स्वातन्त्र्यादुपालभते—

क्षीबासि काञ्चनपदावनि कैटभारेः
पादारविन्दमकरन्दनिषेवणेन ।
देवि त्वदन्तिकजुषः कथमन्यथा मे
दीनाक्षराणि न शृणोषि दयाधिकात्वम् ॥ ७ ॥

**क्षीबासीति** । हे देवि काञ्चनपदावनि, कैटभारेः श्रीरङ्गनाथस्य पादयोरेवारविन्दयोर्मकरन्दस्य सौगन्ध्यसौकुमार्यादिगुणजातमेव स्वाद्यतया मकरन्दतयाध्यवसीयते । तस्य निषेवणेनानुभवेनापानेनेति गम्यते । क्षीबासि मधुपानादिव मत्तासि । 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । अन्यथा क्षीबा नासि चेत् दययाधिका अनवधिककरुणायुक्ता त्वं दैवात् तवान्तिकजुषः समीपवर्तिनो मे मम दीनाक्षराणि निर्वेदवचनानि । दैन्येन समग्रोक्तिशक्तिहानिमभिप्रेत्याक्षरत्वोक्तिः । कथं न शृणोषि । अतो ज्ञायते सा त्वं मत्तासीति भावः । अर्थापत्तिरलंकारः ॥

मातस्त्वदर्पितभरस्य मुकुन्दपादे
भद्रेतराणि यदि नाम भवन्ति भूयः ।
कीर्तिः प्रपन्नपरिरक्षणदीक्षितायाः
किं न त्रपेत तव काञ्चनपादरक्षे ॥ ८ ॥

**मातरिति** । हे मातः काञ्चनपादरक्षे, मुकुन्दस्य पादे चरणे त्वयार्पितो भरो यस्य तस्य त्वयानुष्ठापितप्रपदनस्य मम भूयः पुनरपि भद्रेतराण्यशुभानि यदि भवन्ति नाम

तदा प्रपन्नानां परिरक्षणे दीक्षिताया गृहीतनियमायास्तव कीर्तिर्यशो न त्रपेत न लज्जेत किम् । तव कीर्तिरेव लज्जा स्यात्, मम तु न हानिरिति भावः । अशुभोत्पत्तिरूपस्य स्वदोषस्य पादुकादोषत्वेन वर्णनादुल्लासभेदोऽलंकारः ॥

दौवारिकद्विरसनप्रबलान्तरायै-
दूये पदावनि दुराढ्यबिलप्रवेशैः ।
तद्रङ्गधामनिरपायधनोत्तरायां
त्वय्येव विश्रमय मङ्क्षु मनोरथं मे ॥ ९ ॥

दौवारिकेति । हे पदावनि, अहं दौवारिकाः प्रति(ती)हारा रक्षिण एव द्विरसनाः सर्पाः, असत्यवादिनश्च तत्कृताः प्रबलान्तरायाः प्रत्यूहा येषां तैः । दुराढ्यानां दुष्टधनिकानां बिलानां गृहाणामेव सर्पावासरन्ध्रप्रगृहाणाम् । एतेन दुराढ्यानामाशीविषत्वं गम्यते । प्रवेशैरन्तर्गमनैर्दूये दुःखामि । तत्तस्मात्त्वं रङ्गधाम्ना श्रीरङ्गविमानवर्तिना भगवतैव निरपायेन अक्षयेण धनेनार्थेन उत्तरायामुत्कृष्टायां त्वय्येव मे मम मनोरथमभिलाषं मङ्क्षु शीघ्रं विश्रमय परिसमापय । क्षुद्रपुरुषार्थेभ्यो निवर्त्य त्वय्येव निवेशयेति भावः । एकदेशविवर्तिरूपकानुप्राणितकाव्यलिङ्गसंकीर्णः प्रेयोऽलंकारः ॥

व्यामुह्यतां त्रिविधतापमये निदाघे
मायाविशेषजनितासु मरीचिकासु ।
संस्पृष्टशौरिचरणा चरणावनि त्वं
स्थेया स्वयं भवसि नश्वरमे पुमर्थे ॥ १० ॥

व्यामुह्यतामिति । हे चरणावनि, संस्पृष्टः शौरेश्चरणो यया सा त्वम् । एतेन हस्तनिर्देशो व्यज्यते । त्रिविधतापमये आध्यात्मिकादितापत्रयप्रचुरे निदाघे संसार एव घर्मे मायायाः प्रकृत्या विशेषेण गुणभेदेन । 'माया दम्भे क्रियायां च' इति विश्वः । जनितासु मरीचिकासु शब्दादिविषयेष्वेव मृगतृष्णासु व्यामुह्यतां भ्राम्यतां नोऽस्माकं चरमे पुमर्थे मोक्षे । पानीये इत्यपि गम्यते । स्वयं स्थेया भवसि विशेषदर्शनहेतुर्भवसि । श्रीरङ्गनाथचरणं हस्तेन निर्दिश्य अयमेव परमपुरुषार्थो नान्यत्र भ्रमितव्यमिति निर्णयं जनयतीत्यर्थः । गम्योत्प्रेक्षा । पूर्वार्धगतं रूपकं तत्राङ्गमिति तयोः संकरः ॥

अच्छेद्यया विषयवागुरया निबद्धान्
दीनाञ्जनार्दनपदावनि सत्पथस्था ।

प्रायः क्रमेण भवती परिगृह्य मौलौ
कालेन मोचयति नः कृपया सनाथा ॥ ११ ॥

**अच्छेद्ययेति** । हे जनार्दनपदावनि, भवती कृपया सनाथा सती अच्छेद्यया दृढया विषयैः शब्दादिभिरेव वागुरया मृगबन्धिन्या निवद्धान् दीनान् नोऽस्मान् मौलौ शिरसि परिगृह्य गृहीत्वा नतिसमयशिरःस्थितिरेव शिरोग्रहणत्वेनाध्यवसीयते । सत्पथस्था समीचीनमार्गवर्तिनी आकाशस्थेत्यपि गम्यते । परितो मोचयितुमशक्यत्वादूर्ध्वदेशान्मोचयितव्येत्यभिप्रायेणेदमुक्तम् । क्रमेण पर्यायतो मोचयति विषयवागुराया निर्गमयसि । संसारान्निवर्तयसीति भावः । प्राय इत्युत्प्रेक्षा ॥

संवाहिका चरणयोर्मणिपादरक्षे
देवस्य रङ्गवसतेर्दयिता ननु त्वम् ।
कस्त्वां निवारयितुमर्हति योजयन्तीं
मातः सुतद्गुणगणेषु ममापराधान् ॥ १२ ॥

**संवाहिकेति** । हे मणिपादरक्षे, रङ्गवसतेः । रङ्गनामास्थानीगतस्येत्यपि गम्यते । देवस्य रङ्गनाथस्य । राज्ञ इत्यपि गम्यते । चरणयोः संवाहिका धारिका पादसंवाहनकरीत्यपि । त्वं दयिता वल्लभा ननु । महिषीत्यपि गम्यते । तस्य देवस्य शोभनेषु गुणगणेषु दयाक्षान्त्यादिषु कल्याणगुणनिचयेषु ममापराधान् आत्मन आगांसि योजयन्तीं घटयन्तीं त्वां को निवारयितुं प्रतिरोद्धुमर्हति । न कोऽपीत्यर्थः । तथाच भगवतो दयाक्षान्त्यादिकमुद्भाव्य ममापराधान् मार्जयेति भावः । 'मातः स्वयं गुणगणेषु' इति पाठे तु हे मातः, ममापराधान् गुणत्वेन परिणमयन्तीमित्यर्थः । दयाक्षान्त्यादेरपराधिसत्ताशोभित्वेन मयि भगवदुपकारिताबुद्धिमापादयन्तीमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

किं वा भविष्यति परं कलुषैकवृत्ते-
रेतावताप्यनुपजातमनेहसा मे ।
एकं तदस्ति यदि पश्यसि पादुके ते
पद्मासहायपदपङ्कजभोगसाम्यम् ॥ १३ ॥

**किंवेति** । हे पादुके, कलुषे पापे एका वृत्तिर्व्यापारो यस्य तस्य पापैकनिरतस्य मे मम एतावता इयता अनेहसा कालेनानुपजातमनुत्पन्नं दुःखं परं किंवा भविष्यति । अनुभूतसदृशमेव भविष्यतीति भावः । त्वं मां यदि पश्यसि तदा ते तव पद्मासहायस्य श्रीरङ्गनाथस्य पदपङ्कजयोर्भोगेन संस्पर्शजन्यसुखेन साम्यं सादृश्यमैक्यं तत् भविष्यद्वस्तु एकमस्ति श्रीरङ्गनाथपादयोस्त्वद्भोगसाम्यमात्रं त्वत्कटाक्षान्मम भविष्यति । ल-

त्कटाक्षाभावे मम तन्नास्तीति भावः । आक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणा ।' इति लक्षणात् ॥

विविधविषयचिन्तासंततामिश्चिरं मां
जनितकलुषमित्थं देवि दुर्वासनाभिः ।
पदसरसिजयोस्त्वं पादुके रङ्गभर्तुः
परिमलपरिवाहैः पावनैर्वासयेथाः ॥ १४ ॥

विविधेति । हे देवि पादुके, त्वं विविधाभिर्बहुप्रकाराभिर्विषयचिन्ताभिः शब्दादिगोचरचिन्तनैः संतताभिर्निविडाभिर्दुर्वासनाभिर्हेयविषयानुभवजन्यदृढसंस्कारैः । दुर्गन्धैरित्यपि गम्यते । इत्थं परिदृश्यमानप्रकारेण जनितकलुषमुद्भूतवृजिनसमूहं पावनैः परिशुद्धिजनकै रङ्गभर्तुः पादयोरेव सरसिजयोः संबन्धिभिः परिमलपरिवाहैः सौरभप्रवाहैः । नैरन्तर्येण परिवाहत्वोक्तिः । वासयेथाः संस्कुर्याः । सरसिजसंपृक्तदुर्वस्तुनोऽपि सौगन्ध्यं स्यादिति भावः । प्रकृतिसंबन्धं परिहार्यमुक्तं कुर्विति निष्कर्षः । तद्गुणालंकारः । 'तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः ।' इति लक्षणात् ॥

शरणमधिगतस्त्वां शार्ङ्गिणः पादरक्षे
सकृदपि विनियुक्तं त्वत्सपर्याधिकारे ।
पुनरपि कथमेनं हस्तमुत्तानयेयं
धनमदमुदितानां मानवानां समाजे ॥ १५ ॥

शरणमिति । हे शार्ङ्गिणः पादरक्षे, त्वां शरणं रक्षकतया अधिगतः प्राप्तोऽहं तव सपर्याधिकारे पूजाकरणे सकृदप्येकदापि विनियुक्तमेनं हस्तं धनमदेन मुदितानां हृष्टानां मानवानां समाजे समूहे पुनरपि कथमुत्तानयेयम् । पुनर्याचनार्थं करप्रसारणं ममैव लज्जावहमिति भावः । काव्यलिङ्गमलंकारः ॥

यदि किमपि समीहे कर्म कर्तुं यथाव-
त्प्रतिपदमुपजातैः प्रत्यवेयां निमित्तैः ।
अवधिरसि यदि त्वं तत्र नैमित्तिकानां
शरणमिह न किं मे शौरिपादावनि स्याः ॥ १६ ॥

यदीति । हे शौरिपादावनि, अहं किमपि कर्म शास्त्रविहितं कर्तुमनुष्ठातुं यदि समीहे संकल्पयामि यदि तदा प्रतिपदं क्षणे क्षणे उपजातैरुत्पन्नैर्निमित्तैर्मन्त्रतन्त्रस्खलनादिभिः प्रत्यवेयां प्रत्यवायं प्राप्नुयाम्, ततश्च तदकरणमेव वरमिति भावः । तत्र निमित्ते त्वं नैमित्तिकानां प्रायश्चित्तानामवधिरसि यदि परम्परया प्रसक्तानां प्रायश्चित्तानामनवस्थापरिहाराय प्रतिनिधितया स्मृता त्वमेव सर्वप्रायश्चित्तात्मिका यदीत्यर्थः । तदेह

कर्मभूमौ त्वं मे मम शरणं रक्षिका न स्याः किंतु स्या एवेत्यर्थः। 'प्रायश्चित्तप्रसङ्गेषु सर्वपापसमुद्भवे। प्रायश्चित्तिरियं सात्र यत्पुनः शरणं व्रजेत्॥' इति शास्त्रमत्रानुसंधेयम्। संभावनालंकारः॥

अन्तर्लीनैरघपरिकरैराविला चित्तवृत्तिः
शब्दादीनां परवशतया दुर्जयानीन्द्रियाणि।
विष्णोः पादप्रणयिनि चिरादस्य मे दुःखसिन्धोः
पारं प्राप्यं भवति परया विद्यया वा त्वया वा॥ १७॥

**अन्तर्लीनैरिति**। हे विष्णोः पादप्रणयिनि, मे मम चित्तवृत्तिर्मनोऽवस्था अन्तर्लीनैरन्तःसक्तैरघानां पापानां परिकरैराविला कलुषा इन्द्रियाणि श्रवणादीनि शब्दादीनां परवशतया दुर्जयानि एवं सति चिरादनेककालानुस्यूतस्यास्य दुःखसिन्धोः संसारसमुद्रस्य पारमुत्तरावधिभूतं निश्रेयसं शुभं त्वया वा परया विद्यया वा परभक्त्या वा प्राप्यं भवति। अत्र विकल्पप्रश्नेन अन्तर्बाह्येन्द्रियाणां निग्रहाशक्त्युक्त्या च परविद्याधिकारनिवृत्तिः स्यादिति फलितोऽर्थः। तस्मात्त्वमेव संसारमोचनी साधनान्तरावलम्बनप्रतीक्षा न कर्तव्येति हृदयम्। अस्यैवार्थस्य पूर्वार्धेन समर्थनात्काव्यलिङ्गमलंकारः॥

गोमायूनां मलयपवने तस्कराणां हिमांशौ
दुर्वृत्तानां सुचरितमये सत्पथे त्वत्सनाथे।
तत्त्वज्ञाने तरलमनसां शार्ङ्गिणः पादरक्षे
नित्योद्वेगो भवति नियतेरीदृशी दुर्विनीतिः॥ १८॥

**गोमायूनामिति**। हे शार्ङ्गिणः पादरक्षे, गोमायूनां शृगालानां मलयपवने मलयपर्वतादागते पवने वसन्तकालमारुते तस्कराणां चोराणां हिमांशौ चन्द्रे दुर्वृत्तानां पापानां सुचरितमये पुण्यात्मके त्वया सनाथे नाथवति सत्पथे सन्मार्गे प्रपदने तरलमनसां चपलचित्तानां तत्त्वज्ञाने आत्मयाथात्म्यनिर्णये नित्यं सदा उद्वेगो भीतिर्भवति। तदेव सामान्येन समर्थयति। नियतेर्विधेः दुर्विनीतिरुद्वृत्तता ईदृशी। समस्तजनाह्लादकानामपि क्वचिद्भीतिजनकत्वं दैवस्य दुर्वृत्ततयेति भावः। दीपकानुप्राणितः सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः॥

काले जन्तून्कलुषकरणे क्षिप्रमाकारयन्त्या
घोरं नाहं यमपरिषदो घोषमाकर्णयेयम्।
श्रीमद्रङ्गेश्वरचरणयोरन्तरङ्गैः प्रयुक्तं
सेवाह्वानं सपदि शृणुयां पादुकासेवकेति॥ १९॥

**काल इति** । हे पादुके, अहं कलुषकरणे विह्वलेन्द्रिये तस्मिन् काले चरमसमये जन्तून् क्षिप्रं शीघ्रमाकारयन्त्या आह्वयन्त्याः यमस्य वैवस्वतस्य परिषदः सेनाया घोरं भयजनकं घोषमुच्छेदशब्दं नाकर्णयेयं न शृणुयाम् । अपितु श्रीमतो रङ्गेश्वरस्य चरणयोरन्तरङ्गैरत्यासन्नपरिजनैः प्रयुक्तं पादुकासेवक इत्येवंरूपं सेवार्थमाह्वानं सपदि झटिति शृणुयाम् । प्रपन्नानां यमवश्यताप्रसक्तेरभावेऽपि निर्वेदातिशयादेवमुक्तिः ॥ प्रेयोऽलंकारः ॥

पाषाणकल्पमन्ते परिचितगौतमपरिग्रहन्यायात् ।
पतिपदपरिचरणार्हं परिणमय मुकुन्दपादरक्षिणि माम् ॥ २० ॥

**पाषाणेति** । हे मुकुन्दपादरक्षिणि, अन्तेऽन्त्यकाले पाषाणकल्पमवशकरणकलेवरम् । शिलात्वमपि गम्यते । मां परिचितस्य पूर्वं त्वया स्पृष्टस्य गौतमपरिग्रहस्य अहल्याया न्यायात् । तद्दृष्टान्तेनेत्यर्थः । पत्युः शेषिणः । अन्यत्र भर्तुः । पदपरिचरणस्य पादसेवाया अर्हं योग्यं परिणमय कुर्वित्यर्थः । पाषाणभावं प्राप्ताहल्या यथा त्वया भर्तुः शुश्रूषार्हशरीरयुक्ता कृता तथा मामप्यवशशरीरं भगवच्चरणपरिचरणयोग्याप्राकृतशरीरयुक्तं कुर्वित्यर्थः । उपमालंकारः ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रे
निर्वेदपद्धतिरेकत्रिंशी ॥

---

फलपद्धतिर्द्वात्रिंशी ।

अथास्यां पद्धत्यां पादुकाया मुमुक्षुप्राप्यत्वं प्रपञ्चयति—

उपाख्यातां तथात्वेन वसिष्ठाद्यैर्महर्षिभिः ।
उपायफलयोः काष्ठामुपासे रामपादुकाम् ॥ १ ॥

**उपाख्यातामिति** । वसिष्ठाद्यैर्वसिष्ठवाल्मीकिव्यासाद्यैर्महर्षिभिस्तथात्वेनोपायफलकाष्ठात्वेनोपाख्यातां रामायणाद्युपाख्यानविषयीकृताम् । 'एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ।' इति सर्वलोकयोगक्षेमकरत्वेन रामायणादौ कथनादर्थादुपायफलकाष्ठात्वमुक्तमिति भावः । उपायफलयोः प्रपदनमोक्षयोः काष्ठां परमावधिभूताम् । भगवद्विशिष्टपादुकैवोपायदशायामनुसंधेया मुक्तिदशायां प्राप्या चेति भावः । तां पादुकामुपासे सेवे । विशेषणद्वयस्योपासनं प्रति हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः ॥

निर्विशेय निरन्तरं प्रतीतस्त्रिदशानां विभवं तृणाय मत्वा ।
सविधे तव देवि रङ्गभर्तुः पदलीलाकमलं समुद्वहन्त्याः ॥ २ ॥

**निर्विशेयेति** । हे देवि, अहमिति शेषः । प्रतीतः पादुकोपासकत्वेन प्रसिद्धः सन् त्रिदशानां विभवं स्वर्गादिसौख्यं तृणाय तृणसदृशत्वेन मत्वा । उपेक्ष्येति यावत् ।

'मन्यकर्मण्यनादरे—२।३।१७' इति चतुर्थी । 'एते वै निरयास्तात स्थानस्य परमात्मनः ।' इति प्रमाणमत्रानुसंधेयम् । रङ्गभर्तुः पादमेव लीलाकमलं समुद्वहन्त्या धारयन्त्यास्तव सविधे समीपे निरन्तरं सदा निविशेय आसीय । निपूर्वाद्विशतेर्लिङुत्तमपुरुषैकवचनम् । कैंकर्यसाम्राज्यमनुभवेयमिति भावः । अस्यार्थस्य भङ्गयन्तरेण कथनात्पर्यायोक्त्यलंकारः । लीलाकमलं समुद्वहन्त्या इति पद्मधारिण्या ऐश्वर्यदेवतायाः सेवाभिव्यज्यत इति समासोक्तिरपि ॥

किमहं मणिपादुके त्वया मे सुलभे रङ्गनिधौ श्रिया सनाथे ।
करणानि पुनः कदर्थयेयं कृपणद्वारदुरासिकादिदुःखैः ॥ ३ ॥

**किमहमिति** । हे मणिपादुके, अहं त्वया करणभूतया । मे मम सुलभे संप्राप्ते श्रिया सनाथे लक्ष्मीसहिते रङ्गविमानस्थे निधौ निधिवत्सर्वफलसाधने भगवति सति पुनर्भूयोऽपि कृपणानां क्षुद्राणां द्वारेषु दुष्टा अधिका स्थितिरादिर्येषां तैः । आदिशब्देनानुवर्तनादीन्युच्यन्ते । दुःखैः करणानि वागादीन्द्रियाणि किं किमर्थं कदर्थयेयम् । कुत्सिता अर्थाः कदर्थाः । 'कोः कत्तत्पुरुषेऽचि ।६।३।१०१' इति कदादेशः । ततः 'तत्करोति' इति णिचि लिङ् । पीडयेयमिति फलितोऽर्थः । रङ्गनिधिलाभेन पीडाभावसमर्थनात्काव्यलिङ्गमलंकारः ॥

सकृदप्यनुभूय रङ्गभर्तुस्त्वदुपश्लेषमनोहरं पदाब्जम् ।
अपुनर्भवकौतुकं तदैव प्रशमं गच्छति पादुके मुनीनाम् ॥ ४ ॥

**सकृदिति** । हे पादुके, मुनीनामपुनर्भवकौतुकं अपुनर्भवे पुनर्जन्मनिवृत्तौ कौतुकम् (कर्तृ) । मोक्षेच्छेति यावत् । त्वदुपश्लेषेण त्वत्परिष्वङ्गेण मनोहरं मनोज्ञं रङ्गभर्तुः पदाब्जं सकृदपि कदाचिदपि अनुभूय प्रपद्येति यावत् । तदैव तदानीमेव प्रशमं निवृत्तिं गच्छति प्राप्नोति । सकृत्प्रपदनेनैव मुक्तिलाभात् पुनः फलेच्छाया अभावादिति भावः । सकृत्सेवयैव महानन्दलाभात् मुक्तीच्छापि निवर्तत इत्यतिशयोक्तिर्वा । प्रपदनकौतुकाभावयोः कारणकार्ययोः सह वर्णनात् हेतुरलंकारः ॥

अपरस्परपातिनाममीषामनिदंपूर्वनिरूढसन्ततीनाम् ।
भरतव्यसनादनूनसीम्नां दुरितानां मम निष्कृतिस्त्वदासीः ॥ ५ ॥

**अपरस्परेति** । हे पादुके, इति शेषः । त्वमपरस्परं सततं पतन्ति यानि तेषाम् । 'अपरस्पराः क्रियासातत्ये ६।१।१४४' इति निपातनात् अपरस्परशब्दः सातत्यार्थकः । अनिदंपूर्वा अनादिः निरूढा दृढा सन्ततिः प्रवाहाविच्छेदो येषां तेषाम् । भरतस्य व्यसनात् दुःखात् अनूना अहीना अधिका सीमा मर्यादा येषां तेषां ममामीषां दुरितानां दुष्कर्मणां निष्कृतिः प्रायश्चित्तम् । हन्त्रीति यावत् । भरतस्य रामवियोगजं दुःखं पादुका त्वलाभद्वारा यथोपशमितवती तथा ममापीति भावः । रूपकमलंकारः । भरतव्यसनादनूनसीम्नामित्युपमापि संव्यज्यते ॥

त्वदुपासनसंप्रदायविद्भिः समये सात्वतसेविते नियुक्ताः ।
भरतव्रतिनो भवाम्बुराशिं कतिचित्काञ्चनपादुके तरन्ति ॥ ६ ॥

**त्वदुपासनेति** । हे काञ्चनपादुके, सात्वतैर्भगवच्छास्त्रनिष्ठैः सेविते आश्रिते समये दर्शने ते तवोपासनस्य संप्रदायं विदन्ति ये तैर्नियुक्ताः प्रेरिताः भरतव्रतिनो भरतवत्पादुकोपासनव्रतवन्तः कतिचित् केचन भवं संसारमेवाम्बुराशिं तरन्ति । तरणक्रियोपयोगाय भवस्याम्बुधित्वरूपणात्परिणामालंकारः ॥

अलमच्युतपादुके यथावद्भवती यच्च पदं त्वदेकधार्यम् ।
इतरेतरभूषितं तदेतद्द्वितयं संवननाय चेतसो नः ॥ ७ ॥

**अलमिति** । हे अच्युतपादुके, भवती त्वदेकधार्यम् । त्वयैकया धार्यमित्यर्थः । यत्पदं च तदेतद्द्वितयमितरेतरभूषितमन्योन्यालंकृतं सत् नोऽस्माकं चेतसः संवननाय वशीकरणाय । 'वशक्रिया संवननम्' इत्यमरः । 'नमःस्वस्ति—२।३।१६॥' इत्यादिना अलंयोगे चतुर्थी । यथावत् यथार्हमलं समर्थम् । वशीकरणयोर्हेतुकार्ययोः सह वर्णनात् हेतुरलंकारः ॥

अनन्यसामान्यतया मुरारेरङ्गेष्ववाप्तेषु किरीटमुख्यैः ।
पादावनि त्वं निजमेव भागं सर्वात्मसाधारणतामनैषीः ॥ ८ ॥

**अनन्येति** । हे पादावनि, मुरारेरङ्गेष्ववयवेषु किरीटमुख्यैर्मकुटप्रभृतिभिरलंकारैरन्यस्य सामान्यं साधारणं यत्र भवति तद्भावेन । असाधारणत्वेनेति यावत् । किरीटादेरङ्गान्तरत्वादिति भावः । अवाप्तेषु प्राप्तेषु सत्सु त्वमेव निजं भागम् । चरणद्वयमिति यावत् । सर्वेषामात्मनां साधारणानाम् । सर्वजनसमाश्रयणीयत्वमिति यावत् । अनैषीर्नीतवती । 'णीञ् प्रापणे' इत्यस्माल्लुङ्मध्यमपुरुषैकवचनम् । 'अकथितं च १।४।५१॥' इति नयतेः कर्मान्तरसंभवात् द्विकर्मकत्वम् । आशयमहत्त्वं नामोदात्तभेदोऽलंकारः ॥

समाश्रितानां मणिपादुके त्वां विपश्चितां विष्णुपदेऽप्यनास्था ।
कथं पुनस्ते कृतिनो भजेरन्वासादरं वासवराजधान्याम् ॥ ९ ॥

**समाश्रितानामिति** । हे मणिपादुके, त्वां समाश्रितानां विपश्चितां विष्णोः पदे चरणेऽपि परमपदेऽपीति च । नास्था 'वैकुण्ठवासेऽपि न मेऽभिलापः ।' इत्युक्तरीत्या पादुकाभजनमेव भोग्यतममिति भावः । ते कृतिनः कुशलाः वासवराजधान्याममरावत्यां वा सादरं कथं पुनः कथं वा भजेरन् । न कथंचनेत्यर्थः । 'वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ॥' इति मुक्तिप्रतिबन्धकतयोक्तेः । स्वर्गे कैमुत्येनादराभाववर्णनात्काव्यार्थापत्तिरलंकारः ॥

विमृश्य रङ्गेश्वरपादरक्षे वारक्रमं नूनमवारणीयम् ।
पद्माग्रहेऽपि स्पृशती प्रतीता स्थूलेन रूपेण वसुंधरा त्वाम्॥ १० ॥

**विमृश्येति** । हे रङ्गेश्वरपादरक्षे, वसुंधरा भूमिरवारणीयमनतिलङ्घनीयं वारक्रमं लक्ष्मीभूमिलीलासु इयमस्मिन् दिने पादुकाग्राहिणीति एवंरूपं क्रमं विमृश्य मत्त्वा पद्माग्रहेऽपि । इदं नीलाग्रहस्याप्युपलक्षणम् । स्थूलेन रूपेण त्वां स्पृशती सती प्रतीता प्रसिद्धा नूनं स्थूलरूपेण वसुंधरायाः पादुकास्पर्शस्य पद्मादिवारे अलाभविमर्शनहेतुकत्वमुत्प्रेक्ष्यत इति हेतूत्प्रेक्षा ॥

अभिरक्षसि त्वमनपायनिधिं मणिपादुके मधुभिदश्चरणम् ।

अत एव देवि तदनन्यधनाः शिरसा वहन्ति भवतीं कृतिनः ॥११॥

**अभिरक्षसीति** । हे देवि मणिपादुके, त्वं मधुभिदो रङ्गनाथस्य चरणमेवानपायनिधिमभिरक्षसि । अत एव हेतोरन्यत् चरणादन्यद्धनं न विद्यते येषां तेऽनन्यधनाः । तदेकधना इत्यर्थः । कृतिनः कुशला भवतीं शिरसा वहन्ति । लोके निधिरक्षकस्य प्रणामो निधिलोभयुक्तस्तद्वन्मेऽपीति भावः । निध्यभिरक्षणेन हेतुना कृतिनां शिरसा पादुकावहनसमर्थनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

पदयुगमिव पादुके मुरारेर्भवति विभूतिरकण्टका त्वयैव ।

कथमिव हृदयानि भावुकानां त्वदनुभवादुपजातकण्टकानि ॥१२॥

**पदयुगमिति** । हे पादुके, त्वयैव मुरारेर्विभूतिर्लीलाविभूतिस्तस्य पदयुगमिव अकण्टका । पादुकया पदयुगं यथा सूच्यग्रव्यधनरहितं तद्वत् क्षुद्रशत्रुरहितेत्यर्थः । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षेऽपि कण्टकः ।' इत्यमरः । एवमपि भावुकानां सतां हृदयानि तवानुभवात् ज्ञानादिना कथमिव कथं वोपजाताः कण्टका येषां तानि । जातानीति शेषः । श्लिष्टेन कण्टकशब्देन विरोधस्फूर्तेर्विरोधाभासोऽलंकारः ॥

ज्ञानक्रियाभजनसीमविदूरवृत्ते-
वैदेशिकस्य तदवाप्तिकृतां गुणानाम् ।
मौलौ ममासि मधुसूदनपादुके त्वं
गङ्गेव हन्त पतिता विधिनैव पङ्गोः ॥ १३ ॥

**ज्ञानेति** । हे मधुसूदनपादुके, त्वं ज्ञानं ज्ञानयोगः, क्रिया कर्मयोगः, भजनं भक्तियोगस्तेषां या सीमा योगिभिरधिष्ठितदेशस्तस्या विदूरा वैदेशिकी वृत्तिर्यस्य तस्य तेषां ज्ञानक्रियाभजनानामवाप्तिं प्राप्तिं कुर्वन्ति तत्कृतः । तेषां गुणानां शमदमाद्यात्मगुणानां वैदेशिकस्य विदेशे भवस्य देशान्तरस्थस्य । आत्मगुणरहितस्येत्यर्थः । तादृशस्य मम मौलौ शिरसि पङ्गोः पादविकलस्य शिरसि विधिनैव भाग्यवशेनैव गङ्गेव पतितासि । हन्तेत्याश्चर्ये । उपमालंकारः ॥

रङ्गेश्वरस्य यदिदं मणिपादरक्षे
पादारविन्दयुगलं भवतीसमेतम् ।

पुंसामुपोषितविलोचनपारणार्हं
क्षीरं तदेतदिह शर्करया समेतम् ॥ १४ ॥

**रङ्गेश्वरस्येति** । हे मणिपादरक्षे, पुंसामुपोषितानां सद्विषयालाभेन विषयान्तराचुम्बिनां लोचनानां पारणस्य व्रतान्ते भोजनस्यार्हम् । स्वसौन्दर्येण सज्जननयनाकर्षीत्यर्थः । तत्प्रसिद्धमिदं प्रत्यक्षदृश्यं रङ्गेश्वरस्य पादारविन्दयुगलं भवत्या समेतम् । सहितमिति यत् तदेतदिह श्रीरङ्गे शर्करया समेतं क्षीरं यथा स्वादु तद्वत् त्वत्समेतं भगवत्पादद्वयं महद्भ्यो रोचत इति भावः । निदर्शनालंकारः । विम्बप्रतिविम्बभावेन सदृशयोर्वाक्यार्थयोरैक्यारोपात् । 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शनम्' इति लक्षणात् ॥

कामादिदोषरहितं तदनन्यकामाः
कर्म त्रयोदशविधं परिशीलयन्तः ।
पादावनि त्वदनुषङ्गविशेषदृश्य-
मेकान्तिनः परिचरन्ति पदं मुरारेः ॥ १५ ॥

**कामादीति** । हे पादावनि, अन्यस्मिन् त्वद्व्यतिरिक्तफलान्तरे काम इच्छा येषां न विद्यते तेऽनन्यकामाः त्वया अनन्यकामास्त्वदनन्यकामाः ; त्वत्प्राप्त्येकफला इति यावत् । तृतीयेति योगविभागात् शिवभागवतादिवत्समासः । एकान्तिनस्त्वदेकसाधनकास्त्रयोदशविधाः प्रकारा यस्मिन् तत् (कर्म) । कामादिभिः फलेच्छादिभिः । आदिशब्देन सङ्गकर्तृत्वेऽभिधीयेते । दोषैर्विरोधिभी रहितमस्पृष्टं यथा तथा परिशीलयन्तोऽभ्यसन्तः सन्तस्त्वदनुषङ्गेण त्वदनुबन्धेन विशेषेणादरातिशयेन दृश्यं प्रेक्ष्यं मुरारेः पदं चरणं परिचरन्ति पूजयन्ति । अनुगृहीतं चात्र भगवच्छास्त्रवचनमाचार्यैः श्रीपाञ्चरात्ररक्षायाम्—

'त्रयोदशविधं कर्म कामादिपरिवर्जितम् ।
गुणैः सांयमिकैर्युक्तमनुतिष्ठन्ति साधवः ॥' इति ।

तत्प्रकारश्च पाद्मे ज्ञानपादेऽष्टमाध्यायेऽभिहितः ॥

'वाङ्मनःकायजत्वेन तपश्च त्रिविधं मतम् ।
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥
अहिंसा ब्रह्मचर्यं च तपः शारीरमीरितम् ।
अनुग्रहपरं वाक्यं सत्यं भूतोपकारकम् ॥
स्वाध्यायाभ्यसनं चेति वाचिकं कथितं तपः ।
संतोषः सततं ब्रह्मचिन्ता चात्मविनिग्रहः ॥
भावशुद्धिः सौम्यता च तपो मानसमीरितम् ।
श्रद्दधानैः कृतं सम्यगफलाकाङ्क्षिभिर्नरैः ॥

सात्त्विकं तत्तपो ज्ञेयं यद्धि विज्ञानकारकम् ।
सत्कारमानपूजादिसिद्ध्यर्थं राजसं स्मृतम् ॥
तामसं तु तपस्तत्स्यात्परोत्सादनादिकम् ।
कर्म तद्विविधं नैव विज्ञानोत्पत्तिकारणम् ॥' इति ।

एकान्तिगोचरभक्तेर्गम्यायाः पादुकाभक्त्यङ्गत्वात्प्रेयोऽलंकारः ॥

मौलौ स्थिता मखभुजामथवा श्रुतीनां
तद्रङ्गराजचरणावनि वैभवं ते ।
अस्मादृशामपि यदि प्रथितं ततः स्या-
त्सौलभ्यमम्ब तदिदं तव सार्वभौमम् ॥ १६ ॥

**मौलाविति** । हे अम्ब रङ्गराजचरणावनि, मखभुजां देवनामथवा यद्वा श्रुतीनां मौलौ शिरसि । वेदान्ते चेत्यर्थः । त्वमिति शेषः । स्थिता अवस्थितवतीति यत्तत्ते तव वैभवं स्थितिरूपं प्रभावमस्मादृशामस्मत्सदृशानां मौलावपि प्रथितं प्रसिद्धं यदि ततस्तदा तत् प्रसिद्धमिदमस्मादृशैरविज्ञातं तव सौलभ्यं सार्वभौमं सर्वभूमौ विदितं स्यात् । 'तत्र विदित इति च' इति सर्वभूमिशब्दादण् । श्रुतिज्ञातायास्तव भगवदवतारविशेषेण देवशिरस्स्थितिर्यद्यपि कतिपयविदिता सौलभ्यज्ञापिका, तथापि अतिनिकृष्टास्मच्छिरसि स्थितायां सत्यां तत्सौलभ्यं सर्वैर्लभ्यं सर्वैर्ज्ञातं स्यात्, अन्यथा न स्यात्; अतो मच्छिरस्यपि स्थितिं कुर्विति भावः । संभावनालंकारः ॥

स्वप्नेऽपि चेत्त्वमसि मूर्धनि संनिविष्टा
नम्रस्य मे नरकमर्दनपादरक्षे ।
स्थाने तदेतदिह देवि यतः समाधौ
सन्तो विदुस्तमपि तादृशबुद्धिगम्यम् ॥ १७ ॥

**स्वप्नेऽपीति** । हे नरकमर्दनपादरक्षे, देवि नम्रस्य नतस्य मे मम मूर्धनि स्वप्नेऽपि संनिविष्टा चेत् । मन्त्रसिद्धिप्रदसुस्वप्नप्रकरणे 'दीपं शङ्खं तथा यानं श्रीवृक्षं पादुकां तथा ।' इत्युक्त्वा, 'अक्षमालामेखलाद्यैः शुभैः स्वप्नैर्विनिर्दिशेत् । मन्त्रसिद्धिं बहुमुखीम्' इत्याद्युक्तस्वाप्निकपादुकादर्शनमप्यस्ति चेदिति भावः । तदा तर्हि एतत् स्वाप्निकमूर्धावस्थानमिह भगवत्सहचारिण्यां त्वयि स्थाने युक्तम् । कुत इत्यत आह—यतः कारणात् समाधौ योगकाले सन्तो मनुपराशरादयस्तमपि त्वत्सनाथं भगवन्तमपि तादृश्या स्वप्नशब्दाभिलप्यया बुद्ध्या यौगिकसाक्षात्कारेण गम्यं ज्ञेयं विदुर्जानन्ति । तथा हि स्मृतिः—रुक्माभं स्वप्नधीगम्यमिति । स्वप्नधीगम्यं भगवत्सहचारिण्यां त्वयि स्वप्नधीगम्यत्वं पतिव्रतास्वाभाव्यात् युक्तमिति भावः । वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

बद्धाञ्जलिः परिचरन् नियमेन रङ्गे
विश्राणिताच्युतनिधिं मणिपादुके त्वाम् ।
कस्यापि कूणितदृशो धनिनः पुरस्ता-
दुत्तानयेय न कदापि करं विकोशम् ॥ १८ ॥

बद्धाञ्जलिरिति । हे मणिपादुके, अहं बद्धाञ्जलिः सन् विश्राणितोऽच्युत एव श्रीरङ्गनाथ एव । अक्षय इति गम्यते । निधिः शेवधिर्यया तां त्वां रङ्गे रङ्गविमाने नियमेनाविच्छेदेन परिचरन् परिचरणं कुर्वन् कस्यापि अनिर्वचनीयैश्वर्यस्य कूणिते मदेन संकुचिते दृशौ यस्य तस्य । 'कुण संकोचने' इति धातोः कर्मणि क्तः । धनिनो धनिकस्य पुरस्तादग्रे विकोशं विस्तारितं करं कदापि नोत्तानयेय न प्रसारयेय । उत्तानशब्दात् 'तत्करोति—' इति ण्यन्तात् लिङि 'णिचश्च' इत्यात्मनेपदम् । उत्तमपुरुषैकवचनम् । त्वन्महिम्ना अक्षीणनिधिलाभात् अन्यं धनिनं नाश्रय इति भावः ॥ पादुकापरिचारणस्य निधिलाभात् धनिकानाश्रयणहेतुत्वात् काव्यलिङ्गमलंकारः ॥

त्वय्यर्पितेन चरणेन सदध्वभाजः
पादावनि प्रथितसात्त्विकभावदृश्याः ।
रङ्गेशवद्विदधते मुहुरङ्गहारान्
रङ्गे महीयसि नटा इव भावुकास्ते ॥ १९ ॥

त्वयीति । हे पादावनि, त्वयि विषयेऽर्पितेन दत्तेन । अनभिसंहितफलेनेति यावत् । चरणेनाचारेण सन्तमध्वानं साधुमर्यादां भजन्ति ये तथोक्ताः, अन्यत्र चरणेन सन्मार्गभाक् भगवान् । नटपक्षे अर्पितेन विविधं गमितेन । 'ऋ गतिप्रापणयोः' इति धातुः । 'अर्तिह्री—' इति पुक् । पदेन नट्योग्यदेशभाजः प्रथितेन सात्त्विकभावेन सात्त्विकत्वेन दृश्याः, अन्यत्र प्रथितानां सात्त्विकानां सतां भावेनाभिप्रायेण दृश्यः । योगिध्येय इति यावत् । अन्यत्र प्रथितैः प्रसिद्धैः अन्तःकरणनिर्वर्त्यैर्भावैर्व्यापारैः । अभिप्रायसूचकाभिनयैरिति यावत् । 'निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ।' इत्यमरः । 'भावः स्वभावेऽभिप्राये चेष्टासत्त्वात्मजन्मसु । क्रीडालीलापदार्थेषु' इति विश्वः । भावुका रसिकाः सन्तः पादुकानुभावपरा रसिकाः सदस्याश्च महीयसि महत्तरे रङ्गे श्रीरङ्गभूमौ नृत्तदेशे च । 'रङ्गो रणखले रागे नृत्ते रङ्गं त्रपुण्यपि ।' इति विश्वः । नटा इव रङ्गेशवत् रङ्गेशार्हम् । अर्हार्थे वतिः । स्वयं नटपरिवृढस्य यथा प्रेक्षणीयं तथेत्यपि । मुहुरङ्गहारानङ्गविक्षेपान् गमनानि च विदधते कुर्वन्ति । 'श्रावका वासुदेवस्य तथैव नटनर्तकाः ।' इत्युक्तरीत्या भगवत्परिष्कृतत्वत्प्राप्तिजनितहर्षेणानन्याः सन्तो नृत्यन्तीत्यर्थः । श्लेषमूलकोपमालंकारः ॥

येन स्थिता शिरसि मे विधिनाधुना त्वं
तेनैव देवि नियतं मम साम्पराये ।
लक्षीकरिष्यसि पदावनि रङ्गनाथं
लक्ष्मीपदाम्बुरुहयावकपङ्कलक्ष्यम् ॥ २० ॥

येनेति । हे देवि पदावनि, त्वमधुना येन विधिना भाग्येन मे मम शिरसि स्थिता तेनैव भाग्येनैव लक्ष्म्या अम्बुरुहसदृशयोः पदयोर्यावकपङ्केनालक्तकद्रवेण लक्ष्यं दर्शनीयम् । लक्ष्मीसमेतोरस्कमिति यावत् । रङ्गनाथं मम साम्परायेऽन्तिमदशायां लक्षीकरिष्यसि प्रत्यक्षं करिष्यसि । नियतमित्यवधारणे । पादुकाया भक्तशिरःप्रापकमदृष्टं रङ्गनाथमप्रापय्य न विरमतीति भावः ॥ काव्यलिङ्गमलंकारः ॥

हरिचरणसरोजे भक्तिभाजां जनाना-
मनुकरणविशेषैरात्मनैवोपहास्यम् ।
परिणमय दयार्द्रा पादुके तादृशं मां
भरतपरिषदन्तर्वर्तिभिः प्रेक्षणीयम् ॥ २१ ॥

हरीति । हे पादुके, त्वं हरेः सरोजसदृशे चरणे भक्तिभाजां भक्तिमतां जनानामनुकरणानामनुकृतीनां विशेषैर्भेदैस्तत्सदृशचेष्टितैरात्मना स्वेनैवोपहास्यं स्वस्यैव हासास्पदम् । तादृशभक्त्यभावेऽपि भक्तंमन्यत्वादिति भावः । तादृशमनादिदुष्कर्मदूषितं मां दयार्द्रा सती भरतपरिषदि भरतगोष्ठ्यामन्त इति तथोक्तम् । 'सप्तमी शौण्डैः । २ । १ । ४० ।' इति समासः । तत्र ये वर्तन्ते तैः । कोसलवासिभिरित्यर्थः । प्रेक्षणीयं पादुकोपासकत्वात् अस्मदीयोऽयमिति स्वीकार्यम् । परिणमय । कुर्वित्यर्थः । तथा च कोसलाः पादुकोपासनेन यथा मुक्तास्तथाहमपि स्यामित्यर्थस्य पर्यायेण कथनात्पर्यायोक्तमलंकारः ॥

दुरितमपनयन्ती दूरतः पादुके त्वं
दनुजमथनलीलादेवतामानयन्ती ।
अनितरशरणानामग्रिमस्यास्य जन्तो-
रवशकरणवृत्तेरग्रतः संनिधेयाः ॥ २२ ॥

दुरितमिति । हे पादुके, त्वं दुरितं पापम् । ममेति शेषः । दूरतो दूरेऽपनयन्ती अश्लिष्टं विनष्टं च कुर्वतीत्यर्थः । दनुजानां दानवानां मथनं संहार एव लीला यस्यास्तां देवतां परमपुरुषमनितरशरणानां ज्ञानक्रियाभजनरहितानामग्रिमस्य श्रेष्ठस्य । अत्यन्ताकिंचनस्येति यावत् । अवशा अस्वाधीना करणानामिन्द्रियाणां वृत्तिर्यस्य तस्या-

स्य जन्तोः । ममेत्यर्थः । अग्रतः पुरत आनयन्ती चागमयन्ती च सती संनिधेयाः । संनिधिं कुर्वित्यर्थः । अन्तिमकाले भगवन्तं प्रापयेत्यस्य पर्यायेण कथनात् पर्यायोक्तिरलंकारः ॥

चरमनिगमगीते सप्ततन्तौ समाप्ते
निजसदनसमीपे प्रापयिष्यन् विहारम् ।
ज्वलनमिव भवत्योः सम्यगारोपयेन्मां
प्रथमवरणवश्यः पादुके रङ्गनाथः ॥ २३ ॥

**चरमेति** । हे पादुके, इति द्विवचनम् । प्रथमवरणस्य सकृत्प्रार्थनस्य । प्रपत्तेरिति यावत् । वश्यः फलप्रदत्वेनाभिमुखः । 'सकृदेव प्रपन्नाय' इति स्मृतेः । आहिताग्निः कश्चिदित्यपि गम्यते । वृतोऽध्वर्युर्वा वरणशब्दस्वारस्यात् । रङ्गनाथश्चरमनिगमेन वेदान्तेन गीते उक्ते सप्ततन्तौ जीवनरूपे यागे समाप्ते सति मरणरूपावभृथवति सति । मम मरणे सतीति फलितार्थः । 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः' इत्यारभ्य 'यन्मरणं तदवभृतः' इत्यन्तेन मरणान्तजीवनस्य यागत्वं निरूपितं श्रुतौ तदिहानुसंधेयम् । निजस्य सदनस्य, अन्यत्र अग्निहोत्रगृहस्य समीपे मां विहारं 'तस्य सर्वेषु लोकेषु कामचारो भवति, ईक्षन् क्रीडन् रममाणः' इत्युक्तम् । ऐच्छिकसंचारं वेदिदेशं च । प्रापयिष्यन् सन् ज्वलनमिव वैतानानलमिव भवत्योर्युवयोः । उत्तराधरारण्योरिति गम्यते। सम्यगसंशयम् । 'अयं ते योनिर्ऋत्वियः' इति मन्त्रेण चेति गम्यते । आरोपयेदारूढं कुर्यात् । अर्चिरादिरिव त्वं ममातिवाहिकी भवेरिति भावः । यथा कश्चिद्यजमानो वृतोऽध्वर्युर्वा अग्नीनाधाय सोमेन इष्ट्वा अग्निहोत्रगृहे वेदिदेशे प्रतिष्ठापनार्थमरण्योरारोपयति तद्वदित्युपमालंकारः । एकदेशविवर्तिरूपकानुप्राणितः ॥

पुनरुदरनिवासच्छेदनं सह्यसिन्धोः
पुलिनमधिवसेयं पुण्यमा ब्रह्मलाभात् ।
परिणमति शरीरे पादुके यत्र पुंसां
त्वमसि निगमगीता शाश्वतं मौलिरत्नम् ॥ २४ ॥

**पुनरिति** । हे पादुके, पुनः जन्मान्तरेऽपि उदरनिवासश्छिद्यते अत्र अनेनेति वा । तथोक्तम्—'सर्वकर्मप्रशमनम्' इति यावत् । सह्यसिन्धोः कावेर्याः पुण्यं मनोज्ञं पुलिनमा ब्रह्मलाभात् मुक्तिमभिव्याप्य अधिवसेयम् । 'उपान्वध्याङ्वसः १ । ४ । ४८' इत्यधिकरणस्य कर्मत्वम् । यत्र पुलिने पुंसां शरीरे परिणमति । त्यज्यमान इति यावत् । निगमगीता वेदोक्ता त्वं शाश्वतं मौलिरत्नं शिरोभूषणमसि । यत्र मृतानां मुक्त्यनन्तरं पादुकासेवारूपं कैंकर्यं भवति तदधिवसेयमिति पूर्वेणान्वयः । पादुकाकैंकर्यलाभस्य वासप्रार्थनाहेतुत्वात् काव्यलिङ्गमलंकारः ॥

बहुविधपुरुषार्थग्रामसीमान्तरेखां
हरिचरणसरोजन्यासधन्यामनन्यः ।
भरतसमयसिद्धां पादुके भावयंस्त्वां
शतमिह शरदस्ते श्रावयेयं समृद्धिम् ॥ २५ ॥

**बह्विति** । हे पादुके, बहुविधानां पुरुषार्थानां धर्मादीनां ग्रामस्य समूहस्य सीमान्तरेखां परमावधिभूताम् । अत्युत्कृष्टफलरूपामिति यावत् । महीपक्षे बहुविधाः पुरुषाः, अर्थाः ग्रामाः सीमान्ते उपशल्ये स्थिता रेखा वनराजयश्च यस्यां तां हरेश्चरणसरोजयोर्न्यासेन निक्षेपेण धन्यां पुण्याम्, महीपक्षे त्रिविक्रमावतारे तथाभूतां भरतस्य समये रामप्रपदनकाले सिद्धां प्राप्तां त्वां भावयन् चिन्तयन्, वर्धयन्नित्यपि अनन्यः साधनान्तररहितश्च सन् इह श्रीरङ्गे शतं शरदस्ते तव समृद्धिं गुणविभूत्यतिशयं श्रावयेयम् । सर्वान् प्रतिवदेयमित्यर्थः । प्रेयोऽलंकारः । पादुकायां विशेषणसाम्यादुर्वीरावृत्तान्तप्रतीतेः समासोक्तिरपि ॥

तिलकयसि शिरो मे शौरिपादावनि त्वं
भजसि मनसि नित्यं भूमिकां भावनाख्याम् ।
वचसि च विभवैः स्वैर्व्यक्तिमित्थं प्रयाता
तदिह परिणतं मे तादृशं भागधेयम् ॥ २६ ॥

**तिलकयसीति** । हे शौरिपादावनि, त्वं मे मम शिरस्तिलकयसि तिलकयुक्तं करोषि । मतुबर्थात् 'तत्करोति—' इति णिच् । 'विन्मतोः—' इति मतुपो लुक् । भूषयसीत्यर्थः । मनसि भावनाख्यामनुभवप्रकर्षजनितदृढसंस्काराह्वयां भूमिकां रूपान्तरं भजसि प्राप्नोषि । स्वैर्निजैर्विभवैर्विभूतिभिः वचसि वाचि इत्थं पद्यसहस्रप्रतिपाद्यत्वेन व्यक्तिं प्रकाशं प्रयाता च प्राप्ता च । तत्तस्मादिह त्वयि विषये मे मम तादृशं 'वाचा नमः इति प्रोच्य वपुषा मनसा च यत् । तन्नमःपूर्णमुद्दिष्टम्' । इत्युक्तं पूर्णप्रपदनरूपं भागधेयं भाग्यं परिणतं फलोन्मुखं जातम् । शिरोलंकृत्यादेर्भाग्यपरिणतिहेतोरुपन्यासात् अनुमानालंकारः ॥

अजनिषि चिरमादौ हन्त देहेन्द्रियादि-
स्तदनु तदधिकः सन्नीश्वरोऽहं बभूव ।
अथ भगवत एवाभूवमर्थादिदानीं
तव पुनरहमासं पादुके धन्यजन्मा ॥ २७ ॥

अजनिषीति । हे पादुके, अहमादौ प्रथमं चिरं दीर्घकालं देहः शरीरमिन्द्रियाणि मनःप्रभृतीनि आदयः आदिशब्देन प्राणा गृह्यन्ते यस्य सोऽहमजनिषि । जनेर्लुङुत्तमपुरुषैकवचनम् । शरीरमेवात्मेत्यादिमोहवशोऽभूवम् । अनादिकर्मवशेन स्वरूपप्रमोहात् खिद्यते—हन्तेति । तदनु तदनन्तरं वेदमधीत्य तदर्थरूपे कर्मणि विचारिते तेभ्यः शरीराधिभ्योऽधिकः अतिरिक्तः सन् ईश्वरः स्वातन्त्र्येण स्वेनैवादृष्टार्जितशरीरभोग्यभोगोपकरणभोगस्थानः बभूव । भवतेर्लिङुत्तमपुरुषैकवचनम् । भवान्तरापेक्षया लिङुपपत्तिः । अथ भगवत्कटाक्षाधीनसदाचार्यसमाश्रयणेन वेदान्ततत्त्वेऽवगते सति अहं भगवत एव दासोऽभूवम् । 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' । इत्युक्तस्वरूपज्ञानं ज्ञातमित्यर्थः । इदानीं पुनस्त्वर्थे । इदानीं तु धन्यं जन्म यस्य सः । अहमर्थात् भगवद्दास्यस्य भागवतदास्यान्तशोभित्वस्वभावरूपवस्तुस्थित्या तव शेष आसम् । अस भुवीत्यस्माद्धातोर्लङुत्तमपुरुषैकवचनम् । भगवान् दासेषु निग्रहमपि करोति तदीयास्त्वनुग्रहैकशीला इति पादुकासंबन्धात् स्वस्य धन्यत्वमिति भावः । पूर्वपूर्वधर्मपरित्यागेन धर्मान्तरसंबन्धवर्णनात् पर्यायालंकारः । उत्तरोत्तरमुत्कर्षवर्णनात् सारश्च । एकवाचकानुप्रवेशात्तयोः संकरः ॥

त्वय्यायत्तौ भगवति शिलाभस्मनोः प्राणदाना-
दास्त्रीबालं प्रथितविभवौ पादपद्मौ मुरारेः ।
तामेवाहं शिरसि निहितामद्य पश्यामि दैवा-
दात्माधारां जननि भवतीमात्मलाभप्रसूतिम् ॥ २८ ॥

त्वयीति । हे भगवति, कल्याणगुणोपेते जननि पादुके, शिलाया गौतमभार्यायाः स्त्रियः भस्मनः परिक्षितश्च बालस्य प्राणदानात् जीवनदानात् आस्त्रीबालं स्त्रियो बालांश्चाभिव्याप्य प्रथितः प्रसिद्धो विभवो माहात्म्यं ययोस्तौ मुरारेः पादपद्मौ । अर्धर्चादित्वात् पद्मशब्दस्य पुंलिङ्गत्वम् । 'वा पुंसि पद्मम्' इत्यमरः । यस्यां त्वय्यायत्तौ त्वदधीनप्रवृत्तिकौ । अहमात्माधारां भगवच्चरणयोरप्याधारत्वेनाधारान्तररहिताम् । आत्मलाभस्य स्वस्वरूपाविर्भावस्य । मोक्षस्येत्यर्थः । प्रसूतिं हेतुभूतां तां भवतीमेव । नतु मद्यत्नोपनीतामिति भावः । दैवाददृष्टवशात् शिरसि निहितां पश्यामि । यत्नेन प्राप्यायाः पादुकाया अयत्नलाभात्समाधिरलंकारः । 'समाधिः कार्यसौकर्यम्' इति लक्षणात् ॥

कथंकारं लक्ष्मीकरकमलयोग्यं निजपदं
निदध्याद्रङ्गेशः कुलिशकठिनेऽस्मिन् मनसि नः ।
न चेदेवं मध्ये विशति दयया देवि भवती
निजाक्रान्तिक्षुण्णस्मरशरशिखाकण्टकततिः ॥ २९ ॥

कथंकारमिति । हे देवि, रङ्गेशः कुलिशवत् वज्र इव कठिने कर्कशे नोऽस्माकं

मनसि लक्ष्म्याः करकमलयोः पल्लवन्मृदुलकरयोर्योग्यम्। संवाहनादाविति भावः। निजं पदं कथंकारं कथं वा। 'अन्यथैवंकथमित्थं सुसिद्धा प्रयोगश्चेत् ३।४।२७' इति कृञो णमुल्प्रत्ययः। निदध्यात् नक्षिपेदेवेत्यर्थः। निजया आक्रान्त्या आक्रमणेन क्षुण्णा मृदिता स्मरशराणां शिखानामग्राणामेव कण्टकानां सूच्यग्राणां ततिर्यस्याः सा भवती दयया मध्ये मम रङ्गनाथचरणस्य चेति संबन्धनिर्देशो ज्ञेयः। एवमनुभूयमानप्रकारेण न विशति चेत्। नागच्छति चेदित्यर्थः। तर्हि कथं निदध्यादिति पूर्वेणान्वयः। पादुकामध्यस्थित्यभावे भगवत्पादाप्राप्तिसंभावनात्संभावनमलंकारः॥ यथा कण्टकिते देशे सपादुक एव गच्छेत्, अपादुकस्तु न गच्छेत्। कठिनवस्तुन्यपि मृदुलं पदं न निक्षिप्यते तद्वदिति भावः॥

क्रीडालौल्यं किमपि समये पादुके वर्जयन्ती
निर्वेशं स्वं दिशसि भवती नाथयोः श्रीधरण्योः।
मामप्येवं जनय मधुजित्पादयोरन्तरङ्गं
रङ्गं यासौ जनयसि गुणैर्भारतीनृत्तरङ्गम्॥ ३०॥

क्रीडेति। हे पादुके, त्वं समये श्रीधरणीवारकाले किमप्यनिर्वचनीयं क्रीडाजनितं लौल्यं वर्जयन्ती परित्यजन्ती सती भवती नाथभूता ययोस्तयोः श्रीधरण्योः। परिचर्यातिशयेन भगवत इष्टतमत्वात् श्रीधरणीभ्यामुह्यमानत्वाच्च श्रीधरणीनाथत्वं पादुकाया इति भावः। स्वं स्वकीयं निर्वेशं भगवत्पदपरिचरणरूपं सौख्यं दिशसि ददासि। भगवतः संचारसमये लक्ष्मीभूम्योः सौख्याभावादिति भावः। एवं मामपि श्रीधरण्योरिव ममापि नाथत्वादिति भावः। मधुजित्पादयोरन्तरङ्गं परिचरणयोग्यं जनय। मुक्तिरूपजन्मवन्तं कुर्वित्यर्थः। या असौ त्वं रङ्गं श्रीरङ्गभूमिं गुणैराश्रितवात्सल्यादिभिः भारत्याः सरस्वत्याः नृत्तरङ्गं नाट्यदेशं जनयसि। स्वगुणान् प्रकाश्य त्वमत्रत्यैरस्मादृशैः स्तूयस इत्यर्थः। सा त्वमिति पूर्वेणान्वयः। उपमारूपकसंसृष्टिः॥

इयता प्रबन्धेन प्रतिज्ञातं पद्यसहस्रमनुसंधाय स्वजन्मसाफल्यमनुसंधत्ते—

इति रङ्गधुरीणपादुके त्वं स्तुतिलक्ष्येण सहस्रशो विमृष्टा।
सफलं मम जन्म तावदेतद्यदिहाशास्यमतः परं किमेतत्॥ ३१॥

इतीति। हे रङ्गधुरीणस्य पादुके, त्वमित्युक्तप्रकारेण स्तुतिलक्ष्येण स्तोत्रव्याजेन सहस्रशः सहस्रवारं विमृष्टा संकीर्तिता। अतो मम मदीयमेतज्जायमानकटाक्षविषयीकृतं जन्म सफलं तावद्यदि सार्थकमेव चेत्। तावदित्यवधारणे। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे।' इत्यमरः। तर्हि इह जन्मनि आशास्यमस्माभिः प्रार्थनीयं यदस्ति एतदाशास्यमतः परं त्वत्कीर्तनादन्यत् किम्। न किमपीत्यर्थः। 'तद्विप्रासो विपन्यवो

जागृवां सः समिन्धते' इत्युक्तपादुकाप्रशंसनमेव प्राप्यमिति भावः । पादुकाविमर्शनस्य जन्मसाफल्यद्वारा प्रार्थनीयान्तराभावसमर्थनोपयोगाद्वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः ॥

अवाङ्मनोगोचरमाहात्म्यायाः पादुकायाः स्तुतौ स्वस्य प्रवृत्तिं बुद्धिमान्द्यकृतामयुक्तामनुसंदधानः स्वापराधक्षमां प्रार्थयते—

मातः स्वरूपमिव रङ्गपतेर्निविष्टं
वाचामसीमनि पदावनि वैभवं ते ।
मोहादभिष्टुतवतो मम मन्दबुद्धे-
र्बालस्य साहसमिदं दयया सहेथाः ॥ ३२ ॥

**मातरिति ।** हे मातः पदावनि, रङ्गपतेः स्वरूपं गुणविभूत्यादिविशिष्टमिव वाचां गिरामसीमनि अविषये निविष्टम् । वाङ्मनसापरिच्छेद्यमित्यर्थः । ते तव वैभवं माहात्म्यं मोहादज्ञानात् अभिष्टुतवतः परिच्छिद्य वर्णितवतः, अत एव मन्दबुद्धेरल्पधियो बालस्याज्ञस्य ममेदं स्तुतिरूपं साहसमविमृश्यकारित्वं दयया सहेथाः क्षमेथाः । प्रेयोऽलंकारः । स्वरूपमिवेत्यत्रोपमा । क्षमाप्रार्थनया पादुकाप्रसादार्थं प्रवृत्तस्य तद्विरुद्धकोपप्रसक्तिवर्णनाद्विषमभेदः । तयोः संसृष्टिः ॥

स्वप्रातिभव्येन पादुकां स्तोतुं प्रवृत्तानां कवीनामपि स्वसूक्तिः श्लाघनीयेत्याह—

ये नाम भक्तिनियताः कवयो मदन्ये
मातः स्तुवन्ति मधुसूदनपादुके त्वाम् ।
लप्स्ये गुणांशविनिवेशितमानसानां
तेषामहं सबहुमानविलोकितानि ॥ ३३ ॥

हे मातः मधुसूदनपादुके, भक्त्या नियताः व्यापृताः । पादुकैकभक्ता इति यावत् । मत्तोऽन्ये ये नाम कवयस्त्वां स्तुवन्ति गुणांशे ग्राह्यभागे विनिवेशितं निक्षिप्तं मानसं येषां तेषाम् । गुणपक्षपतिनामित्यर्थः । सबहुमानानि बहुमानसहितानि विलोकितानि वीक्षणानि अहं लप्स्ये प्राप्स्यामि । पादुकाविषये भक्त्या स्तुवतां सतां गुणपक्षपातित्वेन एतत्कृता स्तुतिर्गुणोत्तरेति मां ते बहु मंस्यन्ते इत्यर्थः । गुणग्राहकत्वस्य सबहुमानविलोकनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलंकारः ॥

पादुकाभक्तानां गुणग्राह्याणां सतामादरेऽपि केषांचिदनादरसत्त्वात्सदसद्विभागो दुःशक इत्यत आह—

संघर्षयन्ति हृदयान्यसतां गुणांशे
सन्तस्तु सन्तमपि न प्रथयन्ति दोषम् ।

तद्रङ्गनाथचरणावनि ते स्तुतीना-
मेका परं सदसतोरिह साक्षिणी त्वम् ॥ ३४ ॥

**संघर्षयन्तीति**। असतामासुरप्रकृतीनां हृदयानि गुणांशे गुणपक्षेऽपि संघर्षयन्ति दोषरूपेणोन्मुखानि भवन्ति। सन्तस्तु महान्तस्तु सन्तं विद्यमानमपि दोषं न प्रथयन्ति न प्रख्यापयन्ति। तत्तस्मादित्थं संदेहसद्भावात् ते तव स्तुतीनामिह सदसतोरनयोर्गुणदोषयोरेका अद्वितीया त्वं परं त्वमेव साक्षिणी द्रष्ट्री। भवसीति शेषः। त्वमेव गुणदोषौ परीक्ष्य दोषांशमुपेक्ष्य गुणान् स्वीकुर्विति भावः। पादुकाव्यतिरिक्तसाक्ष्यलाभे पूर्ववाक्यार्थद्वयस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः॥

मत्कृतत्वे हि स्तुतेः सदसद्विवेचनसाक्ष्यभ्युपगमो युज्यते सर्वज्ञया त्वया कारिते तव स्तोत्रदोषलेशशङ्कापि नावतरति। अतोऽसतां प्रलापोऽकिंचित्कर इत्याशयेन स्वकर्तृकत्वत्यागमनुसंधत्ते—

इत्थं त्वमेव निजकेलिवशादकार्षी-
रिक्ष्वाकुनाथपदपङ्कजयोरनन्या।
स्वीयं पदावनि मया सुमहच्चरित्रं
सीतेव देवि सहजेन कवीश्वरेण ॥ ३५ ॥

**इत्थमिति**। हे देवि पदावनि, इक्ष्वाकुनाथस्य पदपङ्कजयोरनन्या 'अनन्या राघवेणाहम्' इत्युक्तरीत्या तदनन्याश्रया त्वमेव मया प्रयोज्यकर्त्रा सहजेन सोदर्येण कवीश्वरेण वाल्मीकिना सीताया भूजन्यत्वात् वल्मीकलक्षणभूजन्यत्वात् वाल्मीकसहजत्वमिति भावः। सीतेव जानकीव स्वीयं स्वस्मै हितम्। प्राक्क्रीतीयश्छः। सुमहत् माहात्म्यसूचकं चरित्रं निजकेलिवशात् स्वलीलावशेन। स्वाच्छन्द्येनेति यावत्। इत्थं पदसहस्ररूपेण अकार्षीः कारितवती। अन्तर्भावितण्यर्थात् करोतेर्लङि मध्यमपुरुषैकवचनम्। 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्।' इति प्रमाणमत्र भाव्यम्। स्तोत्रस्य त्वत्कारितत्वात् सर्वं स्तोत्रं ग्राह्यमेवेति भावः। उपमालंकारः॥

पूर्वोक्तं पादुकाप्रयोजनमेव सनिदर्शनमुपपादयति—

पृथुकवदनशङ्खं स्पर्शनीत्या[1] कदाचि-
च्छिरसि विनिहितायाः स्वेन भूम्ना तवैव।
स्तुतिरियमुपजाता मन्मुखेनेत्यधीयुः
परिचरणपरास्ते पादुकेऽपास्तदोषाः ॥ ३६ ॥

---

१. स्पर्शरीत्येत्यपि पाठान्तरम्.

हे पादुके, अपास्तदोषा रागद्वेषास्पृष्टास्ते तव परिचरणपरास्त्वद्दास्यरसिकाः सन्तः पृथुकस्य बालस्य वदने मुखे शङ्खस्पर्शस्य पाञ्चजन्यसंस्पर्शस्य नीत्या न्यायेन 'स्तोतुं त्वामहमिच्छामि तत्र प्रज्ञां प्रयच्छ मे ।' इति ध्रुवेण प्रार्थिते सति 'शङ्खप्रान्तेन गोविन्दस्तं पस्पर्श कृताञ्जलिम् । उत्तानपादतनयं द्विजवर्य जगत्पतिः ॥' इति श्रीविष्णुपुराणे कदाचित् स्तोत्रानुज्ञाकाले शिरसि विनिहिताया निक्षिप्तायाः । अर्चकैरिति गम्यते । तवैव स्वेन भूम्ना महिम्ना मम मुखेनेयं स्तुतिरुपजातेति हेतोरधीयुः । 'इक् स्मरणे' इति धातोर्लिङ् । इदं च पठनादीनामप्युपलक्षणम् । पादुकाप्रयोजितत्वेन कृतिस्मरणादिकं कुर्युरिति हेतुहेतुमतोः सहोक्तेर्हेतुरलंकारः । अत्र पुरा श्रीरङ्गनाथ अर्चकमुखेनाचार्यस्य शिरसि श्रीशटकोपं निक्षिप्य पादुकासहस्रं प्रणयेति सबहुमानमभ्यनुज्ञातवानिति संप्रदायः ॥

आचार्यः स्वयं कारुणिकः सन् भागवतान्प्रति पादुकास्तुतिपठनमभ्युदयावहमित्युपदिशति—

यदि स्फीता भक्तिः प्रणयमुखवाणीपरिपणं
पदत्राणस्तोत्रं हृदि बिभृथ रङ्गक्षितिभृतः ।
निरुन्मादो यद्वा निरवधिसुधानिर्झरमुचो
वचोभङ्गीरेतान्न कथमनुरुन्धे सहृदयः ॥ ३७ ॥

हे जनाः, स्फीता पूर्णा भक्तिर्यदस्ति तदा प्रणयमुखाया विस्रम्भजनिकाया वाण्याः वेदस्येति यावत् । परिपणं मूलधनं सर्ववेदवेद्यपादुकाप्रतिपादकं प्रेमगर्भभगवत्स्तुतीनां हेतुभूततयोक्तं पदत्राणस्तोत्रं पादुकायाः स्तोत्रं हृदि हृदये बिभृथ धारयत । बिभर्तेर्लोट्मध्यमपुरुषबहुवचनम् । दोषसत्त्वेऽपि पादुकाभक्त्या गृह्णीतेत्यर्थः । अथवा रसभरितसंदर्भसौन्दर्येण सन्तः स्वयमेव परिगृह्णन्तीति माध्यस्थ्यमवलम्बते । यद्वा तेषु जनेषु निरुन्मादो बुद्धिभ्रंशरहितः सहृदयः सुमनस्को निरवधिमपरिमेयं सुधानिर्झरममृतधारां मुञ्चन्ति याः । रसभरिता इत्यर्थः । एताः पूर्वोक्ताः वचोभङ्गीः संदर्भरीतीः कथं नानुरुन्धे । अनुसंदधात्येवेत्यर्थः । बुद्धिमतां संदर्भविषययोः सौन्दर्यमेव ग्राह्यताहेतुर्नोपदेश इति भावः । पूर्वार्धोक्तार्थस्योत्तरार्धेन प्रतिषेधावगतेराक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात् ।' इति लक्षणम् ॥

प्रमाणप्रमेयप्रमातॄणामुत्कर्षकथनरूपं मङ्गलमाचरन् प्रबन्धस्य द्वयविवरणरूपत्वमभिप्रेत्याह—

जयति यतिराजसूक्तिर्जयति मुकुन्दस्य पादुकायुगली ।
तदुभयधनास्त्रिवेदीमवन्ध्ययन्तो जयन्ति भुवि सन्तः ॥ ३८ ॥

**जयतीति** । यतिराजसूक्तिर्भगवच्चरणाभिन्नपादुकोपायोपेयत्वप्रतीपादिका द्वयविवरणगीत्याद्या सूक्तिर्जयति सर्वोत्कर्षेण वर्तते । उक्तेः सौष्ठवं च मतान्तरव्यावृत्तन्यायानुसारित्वमिति प्रमाणोत्कर्षः । मुकुन्दस्य मोक्षप्रदस्य श्रीरङ्गनाथस्य पादुकायुगली पादुकायुग्मं जयति । युगलीशब्देन द्वयनिष्ठचरणशब्दद्विवचनविवरणमिति प्रमेयोत्कर्षः । ते उभे यतिराजसूक्तिपादुकायुगले धनमत्यन्तोपादेयं येषां ते त्रिवेदीं वेदत्रयमवन्ध्ययन्तः सफलां कुर्वाणाः । यत्सूक्त्यभावे त्रय्याः कुदृष्टिवशंवदत्वेन पादुकायुगल्यभावे प्रमेयालाभेन स्वरूपालाभप्रसङ्गेन चेति भावः । सन्तो महान्तः वेदार्थबोद्धारः भुवि अस्मिन् लोके जयन्ति । एतेन प्रमातृत्कर्ष उक्तः । उत्कर्षरूपस्यैकधर्मस्य एकशब्देनावृत्त्या आवृत्तिदीपकमलंकारः । 'त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम्' इति लक्षणम् ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु श्रीरङ्गनाथपादुकासहस्रं समाप्तम् ।

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥
यतिराजसूक्तिबोधितमुपबृंहितमुत्तमैस्त्रयीविद्भिः ।
श्रीरङ्गनाथपादूमाहात्म्यं विवृतमेवमाचार्यैः ॥
वकुलधरसूक्तिरीत्या ग्रन्थाद्यन्तैकपद्यमार्योक्तम् ।
तत्संप्रदायधारासंतत्यैवेति सद्भिरवधार्यम् ॥

इति श्रीभारद्वाजकुलजलनिधिकौस्तुभश्रीदेवराजस्य सूनुना श्रीश्रीनिवासदासेन विरचिता श्रीरङ्गनाथपादुकासहस्रपरीक्षा संपूर्णा ॥

समाप्तोऽयं ग्रन्थः ।

= श्रीः =

शरबन्धोयम् = १३-शः श्लोकः =




१ पृष्ठ ३०८

गरुडगतिचक्रबन्धोयम्।- १४ शः श्लोकः



२ पृ० ३०८

द्विशृङ्गाटक चक्रबन्धोयम्। १५-शः श्लोकः।



३ पृ० ३०९

. २४ पादु०

श्री द्विचतुष्कचक्रबन्धोयम्। १६ - श्लोकः।



४ पृष्ठं ३१०

अष्टदळपद्मबन्धोयम्। १७ - शः श्लोकः।



५ पृष्ठं ३१०

श्री चतुररचक्रबन्धोयम्। १७-शः श्लोकः।




६ पृष्ठं ३१०

श्री षोडशदलपद्मबन्धोयम् १८-शः श्लोक।




७ पृष्ठं ३११

चतुरङ्गतुरङ्ग बन्धोयम्। १९-२०- शौ श्लो कौ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स्थि १ | रा ३० | ग ९ | सां २० | स ३ | दा २४ | रा ११ | ध्या २६ |
| वि १६ | ह १९ | ता २ | क २९ | त १० | ता २७ | म ४ | ता २३ |
| स ३१ | त्पा ८ | दु १७ | के १४ | स २१ | रा ६ | सा २५ | मा १२ |
| रं १८ | ग १५ | रा ३२ | ज ७ | प २८ | द १३ | न्न २२ | य ५ |

८ पृ० ३१२

श्री

मुरजबन्धः। ११ शः श्लोकः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | भू | पा | ल | म | प्रा | र | स्था |
| वि | भू | प्रा | स्ति | स | पा | र | ता |
| ता | र | पा | स | कृ | प्रा | भू | ष्टि |
| पू | र | प्रा | स | म | पा | दु | का |

९ पृ० ३१२

श्री

अर्धभ्रमक बन्धः २१-शः श्लोकः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| लो | क | ता | रा | का | म | चा | रा |
| क | वि | रा | ज | दु | रा | व | चा |
| ता | रा | ग | ते | पा | द | रा | म |
| रा | ज | ते | रा | म | पा | दु | का |
| का | दु | पा | म | रा | ते | ज | रा |
| म | रा | द | पा | ते | ग | रा | ता |
| चा | व | रा | दु | ज | रा | वि | क |
| रा | चा | म | का | रा | ता | क | लो |

पृ० ३१२

श्री

अष्टदलपद्मबन्धोयम् । ३०-शः श्लोकः ।






पृ. ३१८

१२

अष्टारचक्रबन्धोयम्।

३२ शः श्लोकः



श्री

पादुकाबन्धोयम्। ३९-शः श्लोकः




१२ पृ० ३२४